श्रीगणेशायनमः अथप्रथमपरिच्छेदस्यानुक्रमणिकाप्रारभ्यते

इतिअनुक्रमणिकासमाप्ता

अथ निर्णयसिंधुप्रथमपरिच्छेदप्रारंभः

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः अविघ्नमस्तु कारुण्यैकनिकेतंरामंसीतालतायु
क्तम् विश्वामित्रान्वायव्रततिसमालंबिशाखिनंवंदे १ लक्ष्मीसहायंकल्पद्रुतलरंजितगोकुलम्
वर्हापीडंघनश्यामंमहःकिंचिदुपास्महे २ वेदार्थधर्मरक्षायैमायामानुषरूपिणम् पितामहहरिंवं
देभट्टनारायणाह्वयम् ३ यत्पादसंस्मृतिःसर्वमंगलप्रतिभूर्मता तान्भट्टरामकृष्णाख्यान्श्रीता
तचरणान्नुमः ४ सर्वकल्याणसंदोहनिदानंयत्पदद्वयम् द्युनदीसोदरींअंबामुमाख्यांनौमिसादर
म् ५ विंदुमाधवपादाब्जरोलंबीकृतविग्रहम् ज्यायांसंभ्रातरंभट्टदिवाकरमुपास्महे ६ हेमाद्रि-
माधवमतंप्रविचार्यसम्यगालोच्यतत्वमथतीर्थकृतांपरेषाम् श्रीरामकृष्णतनयःकमलाकराख्यः
कालेयथामतिविनिर्णयमातनोति ७ संतियद्यपिविद्वांसस्तन्निबंधाश्चकोटिशः तथाप्यसु
गर्धिकेचिद्विज्ञातुमीशते ८ तत्रसंक्षेपतःकालःषोढा अब्दोयनमृतुर्मासःपक्षोदिवसइति तत्राब्दोमा
धवमतेपंचधा सावनःसौरश्चांद्रोनाक्षत्रोबार्हस्पत्यइति गुरोर्मध्यमराशिभोगेनबार्हस्पत्यःसचज्यो
तिःशास्त्रेप्रसिद्धः हेमाद्रिस्त्वंत्ययोर्धर्मशास्त्रेनुपयोगात्त्रिधएवाब्दमाह तत्रवक्ष्यमाणैःसावनादि
द्वादशमासैस्तत्तदब्दम् मलमासेतुसतिषष्टिदिनात्मकएकोमासइतिद्वादशमासत्वमविरुद्धम् त-
थाचव्यासः षष्ट्यातुदिवसैर्मासःकथितोबादरायणेरिति तत्रचांद्रोब्दःषष्टिभेदः तदाहगार्ग्यः प्र
भवोविभवःशुक्लःप्रमोदोथप्रजापतिः अंगिराःश्रीमुखोभावोयुवाधातेश्वरस्तथा बहुधान्यःप्रमा

थीविक्रमोवृषस्तथा चित्रभानुःसुभानुश्चतारणःपार्थिवोव्ययः सर्वजित्सर्वधारीचविरोधीविकृतिः
खरः नंदनोविजयश्चैवजयोमन्मथदुर्मुखौ हेमलंबोविलंबोथविकारीशार्वरीप्लवः शुभकृच्छोभनःक्रो-
धीविश्वावसुपराभवौ प्लवंगःकीलकःसौम्यःसाधारणविरोधकृत् परिधावीप्रमादीचआनंदोराक्षसो
नलः पिंगलःकालयुक्तश्चसिद्धार्थीरौद्रदुर्मती दुंदुभीरुधिरोद्गारीरक्ताक्षीक्रोधनःक्षयइति यद्यपि
ज्योतिषेगुरोर्मध्यमराशिभोगेनप्रभवादीनांमाघादौप्रवृत्तिरुक्ता तथापिप्रभवादीनांचांद्रत्वमप्यस्ति
चांद्राणांप्रभवादीनांपंचकेपंचकेयुग इतिमाधवोक्तेः तेनचांद्रप्रभवादिश्चैत्रासितेप्रवर्तते बार्हस्पत्य
स्तुमाघादौ तयोर्विनियोगोज्योतिर्निबंधेब्रह्मसिद्धांते व्यावहारिकसंज्ञोयंकालःस्मृत्यादिकर्मसु योज्य
सर्वत्रतत्रापिजैवोवानर्मदोत्तरे आर्ष्टिषेणः स्मरेत्सर्वत्रकर्मादौचांद्रंसंवत्सरंसदा नान्यंयस्माद्वत्सरा-
दौप्रवृत्तिस्तस्यकीर्तितेति अयनंतुसौरर्तुत्रयात्मकम् सौरर्तुत्रितयंप्रदिष्टमयनं पिकोक्तेः
तद्द्विविधम् दक्षिणमुत्तरंचेति कर्कसंक्रांतिर्दक्षिणायनम् म् अनयोर्वि-
तेसत्यव्रतः देवतारामवाप्यादिप्रतिष्ठोदङ्मुखेरवौ दक्षिणाशा
स्वानसः मातृभैरववाराहनरसिंहत्रिविक्रमाः महिषासुरहन्त्र
नतुदक्षिणायनएवेतिनियमः पूर्ववचनेदक्षिणायनेनि धपूर्वम्
वमाचात् रत्नमालायाम् गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रत

धेयंयद्गृहितंतत्वह्नुदक्षिणेचेति अस्यापवादःकाशीखंडे सदाकृतयुगंचास्तुसदाचास्तूत्तरायणम्
सदामहोदयश्चास्तुकाश्यांनिवसतांसताम् इत्ययनम् ऋतुर्मासद्वयात्मा मलमासेतुमासद्वयात्मकएव
कोमासस्तेनमासद्वयात्मकत्वमविरुद्धम् सद्वेधाचांद्रःसौरश्च चैत्रारंभो ... मीनारंभोमे
षारंभोवासौरः मीनमेषयोर्मेषवृषयोर्वावसंतइतिबोधायनोक्तेः अनयोर्वि ... त्रिकांड
मंडनः श्रौतस्मार्तक्रियाःसर्वाःकुर्याच्चांद्रमसर्तुषु तदभावेतुसौरर्तुष्वितिज्योति ... सद्वि
विधोपिषोढा वसंतोग्रीष्मोवर्षाःशरद्धेमंतःशिशिरः इत्यृतुः मासश्चतुर्धा सावनः ... ना
त्रइति त्रिंशाहिनःसावनः अर्कसंक्रांतेःसंक्रांत्यवधिःसौरः यद्यपिहेमाद्रिमाध ... त्रो
चनेनमेषसंक्रांत्यासमाप्तामावास्यकत्वंचैत्रत्वमितिलक्षणाच्चमेषसंक्रांतेश्चैत्रत्वंमतं ... पे
मेषसंक्रमेदर्शद्वयेसतिवैशाखस्यैवाधिक्यात्तत्पूर्वभावित्वेनमीनस्यैवचैत्रत्वंयुक्तम्
चैवैशाखः अतोमीनसंक्रांत्यामध्यस्थपौर्णमासिकत्वम् आद्यतिथिकत्वंवाचैत्रत्वमितिलक्षणा
त् मीनएवसौरश्चैत्रः एवंवैशाखादयोपिमेषाद्याज्ञेयाः सौरमासप्रसंगात्संक्रांतिनिर्णयउच्यते
तत्रपूर्वतोपिपरतोपिसंक्रमात्पुण्यकालघटिकास्तुषोडशेतिसामान्यतःपुण्यकालःसर्वसंक्र
मः विशेषस्तूच्यते अत्रमामकाःसंग्रहश्लोकाः मागूर्ध्वादशपूर्वतःषडवनिस्तद्वत्पराःपूर्वतस्त्रिं
शत्षोडशपूर्वतोथपरतःपूर्वाःपरास्तुदश पूर्वाःषोडशचोत्तराऋतुभुवःपश्चात्खवेदाःपुनः

पूर्वाःषोडशचोत्तराःपुनरयोःपुण्यास्तमेषादितः अस्यार्थः मेषेप्रागूर्ध्वंचदशघटिकाःपुण्यकालः
वृषेपूर्वाःषोडश मिथुनेपराःषोडश कर्केपूर्वास्त्रिंशत् सिंहेपूर्वाःषोडश कन्यायांपराःषोडश तुला
यांप्रागूर्ध्वंदश वृश्चिकेपूर्वाःषोडश धनुषिपराःषोडश मकरेचत्वारिंशत्पराः इदंचहेमाद्रिमतेनो-
क्तंमाधवमतेतत्र पराविंशतिःपुण्याः कुंभेपूर्वाःषोडश मीनेपराःषोडशेति यास्तूत्तराःपुण्यतमा
मयोक्तासायंभवेत्सायदिसापिपूर्वा पूर्वातुयोक्तायदिसाविभातेसाप्युत्तरारात्रिनिषेधतःस्यात्
अर्वाङ्‌निशीथाद्यदिसंक्रमःस्यात्पूर्वेह्निपुण्यंपरतःपरेह्नि आसन्नयामद्वयमेवपुण्यंनिशीथ
मध्येतुदिनद्वयंस्यात् कर्केझषेप्येवमितित्युवाचहेमाद्रिःसूरिश्चतथापरार्कः झषःप्रदोषेयदि
वार्द्धरात्रेपरेह्निपुण्यंत्वथकर्कटश्चेत् प्रभातकालेयदिवानिशीथेपूर्वेह्निपुण्यंत्विति माधवार्यः
त्रभूरिवचनानिमाधवापरार्कहेमाद्र्यादिषुद्रष्टव्यानि सर्वासुसंक्रांतिषुदानविशेषोहेमाद्रौदा
नकांडेउक्तः विश्वामित्रः मेषसंक्रमणेभानोर्मेषदानंमहाफलम् वृषसंक्रमणेदानंगवांप्रोक्तं
तथैवच वस्त्रान्नपानदानानिमिथुनेविहितानितु घृतधेनुप्रदानंचकर्कटेपिविशिष्यते
गोछत्रदानंसिंहेपिविहितंसदा कन्याप्रवेशेवस्त्राणांवेश्मनांदानमेवच तुलाप्रवेशेतिलानां
गोरसानामपीष्टम् अन्नकोचलितेभानोर्दीपदानंमहाफलम् अन्नकीवृश्चिकः धनुःप्रवेशे
वस्त्राणांयानानांचमहाफलम् झषप्रवेशेदारुणादानमग्नेस्तथैवच कुंभप्रवेशेदानंतुग

मंत्रुतृणस्यच मीनमवेशेस्थानानांमालानामपिचोत्तममितिअत्रोपवासमाह हेमाद्रावापस्तंबः अयनेविषु
वेचैवत्रिरात्रोपोषितोनरः स्नात्वायस्तर्पयेद्भानुंसर्वकामफलंलभेत् अशक्तौतुवृद्धवसिष्ठः अयनेसंक्रमे
चैवग्रहणेचंद्रसूर्ययोः अहोरात्रोषितःस्नात्वासर्वपापैःप्रमुच्यते अत्रोपवासःसंक्रमदिने दानादितुपुण्य
कालदिनइत्याचार्यचूडामणिः विधिलाघवात्पुण्यकालदिनएवोभयमितिवृद्धाः इदंचपुत्रिगृहस्थातिरि
क्तविषयम् आदित्येहनिसंक्रांतौग्रहणेचंद्रसूर्ययोः उपवासोनकर्तव्यःपुत्रिणागृहिणातथेतिजैमिनिवच
नात् अत्रश्राद्धमुक्तंहेमाद्रौविष्णुधर्मे श्राद्धंसंक्रमणेभानोःप्रशस्तंपृथिवीपते अपरार्केपिविष्णुः आदि
त्यसंक्रमणंविशेषेणायनद्वयंजन्मभमभ्युदयश्च एतांस्तुश्राद्धकालान्वैकाम्यानाहप्रजापतिरिति द्वाद
शादिदिनैरर्वागयनांशप्रवृत्तावपिपुण्यंवक्तुमयनग्रहणंअन्यथासंक्रमेणसिद्धेरयनग्रहणंव्यर्थंस्यादि
त्यपरार्कः हेमाद्रावपिगालवः अयनांशकतुल्येनकालेनैवस्फुटंभवेत् मृगकर्कादिगेसूर्येयाम्योदगय
नेसति तदासंक्रांतिकालेस्युरुक्ताविष्णुपदादयइति अयनांशच्युतिरूपेसंक्रांतिकालेपिविष्णुपदाद
यःप्रवर्तंते तेनतत्प्रयुक्तंपुण्यकालादितत्रापिज्ञेयमितिसएवव्याचख्यौ तच्चमेषायनंवृषायनमित्या
दिसर्वत्रज्ञेयम् माधवीयेपिजाबालिः संक्रांतिषुयथाकालस्तदीयेष्ययनेतथा अयनेविंशतिःपूर्वा
मकरेविंशतिःपरेति मकरायनेपूर्वाःविंशतिघटिकाःपुण्याः मकरसंक्रांतौतुपश्चात्विंशतिःपुण्याः
अन्यत्रायनेतत्संक्रांतिवदित्यर्थः विष्णुपदादिस्वरूपंचदीपिकायामुक्तम् हर्यंघ्रिर्वृषसिंहवृश्चिक

घटेचर्कस्यः संक्रमः कन्यामीनधनुर्नृकक्षः षडशीत्यास्त्व्यंतुलामेषयोः मोक्तंनद्विषुवंझषेयनुमुद
कर्कटकेदक्षिणामिति हर्यंघ्रिर्विष्णुपदं नृयुक्मिथुनं अत्रचापिंडरहितंश्राद्धंकुर्यात् तथाचापरार्केमा
त्स्ये अयनद्वितयेश्राद्धंविषुवद्वितयेतथा संक्रांतिषुचसर्वासुपिंडनिर्वपणादृतइति श्राद्धशूलपाणि
स्त्वस्यनिर्मूलत्वात् समूलत्वेपिततःप्रभृतिसंक्रांतावुपरागादिपर्वसु त्रिपिंडमाचरेच्छ्राद्धमेकोद्दिष्टं
मृताहनीतिमात्स्योक्तेर्ग्रहणाग्रहणवद्विकल्पएवेत्याह तन्न अस्यपार्वणानुवादकत्वेनापिंडविधाय
कलात् पिंडोव्यक्तिः अन्यथैकपदेपिंडानुवादेभिन्नविधौचवषट्कर्तुः प्रथमभक्षवद्वैरूप्यापत्तेः
तथाचोभयसमूलत्वेपिंडरहितंपार्वणंकर्त्तव्यमित्युभयवचनयोरर्थः त्रिपिंडशब्देनैकोद्दिष्टव्यावर्त
नमात्रं मंगलकृत्येषुविशेषमाहज्योतिर्निबंधेनारदः त्याज्याः सूर्यस्यसंक्रांतेः पूर्वतः परतस्तथा
विवाहादिषुकार्येषुनाड्यः षोडशषोडशेति एतत्पुण्यकालोपलक्षणं भानोः संक्रांतिभोगश्च
कुलिकश्चार्धयामकइतिज्योतिःप्रकाशोक्तवर्ज्येषुपरिगणनात् अयनव्यतिरिक्तास्वदशसुसंक्रांति-
षुरात्रौस्नानश्राद्धादिनकार्यं अर्कसंक्रमणेकृत्स्नमहःपुण्यंप्रकीर्तितं रात्रौसंक्रमणेभानोर्दिना-
र्धंस्नानदानयोः अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरिक्रिया ऊर्ध्वंसंक्रमणेचोर्ध्वमुदयात्प्रहरद्व
यं पूर्णेचेदर्धरात्रेतुयदासंक्रमतेरविः प्राहुर्दिनद्वयंपुण्यमुक्त्वामकरकर्कटाविति हेमाद्रौवसिष्ठादिवचनै
रहःपुण्यफलोक्त्या रात्रौसंक्रमणेभानोर्दिवाकुर्यात्तुतत्क्रियां पूर्वस्मात्परतोवापिप्रत्यासन्नस्यतत्फल

भिति वसिष्ठवचनाच्चार्थाद्रात्रौ स्नानादिनिषेधप्रतीतेः यानि तु विवाहव्रतसंक्रांतिप्रतिष्ठाऋतुजन्मसु
तथोपरागपातादौ स्नाने दाने निशा शुभेति राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु स्नानदानादिकं कु
र्युर्निशि काम्यव्रतेषु चैवेत्यादीनि विष्णुगोभिलादिवचनानि तानि मकरकर्कसंक्रांतिविषयाणि मुक्त्वा मक
रकर्कटाविति तयोर्दिवानुष्ठानस्य पर्युदस्तत्वादिति हेमाद्रिमाधवादयः वस्तुतस्तु प्रागुक्तवचनेन तयो
र्दिनद्वयपुण्यत्वादेरेव पर्युदासान्मकरकर्कटयोरपि स्नानं दानं परेह्नीत्यादिभिरह्नः पुण्यत्वोक्तेः अह्नः
पुण्यत्वानुपपत्त्याकल्प्यरात्रिनिषेधस्य च प्रत्यक्षरात्रिविधिना बाधात्सर्वसंक्रांतिषु रात्रावनुष्ठानविकल्पः
स च देशाचाराद्व्यवतिष्ठत इति युक्तः पंथाः अयनयोस्तु वक्तव्यो विशेषः श्रावणे मासि वक्ष्यते ज्योतिर्नि
बंधे गर्गः यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् तन्मासाभ्यंतरे तस्य वैरक्लेशधनक्षयाः तगरस्त
रोरुहपत्रैरजनीसिद्धार्थलोध्रसंयुक्तैः स्नानं जन्मर्क्षगते रविसंक्रमणे नृणां शुभदं हेमाद्रौ आन्हिकेश
भिधुम्भं स्याद्रात्रौ चेद्वासरद्वयम् संक्रांतिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु यत्तु गौडाः संक्रांत्योप
क्षयोरंते द्वादश्यां श्राद्धवासरे सायंसंध्यां न कुर्वीत कुर्वंश्च पितृहा भवेदिति कूर्मोपदेशिन्यां व्यासोक्तेः-
सायंपुण्यकाले संध्यानिषेधमाहुस्तन्निर्मूलं अन्यच्च बहु वक्तव्यं विस्तरभीतेर्नोच्यते इति संक्रांतिनिर्ण
यः पक्षस्तु गजच्छायांशो मासः स द्वेधा शुक्लादिरमांतः कृष्णादिः पूर्णिमांतश्चेति तथा च त्रिकांडमंडनः
चांद्रोपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधेत्युक्त्वा देशभेदेन तद्व्यवस्थामाह कृष्णपक्षादिकं मासं नांगीकुर्वंति केच

मितिवसिष्ठवचनाच्चार्थाद्रात्रौस्नानादिनिषेधप्रतीतेः यानितु विवाहव्रतसंक्रांतिप्रतिष्ठाऋतुजन्मसु
तथोपरागपातादौस्नानेदानेनिशाशुभेति राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु स्नानदानादिकंकु
र्युर्निशिकाम्यव्रतेषुचेत्यादीनिविष्णुगोभिलादिवचनानितानिमकरकर्कसंक्रांतिविषयाणि मुक्त्वामक
रकर्कटावितितयोर्दिवानुष्ठानस्यपर्युदस्तत्वादितिहेमाद्रिमाधवादयः वस्तुतस्तु प्रागुक्तवचनेनतयो
र्दिनद्वयपुण्यत्वादेरेवपर्युदासान्मकरकर्कटयोरपिस्नानंदानंपरेह्नीत्यादिभिरहःपुण्यत्वोक्तेः अहः
पुण्यत्वानुपपत्याकल्प्यरात्रिनिषेधस्यचप्रत्यक्षरात्रिविधिनाबाधात्सर्वसंक्रांतिषुरात्रावनुष्ठानविकल्पः
सचदेशाचाराद्व्यवतिष्ठतइतियुक्तंपंथाः अयनयोस्तुवक्तव्योविशेषःश्रावणेमाघेचवक्ष्यते ज्योतिर्नि
बंधे गर्गः यस्यजन्मर्क्षमासाद्येरविसंक्रमणंभवेत् तन्मासाभ्यंतरेतस्यवैरक्लेशधनक्षयाः तगरस
रजनीसिद्धार्थलोध्रसंयुक्तैः स्नानंजन्मर्क्षगतेरविसंक्रमणेनृणांशुभदं हेमाद्रौ आन्हिकेब्रा
ह्मोचेदासरहस्यम् संक्रांतिःपक्षिणीतेयादानाध्ययनकर्मसु यत्तुगौडाः संक्रांत्यांप
[illegible] सायंसंध्यांनकुर्वीतकुर्वंश्चपितृहाभवेदितिकर्मोपदेशिन्यांव्यासोक्तेः-
पः समुग इत्यन्निर्मूलं अन्यच्चबहुवक्तव्यंविस्तरभीतेर्नोच्यते इतिसंक्रांतिनिर्णि
[illegible] शुक्लादिरमांतः कृष्णादिःपूर्णिमांतश्चेति तथाचत्रिकांडमंडनः
चांद्रोपिशुक्लपक्षादिःकृष्णादिरितिचद्विधा [illegible] देशभेदेनतद्व्यवस्थामाह कृष्णपक्षादिकंमासंनांगीकुर्वीतकेच

न येपीछंतिनतेषामपीष्टोविंध्यस्यदक्षिणइति विंध्यदक्षिणेकृष्णादिनिषेधादुत्तरतोद्वयोरभ्यनुज्ञाग
म्यते तत्रापिशुक्लादिर्मुख्यः कृष्णादिर्गौणः शास्त्रेषुचैत्रशुक्लप्रतिपद्येवचांद्रसंवत्सरारंभोक्तेः तदुक्तंदी
पिकायां चांद्रोब्दोमधुशुक्लगप्रतिपदारंभइति नहियेकृष्णादिमन्यंतेतेषांवत्सरारंभोभिद्यते अतःशु
क्लादिर्मुख्यः कृष्णादिनामलमासासंभवाच्च चंद्रस्यसर्वनक्षत्रभोगेननाक्षत्रोमासः सावनादीनांव्यवस्थो
क्ताहेमाद्रौब्रह्मसिद्धांते अमावास्यापरिछिन्नोमासःस्याद्ब्राह्मणस्यतु संक्रांतिपौर्णमासीभ्यांतथैव
नृपवैश्ययोः अत्रब्राह्मणादीनांयत्रकर्मविशेषेवचनांतरेणवसंतेब्राह्मणोग्नीनादधीतेत्यादिवन्मास
उक्तस्तत्रदर्शांतत्वमात्रंनियम्यतेनतुसर्वकर्मसुदर्शांतएवेति हृष्याद्यर्थसोमेरहीषादिनिधनानि
यमवद्विधिलाघवात् त्रैवर्णिकानांसर्वकर्मसुमासविशेषविधेः सावनादीनांशूद्रानुलोमादिपरत्वा
पत्तेश्चेतिगुरुचरणाः ज्योतिर्गर्गः सौरोमासोविवाहादौयज्ञादौसावनःस्मृतः आब्दिकेपितृकार्ये
चचांद्रोमासःप्रशस्यते ऋष्यशृंगः विवाहव्रतयज्ञेषुसौरंमानंप्रशस्यते पार्वणेत्वष्टकाश्राद्धेचांद्रमि
ष्टंतथाब्दिके स्मृत्यंतरे एकोद्दिष्टविवाहादौकृणादौसौरसावनौ ज्योतिर्गर्गः आयुर्दायविभागश्च-
प्रायश्चित्तक्रियातथा सावनेनैवकर्तव्याशत्रूणांचाप्युपासना विष्णुधर्मे नक्षत्रसत्राण्ययनानि
चेंदोर्मासेनकुर्यादगणात्मकेनेति ब्राह्मे तिथिकृत्येचकृष्णादिंव्रतेशुक्लादिमेवच विवाहादौचसौ
रादिंमासंकृत्येविनिर्दिशेत् अथमलमासः तत्रैकमात्रसंक्रांतिरहितःसितादिश्चांद्रोमासोमलमा

सः एकमात्रसंक्रांतिराहित्यमसंक्रांतत्वेनसंक्रांतिद्वयवत्वेनचभवतीतिमलमासोद्वेधा अधिमासः-
क्षयमासश्चेति तदुक्तंकाठकगृह्ये यस्मिन्मासेनसंक्रांतिःसंक्रांतिद्वयमेववा मलमासःसविज्ञेयोमासः
स्यात्तुत्रयोदशइति सत्यव्रतोपि राशिद्वयंयत्रमासेसंक्रमेतदिवाकरः नाधिमासोभवेदेषमलमास-
स्तुकेवलमिति अधिकमासस्यकालनियममाहवसिष्ठः द्वात्रिंशद्भिर्गतैर्मासैर्दिनैःषोडशभिस्तथा घ
टिकानांचतुष्केणपतत्यधिकमासकइति एतच्चसाधनादिमानेनसंभवार्थंनतुनियमार्थं अन्य
दिनाधिकद्वात्रिंशन्मासानंतरंकृष्णपक्षनियमेनशुक्लादित्वभंगापत्तेः तेनन्यूनाधिककालेमलमासपाते
पिनदोषः अतएवोक्तंमाधवीये मासेत्रिंशत्तमेभवेदिति क्षयस्यापिज्योतिःशास्त्रे असंक्रांतिमासो-
धिमासःस्फुटःस्यात्द्विसंक्रांतिमासःक्षयाख्यःकदाचित् क्षयःकार्तिकादित्रयेनान्यतःस्यात्तदावर्षमध्ये-
धिमासद्वयंच एकःक्षयात्पूर्वंपरतश्चैकइत्यधिमासद्वयंभवतीत्यर्थः अत्रविशेषमाहजाबालिः मास
द्वयेब्दमध्येतुसंक्रांतिर्नयदाभवेत् प्राकृतस्तत्रपूर्वःस्यादधिमासस्तथोत्तरइति उत्तरएवकालाधिक्यं
नपूर्वस्मिन्नित्यर्थः यत्तुब्रह्मसिद्धांते चैत्रादर्वाङ्नाधिमासःपरतस्त्वधिकोभवेदिति तत्रचैत्रात्पूर्वंअ-
संक्रांतद्वयेपूर्वोनाधिकःकिंतुपरइत्यर्थः यच्चज्योतिःसिद्धांते घटकन्यागतेसूर्येवृश्चिकेवाथधन्वि
नि मकरेवाथकुंभेवानाधिमासोविधीयतइति तद्वृश्चिकादिचतुष्टयेमलमासेसतिपूर्वं तुलाकन्या
गतेसूर्येसत्पूर्वंकालाधिक्यनिषेधार्थंनत्वधिकमात्रस्य दशानांफाल्गुनादीनांशयोमाघ–

स्यचक्वचित् नपुंसकत्वंभवतीत्येषशास्त्रविनिश्चयइतिहेमाद्रौविष्णुधर्मविरोधात् मलमासेऽष्टकादिनिषे
धानुपपत्तेश्च मकरेवाथकुंभेवेतिदृष्टांतार्थमास्यभावाच्च क्षयस्यागमनकालउक्तः सिद्धांतशिरोमणौ
गतोब्ध्यद्रिनंदैर्मितेशाककाले तिथीशैर्भविष्यत्यथांगाक्षसूर्यैः गजाद्र्यग्निभूभिस्तथाप्रायशोयंकुवेदेंदु
वर्षैः क्वचिद्गोकुभिश्चेति अब्धयश्चत्वारः अद्रयःसप्त नंदाःनव एषांप्रातिलोम्येनपाते ९७४ तैर्मितेवर्षे
कश्चित्क्षयमासः पूर्वंजातइत्यर्थः तिथयःपंचदश १५ ईशाःएकादश ११ १५ एवंमितेयातेकश्चिद्भविष्यती
त्यर्थः अंगा ६ क्ष ५ सूर्याः१२एकत्र १२ ५६ गजाः ८ अद्रयः ७ अग्नयः ३ भूः १ एकत्र १३ ७८ कुः १ वेदाः ४ इंदुः १
एकत्र १४१ गावः ९ कुः १ एकत्र १९ एतैर्मिते वर्षेयातेकश्चिद्भविष्यतीत्यर्थः अथमलमासेकार्याकार्यनिरू
प्यते तत्रजाबालिः नित्यनैमित्तिकेकुर्यात्श्राद्धंकुर्यान्मलिम्लुचे तिथिनक्षत्रवारोक्तंकाम्यंनैवकदा
चन अयंचकाम्यनिषेधःआरंभसमाप्तिविषयः असूर्यानामयमासानतेषुममसंमतः व्रतानांचैवय
ज्ञानामारंभश्चसमापनमितितेनैवोक्तत्वात् असूर्याअधिकमासाइत्यर्थः तत्रमंडलंतपतेरविरितिव
चनात् कारीर्यादेःकाम्यस्यत्वारंभसमाप्तीभवतएवेत्यादिरित्यन्यत्रविस्तरः काठकगृह्येपि मलेनन्य
गतिंकुर्यान्नित्यांनैमित्तिकींक्रियामिति तानिनैमित्तिकानिदीपिकायामुक्तानि यन्नैमित्तिकमग्निन
ष्टयनुगताग्न्याधानमर्चासुवासंस्कारादिविलोपनेसतिपुनःप्रोक्तंप्रतिष्ठादिकमितिगत्यंतरयुतंसोमा
दिहेयमेव तत्रकर्तव्यान्युक्तानिकालादर्शे द्वादशाहसपिंडांतंकर्मग्रहणजन्मनोः सीमंतेपुंसवेश्राद्धं

ह्येतौजातकर्मैव रोगेशांतिरलभ्येचयोगेश्राद्धंव्रतानिच प्रायश्चित्तनिमित्तस्यवशात्पूर्वैपरत्रच अब्दोद
कुंभमन्वादिमहालययुगादिषु श्राद्धंदर्शेप्यहरहःश्राद्धमूनादिमासिकम् मलिम्लुचान्यमासेषुमृतानांश्रा
द्धमाब्दिकम् श्राद्धंतुपूर्वेहश्चेषुतीर्थेष्वेवयुगादिषु मन्वादिषुचयद्दानंदानंदेनंदिनंचयत् तिलगोभूहिरण्या
नांसंध्योपासनयोःक्रिया पर्वहोमश्चाग्रयणंसाग्नेशिष्टिश्चपर्वणि नित्याग्निहोत्रहोमश्चदेवतातिथिपूजनम्
स्नानंचस्नानविधिनाप्यमक्ष्यापेयवर्जनम् तर्पणंचानिमित्तस्यनित्यत्वादुभयत्रचेति एतौपुंसवनसीमंतो
एतच्चगर्भाधानाद्यन्नप्राशनांतसंस्कारोपलक्षणम् तदुक्तंदीपिकायाम् गर्भाधानमुखंचचौलविधितः
प्राजातयागंविनाकृच्छ्राग्रयणंगजेंद्रपुरतःछायामघानंगयोः तीर्थंदुक्षययोश्चपित्र्यमधिकेमास्येवमा-
द्याचरेदिति अलभ्ययोगेर्धोदयपद्मकादौकाम्यान्यपिव्रतादीनिकार्याणीत्यर्थः पूर्वेपरत्रमलेशुद्धेचेत्य
र्थः महालयशब्देनमघात्रयोदश्युच्यतइतिमाधवः दर्शश्राद्धंमलेपिकार्यम् यत्तुऋष्यशृंगः संवत्सरातिरे-
केणमासोयस्यान्मलिम्लुचः तस्मिंस्त्रयोदशोश्राद्धंनकुर्यादिंदुसंक्षयइति तत्काम्यदर्शश्राद्धविषयम्
काम्यंनैवकदाचनेतिवचनात् दर्शेनकाम्यंश्राद्धंकन्याकन्याचेदिलभ्येत्यादिनायाज्ञवल्क्येनोक्तम्
नित्यंतुमलेपिभवत्येव दर्शेप्यहरहःश्राद्धंदानंचप्रतिवासरम् गोभूतिलहिरण्यानांमासेपिस्यान्मलिम्लु
चइतिमात्स्योक्तेरितिहेमाद्र्यादयः दिवोदासीयेपि अनिंदुरिंदुपूर्णाचहरिवारोबुधाष्टमी नाधिमा
सेपरित्याज्याःसीमंतान्नाशनेशिशोरिति अनिंदुर्दर्शः द्विविधमप्यमाश्राद्धंनकार्यमित्यपरार्कः अ-

र्पूर्वहितं कर्म उत्तरे मासि कारयेदित्युक्तेः पश्चात्तु दिवसैर्मास इति शब्दो मासकरणेऽपि शास्त्रार्थोपपत्ते-
र्दर्शश्राद्धं मलेन कार्यं इति प्राचीनगौडाः शूलपाणिश्च संवत्सरप्रदीपेपि एकराशिस्थिते सूर्ये यदा द-
र्शद्वयं भवेत् दर्शश्राद्धं तदा दोस्यान्न परत्र मलिम्लुचे अत्रापि शास्त्रव्यवस्था यद्यपि कालादर्शे स-
र्ववार्षिकं मासद्वये कार्यमित्युक्तं तथापि हेमाद्रिमाधवापरार्कादिमतात्प्रथमाब्दिकं त्रयोदशे मलमासे
द्वितीयाद्याब्दिकं तु शुद्धमास एव कार्यं असंक्रान्तेपि कर्तव्यमाब्दिकं प्रथमं द्विजैः तथैव मासिकं श्राद्धं-
सपिंडीकरणं तथेति हारीतोक्तेः आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे चतुर्दशे तु संप्राप्ते कुर्वी-
त पुनराब्दिकमिति स्मृत्यंतरोक्तेश्च पुनराब्दिकं द्वितीयादिवार्षिकं त्रयोदशे मासे तीते चतुर्दशाद्यदिने
कुर्यादित्यर्थः यत्तु सत्यव्रतः वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेहनि मलमासे न तत्कार्यं व्याघ्रस्य व-
चनं यथेति तत् द्वितीयादिवार्षिकविषयं आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे इति पूर्वोक्तवच-
नात् यत्र द्वादशमासिकं शुद्धमासे भवति तत्र त्रयोदशोऽधिक एवाब्दिकं कार्यं यत्र त्वधिकमध्ये द्वाद-
शं मासिकं तत्र तस्याहिरावृत्तिं कृत्वा चतुर्दशे शुद्ध एव प्रथमाब्दिकमिति निष्कर्षः तेन द्वितीयादि शुद्धमा-
स एव पृथ्वीचंद्रोदये दिवोदासीये मदनपारिजाते चैवं मलमासमृतानां तु यदा स एवाधिकः स्यात्तदा तत्रै-
व कार्यं यथाह पैठीनसिः मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरं मलमासेपि कर्तव्यं नान्येषां तु कथं-
चनेति हेमाद्रौ व्यासोपि मलमासमृतानां तु सौरमानं समाश्रयेत् स एव दिवसस्तस्य श्राद्धपिंडोदकादि

कादर्शवचनात् मलमासे श्राद्धदिनस्य वंध्यत्वनिरासार्थं पितुद्देशेन ब्राह्मणान् भोजयित्वा शुद्धमासे सपिंडकं
श्राद्धं कुर्यात् पिंडवर्जमसंक्रांते संक्रांते पिंडसंयुतम् प्रतिसंवत्सरं श्राद्धमेवं मासद्वयेपि चेति वृद्धपराशरोक्ते
रिति तदपि चिंत्यम् पूर्वोक्तवचनस्य क्षयपूर्वभाव्यधिकमासविषयत्वात् तत्र हि मासद्वये श्राद्धमुक्तम्
तदाह सत्यतपाः एक एव यदा मासः संक्रांतिद्वयसंयुतः मासद्वयगतं श्राद्धं मलमासेपि शस्यत इति मास
द्वयगतं पूर्वसंक्रांतगतं क्षयगतं च मलमासे क्षयमासे अपिशब्दात्पूर्वाधिमासे चेति हेमाद्रिः दीपिकापि
तत्साक्षंत्वधिमासके यदि भवेत्तत्रत्यसांवत्सरं तस्मिन्नारूढतया क्षये च वचनात्कुर्याद्द्वयोः कोविद इति
कालादर्शेप्येतद्विषय एवेत्यलं बहुना मलमासे वर्ज्यान्युक्तानि कालादर्शे अनित्यमनिमित्तं च दानं च स
हस्रादिकम् अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणम् देवारामतडागादिप्रतिष्ठा मौंजिबंधनम् आश्र
मस्वीकृतिः काम्यवृषोत्सर्गश्चानिक्रमः राजाभिषेकः प्रथमश्चूडाकर्म व्रतानि च अन्नप्राशनमारंभो गृहा
णां च प्रवेशनम् स्नानं विवाहो नामातिपन्नं देवमहोत्सवः व्रतारंभसमाप्ती चाकाम्यं काम्यं च पाप्मनाम् प्रा
यश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् अवरोहश्च हैमंतः सर्पाणां
बलिरक्षकाः ईशानस्य बलिर्विष्णोः शयनपरिवर्तनम् दुर्गेंद्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः पूर्वो
त्रभृतिचिह्नानि परत्रान्यत्र दैविकमिति अत्र मूलवचनानि हेमाद्रिमाधवादिग्रंथाज्ज्ञेयानि दिवोदासी
येपि यत्रोत्सवं च देवादिशपथं दिव्यमेव च मलमासे न कुर्वीतेति व्याघ्रस्य वचनं तथेति अयं निर्णयः क्षय

मासेपिज्ञेयः रविसंक्रमहीनेयोवर्ज्योवर्ज्योविधिःस्मृतः सएवतुद्विसंक्रांतेमलमासेप्युदीरितइतिकाठकगृ-
ह्योक्तेः क्षयमासमृतानामप्याब्दिकेविशेषोहेमाद्रौ तिथ्यर्धेप्रथमेपूर्वोद्वितीयेर्धेतथोत्तरः मासाविति-
चुर्धेभिन्नौक्षयमासस्यमध्यगौ आब्दिकवद्दर्शापत्तेपिज्ञेयं यन्मलमासेवर्ज्यमुक्तंतच्छुक्रगुर्वोरस्तादि-
ष्वपिज्ञेयं तदाह बृहस्पतिः बालेवायदिवावृद्धेशुक्रेवास्तंगतेगुरौ •मलमासइवैतानिवर्जयेद्देवद
र्शनमिति अनादिदेवतांदृष्ट्वाशुक्रःस्कन्नेष्टभार्गवे मलमासेप्यनादृत्ततीर्थयात्रांविवर्जयेत् आवृत्त
तीर्थदोषाभावमात्रंनतुफलमितिवाचस्पतिमिश्राः तन्न असतिबाधकेफलहेतुत्वात्क्षतेः सङ्गोपि
नीचस्थेवक्रसंस्थेप्यतिचरणगतेबालवृद्धास्तगेवासन्यासोदेवयात्राव्रतनियमविधिःकर्णवेधस्तु
दीक्षा मौंजीबंधोंगनानांपरिणयनविधिर्वास्तुदेवप्रतिष्ठावर्ज्याःसद्भिःप्रयत्नात्त्रिदशपतिगुरौसिं
हराशिस्थितेचेति दीक्षायागदीक्षाआगमदीक्षाच तथा उद्यानकूपव्रतबंधदीक्षाविवाहयात्राच-
वधूप्रवेशः तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौसिंहगतेनकुर्यात् दिवोदासीये गुर्वादित्येगुरौसिं
हेनष्टेशुक्रेमलिम्लुचे गृहकर्मव्रतंयात्रांमनसापिनचिंतयेत् अस्यापवादः तत्रैवप्राहे मुंडनंचो
पवासश्चगोतम्यांसिंहगेगुरौ कन्यागतेतुकृष्णायांनतुतत्तीरवासिनां तथाआ घोसोगौतमीगंगादि
तीयाजाह्नवीस्मृता सर्वतीर्थफलंस्नानाद्गौतम्यांसिंहगेगुरौ संहिताप्रदीपे स्यात्सप्तरात्रंगुरुशुक्रयोश्चबालत्व
मद्धादशाकंचवार्धे दशाहंसितेज्यावशाभौशिशुत्वेशास्त्रोयतत्त्वाद्युपचीयमानौ वसि.ष्ठः अतिचारगतेजीवेवर्जयेत्तदनंतरं

ग्रतो ह्राहादिकार्येषु भृगोर्विंशतिवासरान् वाल्यादिलक्षणमुक्तं ब्रह्मसिद्धांते रविणासत्तिरन्येषां ग्रहाणां म-
स्तउच्यते ततोयोग्यार्थकं प्रोक्तमूर्ध्वंवाल्यंप्रकीर्तितमिति वाल्यादिपरिमाणंचरत्नशते बालःशुक्रोदिवस
दशाकंपंचकंचैव वृद्धःपश्चाद्दशांगितयमुदितःपक्षमेवंयांक्रमेण जीवो वृद्धःशुचिरपितथापक्षमन्ये:शि
शूतोवृद्धोप्रोक्तोदिवसदशाकंचापरैःसप्तरात्रम् पश्चिमतउदयेदशादिनानिबालः अस्तेपंचदिनानिवृद्ध
पूर्वतोदिनत्रयंबालः पक्षंचवृद्धइत्यर्थः जीवोगुरुः अन्यत्रत्वन्यथोक्तं प्राक्पश्चादुदितःशुक्रः पंचसप्त
दिनंशिशुः विपरीतंतुवृद्धत्वंतद्वदेवगुरोरपीति एषांचपक्षाणांव्यवस्थामाह मिहिरः बहवोदर्शिताःका
लायेवाल्येवार्द्धकेपिवा ग्राह्यास्तत्राधिकाःशेषादेशभेदाद्गुतापदीति देशभेदश्चमदनरत्ने गार्ग्यः
शुक्रोगुरुःप्राक्पराक्वालोविंध्येदशावंतिषुसप्तरात्रम् वंगेषुहूणेषुचषट्पंचशेषेषुचदेशेत्रिदिनंवदं
नीनि अस्तादेरपवादःकाशीखंडे नग्रहास्तोदयकृतोदोषोविश्वेश्वरालये त्रिस्थलीसेतौवायवाये
गोदावर्यांगयायांचश्रीशैलेग्रहणद्वये सुरासुरगुरूणांचमौढ्यदोषोनविद्यते ग्रहणद्वयंतन्निमित्तक
कुरुक्षेत्रयात्रादानादावित्यर्थः तदाहत्रिस्थलीसेतौलक्षः उपप्लवेशीतलभानुमान्दारयोर्दयेकपिला
स्वयषष्ठ्याम् सुरासुरेज्यास्तमयेपितीर्थयात्राविधिः नमूढदोषोनचरात्रिदोषोनः
चाधिमासोनमृतिर्नसूतिः एवमप्युत्तरार्धपठंति इत्यु तविशेषउक्तो माद्री
पाये अधिमासेतुसंप्राप्तेगुडसर्पिर्युतानिच त्रयांसि

मिश्राणिअधिमासेनृपोत्तम अधिमासेतुसंप्राप्तेत्रयस्त्रिंशत्तुदेवताः उद्दिश्यापूपदानेनपृथ्वीदानफलं
लभेत् त्रयस्त्रिंशदपूपान्नंकांस्यपात्रेनिधायच सघृतंसहिरण्यंचब्राह्मणायनिवेदयेत् विष्णु-
रूपीसहस्रांशुःसर्वपापप्रणाशनः अपूपान्नप्रदानेनममपापंव्यपोहतु नारायणजगद्बीजभास्कर
प्रतिरूपक व्रतेनानेनपुत्रांश्चसंपदंचाभिवर्धय यस्यहस्तेगदाचक्रेगरुडोयस्यवाहनं शंखःकरत
लेयस्यसमेविष्णुःप्रसीदतु कलाकाष्ठादिरूपेणनिमेषघटिकादिना योवंचयतिभूतानितस्मैकाला
त्मनेनमः कुरुक्षेत्रमयंदेशःकालःपर्वद्विजोहरिः पृथ्वीसममिदंदानंगृहाणपुरुषोत्तम मलानांचवि
शुद्ध्यर्थंपापप्रशमनायच पुत्रपौत्राभिवृद्ध्यर्थंतवदास्यामिभास्कर मंत्रेणानेनयोदद्यात्त्रयस्त्रिंशद
पूपकान् प्राप्नोतिविपुलांलक्ष्मींपुत्रपौत्रादिसंपदइति इतिनिर्णयसिंधौमासमलमासनिर्णयः पक्षनि
र्णयस्तु दैवेशुक्लः शुक्लपक्षःकृष्णःपित्र्येविशिष्यतइतिमाधवेनोक्तः अथतिथिनिर्णयः तत्रतिथिर्द्वे-
धा शुद्धाविद्धाच दिनेतिथ्यंतरसंबंधरहिताशुद्धा तद्रहिताविद्धा तत्रशुद्धायामसंदेहाद्विद्धानिर्णयते
तत्रसामान्यतोवेधमाह माधवीयेपैठीनसिः पक्षद्वयेपितिथयस्तिथिंपूर्वांतथोत्तरां त्रिभिर्मुहूर्तैर्विध्यंतिसा
मान्योयंविधिःस्मृतइति हेमाद्रिमदनरत्नादौतुद्विमुहूर्तोप्युक्तः उदितेदैवतंभानौपित्र्यंचास्तमितेरवौ द्विमुहूर्ता
त्रिरह्नश्चसातिथिर्हव्यकव्ययोरितिविष्णुधर्मोक्तेः द्विमुहूर्तत्वंचानुकल्पः द्विमुहूर्तापिकर्तव्यायातिथिर्ह्रासगामिनि
तिदक्षेणापिशब्दोक्तेः अयंवेधःप्रातरेव सायंतुत्रिमुहूर्तोवेधएव यांतिथिंसमनुप्राप्ययात्यस्तंपद्मिनीप-

तिःसातिथिस्तद्दिनेप्रोक्ताचिमुहूर्तैर्वयाभवेदितिस्कांदोक्तेः दीपिकापि त्रिमुहूर्तगातुसाकलासायेति यानितु व्रतो
पवासस्नानादौघटिकैकापियाभवेत् उदयेसातिथिर्ग्राह्याविपरीतातुपैतृकइत्यादीनिस्कांदादिवचनानितानिचै-
श्वानराधिकरणन्यायेनावयवस्तुत्यात्रिमुहूर्तप्रशंसापराणि तिथिविशेषवेधविशेषःस्कांदे नागोद्वादशनाडी
भिर्दिक्पंचदशभिस्तथा भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमिति अयंचोपवासातिरिक्तविषयइतिवक्ष्य
ते इतिवेधः तत्रसर्वातिथिर्यदहःकर्मकालव्यापिनीसैवग्राह्या कर्मणोयस्ययःकालस्तत्कालव्यापिनीतिथिः
तयाकर्माणिकुर्वीतह्रासवृद्धीनकारणमितिविष्णुधर्मोक्तेः दिनद्वयेतद्व्याप्तावव्याप्तावेकदेशव्याप्तौवायुग्मवा
क्यान्निर्णयः तस्यपूर्वाबाधेनोपपत्तेःकर्मकालस्यप्रधानांगत्वाच्च युग्मवाक्यंतुनिगमः युग्माग्नियुगभूतानां
षण्मुन्योर्वसुरंध्रयोः रुद्रेणद्वादशीयुक्ताचतुर्दश्याचपूर्णिमा प्रतिपद्यप्यमावास्यातिथ्योर्युग्मंमहाफलम्
एतद्व्यस्तंमहादोषंहंतिपुण्यंपुराकृतमिति अत्ररंध्रांताःशब्दाःद्वितीयादिनवम्यंततिथिवाचकाःरुद्रएकाद
शीद्वितीयातृतीयायुतासाचद्वितीयायुतेतिसमयुग्मानीत्यर्थः इदंचशुक्लपक्षे अमाप्रतिपद्युग्मस्यपूर्णिमायाश्च
तत्रैवसत्वात् इतिकेचित् तन्न अमावास्याप्रतिपद्युग्मात्कृष्णपक्षलिंगात्पक्षद्वयपरमिदंतत्तद्विशेषवाक्यैःकृष्णेतिथि
विशेषेपोद्यतइति दशमीतूक्तापुराणसमुच्चये संपूर्णदशमीकार्यापिश्रितापूर्वयाथवेति संपूर्णेशुक्लपक्षेत्र-
योदशीतुस्फुटंतुनोक्ता त्रयोदशीतुकर्तव्याद्वादशीसहितामुनइति कृष्णपक्षेत्वापस्तंबः प्रतिपत्साद्विती
यास्याद्द्वितीयाप्रतिपद्युता चतुर्थीसंयुतायाचसातृतीयाफलप्रदा पंचमीचप्रकर्तव्याषष्ठ्यायुक्तातुनारद

कृष्णपक्षेऽष्टमीचैवकृष्णपक्षेचतुर्दशी पूर्वविद्धाप्रकर्तव्यापरविद्धानकुत्रचित् दशमीचप्रकर्तव्यासदुर्गाद्विज
सत्तम षष्ठ्यष्टमीअमावास्याकृष्णपक्षेत्रयोदशी एताःपरयुताःपूज्याःपराःपूर्वेणसंयुताइति यत्तुव्याघ्रःखर्वोद
र्पस्तथाहिंसात्रिविधंतिथिलक्षणम् खर्वदर्पौपरौपूज्यौहिंसास्यात्पूर्वकालिकीति खर्वःसाम्यम् दर्पोवृद्धिस्तयोःप
रा हिंसाक्षयस्तत्रपूर्वेत्यर्थः एतच्छ्राद्धादिविषयम् द्वितीयादिषुयुग्मानांपूज्यतानियमादिषु एकोद्दिष्टादिवृद्ध्यादौ-
ह्रासवृद्ध्यादिचोदनेतिव्यासोक्तेः नियमादिषुव्रतदानादिकर्मसु एकोद्दिष्टादितिथ्यर्थेवृद्ध्यादावित्यर्थः कर्मकालव्य
भावेतु कर्मोपक्रमकालगैवग्राह्या कर्मोपक्रमकालगातुकृतिभिर्ग्राह्यानयुग्मादरइतिदीपिकोक्तेः यानितु यां
तिथिंसमनुप्राप्यउदयंयातिभास्करः सातिथिःसकलाज्ञेयादानाध्ययनकर्मस्वित्यादीनितानित्रिमुहूर्तादिस्तु
रितिनिर्णयशैली अथैकभक्तं तत्कालःपाद्मे मध्याह्नव्यापिनीग्राह्याएकभक्तेसदातिथिरिति मध्याह्नश्चपं
चधाविभक्तदिनतृतीयांशःतेनयद्यपिद्वादशदंडानंतरंप्राप्यतेतथापिदिनार्धसमयेतीतेभुज्यतेनियमेनयत
एकभक्तमितिप्रोक्तमतस्तत्स्याद्दिवैवहीतिस्कांदोक्तेः षोडशसप्तदशादिदंडामुख्यःकालःदीपिकायांतु म
ध्याह्नात्परदलेत्रिभागदिवसेस्यादेकभक्तमिति ततःसूर्यास्तपर्यंतंगौणः दिवैवहीत्यस्यचवैयर्थ्यापत्तेस्तस
त्त्वात् अत्रपूर्वेद्युर्व्याप्तिःपरेद्युरुभयेद्युर्व्याप्तिस्तदभावोंशव्याप्तिस्तत्रापिसाम्यंवैषम्यंचेतिषट्पक्षाः त
त्राद्ययोरसंदेहएव तृतीयेतुपूर्वाह्णेगौणमुख्यव्याप्तेःसत्त्वात्पूर्वेतिमाधवःयुग्मवाक्यान्निर्णयइतिहेमाद्रिः
चतुर्थपक्षेपूर्वैवगौणकालव्याप्तेःसत्त्वात् वैषम्येणांशव्याप्तौयाधिकासाग्राह्या साम्येपूर्वाअयंचस्वतंत्रैक-

भक्तनिर्णयः अन्यांगेऽपवासप्रतिनिधीतदनुसारेणनिर्णयः अथनक्तं तच्चदिनानशनपूर्वरात्रिभोजनं तत्र
प्रदोषव्यापिनीग्राह्या प्रदोषव्यापिनीग्राह्यातिथिर्नक्तव्रतेसदेतिवत्सोक्तेः प्रदोषस्तु त्रिमुहूर्त्तंप्रदोषःस्याद्भा
नावस्तंगतेसति नक्तंतत्रतुकर्तव्यमितिशास्त्रविनिश्चयइतिमदनरत्नेव्यासोक्तेः तत्रापित्रिदंडोत्तरंकार्यं
सायंसंध्यात्रिघटिकाअस्तादुपरिभास्वतइतिस्कांदोक्तेर्दंडत्रयस्यसंध्यात्वात्तत्रचत्वारिमानिकर्माणिसंध्याय
परिवर्जयेत् आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थकमितिमार्कंडेयेनभोजननिषेधात् मुहूर्त्तोनंदिनंनक्तंप्र
वदंतिमनीषिणः नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिपेतिमाधवीयेभविष्योक्तेश्च गौडास्तु प्रदोषोस्तमया
दूर्ध्वंघटिकाद्वयमिष्यतइतिवत्सोक्तः प्रदोषः संध्याचदिनरात्र्योःसंधौमुहूर्त्तः अर्धास्तमयात्संध्याव्यक्ती
भूतानतारकायावत् तेजःपरिहानिवशाद्भानोरर्धोदयंयावदितिवराहोक्तेरित्याहुः तन्न अस्यसंध्याव
दनानध्यायादिपरत्वात् अतएवतत्रखंडमंडलस्यसंध्यात्वमुक्तंविज्ञानेश्वरेण यच्चमदनरत्ने नक्तस्य
वैधत्वाद्रागप्राप्तभोजनगोचरोनिषेधइत्युक्तं तन्नविधेर्निषेधाविरोधात् अन्यथाकपिंजलानित्यत्रत्रि-
भ्योधिकानांहिंसनंस्यात् सायंकालेनक्तंतुदिनद्वयेप्रदोषास्पर्शोज्ञेयं अतथात्वेपरत्रस्यादस्तादर्वाग्य
तोहिसेतिजाबालिवचनात् प्रदोषव्यापिनीनस्याद्दिवानक्तंविधीयते आत्मनोद्विगुणांछायांमंदीभव
तिभास्करे तन्नक्तंनक्तमित्याहुर्ननक्तंनिशिभोजनमितिस्कांदाच्च यत्यादीनामपिसायाह्ने नक्तंनिशायां
कुर्वीतगृहस्थोविधिसंयुतः यतिश्चविधवाचैवकुर्यात्तत्सदिवाकरमिति तत्रैवस्मृत्यंतरात् इदमपुत्रविधुरोप

लक्षणम् पुत्रवतस्तुरात्रावेव अनाश्रमोप्याश्रमी स्यादपत्नीकोपि पुत्रवानिति संग्रहोक्तेः सौरनक्तं तु दिवैव त्रिमुहूर्तस्पर्शेवाप्न्हि निशि चैतावती तिथिः तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनमिति सुमन्तूक्तेः हरिनक्ते विशेषः कालादर्शे स्कांदे उदयस्था सदा पूज्या हरिनक्तव्रते तिथिरिति अन्यनक्तं तु संक्रान्त्यादावपि रात्रावेव निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधाबाधकत्वात् दिनद्वयव्याप्तौ परा उभयोर्यदि वा तिथ्योः प्रदोषव्यापिनी तिथिः न त्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यत इति कालादर्शे जाबालिवचनात् अन्यपक्षेषु एकभक्तवन्निर्णयः अत्र विशेषो मदनरत्ने गारुडे हविष्यभोजनं स्नानं सत्यमाहारलाघवम् अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् अग्निकार्यं व्याहृतिहोमः इति नक्तम् अयाचिते तु विशेषवचनाभावात् पक्षे उपवासे प्राप्ते उपवासवन्निर्णयः अथ नक्षत्रव्रतकालनिर्णयः विष्णुधर्मे उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः युज्यते यत्र वा तारा निशीथे शशिना सहेति माधवीये स्कांदे तत्रैवोपवसेदृक्षे यन्निशीथादधो भवेत् उपवासे यदृक्षं स्यात्तद्दिनं नक्तैकभक्तयोः अथ व्रतपरिभाषा तत्राधिकारिणो मदनरत्ने भविष्ये अनग्नयस्तु ये विप्रास्तेषां श्रेयो विधीयते व्रतोपवासनियमैर्नानादानैस्तथा नृप अनग्निग्रहणमुपवासविषयम् अत एव देवलः आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः अश्नंत एव सिध्यंति नैषां सिद्धिरनश्नताम् एकादश्यादौ तु वचनात् भवतीति वक्ष्यामः शूद्रस्याप्यधिकारः शूद्रो वर्णश्चतुर्थोपि वर्णत्वाद्धर्ममर्हति वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेति व्यासोक्तेः प्राच्यास्तु वैश्यशूद्रयोर्द्विरात्राधिकोपवासनिषेधः वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते त्रिरात्रं प-

चरात्रंपातेषांस्युधिर्नेनिवध्यते चतुर्थभक्तक्षपणंवैश्येशूद्रेविधीयते त्रिरात्रंतुनधर्मज्ञैर्विहितंब्रह्मवादिभि
रितिहेमाद्रौवचनादित्याहुः यावदुक्तनिषेधइत्यन्ये तत्तुनिर्मूलमितिप्रकरणान्महातपोविषयइतियु-
क्तम् एवंस्त्रीणामपिपत्युःस्कांदे नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषणं भर्तृशुश्रूषयैवैतालोकानिष्टा
न्व्रजंतिहि यद्देवेभ्योयच्चपित्रादिकेभ्यःकुर्याद्भर्ताभ्यर्चनंसत्क्रियांच तस्यार्धंवैसाफलंनान्यचित्तानारी
भुंक्तेभर्तृशुश्रूषयैव आदित्यपुराणे नारीखल्वननुज्ञाताभर्त्रावापितृकेनवा विफलंतद्भवेत्तस्याय
त्करोत्यौर्ध्वदैहिकमिति और्ध्वदैहिकंपारलौकिकं तद्भिन्नेननुज्ञाविषयं भार्यापत्युर्मतेनैवव्रतादीना
चरेत्सदेतिकात्यायनोक्तेः अन्नविशेषोहरिवंशे स्नानंचकार्यंशिरसस्ततःफलमवाप्नुयात् स्नात्वा
स्त्रीमातरुत्थायपतिंविज्ञापयेत्सती तथा गृहीतौदुंबरपात्रंसकुशंसाक्षतंतथा गोशृंगंदक्षिणंसि-
भगृह्णीयाच्चतज्जलं औदुंबरंताम्रमयं ततोभर्तुःसतीदद्यात्स्नातस्यप्रयतस्यच आसनश्चाभिषे-
क्तव्यंततःशिरसितज्जलं उपवासेषुकर्तव्यमेतत्स्त्रीव्रतकेषुचेति सर्वव्रतेषुसंकल्पविधिश्चभारते गृ
हीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृह्णीयाद्यद्वासंकल्पयेद्बुधः हस्तेनैवेत्यर्थः अथव्रतार
म्भकालः मदनरत्ने गार्ग्यः अस्तगेचगुरौशुक्रेबालेवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारयेत्
रत्नमालायां सोमसौम्यगुरुशुक्रवासराःसर्वकर्मसुभवंतिसिद्धिदाः भानुभौमशनिवासरेषुचप्रोक्तमेवख
लुकर्मसिध्यति तथा विरुद्धसंज्ञाइहयेचयोगास्तेषामनिष्टःखलुपादआद्यः सवैधृतिस्तद्व्यतिपातः

स्पनार्धम् निरुक्तयोगेप्रथमेसवज्रेव्याघातसंज्ञेनवपंचशूले गंडेऽतिगंडेचषडेवनाड्यःशुभेषुकार्येषुविवर्ज
नीयाः संग्रहे कृष्णेभिदिशयोरूर्ध्वंसप्तमीभूतयोरधः शुक्लेवेदेशयोरूर्ध्वंभद्राग्राग्वक्रपूर्णयोः श्रीपतिः न
सिद्धिमायातिकृतंचविष्ट्यांविषारिघातादिकमत्रसिद्धम् व्यवहारसमुच्चये दशम्यामष्टम्यांप्रथमघटिका
पंचकपरंहरिश्चुःसप्तम्यांहिदशघटिकांतेत्रिघटिकम् तृतीयाराकायांत्वयमघटिकाभ्यःपरमवंशक्रमांकि-
द्वेः पुच्छंशिवतिथिचतुर्थ्योस्तुविरमे तथैव सार्पिणीतुसितेपक्षेकृष्णेचैवचतुर्दशीवृश्चिकी सार्पिण्यास्तुमुखंत्या
ज्यंवृश्चिक्याःपुच्छमेवच माधवीये तिथिपूर्वार्धजाहानिनिर्थरपरार्धजाताप्यूर्वार्धजानिशितदाशुभदाचपुच्छे अ
स्यामले दिनभद्रायदारात्रौरात्रिभद्रायदादिवा नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाः श्रीपतिः प
ञ्चपौष्णतोद्वादशभांकराञ्चपौरंवसाद्यानिनवक्रमेण पूर्वार्धमध्यापरभागयुंजिचिरंतनंज्योतिर्विदैः-
स्मृतानि व्रतारंभेचविशेषः मदनरत्नेसत्यव्रतेनोक्तः उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक् सारवंडा
नव्रतानांस्यादारंभश्चसमापनमिति देवलः अभुक्त्वाप्रातराहारंस्नात्वाचम्यसमाहितः सूर्यायदेव
ताभ्यश्चनिवेद्यव्रतमाचरेत् मदनरत्नेभविष्ये क्षमासत्यंदयादानंशौचमिंद्रियनिग्रहः
नंसंतोषस्तेयवर्जनम् सर्वव्रतेष्वयंधर्मःसामान्योदशधास्मृतः अग्निहोमस्तुहेवत्सःव्याहृ
निवर्धमानः यज्ञेनोक्तम् सर्वपदमेतत्पुराणोक्तम कृतव्रतपरम् व्रतांतरेतुविध्यंतरसत्वेहोमोन्यथा
नभतएवैकादश्यांविशिष्टानांहोमानाचरणमिति तन्नजपोहोमश्चेतिवक्ष्यमाणोक्तवाक्यत्वेनास्यकाम्य-

व्रतसमाप्तिपरत्वात् नत्वंतुसामदस्यस्यपशुमित्रविंदादिप्रकरणस्थेनेवतत्तद्व्रतविशेषहोमविधिभिर-
स्योपसंहारइति विष्णुधर्मे तज्जप्यजपनंध्यानंतत्कथाश्रवणादिकम् तदर्चनंचतन्नामकीर्तनश्रवणा
स्यः उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिः कौर्मे बहिर्ग्रामांत्यजान्सूतिंपतितंचरजस्वलां नस्पृशेन्ना
भिभाषेतनेक्षेतव्रतवासरे पृथ्वीचंद्रोदयेअग्निपुराणे स्नात्वाव्रतवतासर्वव्रतेषुव्रतमूर्तयः पूज्याःसुवर्ण
मय्याद्याःशक्त्यावैभूमिशायिना जपोहोमश्चसामान्यंव्रतांतेदानमेवच चतुर्विंशद्वादशवापंचवात्रयएव
वा विप्राभोज्यायथाशक्तितेभ्योदद्याच्चदक्षिणाम् अत्रविप्राइतिपुल्लिंगनिर्देशात्पुमांसएव भोज्याःनतु-
स्त्रियः एवंसहस्रभोजनादावपि विरूपैकदेशस्यप्रमाणांतरंविनायुक्तत्वात् अतएवद्वयोर्यजमानयोः
प्रतिपदंकुर्यात् बहुभ्योयजमानेभ्यइत्यादौविरूपैकशेषायोगात् पत्न्यभिप्रायंद्वित्वंबहुत्वंवानसंभवती
त्युक्तमाचार्यैः पार्थसारथिनाच एतेनैकस्यब्राह्मणस्याहृत्याभोजनंपरास्तंबहुत्वस्यैकपदश्रुत्याब्रा-
ह्मणान्वितत्वेनभोजनान्वयाभावादित्यन्यत्रविस्तरः शूद्रस्यत्वनुमतिर्वादिवाहृतिमहाव्याहृतिहोमइति
वर्धमानः व्रतमूर्तयोव्रतदेवताप्रतिमाः प्रतिमास्वरूपंचमदनरत्नेभविष्ये अनुक्तद्रव्यतत्संख्यादेवता
प्रतिमानृप सौवर्णीराजतीताम्रीवृक्षजामार्तिकीतथा चित्रजापिष्टलेखोत्थानिजवित्तानुरूपतः आ-
माषात्पलपर्यंतकर्तव्याशाठ्यवर्जितैः तत्रैवब्राह्मे आज्यंद्रव्यमनादेशेजुहोतिषुविधीयते मंत्रस्यदेव
तायाश्चप्रजापतिरितिस्थितिः मंत्रानुक्तौसमस्तव्याहृतिरूपोमंत्रःप्रजापतिश्चदेवतेतिकल्पतरुः वर्ध

मानधृतदेवीपुराणे होमोमहादिपूजायांशतमष्टाधिकंभवेत् अष्टाविंशतिरष्टौवायथाशाक्तिविधीयते म
दनरत्ने अनुक्तसंख्यायत्रस्याच्छतमष्टोत्तरंस्मृतम् वर्धमानधृतवृद्धशातातपः उपवासंद्विजःकृत्वाततो
ब्राह्मणभोजनम् कुर्यात्तेनास्यसम्पूर्णउपवासोभिजायते व्रतोद्यापनानुक्तौतुपृथ्वीचंद्रोदयेनंदिपुराणे
कुर्यादुद्यापनंतस्यसमाप्तौयदुदीरितम् उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत् यदिवोद्यापनंनोक्तंव्रतानु
गुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गाश्चैवकांचनंदद्याद्व्रतस्यपरिपूर्तये अशक्तौतुनार
दीये सर्वेषामप्यलाभेतुयथोक्तकरणंविना विप्रवाक्यंस्मृतंशुद्धंव्रतस्यपरिपूर्तये यथाविप्रवचोयस्तुकृ
त्वानिमज्जजःशुभम् अदत्वादक्षिणांपापःसयातिनरकंध्रुवम् भारते वेदोपनिषदेचैवसर्वकर्मसुदक्षि
णा सर्वत्रतुमयोद्दिष्टाभूमिर्गावोथकांचनम् वैजवापः शिवनेत्रोद्भवंयस्मात्तस्मात्पितृवल्लभम् अमंगलंत
द्यत्नेनदेवकार्येषुवर्जयेत् टोडरानंदेदेवीपुराणे व्रतेचतीर्थेध्ययनेश्राद्धेपिचविशेषतः परान्नभोजनाद्दे
वियस्यान्नतस्यतत्फलम् पृथ्वीचंद्रोदयेग्निपुराणे नित्यस्नायीमिताहारोगुरुदेवद्विजार्चकः क्षारंक्षौद्रं
चलवणंमधुमांसानिवर्जयेत् क्षाराश्चतत्रैवोक्ताः तिलमुद्गादृतेशैब्यंसस्यंगोधूमकोद्रवौ धान्यकंदेव
धान्यंचशमीधान्यंतथैवच स्विन्नधान्यंतथापण्यंमूलंक्षारगणःस्मृतः गोधूमानांतुतत्रैवप्रतिप्रसवः
व्रीहिषष्टिकमुद्गाश्चकलायाःसतिलंपयः श्यामाकाश्चैवनीवारागोधूमाद्याव्रतेहिताः कूष्मांडालाबुवार्ता
कपालंकीज्योत्स्निकास्त्यजेत् चरुभैक्षसक्तुकणाःशाकंदधिघृतंमधु श्यामाकाःशालिनीवारायावकंमूल

तंडुलम् हविष्यव्रतनक्तादावग्निकार्यादिके हितम् मधुमांसंविहायान्यद्व्रतेवाहितमीरितमिति शमीधान्यं
माषादि पाठकी मध्यदेशे पोईइति प्रसिद्धा ज्योत्स्निकाकोशातकी मिताक्षरायां गौतमः चरुभैक्षसक्तुकणया
वकशाकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरप्रशस्तानि पयोदधिघृतंचगव्यमिति अन्येचविशेषा
एकादशीचातुर्मास्यादिप्रकरणेवक्ष्यंते गृहीतव्रतत्यागेतुमदनरत्ने छागलेयः पूर्वंव्रतंगृहीत्वायोनचरेत्काम
मोहितः जीवन्भवतिच चंडालोमृतःश्वाचाभिजायते तत्रप्रायश्चित्तमुक्तंपृथ्वीचंद्रोदयेऽग्निगारुडपुराण
योः क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि दिनत्रयंनभुंजीतमुंडनंशिरसोऽथवेतिप्रायश्चित्ताम्नानादति
क्रांतव्रतानुष्ठानंनास्तीतिगम्यते यत्तु प्रायश्चित्तंततःकृत्वापुनरेवव्रतीभवेदितिवचनम् यच्चातिक्रांतमपि
व्रतंकार्यमेवेतिशूलपाणिः तन्मध्येलोपेव्रतशेषसत्त्वेज्ञेयम् एतच्चशक्तविषयम् अशक्तौतुकालहेमाद्रौपु
राणांतरे उपवासासमर्थश्चेदेकंविप्रंतुभोजयेत् तावद्धनादिवादद्याद्भुक्तस्याद्द्विगुणंतथा भुक्तःकृतभोजनः
ब्राह्मणभोजनंविनेतिशेषः सहस्रसंमितांदेवींजपेद्वाप्राणसंयमात् कुर्याद्द्वादशसंख्याकान् यथाशक्त्यातु
रोनरइति श्रुतितत्त्वेमात्स्ये उपवासेष्वशक्तानांनक्तंभोजनमिष्यते मदनरत्नेवायवीये द्रव्यदानोपवास
स्यफलंप्राप्नोत्यसंशयम् तथापरार्केदेवलः ब्रह्मचर्यंतथाशौचंसत्यमामिषवर्जनम् व्रतेष्वेतानिचत्वा-
रिवरिष्ठानीतिनिश्चयः मात्स्ये तस्मात्कृतोपवासेनस्नानमभ्यंगपूर्वकम् वर्जनीयंप्रयत्नेनरूपघ्नंतत्परंच
प अन्येचनियमास्तत्रतत्रान्वेषणीयाः अथस्त्रीव्रतेष्वविशेषउच्यते तत्रहेमाद्रौव्रतकांडेगारुडे गंधाल-

कारतांबूलपुष्पमालानुलेपनम् उपवासेनदुष्यंतिदंतधावनमंजनमितिइदंचसभर्तृकोपवासविषयम् अंजनंचसतांबूलंकुंकुमंरक्तवाससी धारयेत्सोपवासापिअवैधव्यकरंयतः विधवायतिमार्गेणकुमारी वायदृच्छयेतितत्रैवभाविष्योक्तेः तथाविष्णुधर्मे सर्वेष्वतूपवासेषुपुमान्वाथसुवासिनी धारयेद्रक्तवस्त्राणिकुसुमानिसितानिच विधवाशुक्लवसनमेकमेवहिधारयेत् मनुरपि पुष्पालंकारवस्त्राणिगंधधूपानुलेपनम् उपवासेनदुष्यंतिदंतधावनमंजनम् मदनरत्नेव्यासः दंतधावनपुष्पादिव्रतेष्यस्यानदुष्यतीति यद्यपीदंसर्वोपवासविषयंप्रतीयतेतथापिशिष्टाचारात्सौभाग्याद्यर्थंक्रियमाणनवरात्रिरात्राद्युपवासविषयमेव नत्वेकादश्यादिविषयम् असकृज्जलपानाच्चसकृत्तांबूलचर्वणात् उपवासःप्रणश्येतदिवास्वापाच्चमैथुनादितिपरार्केदेवलेनतन्निषेधात् नचास्यपुंविषयत्वेनसावकाशत्वात्स्त्रीणांतांबूलादिप्राप्तौतोतिवाच्यम् तांबूलादिभापकस्यैवैकादश्यादितरविषयत्वेनवैपरीत्यस्यापिसुवचत्वात् यत्तु हरिवंशे अंजनंरोचनंचैवगंधान्सुमनसस्तथा व्रतेचैवोपवासेचनित्यमेवविवर्जयेत् शिरसोभ्यंजनंसौम्यनैवमेतत्प्रशस्यते नपादयोर्नगात्रस्यस्नेहेनेतिस्थितिःस्मृतेतितत्तत्रैवोक्तपुण्यकव्रतविषयम् नतुसर्वत्र पूर्वोक्तविरोधादितिमदनरत्ने उक्तम् तत्रैव अश्रुपातोरोषश्चकलहस्यकृतिस्तथा उपवासाङ्कृताह्यपिसद्योध्वंशयातिस्त्रियम् स्त्रियमित्युपलक्षणम् मदनरत्नेशिवधर्मे दानव्रतानिनियमाज्ज्ञानं-ध्यानंहुतंजपः यत्नेनापिकृतंसर्वंक्रोधितस्यवृथाभवेत् अथसूतकादौनिर्णयः तत्रशावसूत्याशौच-

योःसर्वंस्मार्तकर्मनिवृत्तिर्निबंधेषुस्पष्टैव गौडास्तुसूतकाशौचादावपितामाहुः जातूर्ध्वेक्षतजेजातेनित्यकर्मन
चाचरेत् नैमित्तिकंचतदधःस्ववद्भक्तोनवाचरेत् शौनकेचसमुत्पन्नेज्वरकर्मणिमैथुने धूमोद्गारेतथावांतौ
नित्यकर्माणिसंत्यजेत् द्वयेभुक्तेत्वजीर्णेचनैवभुक्त्वापिकिंचन कर्मकुर्यान्नरोनित्यंसूतकेमृतकेतथेति
कालिकापुराणात् वस्तुतस्तुपूर्वंदेवीपूजोपक्रमात्तन्मात्रविषयत्वमस्येतियुक्तंमतीमः तथाहेमाद्रौपाद्मे
गर्भिणीसूतिकादिश्चकुमारीचाथरोगिणी यदाशुद्धातदान्येनकारयेत्प्रयतास्वयमिति पुंसोप्येषविधिः
लिंगस्याविवक्षितत्वात् तेनयस्मिन्व्रतेयत्पूजाद्युक्तंतदन्येनकारयेत् शारीरनियमान्स्वयंकुर्यादि-
तिहेमाद्रिव्याचख्यौ नव्रतिनांव्रतइतिविष्णूक्तेश्च आरंभस्तुनभवत्येव शुद्धस्तुविष्णुः बहुकालिक
स्योगृहीतश्चपुरायदि सूतकेमृतकेचैवव्रतंतन्नैवदुष्यति एतत्काम्यपरंनित्यंतुनारब्धमपिकार्यमिति
गौडाः मदनरत्ने पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः तत्कर्तव्यंनरैःशुद्धंदानार्चनविवर्जितम् माधवीयेकौर्मे
काम्योपवासेप्रक्रांतेत्वंतरामृतसूतके तत्रकाम्यव्रतंकुर्याद्दानार्चनविवर्जितमिति एतेनसांगधिकारादू
तांगदेवपूजादिकार्यमितिवर्धमानोक्तिःपरास्ता प्रारब्धपूजादिकार्यमेव नवरात्रेतुतत्रैवविशेषंवक्ष्यामः
एवंरजस्वलापि यत्तुसत्यव्रतः प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् नतत्रापिव्रतस्यस्यादुपरोधःक
दाचनेति तत्प्रतिनिधिनाकारयेदित्येतत्परम् तदुक्तंमदनरत्नेमात्स्ये अंतरातुरजोयोगेपूजामन्येनकार
येत् प्रतिनिधयस्तुनिर्णयामृतेपैठीनसिः भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम् असामर्थ्येपरस्ताभ्यां

व्रतभंगोनजायते स्कांदेपि पुत्रंवाविनयोपेतंभगिनींभ्रातरंतथा एषामभावएवान्यंब्राह्मणंवानियोजये-
त् कात्यायनः पितृमातृभ्रातृपतिगुर्वर्थेचविशेषतः उपवासंप्रकुर्वाणःपुण्यंशतगुणंलभेत् मातामहादी-
नुद्दिश्यएकादश्यामुपोषणे कृतेनेतुफलंविप्राःसमग्रंसमवाप्नुयुः मदनरत्नेप्रभासखंडे भर्तापुत्रःपुरोधा-
श्चभ्रातापत्नीसखापिच यात्रायांधर्मकार्येषुजायंतेप्रतिहस्तकाः एभिःकृतंमहादेविस्वयमेवकृतंभवेत्
तत्रैवचावचोये स्वयंकर्तुमशक्तश्चेत्कारयीतपुरोधसा इदंचसर्ववर्णसाधारणम् अविशेषात् यत्तुकश्चि-
न्महोक्त्याह शूद्रस्यब्राह्मणादिरेवप्रतिनिधिर्युक्तोनशूद्रः जपस्तपस्तीर्थसेवाप्रव्रज्यामंत्रसाधनम्
विप्रैःसंपादितंयस्यसंपन्नंतस्यतत्फलमितिमरीचिवचनात्इति तन्नुच्छम् प्रव्रज्यादीनांशूद्रेऽसंभवात्तद्वि-
षयेप्राप्त्यदर्शनादितिन्यायेनास्यब्राह्मणादिगोचरत्वात् यदापिउपवासोव्रतंहोमस्तीर्थस्नानजपादि कृ-
मितिपूर्वार्धेपाठस्तदापिसएवदोषःस्त्रीशूद्रपतनानिषडितिमानवीयेजपनिषेधात् वस्तुतस्तुसंपूर्ण-
र्णतावाचनमात्रमत्रोच्यतइतिप्रतिनिधेःकावार्तेत्यलम् अत्रविशेषमाहत्रिकांडमंडनः काम्यप्रतिनिधि-
र्नास्तिनित्येनैमित्तिकेचसः काम्येष्पुपक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुः नस्यात्प्रतिनिधिर्मंत्रस्वामिदेवाग्नि-
कर्मसु सदेशकालयोर्नास्तिनारणेराग्निरेवसा नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्रचित् हिरण्यकेशिसू-
त्रेपि नस्वामित्वस्यभार्यायाःपुत्रस्यदेशस्यकालस्याग्नेर्देवतायाःकर्मणःशब्दस्यचप्रतिनिधिर्विद्यतेइ-
ति अथव्रतादिसन्निपातेनिर्णयः तत्रातिथिद्वयसन्निपातेतत्रोक्तंदानहोमादिक्रमेणानुष्ठेयम् आ

रोधात् एवं पूर्वारब्धेष्वेव एकमध्येऽन्यकाम्यकर्मारंभस्तु न भवत्येव गुणफलाहृते यस्य यज्ञे प्रततेंतरायस्तस्ता-
यते तं यज्ञं निर्ऋतिर्गृह्णातीति राणकधृतश्रुतेः यत्तु व्रतादिकर्ममात्रम् अनंगेन व्यवधानदोषस्य सर्वत्रसा-
म्यात् शिष्टास्तु माघकार्तिकस्नानादिमध्ये लक्षहोमतुलाभारलक्षश्रवणाद्याचरंतीति तन्नित्यमध्येऽस्तु काम्य
मध्ये तु चिंत्यम् यत्र तु नक्तैकभक्तादौ विरोधस्तत्र माघस्यादेकभक्तं कार्यम् नक्तं तु परेद्युस्तत्तिथौ गौणकाले
कार्यम् समकालीनविरुद्धव्रतादौ त्वेकं स्वयं कृत्वान्यद्भार्यादिना कारयेदिति माधवः यत्र तु शिवरात्र्यादौ तिथि
मध्ये पारणायां ह्निभोजनप्राप्तम् भूताष्टम्योर्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि एकादश्यामहोरात्रं भुक्त्वा चांद्राय-
णं चरेदिति तन्निषेधश्च तत्र पारणायाविधत्वाद्दिवैव भोजनम् निषेधस्तु रागप्राप्तभोजनविषयः एवमष्टम्या
दिनक्तव्रते संक्रांत्यादौ रवौ संकष्टचतुर्थ्यां च रात्रौ भोजनम् यत्र त्वष्टम्यादौ दिवा भुंजिनिषेधः संक्रमे च रात्रावि-
ति निषेधद्वयं तत्रोपवास एव कार्यः यद्यपि पुत्रिण उपवासो निषिद्धस्तथाप्युपवासनिषेधे तु भक्ष्यं किंचिद्भक-
क्षयेदिति वचनात् किंचिद्भक्षयित्वोपवासः कार्यः चांद्रायणमध्ये एकादश्यादौ तु भोजनं कार्यमेव चांद्रायणस्य
काम्यत्वेन नित्यबाधकत्वात् अबाधेन गत्यसंभवाच्च एकादश्यामेकांतरोपवासादिपारणायां जलपारणां कृत्वो-
पवसेत् आपो वा अशितमनशितं चेति श्रुतेः एवं द्वादश्यां मासोपवासश्राद्धदोषादिषु ज्ञेयम् एवं काम्यनैमित्ति-
कनित्यत्वादिकृतं बलाबलं स्वयमूह्यमिति दिक् इति कमलाकरभट्टकृते निर्णयसिंधौ परिभाषा समाप्ता
अथ प्रतिपदादिनिर्णयः शुक्लप्रतिपदपराह्णव्यापित्वे पूर्वा ग्राह्या युग्मवाक्यात् प्रतिपत्संमुखी कार्या याम

वेदापराह्निकौतिस्कांदोक्तेः शुक्लास्याःप्रतिपत्तिथिः प्रथमतश्चेत्सापराण्हेभवेदितिदीपिकोक्तेश्च अपराण्ह-
श्चपंचधाभक्तेदिनेचतुर्थोभागः तदभावेसायाह्नव्यापिनीग्राह्या तदभावेतुसायाह्नव्यापिनीपरिगृह्यतामिति
माधवोक्तेः कृष्णातुपरा कृष्णानूत्तरतोखिलेतिदीपिकोक्तेः कृष्णापिपूर्वैवेत्यनंतभट्टः सर्वतिथिषुवर्ज्यान्यु-
क्तानिमुहूर्तदीपिकायाम् कूष्मांडबृहतीफलानिलवणंवर्ज्यंतिलाम्लंतथातैलंचामलकंदिवंभ्रवसताशीर्षकपा
लांत्रकम् निष्पावांश्चमसूरिकान्फलमथोवृंताकसंज्ञंमधु द्यूतंस्त्रीगमनंक्रमात्प्रतिपदादिष्वेवमाषोडश शी
र्षंनारिकेलम् कपालंअलाबु अंत्रंपटोलम् भूपालः कूष्मांडबृहतीक्षारंमूलकंपनसंफलम् धात्रीशिरःकपा
लांत्रंनखचर्मतिलानिच क्षुरकर्मांगनासेवांप्रतिपत्प्रभृतित्यजेत् नखंशिबी चर्ममसूरिका द्वितीयातुकृष्ण
पूर्वाशुक्लोत्तरेतिहेमाद्रिः कृष्णाद्वितीयादिमापूर्वाण्हेयदिसासितातुपरतः सर्वेतिदीपिकोक्तेः माधवानंतभ
ट्टमतेतुसर्वापिद्वितीयापरा तथाचमाधवः पूर्वेद्युरस्तताप्रातःपरेद्युस्त्रिमुहूर्तगा साद्वितीयापरापोष्यापूर्व
विद्धाततोन्यथेति तृतीयातुसर्वमतेरंभाव्यतिरिक्तापरेव तेनयुग्मवाक्यंरंभाव्रतविषयम् रंभाख्यांवर्जयि-
त्वातुतृतीयांद्विजसत्तमः अन्येषुसर्वकार्येषुगणयुक्ताप्रशस्यतइतिब्रह्मवैवर्त्तात् गौरीव्रतेतुविशेषमाहमाध
वः मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरे शुद्धाधिकायामप्येवंगणयोगप्रशंसनादिति चतुर्थ्यपिसर्वमतेगणे
शव्रतातिरिक्तापरेव युग्मवाक्यात् एकादशीतथाषष्ठीअमावास्याचतुर्थिका उपोष्याःपरसंयुक्ताःपराःपूर्वेण
संयुताइतिमाधवीये बृहद्वसिष्ठोक्तेश्च गणचतुर्थीतुमध्याह्नव्यापिनीपंचमीयुताचग्राह्येतिनिर्णयामृतेमा

धवीयेचोक्तम् युग्मंमध्यंदिनेयत्रतत्रोपोष्यफणीश्वरान् क्षीरेणाप्याय्यपंचम्यांपूजयेत्प्रयतोनरः विषाणितस्यन
श्यंतिनतान्हिंसंतिपन्नगाइतिमाधवीयेदेवलोक्तेः युग्मचतुर्थीपूर्वत्रमध्याह्नव्यापिपूर्वा अन्यपक्षेषुपरैव पंचम्यां
पूजोक्तेः गणेशव्रतेतुतृतीयायुतैवचतुर्थी चतुर्थीतुतृतीयायांमहापुण्यफलप्रदा कर्त्तव्याव्रतिभिर्वत्सगण-
नाथसुतोषिणीतिहेमाद्रौब्रह्मवैवर्त्तात् माधवीयेतुगणेशव्रतेमध्याह्नव्यापिनीमुख्या चतुर्थीगणनाथस्यमा
तृविद्धाप्रशस्यते मध्याह्नव्यापिनीचेत्स्यात्परतश्चेत्परेहनीतिबृहस्पतिवचनात् प्रातःशुक्लतिलैःस्नात्वामध्याह्ने
पूजयेन्नृपेतितत्कल्पेभिधानाच्च तेनपरदिनेतत्वेपरा अन्यथापूर्वेत्युक्तम् वस्तुतस्तु यत्रभाद्रशुक्लचतुर्थ्यां
दौगणेशव्रतविशेषेमध्याह्नपूजोक्तातद्विषयाण्येवप्रागुक्तवचनानिनतुसार्वत्रिकाणि संकष्टचतुर्थ्यादौबहू
नांकर्मकालानांबाधापत्तेःतेनसर्वत्रगणेशव्रतेपूर्वैवेतिसिद्धम् संकष्टचतुर्थीतुचंद्रोदयव्यापिनीग्राह्या दिन
द्वयेतत्वेमातृयोगस्यसत्वात्पूर्वेतिकेचित् अन्येतुदिनेमुहूर्तत्रयादिरूपस्यतृतीयायोगस्याभावात्परदिनेमा-
धवोक्तमध्याह्नव्यापिसत्वात्संपूर्णत्वाच्चपरेत्याहुः क्षतेदिनद्वयेतदभावेतुपरैव गौरीव्रतेतुपूर्वैव गणेश
हुलाव्यतिरिक्ताःप्रकीर्तिताः चतुर्थ्यःपंचमीविद्धादेवनांतरयोगतइतिमदनरत्नेब्रह्मवैवर्त्तात् पंचमीतुमा
मतेसर्वापिपूर्वा चतुर्थीसंयुताकार्यापंचमीपरयानतु दैवेकर्मणिपित्र्येचशुक्लपक्षेतथासितेति हारीतोक्तेः
हेमाद्रिमतेतुकृष्णापूर्वासितापरा कृष्णापूर्वयुतासितापरयुतास्यात् पंचमीतिदीपिकोक्तेः वस्तुतस्तुहारीतो
क्तिरुपवासविषया प्रतिपत्पंचमीचैवसावित्रीमूलपूर्णिमा नवमीदशमीचैवनोपोष्याःपरसंयुताइतिब्रह्म

र्थप्रसिद्धमेवचवैष्णवत्वंस्मार्त्तत्वंचमन्यंतेवृद्धाः तत्वसागरेभविष्ये यथाशुक्लातथाकृष्णायथाकृष्णातथे
तरा तुल्येतेमन्यतेयस्तुसवैवैष्णवउच्यते केचित्तुदशम्यांनवमीवेधमपित्यजंति तत्रमूलंमृग्यम् उदयवे
धस्तुपरिशेषात्स्मार्त्तगोचरः तदाहमाधवः अरुणोदयवेधोत्रवेधःसूर्योदयेयथा उक्तौद्वौदशमीवेधौवै
ष्णवस्मार्तयोःक्रमात् हेमाद्रिस्तुकेषांचिदर्धरात्रेपिदशमीवेधमाह अर्धरात्रेतुकेषांचिद्दशम्यावेधउच्य
ते कपालवेधइत्याहुराचार्याये हरिप्रियाः इतिब्रह्मवैवर्तात् नतन्ममनतम् यस्मात्त्रियामारात्रिरिष्यत
इतिब्रह्मवैवर्तात् अस्यार्थः अनद्यतनेलङ्इत्यत्रातीतायाःरात्रेःपश्चिमयामद्वयमागामिन्याःरात्रेःपूर्व
यामद्वयंदिवसश्चसकालएवाद्यतनःसकलइत्युक्तंमहाभाष्ये सएषवर्तमानःकालएकादश्यहोरा
त्रउपोष्यः तन्मध्येदशमीप्रवेशोविद्धासात्याज्या अतएवहेमाद्रौदशम्याःसंगदोषेणअर्धरात्रात्परेणतु
वर्जयेच्चतुरोयामान्संकल्पार्चनयोःसदेतिदोषउक्तः चतुरोयामान्दिवसस्येत्यर्थः स्वमतेतुरात्रेःत्रियाम
त्वात्प्रहरत्रयंपूर्वशेषः तेनचतुर्थप्रहरएववेधोयुक्तःसोप्यरुणोदयएव सूर्योदयंविनानैवस्नानदाना
दिकःक्रमइतिमार्कंडेयपुराणात् प्रत्यूषोहर्मुखंकल्पइतिकोशादरुणोदयमारभ्यसूर्यांशुप्रवृत्तेस्तत्रैव
निषेधःतेनमतभेदाद्व्यवस्थेतिकेचित् केसुनिकन्यायेनारुणोदयवेधस्यैवयंस्तु तिरितितुमाधवः यस्तु
द्विपंचदशाभिस्तथेतिवेधःसउपवासातिरिक्तविषयइतिमाधवः सर्वप्रकारवेधोयमुपवासस्यदूषकः
सार्धसप्तमुहूर्तस्तुयोगोयंबाधतेव्रतमितिनिगमादित्यलं अत्रमाधवमतेवैष्णवैररुणोदयविद्धात्या

ज्या यदात्वेकादश्येवशुद्धासतीवर्धतेद्वादशीवाउभयंवातदापरोपोष्या एकादशीद्वादशीवाधिकाचे

त्यज्यतांदिनम् पूर्वंग्रात्यंतूत्तरस्यादितिवैष्णवनिर्णयः इतिमाधवोक्तेः स्मार्तैस्तुसूर्योदयविद्धात्याऽ

यदात्वेकादशीशुद्धासतीवर्द्धतेद्वादशीचसमान्यूनावातदागृहस्थैःपूर्वायतिभिरुत्तराकार्या प्रथमे

हनिसंपूर्णाव्याप्याहोरात्रसंयुता द्वादश्यांचनथातातद्दश्यतेपुनरेवच पूर्वाकार्यागृहस्थै र्या भि

श्चोत्तराविभोइतिस्कांदोक्तेः वर्धमानोप्येवमेवाह उभयवृद्धौतुशुद्धाविद्धावासर्वेषांपरैव

शीयत्रप्रभातेपुनरेवसा सर्वैरेवोत्तराकार्यापरतोद्वादशीयदीतिनारदोक्तेः द्वादशीमात्रवृद्धौतुशुद्धा

यांपूर्वैव नचेदेकादशीविष्णोर्द्वादशीपरतःस्थिता उपोष्यैकादशीतत्र यदीच्छेत्परमंपदमितिनारदोक्तेः

द्वादशीमात्रवृद्धौतुशुद्धाविद्धेव्यवस्थिते शुद्धापूर्वोत्तराविद्धास्मार्तनिर्णयईदृशइतिमाधवोक्तेश्च मदन

रत्नेप्येवम् यत्तु विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत् अविद्धापिचविद्धास्यात्परतोद्वादशीयदीतिहे

माद्रौपाद्मवचनंतदेकादश्याद्दृद्धौज्ञेयम् तदुक्तंमाधवेन एकादशीद्वादशीचेत्युभयंवर्धतेयदा तदापूर्वं

दिनंत्याज्यंस्मार्तैर्ग्रात्यंपरंदिनमिति विद्धैकादश्यांद्वादशीमात्रवृद्धौचसर्वेषांपरैव तत्रैवैकादशीमात्रवृ

द्धौगृहिणःपूर्वायतेरुत्तरा पूर्वोक्तपाद्मोक्तेः एकादशीविवृद्धाचेच्छुक्लेकृष्णेविशेषतः उत्तरांतुयतिःकुर्या

त्पूर्वामुपवसेद्गृहीतिप्रचेतसोक्तेः एतच्छुद्धाविद्धातुल्यमितिमाधवः त्रयोदश्यांनलभ्येतद्वादशीयदि

किंचन उपोष्यैकादशीतत्रदशमीमिश्रितापिचेतिस्कांदात् अविद्धानिनिषिद्धेश्वनलभ्यंतेदिनानितु मु

हूर्तैः पंचभिर्विद्धायास्त्वेवैकादशीतिथिरित्यृष्यशृंगोक्तेश्च मुहूर्तपंचकमरुणोदयमारभ्यज्ञेयम् अन्यथोत्तरे
ह्येकादश्यभावासंभवात् यदपिहेमाद्रिणा शुद्धसमाशुद्धन्यूनावा अधिकद्वादशिकाचेत्सर्वेषांपरैवेत्यु
क्तंतदपिवेधाविषयम् स्मार्तानांतु पूर्वैवेत्यविरोधः हेमाद्रिमतेतूच्यते तत्रशुद्धाविद्धाद्वयीनंदात्रेधान्यून
समाधिकैः षट्प्रकारापुनस्त्रेधाद्वादश्यूनसमाधिकैरित्यष्टादशैकादशीभेदाः तत्रशुद्धाधिकन्यूनद्वादशि
काशुद्धाधिकसमद्वादशिकाचसकामैःपूर्वानिष्कामैरुत्तराकार्या प्रथमेहनिसंपूर्णेतिपूर्वोक्तस्कांदात् ऊन
द्वादशिकायांतुविष्णुप्रीतिकामैरुपवासद्वयंकार्यम् संपूर्णैकादशीयत्रप्रभातेपुनरेवसा लुप्यतेद्वाद
शीतस्मिन्नुपवासःकथंभवेत् उपोष्येद्वेतिथीतत्रविष्णुप्रीणनतत्परैरिति वृद्धवसिष्ठोक्तेः शुद्धन्यूनाशु
द्धाधिकाशुद्धसमाविद्धन्यूनाविद्धसमावाधिकद्वादशिकाचेत्सर्वेषांपरैवेतिहेमाद्रिः मदनरत्नेतुशुद्धाधि
कापरा संपूर्णैकादशीयत्रेतिपूर्वोक्तेः अन्यापूर्वा शुद्धायदासमाहीनासमाहीनाधिकोत्तरा एकादशीमु
पवसेन्नशाङ्गंवैष्णवीमपीतिस्कांदात् शुद्धाएकादशीउत्तराद्वादशी नचेदेकादशीविष्णोरितिनारदोक्तेश्च यत्तु भ-
वद्यापिचविद्धास्यादितिपाद्मंतच्छुद्धाधिकापरं यत्तु संपूर्णैकादशीत्याज्यापरतोद्वादशीयदि उपोष्याद्वादशीशुद्धा
द्वादश्यामेवपारणमित्यादितद्वैष्णवपरं स्मार्तानांतु पूर्वैवेत्युक्तं विद्धन्यूनासमद्वादशिकातुमुमुक्षूणांपुत्रवतांच
परा अन्येषांपूर्वापुत्रवतोपिपूर्वेतिमदनरत्ने विद्धन्यूनान्यूनद्वादशिकासैवसर्वैःकार्येतिहेमाद्रिः मुमुक्षूणांपरान्ये
षांपूर्वेतिमदनरत्ने. विद्धसमासमद्वादशिकोनद्वादशिकाचमुमुक्षुभिः परान्यैः पूर्वाकार्या दशमीमि-

श्रिता पूर्वाद्वादशीयदिलुप्यते शुद्धैवद्वादशीराजन्उपोष्यामोक्षकांक्षिभिरितिव्यासोक्तेः मोक्षकांक्षि
ग्रहणादन्येषांपूर्वैव सर्वत्रैकादशीकार्याद्वादशीमिश्रितानरैः प्रातर्भवतुवामावायतोनित्यमुपोषण-
मितिपाद्मोक्तेः विद्धाधिकासमद्वादशिकाचसर्वेषांपूर्वैव पारणाहेनलभ्येतद्वादशीकलयापिचेत्
तदानींदशमीविद्धाप्युपोष्यैकादशीतिथिरितिऋष्यशृंगोक्तेश्च माधवमतेतुअत्रगृहिणः पूर्वायतेरु
त्तरा विद्धाधिकन्यूनद्वादशिकामोक्षपापक्षयविष्णुप्रीतिकामैःपराकार्या गृहस्थेनतुनक्तंकार्यम्
एकादशीद्वादशीचरात्रिशेषेत्रयोदशी उपवासंनकुर्वीतपुत्रपौत्रसमन्वितइतिकौर्मेदिनक्षयेउपवा-
सनिषेधात् दशम्येकादशीविद्धाद्वादशीचक्षयंगता क्षीणासाद्वादशीज्ञेयानक्तंतुगृहिणःस्मृतमितिह
रूशातातपोक्तेश्च गृहिणःपूर्वत्रोपवासः एकादश्याःशऋइन्यूनत्वेशऋइसमत्वेवाद्वादश्याःन्यूनसम
त्वयोरेकादश्यामुपवासः यानितु दशम्यनुगताहंतिद्वादशीफलम् धर्मापत्यधनायूंषित्रयो
दश्यांतुपारणमितिकौर्मादीनिदशमीवेधत्रयोदशीपारणयोःनिषेधकानितानिविहितभिन्नपराणि
अत्रमूलवचनानितद्व्यवस्थाचाकरेज्ञेया यत्तुकालहेमाद्रौ बहुवाक्यविरोधेनसंदेहोजायतेयदा
द्वादशीतुतदाग्राह्यात्रयोदश्यांतुपारणमितिमार्कंडेयोक्तेः सांदिग्धेषुचवाक्येषुद्वादशींसमुपोषयेत्
तथा विवादेषुचसर्वेषुद्वादश्यांसमुपोषणम् पारणंचत्रयोदश्यामाज्ञेयंमामकंमुनेइतिभाद्मोक्तेश्च
वेधसंदेहेज्योतिर्विदांमतिपत्तौवापराकार्येत्युक्तम् तद्वैष्णवविषयमित्यलंबहुना अथात्रोपयुक्तं

किंचिदुच्यते तत्रदशम्यामेकादशीयोगेदशमीमध्येएवभोजनंकार्यम् एकादश्यांनभुंजीतेतितस्याएव
निमित्तत्वात् निषेधस्तन्निवृत्यात्माकालमात्रमपेक्षतेइतिदेवलोक्तेश्च केचित्तुएकादशीव्रतांगत्वेन
पूर्वेद्युरेकभक्तविधानाद्विधिस्पृष्टेचनिषेधानवकाशान्नकाम्यव्रतांगेभोजननिषेधः प्रवर्ततेतेनैका
दशीमध्येपिपूर्वदिनेभोजनमित्याहुः अत्राधिकारीमाधवीयेकात्यायनोक्तः अष्टवर्षाधिकोमर्त्योत्यशी
तिन्यूनवत्सरः एकादश्यामुपवसेत्पक्षयोरुभयोरपीति भविष्ये ब्रह्मचारीचनारीचशुक्लामेवसदागृ
हीति यत्तुविष्णुः पत्यौजीवतियानारीउपोष्यव्रतमाचरेत् आयुष्यंहरतेभर्तुर्नरकंचैवगच्छतीतितद्भर्तन
नुज्ञाविषयमितिप्रागुक्तम् उपवासासामर्थ्येतुमार्कंडेयकौर्म्योः एकभक्तेननक्तेनतथैवायाचितेनच
उपवासेनदानेननानिर्द्वादशिकोभवेत् अत्र एकभक्तेनयोमर्त्यउपवासव्रतंचरेदित्येकभक्तादिषूपवास
शब्दस्तद्धर्मातिदेशार्थः तेनतत्प्रयुक्ताःसर्वेधर्माःसंकल्पमंत्रेचेकभक्तादिपदेनोह्यःकार्यइतिमदनरत्ने
तथासामर्थ्येप्रतिनिधिनाकारयेदितिप्रागुक्तम् व्रताकरणेप्रायश्चित्तमाहमाधवीयेकात्यायनः अर्कप
र्वद्वयेरात्रौचतुर्दश्यष्टमीदिवा एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेदिति अथकाम्यव्रतविधिः रु
घुनारदीये दशम्यादिमहीपालत्रिदिनंपरिवर्जयेत् गंधतांबूलपुष्पादिस्त्रीसंभोगंमहायशाः तत्रद
शम्यांविधिःकौर्मे कांस्यंमांसंमसूरांश्चचणकान्कोरदूषकान् शाकंमधुपरान्नंचत्यजेदुपवसन्स्त्रि
यम् तथा शाकंमांसंमसूरांश्चपुनर्भोजनमैथुने द्यूतमत्यंबुपानंचदशम्यांवैष्णवस्त्यजेत्

रदीये असारलवणाःसर्वेहविष्यान्ननिषेविणः अवनीतल्पशयनाःप्रियासंगमवर्जिताः व्रतमान्याह हेमाद्रौ
देवलः असकृज्जलपानाच्चसकृत्तांबूलचर्वणात् उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् अशक्तौतुमद
नरलेदेवलः अत्ययेचांबुपानेननोपवासःप्रणश्यति अत्ययेकष्टे विष्णुरहस्ये गात्राभ्यंगशिरोभ्यंगतांबूलं
चानुलेपनम् व्रतस्थोवर्जयेत्सर्वंयच्चान्यत्रनिराकृतम् एषुप्रायश्चित्तमुक्तंनिर्णयामृते संग्रहे स्तेनहिंसक
योःसख्यंकृत्वास्तेन्यंचहिंसनम् प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयम् मिथ्यावादेदिवास्वापेबहुशों-
बुनिषेवणे अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिः ओंनमोनारायणायेत्यष्टाक्षरः तत्रैवपैठीनसिः तांबू
लचर्वणेस्त्रीसंभोगेमांसनिषेवणे व्रतलोपोनचेत्कुर्यात्कृष्णावड्डुजिवर्जनमितिकृष्णैकादशीवड्डोजन
निषेधमात्रपरिपालनेतुतांबूलचर्वणादावपिनदोषइत्यर्थः संभोगोऋतुकालादन्यत्र रेतःसेकात्मसंभो
गमृतेन्यत्रक्षयःस्मृतइतिकात्यायनोक्तेः हेमाद्रौवसिष्ठः उपवासेतथाश्राद्धेनकुर्याद्दंतधावनम् दंतानां-
काष्ठसंयोगोदहत्यासप्तमंकुलम् काष्ठग्रहणात्तृणलोष्ठादिनिषेधइतिहेमाद्रिः विष्णुरहस्ये श्राद्धोपवास
दिवसेखादित्वादंतधावनम् गायत्र्याशतसंपूतमंबुप्राश्यविशुध्यति निर्णयामृतेव्यासः वर्जयेत्पारणेमा
संव्रताहेप्योषधंसदेति एकादश्यांश्राद्धप्राप्तौमाधवीयेकात्यायनआह उपवासोयदानित्यःश्राद्धंनैमि-
त्तिकंभवेत् उपवासंतदाकुर्यादाघ्रायपितृसेवितम् मातापित्रोःक्षयेप्राप्तेभवेदेकादशीयदि अभ्यर्च्यापि
तृदेवांश्चआजिघ्रेत्पितृसेवितमिति हेमाद्यादिसर्वनिबंधेष्वेवम् एतेनएकादशीनिमित्तकंश्राद्धंद्वाद

श्यांकार्यमितिवदंतःपरास्ताः किंचमहालयेसपक्षःसकलःपूज्यःश्राद्धषोडशकंप्रतीतिश्रुतंषोडशत्वम् पौषे-
कादश्यांचमन्वादिश्राद्धंस्याद्वापरिज्ञानेचतत्पक्षैकादश्यांविहितंश्राद्धंबाधितमेवस्यात् यदपिस्मृतिचंद्रि-
कायांपठंति अन्नाश्रितानिपापानितद्भोक्तुर्दातुरेवच भज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाइतितस्यापि
रागप्राप्तभुजिगोचरत्वेवेधश्राद्धंगोचरयतांमहत्साहसमित्यलम् योपिअकृतश्राद्धनिचयाजलपिंडविना
कृताइतिलघुनारदीयेएकादश्यांश्राद्धादिनिषेधः समानापितद्भिन्नविषयःपूर्ववाक्येनग्रहणात् निचयःप्र
तिग्रहः अव्रतघ्नान्याहमदनरत्नेदेवलः सर्वभूतभयंव्याधिःप्रमादोगुरुशासनम् अव्रतघ्नानिपठ्यंतेसकृ
देतानिशास्त्रतः स्कांदेपि अष्टैतान्यव्रतघ्नानिआपोमूलंफलंपयः हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधम्
इदंचातिसंकष्टविषयम् नारदीये अनुकल्पोनृणांप्रोक्तःक्षीणानांवरवर्णिनि मूलंफलंपयस्तोयमुपभो
ग्यंभवेच्छुभे नत्वेवभोजनंकेचिदेकादश्यांबुधैःस्मृतमिति अस्यापवादः शयनेचप्रबुत्थानेमत्स्याश्वपरिव
र्तने नरोमूलफलाहारीहृदिशल्यंसमर्पयेत् एतेचाविरोधिनोनिर्णयाःसर्वव्रतेषुज्ञेयाः तत्रैकादश्यांसंक
ल्पः गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृण्हीयाद्यद्वाचार्येवधारयेदितिमाधवीयेवाराहोक्तेः
मंत्रस्तुविष्णूक्तः एकादश्यांनिराहारःस्थित्वाहमपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युतेति शै
वादीनांतुहेमाद्रौसौरपुराणे सावित्र्याप्यथवानाम्नासंकल्पंतुसमाचरेत् शिवादिगायत्र्यायजुर्वेदप्रसिद्धः
वाराहे इत्युच्चार्यततोविद्वान्पुष्पांजलिमथार्पयेत् ततस्तज्जलंपिबेत् अष्टाक्षरेणमंत्रेणत्रिर्जप्तेनाभि

तम् उपवासफलंप्रेप्सुः पिबेत्पात्रगतंजलमितिकात्यायनोक्तेः मध्यरात्रेउदयेवादशमीवेधेरात्रौसंकल्प
इतिमाधवः दशम्याःसंगदोषेणअर्धरात्रात्परेणतु वर्जयेच्चतुरोयामान्संकल्पार्चनयोस्तदा तिह्योपवासेन
भुक्तदिनंत्यक्त्वासमाहितः रात्रौसंपूजयेद्विष्णुंसंकल्पंचतदाचरेदितिनारदीयोक्तेः तत्रैवपूजामभिधाय
देवस्यपुरतः कुर्याज्जागरंनियतोव्रती द्वादश्यांनिवेदनमंत्रउक्तः कात्यायनेन अज्ञानतिमिरांधस्यव्रतेना
नेनकेशव प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभवेति नारदीये ब्राह्मणान्भोजयेच्छक्त्यादद्याच्चैवदक्षिणांततः
स्कांदे कृत्वानैवोपवासंतुयोभ्रातिद्वादशीदिने नैवेद्यंतुलसीमिश्रंहत्याकोटिविनाशनम् द्वादश्यांचवर्ज्या
न्याहबृहस्पतिः दिवानिद्रापरान्नंचपुनर्भोजनमैथुने क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जयेत् हेमाद्रौ
ब्रह्मांडपुराणे पुनर्भोजनमध्वायोभारआयासमैथुने उपवासफलंहन्युर्दिवानिद्राचपंचमी स्कांदे परा
न्नंकांस्यतांबूलंलोभंवितथभाषणम् वर्जयेद्व्रतशपः विष्णुधर्मे असंभाष्यान्हिसंभाष्यतुलस्यतसिकादल
म् आमलक्याःफलंवापिपारणेप्राश्यशुध्यति बृहन्नारदीये रजस्वलांचचंडालंमहापातकिनंतथा सूति
कांपतितंचैवउच्छिष्टंरजकादिकम् व्रतादिमध्येशृणुयाद्यद्येषाध्वनिमुत्तमः अष्टोत्तरसहस्रंतुजपेद्वेद
मातरम् एतद्व्रतंसूतकेपिकार्यम् सूतकेमृतकेचैवनत्याज्यंद्वादशीव्रतमितिविष्णूक्तेः तत्रत्यक्तंदाना-
दिसूतकांतेकार्यम् सूतकांतेनरःस्नात्वापूजयित्वाजनार्दनम् दानंदत्वाविधानेनव्रतस्यफलमश्नुतइति
मात्स्योक्तेः रजोदर्शनेपिकार्यम् एकादश्यांनभुंजीतनारीदृष्टेरजस्यपीतिपुलस्त्योक्तेः यदाद्वादश्यांश्र

वणर्क्षेनदाशक्त्यामध्येकादशींत्यक्त्वानत्रैवोपवासःकार्यः शुक्लावायदिवाकृष्णाद्वादशीश्रवणान्विता तयोरेवो
पवासश्चत्रयोदश्यांचपारणमितिनारदीयोक्तेः एतेचनियमाःकाम्यव्रतेनियताःनित्यव्रतेसतिसंभवेकार्याः
शक्तिमांस्तुपुनःकुर्यान्नियमंसविशेषणमितिकात्यायनोक्तेः अशक्तौतुमाधवीयेब्रह्मवैवर्ते इतिविज्ञायकु
र्वीतावश्यमेकादशीव्रतम् विशेषनियमाशक्तोहोरात्रेभुजिवर्जितइति अथाष्टौमहाद्वादश्यः तत्रशुद्धाधिकै
कादशीयुताद्वादशीउन्मीलिनीसंज्ञा द्वादश्येवशुद्धाधिकावर्धतेचेत्सावञ्जुली वासरत्रयस्पर्शिनीत्रिस्पृशा अ
ग्रेपर्वणःसंपूर्णाधिकत्वेपक्षवर्धिनी पुष्यर्क्षयुताजया श्रवणयुताविजया पुनर्वसुयुताजयंती रोहिणीयु
तापापनाशिनी एताःपापक्षयमुक्तिकामउपवसेत् अत्रमूलंहेमाद्रौज्ञेयम् एकादशीद्वादश्योरेकत्वेतंत्रेणो
पवासः पार्थक्येतुशक्तस्योपवासद्वयम् एकादशीमुपोष्यैवद्वादशींसमुपोषयेदितिविष्णुरहस्यात् अश
क्तौतुद्वादश्यामेव एवमेकादशींत्यक्त्वाद्वादशींसमुपोषयेत् पूर्ववासरजंपुण्यंसर्वंप्राप्नोत्यसंशयमितित
त्रैवोक्तेः यदात्वल्पाद्वादशीतदोक्तंमात्स्ये यदाभवतिअल्पापिद्वादशीपारणादिने उषःकालेद्वयंकुर्यात्प्रातर्माध्या
ह्निकंतदा नारदीयेपि अल्पायामथविप्रेंद्रद्वादश्यामरुणोदये स्नानार्चनक्रियाःकार्यादानहोमादिसंयु
ताइति संकटेतुमाधवीयेदेवलः संकटेविषमेप्राप्तेद्वादश्यांपारयेत्कथम् अद्भिस्तुपारणंकुर्यात्पुन
र्भुक्तंनदोषकृदिति संकटेत्रयोदशीश्राद्धमरोषादौ अत्रकेचिदाहुः अपकर्षवाक्यान्यनाहिताग्निविषया
णि अग्निहोत्रादीनांश्रौतत्वेनापकर्षायोगादिति द्वादश्यांचप्रथमपादमतिक्रम्यपारणंकार्यम् द्वादश्याः

दोहरिवासरसंज्ञितः तमतिक्रम्यकुर्वीतपारणंविष्णुतत्परइतिनिर्णयामृतेमदनरत्नेचविष्णुध-
त्रकेचित्तंगिरंते यदाभूयसीद्वादशीतदापिप्रातर्मुहूर्तत्रयेपारणंकार्यम् सर्वेषामुपवासानांप्रात
ामितिवचनादिति अस्मद्गुरवस्तुबहूनांकर्मकालानांविनाकारणंबाधापत्तेः प्रागुक्तवचनेश्च-
नामेवापकर्षविधानादपराण्हएवकार्यम् प्रातःशब्दस्तुसायंप्रातर्द्विजातीनामशनंश्रुतिचोदि
पराण्हवाचित्वेप्युपपन्नः नचवाक्यवैयर्थ्यंपुनर्भोजनसायंपारणनिवृत्त्यर्थत्वात्तस्येत्याहुः म-
नएकादश्युपवासातिक्रमे अपरार्केवाराहे एकादशीविद्धुनाचेद्द्वादशीपरतःस्थिता उपोष्याद्वादशी
ादीछेत्परमंपदमिति केचित्तुविष्णुनाचेदितिपठितम् अत्राविरोधिनोनियमाःसर्वव्रतेषुबोद्धव्याः
धननवरात्रेवक्ष्यंतइतिदिक् इतिश्रीरामकृष्णभट्टात्मजकमलाकरभट्टकृतेनिर्णयसिंधौएकादशीनि
यः द्वादशीतुपूर्वयुग्मवाक्यात् द्वादशीतुप्रकर्तव्याएकादश्यायुताप्रभोइतिस्कांदाच्च त्रयोदशीतुस
ंमतेशुक्लापूर्वाकृष्णोत्तरा त्रयोदशी तिथिःपूर्वःसितोप्यासितःपश्चादितिदीपिकोक्तेः शुक्लत्रयोदशीपूर्वा
पराकृष्णात्रयोदशीतिमाधवाच्च चतुर्दशीसर्वमतेकृष्णापूर्वाशुक्लोत्तराउपवासेतुद्वय्यापिपरेतिमदनरत्ने पौ
र्णमास्यमावास्येतुसावित्रीव्रतंविनापरेग्राह्ये भूतविद्धेनकर्तव्येदर्शपूर्णेकदाचन वर्जयित्वामुनिश्रेष्ठसावि
त्रीव्रतमुत्तममितिब्रह्मवैवर्तात् अमायांयोगविशेषोपरार्केशातातपः अमावास्याभवेद्वारोयदाभूमिसुत-
स्यवै जान्हवीस्नानमात्रेणगोसहस्रफलंलभेत् अमावैसोमवारेणरविवारेणसप्तमी चतुर्थीभौमवारेणविषु

वत्सहस्रांफलम् तत्रैवव्यासः सिनीवालीकुहूर्वापियदिसोमदिनेभवेत् गोसहस्रफलंदद्यात्स्नानंवामौनिनाहि
तं हेमाद्रौबृहन्मनुः श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके यद्यमारविवारेणव्यतीपातःसउच्यते नागदैवत
माश्लेषामस्तकोमृगशिरःप्रथमपादइत्यन्ये सचसर्वेषाम् अथेष्टिकालः गोभिलः पक्षांताउपवस्तव्याःपक्षा
दयोभियष्टव्याइति उपवासोन्वाधानम् तत्रमध्याह्नेतत्पूर्वंवापर्वप्रतिपत्संधौतद्दिनेयागः पूर्वाह्णेवाथमध्या-
ह्नेयदिपर्वसमाप्यते उपोष्यतत्रपूर्वेद्युस्तदहर्यागइष्यतइतिलौगाक्षिवचनात् तत्रद्वेधाविभागः आवर्तनात्तु
पूर्वाह्णोह्यपराह्णस्ततःपरः मध्याह्नस्तुतयोःसंधिर्यदावर्तनमुच्यतइतिवचनात् मध्याह्नादूर्ध्वंसंधौमाधव
मतेपरेद्युर्यागः अपराह्णेथवारात्रौयदिपर्वसमाप्यते उपोष्यतस्मिन्नहनिश्वोभूतेयागइष्यतइतिलौगाक्षिणो
क्तेः हेमाद्रिस्त्वपराह्णसंधावपिपरदिनेप्रतिपच्चतुर्थांशेचंद्रोदयेचसतिद्वितीयादिघट्यंतक्षयेसतिपूर्वेद्युर्यागः
पर्वणोंशेद्वितीयेतुयष्टव्यंतुद्विजातिभिः द्वितीयासहितंयस्माद्दृष्यंत्याश्वलायनाइतिद्वितीयेत्वितिकेमुतिक
न्यायेनतुर्यांशपरम् तुरीयेत्वितिशूलपाणौपाठःस्पष्टार्थएव तथा भूतापंचदशीपूर्णाद्वितीयाक्षयगामिनी
चरुरिष्टिरमायांस्यादूर्ध्वंक्व्यादिकोक्रियेतिवचनाच्चेत्यूचिवान् मदनरत्नेपि चतुर्दशीचतुर्यामाअमावास्या
नदृश्यते श्वोभूतेप्रतिपच्चेस्यात्पूर्वोत्तत्रैवकारयेदिति यत्तुमाधवः यस्तुवाजसनेयीस्यात्तस्यसंधिदिनात्पुरा
नकाप्यन्वाहितिःकिंतुसदासंधिदिनेह्यसावित्याह यच्चकालादर्शेप्युक्तम् आवर्तनादधःसंधिर्यद्यन्वाधायतद्दि
ने परेद्युरिष्टिरित्याहुर्वैमावाजसनेयिनइति यच्चमदनरत्ने मध्यंदिनात्स्यादहनीह्यस्मिन्यस्यपर्वणःसंधिरिय

तृतीया सार्ववर्त्तिकावाजसनेयिमत्यातस्यामुपोष्याथपरेद्युरिष्टिरिति एतत्पौर्णमासीपरमितितत्रैव आवर्त
नोर्ध्वमर्वागस्ताद्ग्रंथोवासमासेह्नः मध्यान्हादर्वाक्समाप्तात्तृतीयेत्यर्थः तत्कर्कभाष्यदेवजानीयश्रीअनंतभाष्यादि
सकलनिबन्धास्तीयग्रंथविरोधादग्रहणादराज्ञोपेक्ष्यम् पौर्णमास्यांविशेषमाहकात्यायनः संधिश्चेत्संगवादूर्ध्वंप्रा
क्पर्यावर्तनाद्रवेः सापौर्णमासीविज्ञेयासद्यस्कालविधौनरैः अमायांविशेषमाहबोधायनः द्वितीयात्रिमुहूर्ता
चेत्प्रतिपद्यापराण्हकी अन्वाधानंचतुर्दश्यांपरतःसोमदर्शनात् कात्यायनश्च यजनीयेह्निसोमश्चेद्वारुण्यां
दिशिदृश्यते तत्रव्याहृतिभिर्हुत्वादंडंदद्याद्द्विजातयइति एतच्चबोधायनवाजसनेयिविषयम् तैत्तिरीयस्तुनोः
तुचंद्रदर्शनेपियागउक्तः एषावैसुमनानामेष्टिर्यमद्यजानन्पश्चाच्चंद्रमाअभ्युदेत्यस्मिन्नेवास्मैलोकेर्धुकंभव
तीति श्रुत्यंतरेपि यदहःपश्चाच्चंद्रमाअभ्युदेतितदहर्यजन्निमांल्लोकानभ्युदेतीतीदंबहृचापस्तंबविषयं
मदनरत्नेप्येवम् आपस्तंबभाष्यार्थसंग्रहेप्येवम् अतःपक्षद्वयस्यस्वस्वसूत्राद्व्यवस्थेतितत्त्वम् वृषयत्साश्व
लायनादिइतितुपूर्वाण्हसंधिविषयमितिमाधवः शेषपर्वणीष्टौविशेषमाहमाधवीयेगार्ग्यः प्रतिपद्यप्रवि
ष्टायांयदिवेष्टिःसमाप्यते पुनःप्रणीयकृत्स्नेष्टिःकर्तव्यायागवित्तमैः गृह्याग्नेर्नोयंनियमइतिमदनपारिजा
तः एवंपर्वांशाशःप्रतिपदश्चत्रयोंशायागकालउक्तः क्वचित्प्रतिपत्तुर्यांशेपियागः संधिर्यद्यपराण्हेस्याद्या
गंप्रातःपरेहनि कुर्वाणःप्रतिपद्भागेचतुर्थेपिनदुष्यतीतिवृद्धशातातपोक्तेः एतत्पूर्णिमापरमितिमदनरत्ने
पर्वणिप्रतिपदःक्षयस्यवृद्धेश्चार्द्धंप्रक्षिप्यसंधिर्ज्ञेयः तदाहमाधवः वृद्धिःप्रतिपदोयास्तितदर्द्धंपर्वणिः

क्षिपेत् क्षयस्यार्धेनतथाक्षिप्त्वासंधिर्निर्णीयतांसदेति कात्यायनोपि परेह्निघटिकान्यूनास्तथैवात्यधिकाश्चयाः
तदर्धंकृत्वापूर्वेस्मिन्क्षासदृक्षीमकृत्स्नयोरिति एवंस्मार्तस्थालीपाकेपिज्ञेयम् तत्रेष्टिस्थालीपाकावाधा-
वेशनीयहोमानंतरभाविन्यांपौर्णमास्यामारंभणीयौनतुदर्शे यद्यारंभेमलमासपौषमासशुक्रास्तादिर्भवति
तदात्यारंभःकार्यः यानितु उपरागोधिमासश्चयदिप्रथमपर्वणि तथामलिम्लुचेपौषेनान्वारंभणमिष्यते गुरु
भार्गवयोर्मौढ्येचंद्रसूर्यग्रहेतथेतिसंग्रहवचनानितानिआलस्यादिनातिक्रांतशुद्धकालमारंभविषयाणि नाम
कर्मचदर्शेष्टिंयथाकालंसमाचरेत् अतिपातेसतितयोःप्रशस्तेमासिपुण्यभइत्यपरार्केगर्गवचनादितिप्रयोग
पारिजाते उक्तंचैतत्प्रयोगरत्नेभट्टैः कालादर्शेतु नामकर्मचजातेष्टिमितिपाठः याज्ञिकास्तु आधानानंतरापौ
र्णमासीचेन्मलमासगा तस्यामारंभणीयादीन्नकुर्वीतकदाचनेतित्रिकांडमंडनवचनाच्छुद्धकालएवविष्टिं
ष्टिंकृत्वारंभंकुर्यादित्याहुः कालादर्शेस्मृतिसंग्रहेपि आरंभंदर्शपूर्णेष्ट्योरग्निहोत्रस्यचादिमम् प्रतिष्ठाःपंच
कर्माद्या मलमासेविवर्जयेदिति अथविकृतिः तत्रापस्तंबः यदीष्ट्यायदिपशुनायदिसोमेनयजेतसोमा-
वास्यायांपौर्णमास्यांचेति अत्रप्रकृतितःकालेसिद्धेपिसद्यस्कालतांविधेयात्तृतीयायांसांगत्वेनोक्तेः अत्रपौ
र्णमास्यमावास्यशब्दाभ्यांतदंत्यक्षणोगृह्यते तेनतद्युक्तहोरात्रइत्यर्थमाहरामांडारः माधवोपि इष्ट्यां
विकृतिःसर्वापर्वण्येवेतिनिर्णयइति अत्रविशेषमाहत्रिकांडमंडनः कात्यायनश्च आवर्तनात्प्राक्कृया
पर्वसंधिः कृतात्तुतस्मिन्प्रकृतिर्विकृत्याः तदैवयागः परतोयदिस्यात्तस्मिन्विकृत्याःप्रकृतेः परेद्युरिति धूर्

स्वाम्यादयोप्येवमाहुः यद्द्वेतिसांगायानिकृतेःपर्वकालत्वादावर्तनात् प्रावसंधौसंधिमभितोयजेतेतिप्रकृतेः
प्रतिपदिसमाप्तिनियमात्प्रकृत्यनंतरंप्रतिपदिविकृत्सयोगात्पूर्वेद्युर्विकृतिरिक्तंतंत्ररत्नेपार्थसारथिना यद्यपि
प्रकृतेःपूर्वत्वात्पूर्वमंतेस्यादित्यापस्तंबेनोक्तम् तथापिहेतुवादेनश्रुतिमूलत्वाभावादंगवासमभिव्याहारादि-
निवद्धप्रामाण्यमितितदाशयः आग्रयणेतुविशेषंवक्ष्यामः अन्वारंभणीयातुचतुर्दश्यांकार्येतिहिरण्यकेशिद
त्तौभाष्येदत्तोपि अन्येषांपर्वण्येव पशौसोमेचकालांतरमप्याहबोधायनः अमावास्येनवाहविषेष्वानक्षत्रे
वेति शंकुपक्षेकृत्तिकादिविशाखांतेषुदेवनक्षत्रेष्वितिकेशवस्वामीव्याख्यत् चातुर्मास्येष्वपिद्वादशाहय-
थाप्रयोगपक्षयोर्नक्षत्रेष्वप्यारंभः यावज्जीवसांवत्सरप्रयोगयोस्तुफाल्गुन्यांचैत्र्यांवारंभः पशौतुविशेषमा
हकात्यायनः अर्थादङ्गोभवतिनियतंपर्वसंधिःपरस्तात्कृत्वातस्मिन्नहनितुपशुःसद्यएवद्व्यहंवा आरभ्या
थप्रकृतिरथवेत्पर्वसंधिःपुरस्तात्कृत्वातस्मिन्प्रकृतिमथतुस्यात्पशुःसद्यएव अधिकारपशुस्त्वग्नीषोमीः
येणसवनीयेनवासमानतंत्रोवाकार्यइतित्रिकांडमंडनःसोमेत्वाहापस्तंबः अमावास्यायांदीक्षायजनीये
चामावास्यायांयजनीयेवास्यात्यमहः पौर्णमास्यांदीक्षायजनीयेवापौर्णमास्यांयजनीयेवातुल्यमहरिति
लाट्यायनसूत्रेपि पूर्वपक्षस्यप्रथमेहनिदीक्षेतद्वावानक्षत्रयोगेन्वेति पूर्वपक्षःशुक्लपक्षःनक्षत्रयोगेन्वे
त्ययमर्थः चैत्र्यादिपूर्णिमायाश्चित्रादिनक्षत्रयोगेदीक्षेतेति आधानंतुपर्वणिनक्षत्रेषुचोक्तम् तच्चपर्व
नक्तंगार्हपत्यमादधातीत्यादिकर्मकालव्यापिग्राह्यम् दिनद्वयेतत्वेपरंग्राह्यम् संकल्पस्यपर्वणिलाभात्

पूर्वत्रनक्षत्रयोगेतद्देवयात्यम् यत्रत्रीणिसन्निपतितान्यृतुर्नक्षत्रंचपर्वतत्समृद्धंविप्रतिषेधेऋतुर्नक्षत्रंचब
लीयइति हिरण्यकेशिसूत्रात् ऋतुर्वसंतेब्राह्मणोग्नीनादधीतेत्यादिः रेणुकारिकायांतु माघादिपंचमासेषु
श्रावणेचाश्विनेतथा मार्गशीर्षेशुक्लपक्षेआधानमथकारयेदित्युक्तम् अत्रनूलंमृग्यम् आधाननक्षत्रा
णित्वापस्तंबसूत्रेकृत्तिकारोहिणीमृगशीर्षपुनर्वसुपुष्यपूर्वोत्तरापूर्वाषाढोत्तराषाढाहस्तचित्राविशाखा
नुराधाश्रवणोत्तराभाद्रपदाइति सोमपूर्वाधानेविशेषमाहापस्तंबः सोमेनयक्ष्यमाणआदधानोनर्तु
न्नसूर्क्षेन्ननक्षत्रमिति अत्रप्रकरणादाधानकालबाधः तेनसोमस्यवसंतकालत्वान्नबाध्यतइतिरुद्रदत्त
वृत्तौनारायणवृत्तौचोक्तम् तंत्ररत्नेवार्तिकेच तेवाएतेउभयेअपहतपाप्मानोऋतवः एषवाउयन्नादि
त्यएषांपाप्मनोपहंता यदैवैनंकदाचनयज्ञउपनमेत्तदादधीतेत्यत्रोत्तरायणरूपंदैवंदक्षिणायनरूपं
चपित्र्यमित्युभयमृतुचयंसोमाधानेशतपथेविशिष्यविहितम् तदेकवाक्यतयाशाखांतरेनर्तुन्नसूर्क्षेदित्य
त्रसोमकालबाधएव आधानकालबाधस्ययदैवैनंश्रद्धोपनमेत्तदादधीतेत्यस्यांशाखायांवाक्यांतरेणासि
द्धत्वात्सोमकालबाधार्थमेवेदमित्युक्तम् धूर्तस्वामीतुसोमस्यापियक्रतुस्तस्यापिनसूर्क्षेदितिलिखनादु
भयकालबाधंमन्यतेश्रीरामांडारस्तुकालांतरविधानंवासर्वकालानादरोवेतिपक्षद्वयमुक्तवान् तत्रा
द्येकृत्तिकादिकालांतरस्ययथाधानेवसंताद्यबाधेनविधानम् तथासोमेप्युदगयनपूर्वपक्षपुण्याहसन्नि
पातेयज्ञकालोनादेशइतिछंदोगसूत्रोक्तोदगयनबाधेनसोमाभिसंधिरूपकालांतरविधानादुदगयनं

त्पेक्ष्यत इत्युक्तम् द्वितीयपक्षेतुयद्दैवेनंयज्ञंउपनमेदितिसर्वकालानादरउक्त इतिभरद्वाजसूत्रात्सर्वशा
स्त्रस्यचविश्वजित्सर्वपृष्ठ इतिवत्द्वयोरभयोगात् सर्वकालबाधइति तेनदक्षिणायनेपिभवतीत्युक्तम्
पक्षुरुभाष्येदेवत्रातभाष्येतंत्ररत्नेचषट्स्वपित्रृतुषुभवतीत्युक्तमितिदिक् श्राद्धेत्वमावास्यात्रेधाविभक्त
दिनतृतीयांशेयोपराण्हभागस्तद्व्यापिनीसाग्निकेग्राह्या पिंडान्वाहार्यकंश्राद्धंक्षीणेराजनिशस्यते वासरस्य
तृतीयेंशेनातिसंध्यासमीपत इतिकात्यायनोक्तेः दर्शश्राद्धंतुयत्प्रोक्तंपार्वणंतत्प्रकीर्तितम् अपराण्हे
पितृणांचतत्रदानंप्रशस्यत इतिशातातपोक्तेश्च दिनद्वयेतत्रसत्वेसर्वापराण्हव्यापीदर्शोग्राह्यः यद्युभये
द्युरेपविहितःसर्वापराण्हस्थित इतिदीपिकोक्तेः यत्तुकार्ष्णाजिनिः मूलविद्धममावास्यांमोहादज्ञानतो
पिवा श्राद्धकर्मणियेकुर्युस्तेषामायुःप्रहीयत इतितदपराण्हेचतुर्दशीवेधपरमितिश्राद्धहेमाद्रिः अपरा
ण्हव्याप्तिपरमितिमाधवः दिनद्वयेपराण्हव्याप्त्यभावेंशतोव्याप्तौचतिथिक्षयेपूर्वेतिहेमाद्रिः यदाचतुर्दशी
यामंतुरीयमनुपूरयेत् अमावास्याक्षीयमाणातदैवश्राद्धमिष्यत इतिकात्यायनोक्तेः चतुर्दश्याश्चतुर्थयाम
मंदर्शःपूरयेत् चतुर्दशीयामत्रयंस्यादित्यर्थः क्षीयमाणापरदिनेपराण्हव्यापिनीनेत्यर्थः व्यतिरेकमाह
वर्धमानाममावास्यांलक्षयेदपरेहनि यामांस्त्रीनधिकान्वापिपितृयज्ञस्ततोभवेत् ततःश्राद्धंच दिनद्वयेप
राण्हव्याप्त्यादौतिथिवृद्धौचहारीतः त्रिमुहूर्ताचकर्तव्यापूर्वास्त्वर्वाचबह्वृचैः कुहूरध्वर्युभिःकार्यायथेष्टंसा
मगीतिभिः त्रिमुहूर्ताभावेतुपूर्वानेत्यर्थः पिंडपितृयज्ञस्तुकात्यायनैर्योगादिनात्पूर्वेद्युःकार्यः पूर्वोवाग

त्वात्पिंडपितृयज्ञइतितत्सूत्रात् व्याख्यातंचैतत्कर्काचार्यैः पूर्वएवदर्शात्पिंडपितृयज्ञोनपश्चात् कुतःअंग
त्वात् तथाचश्रुतिः तस्मात्पूर्वेद्युःपितृभ्यःक्रियतेउत्तरमहर्देवान्यजंतइति पूर्वेद्युःपितृभ्योयज्ञंनिपृणीय-
थातदेवेभ्यःप्रतनुतइतिचतेनतन्मनेअंगमेवासौ तदुक्तम् अंगंवासमभिव्याहारादिति तेनकर्कमतेच
तुर्दशीयुक्तदर्शेपिंडपितृयज्ञइति श्रीअनंतभाष्येतुपरेद्युरित्युक्तम् अत्रद्वैधाप्याचारोदृश्यते आपस्तंबा
नांतुपरदिनेमुहूर्तमपिदर्शसत्वेतत्रैवपितृयज्ञः तदाहआपस्तंबः अमावास्यायांयदहश्चंद्रमसंनपश्य-
तितदाहःपिंडपितृयज्ञंकुरुतइति अस्यरुद्रदत्तीयाव्याख्यापिंडैर्युक्तः पितृयज्ञःपिंडपितृयज्ञःसचक
र्मांतरं नतुदर्शशेषःयथावक्ष्यति पितृयज्ञःस्वकालविधानादनंगंस्यादिति तंचयदहश्चंद्रमसंनपश्यंति
पंचदश्यांप्रतिपदिवातदहःकुरुते यदहस्तयोःसंधिस्तदहरित्यर्थइति रामांडारोप्याह पिंडपितृयज्ञ-
स्तुपर्वसंधिमदहोरात्रापराण्हइतिअतःपर्वसंधिदिनेपितृयज्ञः शतपथश्रुतिरपि यदैवैषनपुरस्ता
न्नपश्चाद्ददृशेथपितृभ्योददातीति पर्वसंधिदिनेहिपूर्वतःपश्चाद्वाचंद्रोनदृश्यतएवेत्यर्थः सत्याषाढो
पि पितृयज्ञंप्रक्रम्यदृश्यमानेप्येकेश्वोभूतेयजतइत्याह हेमाद्रिस्तु अमावास्याशब्दस्तिथिवचनए
व पूर्वोक्तापस्तंबसूत्रेयदुक्तम् नपश्यंतीतितत्रक्षयोभिप्रेतः अतश्चतुर्दश्यांचंद्रमसश्चक्षीणत्वात्तदुक्तद
र्शेपितृयज्ञः पितृयज्ञंतुनिर्वर्त्यविप्रश्चंद्रक्षयेग्निमानिति मनूक्तेः यदुक्तंयदहस्त्वेवदर्शनंनैतिचंद्रमाः
तत्क्षयापेक्षयाज्ञेयंक्षीणेराजनिचेत्यपीति यदुक्तंदृश्यमानेपितच्चतुर्दश्यपेक्षयेतिचकात्यायनोक्तेः

दृश्यमानेप्येकइतिगोभिलोक्तेः यस्यांसंध्यागतःसोमोमृणालमिवदृश्यते अपराण्हेक्षयस्तस्यांपिंडानांक
रणंध्रुवमितिहारीतोक्तेश्च चंद्रक्षयकालश्चोक्तः कात्यायनेन अष्टमेंशेचतुर्दश्याःक्षीणोभवतिचंद्रमाः अ
मावास्याष्टमेंशेतुपुनःकिलभवेदणुरिति तेनपूर्वेद्युरेवपितृयज्ञइत्युक्तवान् कर्काचार्यैरपि अपराण्हेपिं
डपितृयज्ञश्चंद्रादर्शनेमावास्यायामितिकात्यायनसूत्रेऽदर्शनेनक्षयएवोक्तः तस्मिन्क्षीणेददातीतिश्रुतेः
अतस्तन्मतेचतुर्दशीयुक्तदर्शेपितृयज्ञेसतिपरदिनेयागोर्थात्सिद्धः तदेतत्सर्वोत्कृष्टमपिहेमाद्रिकर्को-
क्तव्याख्यानमापस्तंबैरनभ्युपगमात्कातीयबोधायनादिविषयम् आश्वलायनानामपिशेषपर्वणिपिं
डपितृयज्ञः तथाचसूत्रम् अमावास्यायामपराण्हेपिंडपितृयज्ञइति अत्रनारायणवृत्तिः अमावास्या
शब्दःप्रतिपत्पंचदश्योःसंधिवचनोप्यत्रापराण्हशब्दसमन्वयात्तद्दत्यहोरात्रेवर्तते तस्यापराण्हेन्हश्चतु-
र्थेभागेपिंडपितृयज्ञःकार्यः औपवसथ्येयजनीयेवाहनि यदात्वहोरात्रसंधौतिथिसंधिःस्यात्तदोप
वसथ्यएवाहनिक्रियतइति अतएवमुहूर्तमप्यमावास्याप्रतिपद्यपिचेद्भवेत् तद्वृत्तपक्षयंज्ञेयंपर्वशे
षंतुपर्ववदितिहेमाद्रौवचनंपिंडपितृयज्ञपरमुक्तंप्रयोगपारिजाते अयंचस्मार्ताग्निमतासंपूर्णेदर्शेश्रा
द्धव्यतिषंगेणकार्यः व्यतिषंगोनामोभयोःसहानुष्ठानम् एतच्चस्थालीपाकेनसहपिंडार्थमुद्धृत्येतिसू
त्रेवृत्तिकृतोक्तम् खंडपर्वणितुकेचिदाहुः पूर्वेह्निपिंडपितृयज्ञव्यतिषंगेणश्राद्धंकृत्वापरेन्हिकेवलः
पिंडपितृयज्ञःकार्यः इतिकृतात्वान्वष्टक्यंच पूर्वेद्युर्मासिमास्यथपार्वणम् काम्यमाभ्युदयेष्टम्यामेको

हि एमथाष्टमाधिकदात्तत्यपूर्वेद्युश्चतुर्थस्थालीपाकादुद्धृत्याग्नौकरणमित्युक्तेदर्शश्राद्धस्थालीपाकोनियतइ
तिगम्यते स्थालीपाकश्चपितृयज्ञएवेतिपूर्वदिनेव्यतिषंगःसिद्धः प्रयोगपारिजातेतुवार्षिकश्राद्धादेरपिव्य
तिषंगउक्तः किंतुनदर्शश्राद्धस्य न्यायविदस्त्वाहुः सूत्रस्यहत्तेश्चसंपूर्णदर्शविषयत्वात्खंडपर्वणिपूर्वदि
नेकेवलंश्राद्धंपरदिनेचकेवलःपितृयज्ञःकार्यः अतएवोक्तंवृत्तिकृतानात्रापूर्वस्थालीपाकश्चोद्यतेसर्वश्रा
द्धेषुप्रसंगादिति प्रयोगपारिजातोक्तिरप्येतद्विषयैव पूर्वदिनेचश्राद्धेग्नौकरणमेवनपाणिहोमः चतुर्थी
येषुसाग्नीनांवन्हौहोमोविधीयते पित्र्यब्राह्मणहस्तेस्यादुत्तरेषुचतुर्ष्वपीतिपरिशिष्टेनियमात् नचलौ
किकाग्नौपक्वस्यकथंगृह्याग्नौहोमः नान्याग्नौपक्वमन्याग्नौजुहुयादितिनिषेधात् मैवम् श्राद्धस्यगृ
ह्यत्वेनस्मार्ताग्नौपचनाग्नौवाकर्तव्यत्वात् तस्मात्पूर्वेद्युःकेवलंश्राद्धंनव्यतिषंगः इदमेवचयुक्तम् आहि
ताग्निनातुसर्वाधानिनार्धाधानिनावासंपूर्णखंडवादर्शेग्नौलाभेपृथगेवपितृयज्ञःकार्योनतुदर्शश्राद्ध
व्यतिषंगेणेतिविस्तरभीतेर्विरम्यते संपूर्णदर्शेनविशेषमाहलौगाक्षिः पक्षांतंकर्मनिर्वर्त्यवैश्वदेवंचसा
ग्निकः पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधइति पक्षांतकर्मान्वाधानम् अन्वाहार्यकंदर्शश्राद्धम्
अयमेवसाग्नेर्जीवत्पितृकस्यापिंडपितृयज्ञकालोज्ञेयः तस्यापिकात्यायनेनहोमांतमनारंभोवेत्याम्ना-
नात् पिंडपितृयज्ञाकरणेप्रायश्चित्तमाहपराशरमाधवीयेकात्यायनः पितृयज्ञात्ययेचैववैश्वदेवात्य
येपिच भोजनेपतितान्नस्यचरुर्वैश्वानरोभवेदित्यलम् प्रकृतमनुसरामः निरग्निकादिभिस्त्वमावास्याप

राण्हव्याप्त्यभावेकुतपकालव्यापिनीग्राह्या मृतविशाप्यमावास्याप्रतिपन्मिश्रितापिवा पित्र्येकर्मणिविद्ध
ड्वर्ग्राह्याकुतपकालिकीतिहारीतोक्तेः इदंचनिरग्निकादिविषयम् सिनीवालीद्विजैःकार्यासाग्निकैःपितृक
र्मणि स्त्रीभिःशूद्रैःकुहूःकार्यातथाचानग्निकैर्द्विजैरितिलौगाक्षिवचनात् अथसाग्निरौपासनाग्निरपी
तिमदनपारिजातेउक्तम् कुतपश्चापराण्हव्याप्त्यसाम्येकुहूरस्तु अपराण्हद्वयाव्यापीयदिदर्शस्तिथिक्षय
आहिताग्नेःसिनीवालीनिरग्न्यादेःकुहूर्मतेतिजाबालिनाअभावेविधानात् तेनसाग्नीनांनिरग्नीनां
वापराण्हव्यापिन्येवमुख्या तिथिसाम्यवृद्धिक्षयैःसमव्याप्तौखर्वादिनानिर्णयः वैषम्येधिका दिनद्वयेप
राण्हस्पर्शेकुतपव्यापिनीतिमाधवः इदमेवयुक्तं हेमाद्र्यादिमतेकुतपव्यापिन्येवनिरग्न्यादेर्मुख्या अत्रसाग्नि
रौपासनाग्निरपीतिमदनपारिजातेउक्तम् सिनीवालीदृष्टचंद्रा तथाचव्यासः दृष्टचंद्रासिनीवालीनष्टचं
द्राकुहूःस्मृतेति पूर्वदिनेपरदिनएववाल्पव्याप्तौसैवग्राह्या अंशव्याप्तिवैषम्येधिककालव्यापिनी
ग्राह्या दिनद्वयेशनःसमव्याप्तौतिथिक्षयेपूर्वावृद्धौसाम्येचपरा तिथिक्षयेसिनीवालीतिथिवृद्धौकुहूः
स्मृता साम्येपिचकुहूर्ज्ञेयावेदवेदांगवेदिभिरितिप्रचेतोवचनात् दिनद्वयेसंपूर्णकुतपव्याप्तिस्तुतिथि
वृद्धावेवभवतीत्यनंतरवचनात्सैवेति कुतपस्तु अष्टौमुहूर्ताविज्ञेयादशपंचचसर्वदा तत्राष्टमो
मुहूर्तोयःसकालःकुतपःस्मृत इतिमात्स्योक्तेः तुलादानपितृदेवप्रीत्यर्थोपवासादौतुपराग्राह्येत्यन्यत्रवि
स्तरः दर्शेचमासिकवार्षिकादिश्राद्धप्राप्तौकालादर्शेविशेषउक्तः दर्शस्यचोदकुंभस्यदर्शमासिकयोरपि

नित्यस्यचाब्दिकस्यापिदार्शिकाब्दिकयोरपीत्युक्ता संपातेदेवताभेदात्श्राद्धयुग्मंसमाचरेत् निमित्तानियतिश्चात्रपूर्वानुष्ठानकारणमिति अत्रक्रमोनिर्णयदीपउक्तः नष्टचंद्रेयदाकालेक्षयाहदिवसोभवेत् वैश्वदेवंस्वयश्राद्धंकुर्यात्प्राक्दर्शकर्मणः अमाश्राद्धंचानुपनीतोपिकुर्यात् श्राद्धशूलपाणौ अमावास्याष्टकाकृष्णापक्षपंचदशीषुचेत्युपक्रम्य एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वसु श्राद्धंसाधारणंनामसर्वकामफलप्रदम् भार्याविरहितोप्येतत्प्रवासस्थोपिनित्यशः शूद्रोप्यमंत्रवत्कुर्यादनेनविधिनाबुधइतिमात्स्योक्तेः अमाश्राद्धातिक्रमेप्रायश्चित्तमुक्तंवृषभविधाने न्यूनंचाज्जपेन्मंत्रंशतवारंदिनेदिने अमाश्राद्धंयदानास्तितदासंपूर्णमेतिलत् अत्रपूर्वोक्तसाग्निकपदेनाहिताग्निःस्मार्ताग्निमांश्चगृह्यते विछिन्नाग्निकादिश्चनिरग्निकः तथाचहेमाद्रिरग्नौकरणप्रकरणेसाग्निरग्न्यावनामित्तद्विजपाणावथाप्सुवा कुर्यादग्नौक्रियांनित्यंलौकिकेनेतिनिश्चितमितिस्मृतिवाक्यमुदाहृत्यपत्नीसहीकृतोपासनतयासमुछिन्नाग्नितयाभार्याविधुरतयावाग्निराहितस्तस्यद्विजपाणौजलादौहोमइतिव्याचचक्षे मदनपारिजातेप्येवम् इदमेवसाग्निकानग्निकस्वरूपंसर्वत्रज्ञेयम् अथग्रहणंनिर्णीयते तत्रचंद्रग्रहणेयस्मिन्यामेग्रहणंतस्मात्पूर्वंप्रहरत्रयंनभुंजीत सूर्यग्रहेतुप्रहरचतुष्टयेनभुंजीत सूर्यग्रहेतुनाश्नीयात्पूर्वंयामचतुष्टयम् चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विनेतिमाधवीयेवृद्धगौतमोक्तेः ग्रहणंतुभवेदिंदोःप्रथमादधियामतः भुंजीतावर्तनात्पूर्वंप्रथमेप्रथमादधइतिमार्कंडेयोक्तेश्च अधिकंधर्मम् ननुचंद्रग्रहेयामचतुष्टयनिषेधउचितोनतुसूर्यग्रहेसू

योदयात्प्राग्भोजनाप्राप्तेःनैवंवचनस्यप्रथमयामेसूर्यग्रहेसतिपूर्वेद्युः पूर्वरात्रेभोजननिषेधपरत्वात् चंद्रग्रहे
विशेषमाहमाधवीयेवृद्धवसिष्ठः ग्रस्तोदयेविधोःपूर्वंनाहर्भोजनमाचरेदितिद्वयोर्ग्रस्तास्तेतुमाधवीयेव्यासः
अमुक्तयोरस्तगयोरद्याद्दृष्ट्वापरेहनीति विष्णुधर्मेपि अहोरात्रंनभोक्तव्यंचंद्रसूर्यग्रहोयदा मुक्तिंदृष्ट्वातु
भोक्तव्यंस्नानंकृत्वाततःपरम् अहोरात्रनिषेधःसूर्यग्रस्तास्ते मदनरत्नेगार्ग्यः संध्याकालेयदाराहुर्ग्रसते
शशिभास्करौ तदहर्नैवभुंजीतरात्रावपिकदाचन सायंसंध्यायांसूर्यस्यग्रस्तास्तेपूर्वेह्निरात्रौचनभोक्तव्य
म् प्रातःसंध्यायांचंद्रस्यग्रस्तास्तेपूर्वरात्रावुत्तरेह्निचनभोक्तव्यमित्यर्थः चंद्रग्रस्तास्तेउत्तरदिनेसंध्याहोमा
दौनदोषः तदाहोशनाः ग्रस्तेचास्तंगतेत्विंदौज्ञात्वामुक्त्यवधारणम् स्नानहोमादिकंकार्यंभुंजीतेंदूदयेपुनः
एतदनाहिताग्निविषयम् अपराण्हेव्रतोपायनीयमश्नीतइतिकात्यायनोक्तेर्व्रतस्यश्रौतत्वेनविहितत्वेनच
प्रबलत्वात् अद्भिर्व्रतंकुर्यादितिनिर्णयदीपः रागप्राप्तभोजनेकालनियमोयम् तेनज्वरादाविवनभोजनाभि
निकर्षानुसारिणः बालवृद्धातुराणांतुग्रहयामात्पूर्वमेकयामोनिषिद्धः सायाह्नेग्रहणंचेत्स्यादपराण्हेनभोज
नम् अपराण्हेनमध्याह्नेमध्याह्नेनतुसंगवे भुंजीतसंगवेचेत्स्यान्नपूर्वंभोजनक्रियेतिमार्कंडेयोक्तेः
बालादिविषयम् बालवृद्धातुरैर्विनेतिपूर्वोक्तेः वेधकालेग्रहणेवापक्वमन्नंत्याज्यम् सर्वेषामेववर्णानां
सूतकंराहुदर्शने स्नात्वाकर्माणिकुर्वीतशृतमन्नंविवर्जयेदितिहेमाद्रौषट्त्रिंशन्मतात् शृतमितितदंतरित
स्योपलक्षणम् नचग्राह्येषुयत्किंचिद्ग्रहपर्युषितंचयदितिमिताक्षरायांवचनात् भार्गवार्चनदीपिकायां-

ज्योतिर्निबंधेमेधातिथिः आरनालंपयस्तक्रंदधिस्नेहाज्यपाचितम् मणिकस्थोदकंचैवनदुष्येद्राहुसूतके
मन्वर्थमुक्तावल्यांभन्नंपक्वमिहत्याज्यंस्नानंसवसनंग्रहे वारितक्रारनालादितिलदर्भैर्नदुष्यति जलेतुदोषो
गांगविषयः ग्रहोषितंजलंपीत्वापादकृच्छ्रंसमाचरेदि तितत्रैवचतुर्विंशतिमतेन्यजलस्यदोषोक्तेः वेधका
लेग्रहणेवाभोजनेप्रायश्चित्तमुक्तम् माधवीयेकात्यायनेन चंद्रसूर्यग्रहेभुक्त्वाप्राजापत्येनशुध्यति तस्मि
न्नेवदिनेभुक्त्वात्रिरात्रेणैवशुध्यतीतिग्रहणेचत्रिरात्रमेकरात्रंवोपवासःश्रेयोर्थिनाकार्यः एकरात्रमुपोष्यैव
स्नात्वादत्वाचशक्तितः कंचुकादिवसर्पस्यनिवृत्तिःपापकोशतः त्रिरात्रंसमुपोष्यैवंग्रहणेचंद्रसूर्ययोः स्ना-
त्वादत्वाविधिवन्मोदतेब्रह्मणासहेतिहेमाद्रौलैंगोक्तेः इदंचपुत्रवतिरिक्तविषयम् आदित्येहनिसंक्रांतौग्र
हणेचंद्रसूर्ययोः पारणंचोपवासंचनकुर्यात्पुत्रवान्गृहीतिजैमिनिवचनात् यदातुरवेर्ग्रस्तास्तस्तदापुत्रिणः
प्रहरद्वयंहित्वाबालादिवद्भोजनंनतूपवासः सायाह्नेग्रहणंनेत्यादितिपूर्वोक्तमार्कंडेयवचनात् सायाह्नेसंगवे
श्नीयाच्छारदेसंगवादधः मध्याह्नेपरतोश्नीयान्नोपवासोरविग्रहइतिस्मृतेश्चेतिहेमाद्रिः शारदोपराण्हःमाध
वमतेतुपुत्रिणोपितत्रोपवासएव अहोरात्रंनभोक्तव्यमितिपूर्वोक्तनिषेधस्यतेनापिपालनीयत्वात् उपवा
सनिषेधस्तुव्रतरूपोपवासपरः कृष्णैकादशीनिषेधवदिति मदनरत्नेप्येवम् इदमेवचयुक्तं वर्धमानस्तु
अहोरात्रंनभोक्तव्यमितिशातातपीयोक्तेः सूर्याचंद्रमसोर्लोकानक्षयान्याति मानवइतिफलश्रुतेर्गुत्वदर्शने
उपवासःकाम्यः नत्वयंनिषेधइत्याह तन्न अत्रव्रतत्वेपिप्रागुक्तविष्णुधर्मेनिषेधावश्यंभावात् तथाचव्यासः

रविग्रहःसूर्यवारेसोमेसोमग्रहस्तथा चूडामणिरितिख्यातस्तत्रदत्तमनंतकम् वारेष्वन्येषुयत्पुण्यंग्रहणेचंद्रसू
र्ययोः तत्पुण्यंकोटिगुणितंयोगेचूडामणौस्मृतम् अत्रचाद्यंतयोःस्नानंकुर्यात् ग्रस्यमानेभवेत्स्नानंग्रस्तेहोमोवि
धीयते मुच्यमानेभवेद्दानंमुक्तेस्नानंविधीयत इतिहेमाद्रौवचनात् स्नानंस्यादुपरागादौमध्येहोमःसुरार्चनमिति
ब्रह्मवैवर्तात् सर्वेषामेववर्णानांसूतकंराहुदर्शने सचैलंतुभवेत्स्नानंसूतकान्नंचवर्जयेदितिवृद्धवसिष्ठोक्तेश्च
सचैलंमुक्तिस्नानपरमितिमदनरत्नेउक्तम् भार्गवार्चनदीपिकायांचतुर्विंशतिमते मुक्तोयस्तुनकुर्वीतस्नानं
ग्रहणसूतके ससूतकीभवेत्तावद्यावत्स्यादपरोग्रहः इदंचस्नानमसंनकंकार्यमितिस्मृतिरत्नावल्याम् तत्रती
र्थविशेषोभारते गंगास्नानंतुकुर्वीतग्रहणेचंद्रसूर्ययोः महानदीषुचान्यासुस्नानंकुर्याद्यथाविधि महानदीष
पिमासविशेषेकाश्चिच्छ्रेष्ठाः प्रयागंदेविकारेवासान्निहत्याच्चवारणम् सरस्वतीचंद्रभागाकौशिकीतापिकातथा
सिंधुर्गंडकिकाचैवसरयूःकार्तिकादितः मूलंहेमाद्रौस्पष्टम् व्यासः इंदोर्लक्षगुणंपुण्यंरवेर्दशगुणंततः गंगातो
येतुसंप्राप्तइंदोःकोटीरवेर्दश गवांकोटिसहस्रस्ययत्फलंलभतेनरः तत्फलंलभतेमर्त्योग्रहणेचंद्रसूर्ययोः अ
संभवेतुमाधवीयेशंखः वापीकूपतडागेषुगिरिप्रस्रवणेषुच नद्यांनदेदेवखातेसरसीषूद्धृतांबुनि उष्णोदके
नवास्नायाद्ग्रहणेचंद्रसूर्ययोः अत्रतारतम्यमाहमार्कंडेयः शीतमुष्णोदकात्पुण्यमपारक्यंपरोदकात् भूमि
ष्ठमुद्धृतात्पुण्यंततःप्रस्रवणोदकम् ततोपिसारसंपुण्यंततःपुण्यंनदीजलम् तीर्थतोयंततःपुण्यंमहानद्यु
पावनम् ततस्ततोपिगंगाख्युपुण्यंपुण्यस्ततोंबुधिरिति उष्णोदकमातुरविषयम् तथा गोदावरीमहापुण्याच

द्रेराहुसमन्विते सूर्येचराहुणाग्रस्तेतमोभूतेमहासुने नर्मदातोयसंस्पर्शैःकृतकृत्याभवंतिहि पृथ्वीचंद्रोदयेप्र
भासखंडे गावोनागास्तिलाधान्यंरत्नानिकनकंमही संप्रदायकुरुक्षेत्रेयत्फलंलभतेनरः तदिंदुग्रहणेंभोधौस्नाना
द्भवतिषड्गुणम् तत्रैवसौरपौराणेंबुधिस्नानमुपक्रम्य दानानियानिलोकेषुविख्यातानिमनीषिभिः तेषांफलम
वाप्नोतिग्रहणेचंद्रसूर्ययोः देवीपुराणे गंगाकनखलंपुण्यंप्रयागपुष्करंतथा कुरुक्षेत्रंमहापुण्यंराहुग्रस्तेदिवा
करेस्नानासंभवेस्मरणंवाकार्यम् स्मृत्वाशतक्रतुफलंहत्वासर्वाघनाशनम् स्पृष्ट्वागोमेधपुण्यंतुपीत्वासोत्रा
मणेर्लभेत् स्नात्वावाजिमखंपुण्यंप्राप्नुयान्नविचारतः रविचंद्रोपरागेचअयनेचोत्तरेतथेतिमार्कंडेयोक्तेः अत्र
श्राद्धमाहऋष्यशृंगः चंद्रसूर्यग्रहेयस्तुश्राद्धंविधिवदाचरेत् तेनैवसकलापृथ्वीदत्ताविप्रस्यवैकरे भारते
सर्वस्वेनापिकर्तव्यंश्राद्धंवैराहुदर्शने अकुर्वाणस्तुनास्तिक्यात्पंकेगौरिवसीदति विष्णुः राहुदर्शनदत्तंहिश्रा
द्धमाचंद्रतारकम् इदंचामान्नेनहेम्नावाकार्यनत्वन्नेन आपद्यनग्नौतीर्थेचचंद्रसूर्यग्रहेतथा आमश्राद्धंप्र
कुर्वीतहेमश्राद्धमथापिवेतिशातातपोक्तेरितिहेमाद्रिमाधवादयः अपरार्कस्तुएतद्द्विजातीनांपाकाभावे
द्रष्टव्यंतीर्थश्राद्धवत् पाकाभावेद्विजातीनामामश्राद्धंविधीयत इतिसुमंतूक्तेः सैंहिकेयोयदासूर्यंग्रसते
पर्वसंधिषु गजच्छायातुसाप्रोक्तातस्यांश्राद्धंप्रकल्पयेत् घृतेनभोजयेद्विप्रान्घृतंभूमौसमुत्सृजेदितिवा
यवीयोक्तेश्चेत्याह विज्ञानेश्वरोप्याह ग्रहणश्राद्धेभोक्तुर्दोषोदातुस्त्वभ्युदयइति सूतकेमृतकेभुक्तेगृ
हीतेशशिभास्करे छायायांहस्तिनश्चैवनभूयःपुरुषोभवेदित्यापस्तंबेनभोजननिषेधाच्च अयंचनिषे

धःश्राद्धभोक्तुर्हस्तिच्छायासाहनर्यात् अत्रग्रहणनिमित्तंकश्राद्धेनैवामासंक्रांत्यादिनैमित्तिकानांसिद्धिः दार्शिका-
रुण्ययोरपीतिकालादर्शोक्तेः अत्राशौचमध्येपिस्नानश्राद्धादिकार्यमेव सूतकेमृतकेचैवनदोषोराहुदर्शने नाव
देवभवेच्छुद्धिर्ग्रस्तमुक्तिर्नदृश्यतइतिमाधवीयेवृद्धवसिष्ठोक्तेः स्मार्तकर्मपरित्यागोराहोरन्यत्रसूतकइतिव्याघ्रपादो
क्तेश्च कालादर्शेअंगिराः सर्वेवर्णाःसूतकेपिमृतकेराहुदर्शने स्नात्वाश्राद्धंप्रकुर्वीरन्दानंशाठ्यविवर्जितम् मदनपा
रिजातेप्येवम् तेनस्नानमात्रंप्रकुर्वीतदानश्राद्धविवर्जितमितिनिर्मूलं वदंतोगौडाःपरास्ताः इयंचशुद्धिरविशेषान्मं
त्रदीक्षापुरश्चरणादिसर्वस्मार्तकर्मविषया मदनरत्नेप्येवम् रजस्वलायास्तु भार्गवार्चनदीपिकायाम् सूर्योदय
निबंधेनसूतकादिदोषोस्तिग्रहेहोमजपादिषु ग्रस्तेस्नायादुदक्यापितीर्थादुद्धृतवारिणेति अत्रचस्नाने नैमित्तिके
प्राप्तेनारीयदिरजस्वला पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेदित्यादिदीपिकोक्तोविधिर्ज्ञेयः तथाग्रहणेरात्राव
पिश्राद्धादिकार्यम् ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च दानंनैमित्तिकंज्ञेयंरात्रावपितदिष्यत इत्यपरार्के व्यासो
क्तेः चंद्रग्रहेतथारात्रौस्नानंदानंप्रशस्यतइतिदेवलोक्तेश्च गदातुज्योतिःशास्त्रगम्योदिनेचंद्रग्रहोरात्रौचसूर्यग्रह
स्तदास्नानादिनकार्यम् सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा तत्रस्नानंनकुर्वीतदद्याद्दानंचनक्वचिदिति षड्-
शन्मतात् ग्रहणदिनेवार्षिकश्राद्धमापतेत्तुप्रयोगपारिजातेगोभिलः दर्शेरविग्रहेपित्रोःप्रत्याब्दिकमु
म् अन्नेनासंभवेहेम्नाकुर्यादामेनवासुतइति अत्रदर्शरविपितृसुतशब्दाः प्रदर्शनार्थाः न्यायसाम्यात् तेन
चंद्रग्रहणेपिसपिंडादिवार्षिकमन्वादिनान्तदिनएवकार्यमितिमदनपारिजातेव्याख्यानम् पृथ्वीचंद्रोदयेप्येवं

तेनयानिभामश्राद्धंप्रकुर्वीतमाससंवत्सरादृतेइति अनेनैवाब्दिकंकुर्याद्भानामेननक्तंचिदितिमरीचिस्मेगास्यादि
वचनानितानिग्रहणादिनातिरिक्तविषयाणि निर्णयामृतेप्येवम् यानितुग्रहणात्तुद्वितीयेन्हिरजोदोषात्तुपंचमे
तथा ग्रस्तोदयेपरचंद्रेप्रत्यब्दंसमुपस्थितम् तद्दिनेचोपवासःस्यात्प्रत्यब्दंतुपरेहनि तथा ग्रस्तावेवास्तमानंतुरवी
दूभाग्नुतोयदि प्रत्यब्दंतुतदाकार्यंपरेहन्येवसर्वदा चंद्रसूर्योपरागेचतथाश्राद्धंपरेहनीत्यादीनिवचनानितानि
महानिबंधेषुक्वाप्यनुपलंभान्निर्मूलानि प्रत्युतपूर्वोक्तनिबंधेषुतद्दिनएवश्राद्धमुक्तमित्यलम् ग्रहणादिसप्तादि
नपर्यंतंरामगोपालाद्यागमदीक्षोक्ताशिवार्चनचंद्रिकायांज्ञानार्णवे मंत्राद्यारंभणंकुर्याद्ग्रहणेचंद्रसूर्ययोः ग्रहणा
द्यपिदेवेशिकालःसप्तदिनावधीति रत्नसागरे सत्तीर्थेर्कविधुग्रासेतंतुदामनपर्वणि मंत्रदीक्षांप्रकुर्वाणोमासर्क्षा
दीन्नशोधयेत् अत्रसूर्यग्रहणमेवमुख्यम् सूर्यग्रहणकालेनुनान्यदन्वेषितंभवेत् सूर्यग्रहणकालेनसमोनान्यः
कदाचन नमासतिथिवारादिशोधनंसूर्यपर्वणीतितत्रैवकालोत्तरवचनात् चंद्रग्रहेतुयादीक्षायादीक्षाव्रतचारि
णाम् वनस्थस्यचयादीक्षादारिद्र्यंसप्तजन्मस्वितितत्रैवयोगिनीतंत्रेनिषेधाच्च ग्रहणंचजन्मराश्यादौनिषिद्धम् त
दुक्तंज्योतिषे त्रिषड्दशायोपगतंनराणांशुभप्रदंस्याद्ग्रहणंरवींद्वोः द्विसप्तनंदेषुचमध्यमंस्याच्छेषेष्वनिष्टंक-
थितंमुनींद्रैरिति आयएकादश नंदानवरंध्रःपंच मदनस्लेगर्गः जन्मसप्ताष्टरिःफांकदशमस्थेनिशाकरे
दृष्टोरिष्टप्रदोराहुर्जन्मर्क्षेनिधनेपिच रिःफंद्वादशम् अंकानव निधनंसप्तमतारा पृथ्वीचंद्रोदयेविष्णुध-
र्मे यन्नक्षत्रगतोराहुर्ग्रसतेशशिभास्करौ तज्जातानांभवेत्पीडायेनराःशांतिवर्जिताः तत्रैवपुराणांतरे

सूर्यस्यसंक्रमोवापिग्रहणंचंद्रसूर्ययोः यस्यत्रिजन्मनक्षत्रेतस्यरोगोथवामृतिः तस्यदानंचहोमंचदेवार्चनजपौतं
था उपरागाभिषेकंचकुर्याच्छांतिर्भविष्यति स्वर्णेनवाथपिष्टेनकृत्वासर्पस्यचाकृतिम् ब्राह्मणायददेत्तस्यनरोगादिभ्य
तत्कृतः जन्मनक्षत्रंतत्पूर्वोत्तरेचत्रिजन्मनक्षत्रमित्युच्यते जन्मदशमैकोनविंशतितारा इति केचित् सर्पस्यतदा-
कारस्यराहोरित्यर्थः अद्भुतसागरेभार्गवः यस्यराज्यस्यनक्षत्रेस्वर्भानुरुपरज्यते राज्यभंगंसुहृन्नाशंमरणंचा
त्रनिर्दिशेत् राज्यस्यनक्षत्रं अभिषेकनक्षत्रमितितत्रैवव्याख्यानम् भार्गवार्चनदीपिकायांज्योतिःसागरे
सौवर्णंकारयेन्नागंपलेनाथपलार्धतः तदर्धेनतदर्धेनफणायांमौक्तिकंन्यसेत् ताम्रपात्रेनिधायाथघृतपूर्णेविशे
षतः कांस्येवाकांतिलोहेवान्यस्यदद्यात्सदक्षिणम् चंद्रग्रहेतुरूप्यस्यबिंबंदद्यात्सदक्षिणम् नागंरुक्ममयंसूर्यग्रहे
बिंबंचहेमजम् तुरंगरथगोभूमितिलसर्पिश्चकांचनम् कालविवेकेपि सुवर्णनिर्मितंनागंसतिलंकांस्यभाजनम्
सदक्षिणंसवस्त्रंचब्राह्मणायनिवेदयेत् सौवर्णंराजतंवापिबिंबंकृत्वास्वशक्तितः उपरागभवक्लेशाच्छिदे विप्राय
कल्पयेत् मंत्रस्तु तमोमयमहाभीमसोमसूर्यविमर्दन हेमताराप्रदानेनममशांतिप्रदोभव विधुंतुदनमस्तुभ्यं
सिंहिकानंदनाच्युत दानेनानेननागस्यरक्षमांवेधजाद्भयादिति अत्रशांतिरप्युक्तामात्स्ये यस्यराशिंसमासाद्यभ
वेद्ग्रहणसंभवः स्नानंतस्यप्रवक्ष्यामिमंत्रौषधिसमन्वितम् चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनम् संपूज्यचतु
रोविप्रान्शुक्लमाल्यानुलेपनैः पूर्वमेवोपरागस्यसमानीयौषधादिकम् स्थापयेच्चतुरःकुंभानव्रणान्सलिला
न्वितान् गजाश्वरथ्यावल्मीकसंगमाह्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् पंचगव्यंपंचरत्नं

पंचत्वक्पंचपल्लवम् रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनम् शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलून् मधुकंदेव
दारुंचविष्णुक्रांतांशतावरीम् बलांचसहदेवींचानिशाद्वितयमेवच गजदंतंकुंकुमंचतथैवोशीरचंदनम् एत
त्सर्वंविनिक्षिप्यकुंभेष्वावाहयेत्सुरान् सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षय-
कारकाः योसौवज्रधरोदेवआदित्यानांप्रभुर्मतः सहस्रनयनःशक्रोग्रहपीडांव्यपोहतु मुखंयःसर्वदेवानांस
प्तार्चिरमितद्युतिः चंद्रोपरागसंभूतामग्निःपीडांव्यपोहतु यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः यमश्चं
द्रोपरागोत्थांग्रहपीडांव्यपोहतु रक्षोगणाधिपःसाक्षान्नीलांजनसमप्रभः खड्गहस्तोतिभीमश्चग्रहपीडांव्यपो
हतु नागपाशधरोदेवःसदामकरवाहनः सजलाधिपतिर्देवोग्रहपीडांव्यपोहतु प्राणरूपोहिलोकानांसदा
कृष्णमृगप्रियः वायुश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु योसौनिधिपतिर्देवःखड्गशूलगदाधरः चंद्रोपरागकलु
षंधनदोत्रव्यपोहतु योसाविंदुधरोदेवःपिनाकीवृषवाहनः चंद्रोपरागपापानिसनाशयतुशंकरः त्रैलोक्ये
यानिभूतानिस्थावराणिचराणिच ब्रह्मविष्ण्वर्करुद्राश्चदहंतुममपातकम् एवमावाहयेद्धीमान्मंत्रैरेभिश्चवा
रुणैः एतानेवतथामंत्रान्स्वर्णपट्टेविलेखयेत् ताम्रपट्टेथवालिख्यनववस्त्रेतथैवच मस्तकेयजमानस्यनि
दध्युस्तेद्विजोत्तमाः कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान् गृहीत्वास्नापयेद्भूदंभद्रपीठोपरिस्थितम्
पूर्वैरेवतुमंत्रैश्चयजमानंद्विजोत्तमाः अभिषेकंततःकुर्यान्मंत्रैर्वारुणसूक्तकैः आचार्यंवरयेत्पश्चात्स्वर्णप-
ट्टंनिवेदयेत् आचार्यदक्षिणांदद्याद्गोदानंचस्वशक्तितः होमंवापिप्रकुर्वीततिलैर्व्याहृतिभिस्तथा दानंच

शांतिकोरथान्यदीठेशात्मनोहितम् सूर्यग्रहेसूर्यनामयुक्तान्मंत्रांश्चकीर्तयेत् अनेनविधिनायस्तुग्रहणेस्नान
मानरेत् नतस्यग्रहणेदोषःकदाचिदपिजायते २४ इतिग्रहणशांतिः भार्गवार्चनदीपिकायांब्रह्मसिद्धांते
गर्भिःपदेस्थितंवीक्ष्यरवस्यंतेलातुदर्पणे ग्रहणंगुर्विणीजातुनपश्येत्पटंविना तथामंगलकृत्येषुवेधविशो
षोडशाहो त्रयोदश्यादितोनर्क्षेदिनानांनवकंध्रुवम् मांगल्येषुसमस्तेषुग्रहणेचंद्रसूर्ययोः प्रकारांतरंतत्रैवो
क्तम् द्वादश्यादितृतीयांतोवेधइंदुग्रहेस्मृतः एकादश्यादिकःसौरेचतुर्थ्यंतःप्रकीर्तितः इदंचपूर्णग्रासे
त्र्यहंखंडग्रहेतयोरितितत्रैवोक्तेः इदंचग्रस्तास्तेत्रिदिनंपूर्वमितिनारदेनग्रस्तास्तेविशेषोक्तेर्ग्रस्तास्तभिन्नग्रह
णपरम् ज्योतिर्निबंधेच्यवनः ग्रहणोत्पातभंसाज्यंमंगलेषुऋतुत्रयम् यावच्चरविणाभुक्तामुक्तंभंदग्ध
काष्ठवत् अन्यानिचाग्नेयादिमंडलानितत्फलंवर्णविकारादिफलंचदैवज्ञेभ्योज्ञेयम् पुरश्चरणचंद्रिकायां
चंद्रसूर्योपरागेनस्नात्वाप्रयतमानसः स्पर्शादिमोक्षपर्यंतंजपेन्मंत्रंसमाहितः जपाद्दशांशतोहोमस्तथाहो
माच्चतर्पणम् तर्पणस्यदशांशेनमार्जनंकथितंकिल तत्रैवदेवतारूपंध्यात्वात्मानंप्रपूज्यच नमोंतंमंत्रमु
च्चार्यनद्यंतेदेवताभिधाम् द्वितीयांतामहंपश्चादभिषिंचाम्यनेनतु तोयैरंजलिनाशक्त्यैरेभिः सिंचेत्स्वमूर्ध
नि मार्जनस्यदशांशेनब्राह्मणानपिभोजयेत् जपोर्चापूर्वकोहोमस्तर्पणंचाभिषेचनम् भूदेवपूजनंपं
चप्रकारोक्तापुरस्क्रिया तथा होमाशक्तोजपंकुर्याद्धोमसंख्याचतुर्गुणाम् एवंकृतेतुमंत्रस्यजायतेसि
कृत्वा ग्रहणप्रसंगात्कुरुक्षेत्रप्रतिग्रहप्रायश्चित्तमुच्यते तत्रारुणस्मृतौ प्रतिग्राहीकुरुक्षेत्रेनभूयःपु

रुधोभवेत् तथापिमनसःशुद्ध्येप्रायश्चित्तंसमाचरेत् नमकृच्छ्रद्वयंकुर्याद्देवेनसमन्वितम् सचैपवायजेताथ
जपेल्लक्षसमकम् वापीकूपतडागादिखननैर्विसृजेद्धनमिति एतच्चयद्गृहितेनार्जयंतिकर्मणाब्राह्मणाध
नम् तस्योत्सर्गेणशुध्यंतिदानेनतपसैवचेतिमनूक्तेरुत्सर्गोत्तरंज्ञेयमितिदिक् ग्रहणांतरितस्यपूर्वसंकल्पि
तद्रव्यस्यद्वैगुण्यंनभवतीतिशिष्टाः पठंतिचलघुब्रह्मवैवर्ते दातव्यमितिनोक्तायावत्कव्यंकुत्रचित्कचित्
अहोरात्र मतिक्रम्यतद्दानंद्विगुणंभवेत् दशोत्तरंपर्वसुस्याच्छतंचंद्रग्रहेभवेत् सूर्यग्रहेसहस्रंतन्मरणेनंत-
कंस्मृतमिति अत्रमूलंचिंत्यम् अत्रकेचिद्दोहतुल्याआहुः ग्रहणस्यनिमित्तत्वेनतस्मिन्व्ययस्यप्रयोजक
त्वात्ज्योतिःशास्त्रादिनाज्ञानस्यनिमित्तत्वेभासेपि स्नानंदानंततःश्राद्धमनंतंराहुदर्शने चंद्रसूर्योपरागे
तुयावद्दर्शनगोचरइतिजाबाल्यादिवचनेपुदृशिप्रयोगाच्चाक्षुषज्ञानस्यैवोपसंहारन्यायेनानिमित्तत्वम्
अन्यथादृशेर्लक्षणास्यात् तेनमेघाच्छादनेऽधीनांजन्मसप्तापेत्यादिनिषिद्धदर्शनानांचस्नानश्राद्धादौ
नाधिकारइति कल्पतरुस्त्वाह दर्शनशब्देनचाक्षुषज्ञानंगृह्यतेनज्ञानमात्रम् अज्ञातस्यनिमित्तत्वासं
भवान्निमित्तमहिम्नैवज्ञानलाभेनदर्शनपदवैयर्थ्यापत्तेः तेनचाक्षुषधीयोग्यःकालःपुण्यः योग्यत्वंच
मेघलानपनेयचाक्षुषज्ञानप्रतिबंधकराहित्यंतेनमेघच्छन्नेयोग्यताभावान्नस्नानादीति निर्णयामृते
प्येवम् तदेतत्तुच्छम् यदिचाक्षुषज्ञानंनिमित्तंस्यात्तदा सूर्यग्रहोयदारात्रौदिवाचंद्रग्रहस्तथा तत्रस्ना
नंनकुर्वीतदद्याद्दानंनचक्कचित्इतिवाक्यंव्यर्थंस्यात् चाक्षुषज्ञानाभावेनप्राप्त्यभावात् तत्सूर्यकला

त्रनिषेधस्य नचेदंग्रस्तास्तपरम् रविचंद्रयोरस्तानंतरंरात्रिदिनाग्रहत्वादितिवाच्यम् ननुयदस्यग्रहपरत्वेधि
करणत्वायोगान्निमित्तपरत्वेचतद्ग्रहनिमित्तकस्नानादेरस्तास्प्रागप्यभावापत्तेः अथतत्रेतिरात्रिदिनेउच्चै
तेसावैस्वदेवीतिवद्गुणभूतेअपि तन्न तादृशमंत्रलिंगाभावात् तयोर्निमित्तत्वेधिकरणत्वेवान्यप्रयुक्तस्ना
नाद्यभावापत्तेश्च किंच नैक्षेतोद्यंतमादित्यंनास्तंयंतंकदाचन नोपरक्तंनवारिस्थंनमध्यंनभसोगतमिति
मनुवचनेबाध्येत दृशोरिष्टप्रदोराहुरित्यादिच नचात्रविहितेदर्शनेनिषेधाप्रवृत्तिवत्पर्युदासनीयतापिन
युक्तेतिवाच्यम् दर्शनस्यानुवादेनविधेयत्वाभावात् एतच्चाग्रेवक्ष्यामः तत्त्वेवाविरुद्धत्रिकद्वयापत्तेः
अस्तसत्त्वदर्शनविधानेनसंकोचइतिचेत् न मुक्तिंदृष्ट्वाततःस्नायादितिमुक्तिस्नानेपिचास्तुपस्नानस्य
निमित्तत्वापत्तेः अस्तुकिंनश्छिन्नमितिचेन्नग्रस्तास्तेतयोःपरेद्युरुदयेदृष्ट्वाभ्यवहरेच्छुचिरितिदर्शनोत्तरं
भोजनविधानाद्बंधस्यपूर्वविधकालइवयावद्दर्शनंभोजननिषेधापत्तिः मध्येधीभूतस्यसुतरांयावच्चक्षुः
मात्युपवासप्रसंगश्च अथान्नलोलुपतयातत्रज्ञानमात्रंविवक्ष्येततत्पूर्वमपिनिर्लज्जेनस्वीक्रियताम् ए
तेनयत्केनचिदुक्तंस्पर्शस्नानंमुक्तिस्नानंचयस्यदर्शनंतेनैवकार्यम् नान्येनस्नानस्ययेनसमानकर्तृकत्वा
वगतेरितितन्निरस्तम् कातर्हितस्यगतिः दृशोरुद्देश्यविशेषणत्वात्ग्रहैकत्वयदविवक्षयार्थतः सिद्धज्ञान
मात्रानुवादत्वेसर्वंसुस्थम् अंगुलाद्यनादेश्यग्रहव्याहत्यावादर्शनस्यार्थवत्त्वम् नचोक्तयोग्यतापिसाध्वी
दर्शनोत्तरंमेघच्छन्नेयोग्यताभावापत्त्यास्नानाद्यभावापत्तेः तेनतत्तद्देशावच्छेदेनज्योतिःशास्त्रावेद्यत्वमेव

योग्यता किंच रजसोदर्शनेनारीत्रिरात्रमशुचिर्भवेदित्यत्रापि धर्मिणामाशौचाभावप्रसंगः यत्तु वर्धमानेनोक्तम् स्नानोत्तरं त्वधिकारो न ज्ञानकाले स्नानकाले ज्ञानाभावात् एवं दर्शनोत्तरं मुक्तिपर्यंतं भस्त्येव योग्यतेति तदपि प्रतिज्ञामात्रम् किंच ग्रस्तास्तेतयोः परेद्युरुदये दृष्ट्वाभ्यवहरेद्भानोरित्यादिवाक्यवैयर्थ्यापत्तिः चाक्षुषज्ञानान्यथानुपपत्त्यैवार्थादुदयेस्नानसिद्धेः ननु मुक्तिस्नाने शास्त्रीयमेव ज्ञानं निमित्तं न चाक्षुषं चंद्रसूर्यग्रहे नाद्यात्स्नात्वा हनि पूर्वतः राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनमिति वृद्धगौतमेन विज्ञायेति ज्ञानमात्रोक्तेः यत्तु मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति तदपि ज्ञानमात्रपरम् मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते आकलय्य तु तं कालं स्नात्वा भुंजीत वाग्यत इति गौडनिबंधे वचनात् मैवम् अज्ञातस्य निमित्तत्वाभावेन निमित्तमहिम्नैव ज्ञानलाभे वाक्यवैयर्थ्यात् ग्रस्तास्तेपि तदापत्तेश्च किंच दर्शनं पुंसो विशेषणमुपलक्षणं वा नाद्यः दर्शनावच्छिन्ने काले स्नान तुलादानादेर्बाधात् दर्शनविच्छेदे कृतमपि स्नानादि न ग्रहणनिमित्तं स्यात् नांत्यः यावद्दर्शनगोचर इति यावत्पदवैयर्थ्यप्रसंगात् दृष्टग्रहस्य ग्रहणोत्तरमपि स्नानाद्यापत्तेश्च ज्ञानपक्षेप्येष दोषस्तुल्य इति चेत् सूर्योसि यदि ज्ञानवाचकं पदं श्रूयेत तत्र तस्यान्वयो विचार्येत दृशिस्तु श्रूयत इति वैषम्यम् कथं तर्हि ज्ञानं लभ्यते संक्रांतौ स्नायादितिवदर्थादिति ब्रूमो हि अश्रुतत्वादेव नोद्देश्यविशेषणाविवक्षाकृतो वाक्यभेदोपि अस्तु तर्हि दृष्टं ग्रहणं निमित्तमिति चेत् ग्रस्तास्ते स्तोत्तरस्नानापत्तेः विशिष्टोद्देशे वाक्यभेदाच्च तवाप्येतत्तुल्यमिति चेन्न यावद्दर्शनगोचर इति वचनेन तन्निषेधात् तवत्वन्यग्रहदर्शनग्रस्तास्तेपि स्यात् किंच दर्शनस्य विधिरनुवादो वा आ

येग्रहणोद्देशेनदर्शनविधिरुतदर्शनविशिष्टस्नानविधिरुतस्नानोद्देशेनदर्शनविधिः नाद्यः ग्रहोद्देशेनस्नानविधानेद
र्शनविधानेनवाक्यभेदात् एतेनद्वितीयोपिपरास्तः नतृतीयः स्नानस्याप्राप्तेः दर्शनस्यनिमित्तत्वेनाविधेयत्वाच्च
अन्यथासोमवमनादौप्रसंजनविधिः केनवार्येत अथनानावाक्येषुक्वचिद्दर्शनविशिष्टस्नानविधिः क्वचिद्ग्रह
णंदर्शनंनिमित्तीकृत्यस्नानमात्रविधिः तन्न स्नानस्यप्रधानस्याप्राप्तौतदंगदर्शनप्राप्तिः तस्यांचनिमित्तेसतिस्नान
मित्यन्योन्याश्रयात् एवंदर्शनविधौसतितन्निमित्तकस्नानविधिःसतिचप्रधानस्नानविधौतदंगदर्शनविधिःएवम
धिकारेप्रयोजकत्वेनयोज्यम् क्त्वार्थपूर्वकालत्वविधौचास्त्येववाक्यभेदः अन्यथास्नानोत्तरमपिदर्शनमंगंस्यात्
नद्वितीयः तत्रापिदर्शनग्रहयोर्निमित्तत्वेस्नानद्वयापत्तेःदर्शनावृत्तौनैमित्तिकावृत्तिप्रसंगात् दर्शनविशिष्टग्रहस्यैवि
शिष्टस्यानुवादेवाक्यभेदापत्तेः नचहविरार्तिवद्विशिष्टंनिमित्तमितिवाच्यम् आर्तिमात्रस्याहिनिमित्तत्वेनमेवाद्या
तेनापि नत्वापत्तेर्नैमित्तिकत्वभंगाद्युक्तोविशिष्टोद्देशत्वम् इहतुग्रहणमात्रस्यनिमित्तत्वेनकाचित्क्षतिः तस्माद्दर्शन
वाक्यानांग्रस्तास्तविषयत्वादनादेश्यग्रहपरत्वाद्वाज्ञानस्यचार्थतःप्राप्तेस्तदेवनिमित्तम् तेनमेघाद्याच्छादनेथादे
श्चस्नानादिभवत्येवेत्यलंवेदवाह्यैःसंलापेन इतिग्रहणनिर्णयः अथसमुद्रस्नानम् आश्वलायनः समुद्रेपर्व
सुस्नायाद्मायांचविशेषतः पापैर्विमुच्यतेसर्वैरमायांस्नानमाचरन् भृगौभौमादिनेस्नानंनित्यमेवविवर्जयेत् भा
रते अश्वत्थसागरौसेव्यौनस्पृष्टव्यौकदाचन अश्वत्थंमंदवारेतुसागरंपर्वणिस्पृशेत् पृथ्वीचंद्रोदयेस्कांदे पुना
निपर्वणिस्नानात्तर्पणात्सारितापतिः कदाचिदपिनैवात्रस्नानंकुर्यादपर्वणि अस्यापवादस्तत्रैव प्रभासखंडे पर्व

कालेचसंप्रासेनदीनांचसमागमे सेतुबंधेतथासिंधोतीर्थेष्वन्येषुसंयुतः एवमादिषुसर्वेषुमध्येष्वेतुस्वकर्मणि तथा
विनामंत्रंविनापर्वस्कारकर्मविनानरैः कुशाग्रेणापिदेवेशिनस्पृश्योमहोदधिः तथा नकालनियमःसेतौससमुद्रस्नान
कर्मणि तद्विधिस्तत्रैव पिप्पलादसमुत्पन्नेकृत्येलोकभयंकरे पाषाणंतेमयादत्तमाहारार्थंप्रकल्पनामितिपा
षाणंप्रक्षिप्य विश्वाचीचघृताचीचविश्वयोनेविशांपते सान्निध्यंकुरुमेदेवसागरेलवणांभसि नमस्तेविश्वगु
प्तायनमोविष्णोअपांपते नमोजलधिरूपायनदीनांपतयेनमः समस्तजगदाधारशंखचक्रगदाधर देवदेहिम
मानुज्ञांलवतीर्थनिषेवणे त्रितत्वात्मकमीशानंनमोविष्णुमुमापतिम् सान्निध्यंकुरुदेवेशसागरेलवणांभसि
अग्निश्चयोनिरनिलाचदेहोरेतोधाविष्णुरमृतस्यनाभिः एतद्ब्रुवन्पांडवसत्यवाक्यंततोवगाहेतपतिंनदीनामि
ति भारतोक्तमंत्रान्पठित्वाविधिवत्स्नात्वा सर्वरत्नोभवान्श्रीमान्सर्वरत्नाकरोयतः सर्वरत्नप्रधानस्त्वंगृहा
णार्घ्यंमहोदधे इत्यर्घ्यंदत्वातर्पयेत् यथोक्तंपृथ्वीचंद्रोदयेस्कांदे पिप्पलादंचिकुणवंच कृतांतंजीवकेश्वरम्
वसिष्ठंवामदेवंचपराशरमुमापतिम् वाल्मीकिंनारदंचैववालखिल्यांस्तथैवच नलंनीलंगवाक्षंचगवयंगं
धमादनम् जांबवंतंहनूमंतंसुग्रीवंचांगदंतथा मैंदंचद्विविदंचैवऋषभंशरभंतथा रामंचलक्ष्मणंचैव
सीतांचैवयशस्विनीम् एतांस्तुतर्पयेद्विद्वान्जलमध्येविशेषतः आब्रह्मस्तंबपर्यंतंयत्किंचित्सचराचर
म् मयादत्तेनतोयेनतृप्तिमेवाभिगच्छत्विति॥ ॥इतिश्रीमीमांसकनारायणभट्टसूरिसूनुरामकृष्ण
भट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृतेनिर्णयसिंधौप्रथमः परिच्छेदःसमाप्तः॥ श्रीगजानन॥

अथनिर्णयसिंधुद्वितीयपरिच्छेदः प्रारभ्यते

श्रीगणेशायनमः अथसंवत्सरप्रतिपदारभ्यतिथिकृत्येनकृष्णादिमंतेशुक्लादिमेवच विवाहादौ च सौरादिर्मासः कृत्ये-
नि निर्दिशेदितिब्रह्मसंभावयशोनुसृत्यतिथिनिर्णयस्तत्कृत्यंचनिरूप्यते तत्रमीनसंक्रांतौपश्चात्षोडशघटिकाःपुण्य
कालः रात्रौतुनिशीथात्प्राक्परतश्चसंक्रमेपूर्वोत्तरदिनार्धंपुण्यं निशीथेतुदिनद्वयेपुण्यमितिसामान्यनिर्णयाद
नरोयं अथतिथिनिर्णयः तत्रचैत्रशुक्लप्रतिपदिवत्सरारंभः तत्रौदयिकीग्राह्या चैत्रेमासिजगद्ब्रह्माससर्जप्रथमेह
नि शुक्लपक्षेसमग्रंतुतदासूर्योदयेसतीतिहेमाद्रौब्राह्मोक्तेः दिनद्वयेतद्व्याप्त्यभावव्याप्तौवापूर्वैव तदुक्तंज्योतिर्निबंधे चै
त्रसितप्रतिपदियोवारोर्कोदयेसवर्षेशः उदयद्वितयेपूर्वोनोदययुगलेपिपूर्वःस्यात् यस्माच्चैत्रसितादेरुदयाद्भानोःप्रवृ
त्तिरब्दादेरिति वत्सरादौवसंतादौबलिराज्येतथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैरितिवृद्धवसिष्ठोक्तेः चैत्रमासस्य
याशुक्लप्रथमाप्रतिपद्भवेत् तदाह्निब्रह्मणःकृत्वासोपवासस्तुपूजनं संवत्सरमवाप्नोतिसौख्यानिभृगुनंदनेतिहेमाद्रौवि
ष्णुधर्मोक्तेः यदातुचैत्रोमलमासोभवतितदादेवकार्यस्यतत्रनिषिद्धत्वाच्छुद्धेमासिसंवत्सरारंभःकार्यइतिकेचिदाहुः
निष्कर्षस्तु शुक्लादेर्मलमासस्यसोंतर्भवतिचोत्तरइत्यादिवचनादग्रिमवर्षांतःपातान्मलमासमारभ्यैववर्षप्रवृत्तेः शुक्ला
स्तादावेवमलमासएवकार्यइतिवयंप्रतीमः ननुशुक्लास्तादौचैत्रशुक्लप्रतिपदंतरस्याभावाद्युक्तंतन्मध्यएवानुष्ठानंमलमा
सेतुशुद्धप्रतिपदंतरस्यसंभवात्शुद्धएववत्सरारंभोयुक्तइतिचेत् भ्रांतोसि नहिप्रतिपदंतरसत्वंप्रयोजकं द्विकरणापत्तेःव
र्षशब्दलापत्तेश्च अपितुवत्सरारंभः सतुमलमासेपीत्युक्तंप्राक् नहिचैत्रशुक्लादिर्मलमासःपूर्ववर्षेनर्भवतीतिब्रह्मणापिसृ
ष्टत्वं तत्रतैलाभ्यंगोनित्यः वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यतइतिवसिष्ठोक्तेः अ

स्यामेवनवरात्रारंभः तदुक्तंमार्कंडेयपुराणे शरत्कालेमहापूजाक्रियतेयाचवार्षिकीति तत्रपरयुतैवग्राह्या अमायुक्तान
कर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीयादिगुणान्वितेतिदेवीपुराणात् तिस्रोह्येताःपराःप्रोक्तास्तिथ
यःकुरुनंदन कार्तिकाश्वयुजोमासोश्चैत्रेमासिचभारतेतिहेमाद्रौब्राह्मोक्तेः परापरयुताः अत्रविशेषःपारणानि
र्णयश्चशारदनवरात्रेवक्ष्यते अत्रप्रपादानमुक्तमपरार्केभविष्ये अतीतफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे पुण्येन्हि
विप्रकथितेप्रपादानंसमारभेदित्युपक्रम्य ततश्चोत्सर्जयेद्विद्वान्मंत्रेणानेनमानवः प्रपेयंसर्वसामान्याभूतेभ्यःप्र
तिपादिता अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः अनिवार्यंततोदेयंजलंमासचतुष्टयमिति तथा प्रपांदा
तुमशक्तेनविशेषाद्धर्मसीप्सुना प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयःशीतामलजलःशुचिः
तत्रमंत्रः एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाः अनेनविधिनायस्तु
धर्मकुंभंप्रयच्छति प्रपादानफलंसोपिप्राप्नोतीहनसंशयइति चैत्रशुक्लतृतीयायांगौरीमीश्वरसंयुतांसंपूज्यदो-
लोत्सवंकुर्यात् तदुक्तंनिर्णयामृतेदेवीपुराणे तृतीयायांयजेद्देवींशंकरेणसमन्वितां कुंकुमागरुकर्पूरमणिवस्त्र
स्रगंधकैः स्रग्गंधधूपदीपैश्चदमनेनविशेषतः आंदोलयेत्ततोवत्सशिवोमातुष्टयेसदेति अत्रचतुर्थीयुताग्रा
ह्या मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरइतिमाधवोक्तेः अत्रैवसौभाग्यशयनव्रतमुक्तंमात्स्ये वसंतमासमासा
द्यतृतीयायांजनप्रिये सौभाग्यायसदास्त्रीभिःकार्यंपुत्रसुखेप्सुभिरिति तत्रापिपरयुतैव इयंचमन्वादिरपि
अत्रैवप्रसंगात्सर्वमन्वादिनिर्णयउच्यते तत्रोक्तंदीपिकायां तिथ्यग्नीनतिथिस्तिथ्याशेकृष्णोमोनलोग्रहः

श्रीगणेशायनमः अथसंवत्सरप्रतिपदमारभ्यतिथिकृत्येचकृष्णादित्वेतेशुक्लादित्वेच विवाहादौचसौरादिमासंकृत्ये-
निर्निर्दिशोदित्रिशाहसंप्रायशोऽनुसृत्यतिथिनिर्णयस्तत्कृत्यंचनिरूप्यते तत्रमीनसंक्रांतौपश्चात्षोडशघटिकाःपुण्य
कालः रात्रौतुनिशीथात्प्राक्परतश्चसंक्रमेपूर्वोत्तरदिनार्धंपुण्यं निशीथेतुदिनद्वयेपुण्यमितिसामान्यनिर्णयाद
वसेयं अथतिथिनिर्णयः तत्रचैत्रशुक्लप्रतिपदिवत्सरारंभः तत्रौदयिकीग्राह्या चैत्रेमासिजगद्ब्रह्मासमर्जप्रथमेह
नि शुक्लपक्षेसमग्रंतुतदासूर्योदयेसतीतिहेमाद्रौब्राह्मोक्तेः दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वैव तदुक्तंज्योतिर्निबंधे चै
त्रेसितप्रतिपदियोवारोऽर्कोदयेसवर्षेशः उदयद्वितयेपूर्वानोदययुगलेपिपूर्वःस्यात् यस्माच्चैत्रसितादेरुदयाद्भानोःप्रवृ
त्तिरब्दादेरिति वत्सरादौवसंतादौबलिराज्येतथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैरिति वृद्धवसिष्ठोक्तेः चैत्रमासस्य
याशुक्लप्रथमाप्रतिपद्भवेत् तदह्निब्राह्मणाःकृत्वासोपवासस्तुपूजनं संवत्सरमवाप्नोतिसौख्यानिभृगुनंदनेतिहेमाद्रौवि
ष्णुधर्मोक्तेः यदातुचैत्रोमलमासोभवतितदादैवकार्यस्यतत्रनिषिद्धत्वाच्छुद्धेमासिसंवत्सरारंभःकार्यइतिकेचिदाहुः
निरर्थकं शुक्लादेर्मलमासस्यसोंऽतर्भवतिचोत्तरइत्यादिवचनादग्रिमवर्षांतःपातान्मलमासमारभ्यैववर्षप्रवृत्तेः शुक्ला
सादाविवमलमासएवकार्यइतिवयंप्रतीमः ननुशुक्लादित्वादौचैत्रशुक्लप्रतिपदंतरस्याभावाद्युक्तंतन्मध्यएवानुष्ठानंमलमा
सेतुशुद्धप्रतिपदंतरस्यसंभवात्शुद्धएववत्सरारंभोयुक्तइतिचेत् भ्रांतोसि नहिप्रतिपदंतरसत्वंप्रयोजकं द्विःकरणापत्तेःच
र्गशब्दलापत्तेश्च अपितुवत्सरारंभः सतुमलमासेपीत्युक्तंप्राक् नहिचैत्रशुक्लादिर्मलमासःपूर्ववर्षेंतर्भवतीतिब्रह्मणापिस्क
वनं तत्रतैलाभ्यंगोनित्यः वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यतइतिवसिष्ठोक्तेः अ

ततोभ्योनाम्नासमर्च्यमहानैवेद्यंदत्वानीराज्यमणिविद्रुममालाभिरित्यादिभिर्दमनारोपणोक्तमंत्रैः प्रार्थयित्वागु
रवेब्राह्मणेभ्यश्चदत्वास्त्वयंधारयेत् तथा मासंपक्षमहोरात्रंत्रिरात्रंधारयेत्तथा देवेतंसूत्रसंदर्भंदेशकालविव
क्षया अकरणेतुतत्रैव पवित्रारोपणंकालेनकरोतिकथंचन तदायुतंजपेन्मंत्रंस्तोत्रंवापिसमाहितइत्युक्तं इ
तिपवित्रारोपः श्रावणशुक्लचतुर्दशीपूर्वयुताग्राह्या अत्रवक्तव्योविशेषश्चैत्रचतुर्दश्यामुक्तः अथोपाकर्म त
त्रबह्वृचानां प्रयोगपारिजातेशौनकः अथातः श्रावणेमासेश्रवणर्क्षयुतेदिने श्रावण्यांश्रावणेमासिपंचम्यांहस्त
संयुते दिवसेविदधीतैतदुपाकर्मयथोदितं अध्यायोपाकृतिंकुर्यात्तत्रौपासनवन्हिनेति अत्रपौर्णमास्युपसंहा
रन्यायेनयजुर्वेदिपरेतिहेमाद्रिः अत्रहस्तयुक्तापंचम्युक्ता कारिकापि तन्मासेहस्तयुक्तायांपंचम्यांवानादिष्यते इ
तिकेवलपंचम्यांहस्तयुतेन्यस्मिन्दिनेइतितुहेमाद्रिः उपासनवन्हिनेतितुकर्मद्वयमिदंकेचिल्लौकिकाग्नौप्रकुर्वतेइति
कारिकोक्तलौकिकाग्निनाविकल्पते तत्राप्यध्याप्यैरन्वारब्धइतिसूत्रात् सशिष्यत्वेतदधिकारिकस्याचार्याग्नौ
नान्यस्याग्नावन्योजुहुयादितिनिषेधाल्लौकिकएव तदभावेतुस्मार्तइतिनिर्गवः यद्यपिदीपिकायां वेदोपाकृति
रोषधिप्रजननेपक्षेसितेश्रावणेइतिशुक्लपक्षोपिसर्वेषांमुख्यकालत्वेनोक्तः वक्ष्यमाणगार्ग्यवचनेनछंदोगा
श्रुतिविहितस्यतस्याविरोधिनःसर्वान्प्रतिप्रवृत्तिश्च तथापिश्रावणमाससंबंधस्यसूत्रोक्तत्वात्कृष्णपक्षेपि
कार्यमितिदृष्टाः तथाचसूत्रं अथातोध्यायोपाकरणमोषधीनांप्रादुर्भावेश्रवणेनश्रावणस्यपंचम्यांहस्तेनवा
अत्रश्रवणोमुख्योन्येगौणाः तस्याहर्द्वयोगेहेमाद्रौव्यासः धनिष्ठासंयुतंकुर्याच्छ्रावणंकर्मयद्भवेत् तत्कर्मसक

संवत्सरकृतोध्यायस्तत्क्षणादेवनश्यतीति
उज्ज्ञेयमुपाकरणसंज्ञितं श्रवणेनतुयत्कर्मद्युत्तराषाढसंयुतं संवत्सरकृतोध्यायस्तत्क्षणादेवनश्यतीति पूर्वेद्युरुक्त
र्ग्योपि उदयव्यापिनित्वेवविश्रवर्क्षे घटिकाद्वयं तत्कर्मसफलंज्ञेयंतस्यगुणयंत्वनंतकभितिपूर्वेद्युरुक्त किंच
गेपरेद्युः श्रवणाभावेघटिकाद्वयस्तुनेचापंचम्यादौकार्यं नतुपूर्वविद्धायांसंगवमात्रे अपवादाभावात् किंच
परेद्युःसंगवास्पर्शेनिषिद्धपूर्वाग्रहणेकिंमानंसंगववाक्यंश्रवणवाक्यंचेतिचेत् तर्हिव्रीहिवाक्याद्श्वशाफ
वाक्याच्चमाषमिश्राणामप्युपादानंस्यादिनिमहत्संडित्यंनिषेधानुप्रवेशान्नैरपेक्ष्यबाधानेतिचेत् इहापितुल्यं
एतेनपर्वण्यौदयिकंव्याख्यातंनिषेधानुप्रवेशस्योभयत्रतुल्यत्वात् श्रवणयुतदिनेसंक्रांत्यादौतु उपाकर्मन
कुर्वंतिक्रमात्साममग्यजुर्विदः ग्रहसंक्रांतियुक्तेषुहस्तश्रवणपर्वस्वितिहेमाद्रौनिषेधात्पंचम्यादयोग्राह्याः म-
दनरत्नेपि यदिस्याच्छ्रावणंपर्वग्रहसंक्रांतिदूषितं स्यादुपाकरणंशुक्लपंचम्यांश्रावणस्यतु स्मृतिमहार्णवे
संक्रांतिग्रहणंवापियदिपर्वणिजायते तन्मासेहस्तयुक्तायांपंचम्यांवातदिष्यते तत्रापि प्रयोगपारिजाते
इत्थमनुकात्यायनौ अर्धरात्रादधस्ताच्चेत्संक्रांतिर्ग्रहणंतदा उपाकर्मनकुर्वीतपरतश्चेन्नदोषकृदिति
मदनरत्नेगार्ग्योपि यद्यर्धरात्रादर्वाक्तुग्रहःसंक्रमएवच नोपाकर्मतदाकुर्याच्छ्रावण्यांश्रवणेपिवा एतेनग्र-
हणसंक्रांतिकालेश्रवणसत्वेएवनिषेधोनान्यथेतिपूर्वशंकापास्ता ग्रहविशिष्टानांहस्तश्रवणपर्वणांप्रत्येक
निषेधेतद्युतोपाकर्मनिषेधेचविशिष्टोद्देशेवाक्यभेदात् पंचम्यांसंक्रांतौनिषेधाभावापत्तेश्च तेनार्धरात्रात्
र्वेग्रहसंक्रमसत्वेएवोपाकर्मनिषेधोनतद्योगेएव यत्तु प्रतिपन्मिश्रितेनैवनोत्तराषाढसंयुते श्रवणेश्राव

पंकुर्युर्ग्रहसंक्रांतिवर्जितेइति प्रतिपन्मिश्रनिषेधकंवचनंतन्निर्मूलं अत्रच वेदोपाकरणेप्राप्तेकुलीरेसंस्थितेर
वौ उपाकर्मनकर्त्तव्यंकर्तव्यंसिंहयुक्तकेइतिवचनंदेशांतरविषयं नर्मदोत्तरभागेतुकर्त्तव्यंसिंहयुक्तके कर्कटे
संस्थितेभानावुपाकुर्यात्तुदक्षिणइतिबृहस्पतिवचनादितिप्रयोगपारिजातेनोक्तं पराशरमाधवीयेप्येवं सा
मगानांसिंहस्थरवावुक्तेस्तद्विषयइदंपुरोडाशचतुर्धाकरणवदुपसंह्रियतेतेषामेवदेशव्यवस्थानतुबह्वृचा-
दिपरं तेषांसूत्रेचांद्रश्रावणोक्तेःसौरेपंचम्ययोगात्इतितुवयंपश्यामः यत्तुकालादर्शे अध्यायानामुपाकर्म
श्रावण्यांतैत्तिरीयकाः बह्वृचाःश्रवणेकुर्युःसिंहस्थोर्कोभवेद्यदि सहस्तशुक्लपंचम्यांवातद्ग्रहणसंक्रमे अ
सिंहार्केभोष्ठपद्यांश्रवणेनव्यवस्थयेति तन्मूलालेखनाच्चिंत्यं श्रावणेसस्यात्तुद्गमादौतुबह्वृचपरिशिष्टे अद
स्यौषधयस्तस्मिन्मासेतुनभवंतिचेत् तदाभाद्रपदेमासिश्रवणेनतदिष्यतेइति तत्राप्युद्गमेतुकुर्यादेवंतदा
र्षिकमित्याचक्षतेइतिसूत्रात् वर्षर्तौभवंवार्षिकं एतच्चशुक्रास्तादावपिकार्यं उपाकर्मोत्सर्जनंचपवित्रदम
नार्पणमितिदमनारोपेऽखिलवचनात् नित्येनैमित्तिकेजप्येहोमेयज्ञक्रियासुच उपाकर्मणिचोत्सर्गेग्रहवेधो
नविद्यतइति प्रयोगपारिजातेसंग्रहोक्तेः पर्वणिग्रहणेसतिपूर्वत्रिरात्रादिवेधाभाववक्तुमिदंतेनपर्वणिग्रहणे-
पिचतुर्दश्यांश्रवणेकार्यमितिहेमाद्रिः अस्तेप्रथमारंभस्तुनभवति गुरुभार्गवयोर्मौढ्येबाल्येवावार्धकेपिवा
तथाधिमाससंसर्पमलमासादिषुद्विजे प्रथमोपाकृतिर्नस्यात्कृतंकर्मविनाशकृदितितत्रैवकश्यपोक्तेः अत्रप्र
थमारंभेवृद्धिश्राद्धंकुर्यादितिनारायणवृत्तौ एतच्चाधिमासेनकार्यं उपाकर्मतथोत्सर्गः प्रसवाहोत्सवाष्टकाः

उत्कर्षः कालवृद्धौस्यादुपाकर्मादिकर्मणि अ
मासवृद्धौपरेकार्यावर्जयित्वातुपैतृकमितिज्योतिःपराशरोक्तेः यत्तु उपाकर्मणि चोत्सर्गेह्येतदिष्टंवृषादितइतिऋश्य
शृंगवचनंतत्सामगविषयं तेषांसिंहार्केएवोक्तेः एतच्चापराण्हेकार्यं उपाकर्मापराण्हेस्यादुत्सर्गःप्रातरेवतिति
अध्यायानामुपाकर्मकुर्यात्कालेपराण्हिके पूर्वाण्हेतुविसर्गःस्यादितिवेदविदोविदुरितिचहेमाद्रौगोभिलोक्तेः
वस्तत्तु भवेदुपाकृतिःपौर्णमास्यांपूर्वाण्हएवतितिप्रचेतसोवचनात् पूर्ववाक्यंसामगविषयं तेषामपरा-
ह्णएवोक्तेरित्यनुपदंवक्ष्यते दीपिकापि अस्यतुविधेःपूर्वाह्णकालःस्मृतइति याजुषास्तुपर्वणिकुर्युः तच्चापस्तं
वैरौदयिकंग्राह्यमन्यैस्तुपूर्वं पर्वण्योदयिकेकुर्युःश्रावणंतैत्तिरीयकाः बह्वृचाःश्रवणेकुर्युर्ग्रहसंक्रांतिवर्जित
इतिगार्ग्योक्तेः संप्राप्तवांश्रुतीर्ब्रह्मापर्वण्योदयिकेपुनः अतोभूतदिनेतस्मिन्नोपाकरणमिष्यतइतिकालि
कापुराणाच्च अथचेद्दोषसंयुक्तेपर्वणिस्यादुपाक्रिया दुःखशोकामयग्रस्ताराष्ट्रेतस्मिन्द्विजातयइतिमद
नरत्नेहेमाद्रौगार्ग्येयादोषोक्तेः अत्रत्रिगाभट्टीयेविशेषः श्रवणःश्रावणपर्वसंगवस्पृग्यदाभवेत् तदौ
दयिकंकार्यंनान्यदौदयिकंभवेत् पराशरमाधवीयेपिगार्ग्यः श्रावणीपौर्णमासीतुसंगवात्परतोयदि तदौ
दयिकीग्राह्यानान्यदौदयिकीभवेत् कर्मकालमाह कालादर्शेनिगमः श्रावण्यांप्रौष्ठपद्यांवाप्रतिपत्षष्ठ्
हूर्तकेः विद्धास्याच्छंदसांतत्रोपाकर्मोत्सर्जनंभवेत् अत्रपौर्णमासीश्रवणहस्तयोरुपलक्षणं तेनतावपिसं
गवस्पृशौ उदयेसंगवस्पर्शश्चतोपर्वणिचार्कभे कुर्युर्नभस्युपाकर्मऋग्यजुःसामगाःक्रमादितिपृथ्वीचंद्रः

नेनोदयसंगवोभयव्यापिनीमुख्या परेद्युःसंगवाभावेपूर्वेद्युरुभयाभावेचैकैकस्त्वेपूर्वेद्युश्चतुर्दशीवेधनिषे
धात्सामान्यवाक्यादौदयिकीकर्मपर्याप्ताग्राह्या नपूर्वा संगवनिमित्तपूर्वविध्यपवादाभावात् नान्यदौदयिकी
त्वस्यपूर्वविध्यपरत्वाभावात् तेनभाद्रादौकालांतरेस्यान्नतुनिषिध्येनहिव्रीह्यलाभेनिषिद्धमाषग्रहणंयुक्तं
अतएवपरेद्युःसंगवव्याप्तौपूर्वविद्धानिषेधः तदभावेतुनेतिमूर्खव्यवस्थाप्ययुक्ताविधिवैषम्यात् मासनिषे
धेपितथापत्तेश्च पूर्वविद्धावचनसत्वेहिसायुज्यते एवंश्रवणेपिज्ञेयं तत्र विष्णवर्क्षेघटिकाद्वयमितिपूर्वोक्त
विरोधात् तेनप्राशस्त्यमात्रपरमिदं तत्वंतु एतच्छुद्धाधिकपरं तेनयथाग्निहोत्रादौसायंप्रातःकालबाधेसामान्ये
जीवनावच्छिन्नकालेदर्शादौवानुष्ठानं यथाचाव्रीह्यश्वशफाद्यभावेयागाक्षिप्तनिषिद्धवर्जद्रव्येण तथात्रसं
गवाभावेनिषिद्धवर्जकर्मपर्याप्तौदयिकेकालांतरेवानुष्ठानंनतुकदाचिन्निषिद्धे अपवादाभावेउत्सर्गस्यैव
प्राप्तेः कात्यायनादीनांतुदिनद्वयेपूर्वाह्णव्याप्तौएकदेशस्पर्शेवापूर्वेवेतिहेमाद्रिः यदपि श्रावणीदुर्गानवमीदू
र्वाचैवहुताशनीपूर्वविद्धाप्रकर्त्तव्याशिवरात्रिर्बलेर्दिनमितिब्रह्मवैवर्त्ते तद्ब्रह्मपवित्रश्रवणाकर्मादिदेवकर्मवि
षयमितिहेमाद्रिः अतएववचनात्कुलधर्मव्रतादावपिपूर्वैव मदनरत्नेप्येवं मदनपारिजातेपिपूर्वविद्धायां-
श्रावण्यांवाजसनेयिनामुपाकर्मेत्युक्तं मदनरत्नेतु पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाइतिबह्वृचपरिशि
ष्टात्बह्वृचान्प्रतिकर्मविधानार्थप्रवृत्तेःतत्रतैत्तिरीयककर्मविध्ययोगात्पूर्वोक्तकालिकापुराणादौसामान्यतः
औदयिकपर्वप्राप्तेस्तन्निषेधेनबह्वृचानांश्रवणविधानात्तैत्तिरीयकपदमनुवादत्वात्तस्यचप्राप्त्यधीनत्वात्

प्राप्तेश्चयजुर्वेदिमात्रपरत्वात्सर्वयजुर्वेद्युपलक्षणार्थं अवयुत्यानुवादोवा नतुविधायकंयेनविशेषविधिनोप
संहारःस्यात् अनुवादत्वाल्लक्षणानदोषः अन्यथातौदयिकपर्वविशिष्टोपाकर्मोद्देशेनकर्तृविधौकर्तृविशि-
ष्टेनाऔदयिकपर्वविधौवाक्यभेदापत्तेः तस्मात्तैत्तिरीयकपदाविवक्षयासर्वयजुर्वेदिनामौदयिकमेवपर्वे
त्युक्तं तन्न नतावत्परिशिष्टेबह्वृचान्प्रत्येवविधिः धनिष्ठाप्रतिपद्युक्तंत्वाष्ट्रऋक्षसमन्वितमित्यादितदुदा
हृतेएवपरिशिष्टेवेदांतरधर्मविधानादर्शनात् नाप्यनुवादोयंकालिकापुराणात्बह्वृचादीनामपितदापत्तेः
कुर्युरित्यस्यविधित्वेनतस्यैवार्थवादत्वेनतस्यास्यानुवादित्वाच्च नचतैत्तिरीयकाणांगृह्येतद्विधिरस्ति येना
नुवादःस्यात् नचवाक्यभेदःतैत्तिरीयकमात्रस्यवाउद्देश्यत्वायोगेनहविरात्तिवदुष्टवर्षब्राह्म
णमुपनयीतेतिवच्छागत्याविशिष्टस्योद्देश्यत्वात् अन्यथोत्तरार्धेबह्वृचपदस्याप्यविवक्षापत्त्याश्रवण-
स्यसर्वसाधारण्यापत्तेः तस्माद्धेमाद्रिमतमेवयुक्तमितिदिक् इदंचशिष्यानध्यापयेत आवसथ्येग्नौअ
नध्यापयतोनाधिकारइतिकर्कः श्रावण्यामपिग्रहणादिदुष्टायांकातीयभिन्नैःप्रोष्ठपद्यांकार्यं नैस्तश्रा
वणपंचम्यां संक्रांतिर्ग्रहणंवापिपौर्णमास्यांयदाभवेत् उपाकृतिस्तुपंचम्यांकार्यावाजसनेयिभिरि
तिमहार्णवेवाजसनेयिग्रहणादितिहेमाद्रिः इदंचसूत्रोक्तकालपरत्वात्बह्वृचपरमपिसांख्यायनैस्तुह-
स्तेकार्यं आपस्तंबैराथर्वणैश्चप्रोष्ठपद्यां यत्तुबौधायनः श्रावण्यांपौर्णमास्यामाषाढ्यांवोपाकृत्यत्यूचे
तसौष्ठपद्यामपिदोषेआषाढ्यांकार्यमित्येवमर्थं तच्छाखीयविषयंवा सामगास्तुश्रावणेहस्तेकुर्युर्बह्वृचाः

श्रवणेचैवहस्तर्क्षेसामवेदिनइतिनिर्णयामृतेगोभिलोक्तेःसोप्युत्तरः धनिष्ठाप्रतिपद्युक्तेत्वाष्ट्रऋक्षसमन्विते श्रावणंकर्मकुर्वीरन्ऋग्यजुःसामपाठकाः इतिमदनरत्नेपरिशिष्टोक्तेःगार्ग्योपि सिंहेरवौतुपुष्य र्क्षेपूर्वाह्णेविवरेबहिः छंदोगामिलिताःकु र्युरुत्सर्गंस्वस्वछंदसां शुक्लपक्षेतुहस्तेनउपाकर्मापराह्णिकमिति अविवरेग्रहणादिदोषहीने विचरेदितिपाठोज्ञानकृतःपुष्यर्क्षेपूर्वाह्णेउत्सर्गःअपराह्णिकमुपाकर्मेत्यन्वयः अन्यस्तुविशेषः पूर्वमेवोक्तःप्रयोगपारिजातेगोभिलः उपाकर्मोत्सर्जनंचवनस्थानामपीष्यते धारणाध्ययनांगत्वात्गृहिणांब्रह्मचारिणां उत्सर्जनंचवेदानामुपाकरणकर्मच अकृत्वावेदजप्येनफलंनाप्नोतिमानवः सर्वथालोपेतुकृच्छ्रःउपवासश्च वेदोदितानांनित्यानामितिमनुनाभोजनोक्तेःएवमुत्सर्गेपिअथप्रसंगादत्रैवोत्सर्जनमुच्यते तच्चपौषमासेरोहिण्यांतत्कृष्णाष्टम्यांवाकार्यं पौषमासस्यरोहिण्यामष्टकायामथापिवा जलांतेछंदसांकुर्यादुत्सर्गंविधिवद्बहिरितियाज्ञवल्क्योक्तेः श्रावण्यांप्रोष्ठपद्यांवोपाकृतोऽक्रमेणपौषशुक्लप्रतिपद्विमाघशुक्लप्रतिपदिवाकार्यं अर्धपंचमान्मासानधीयानेतितेनैवोक्तेः अर्धःपंचमोयेषुसार्धचतुरइत्यर्थः यत्तुहारीतः अर्धपंचमान्मासानधीत्योर्ध्वमुत्सृजेत् पंचार्धषष्ठान्वेतितदाषाढ्युपाकर्मविषयं बौधायनास्तुपौष्यांमाघ्यांवाकुर्युः पौष्यांमाघ्यांचोत्सृजेदितितत्सूत्रात् तैत्तिरीयैस्तु तैष्यांकार्यं तैष्यांपौर्णमास्यांरोहिण्यांवाविरमेदितितत्सूत्रात् बह्वृचैस्तुमाघ्यांकार्यं अध्यायोत्सर्जनंमाघ्यांपौर्णमास्यांविधीयतइतिकारिकोक्तेः कातीयास्तुभाद्रपदेकुर्युः उत्सर्गश्चैतिनंदादितिथ्यांप्रोष्ठपदेपिवेतिकात्यायनोक्तेः

सामगास्तु सिंहार्के पुष्ये कुर्युः तथा च सिंहे रवौ लिति गार्ग्य वचनं पूर्वमुक्तं सर्वैरुपाकर्मदिने वा कार्यं पुष्येनू
त्सर्जनं कुर्यादुपाकर्मदिने थवेति हेमाद्रौ खादिरगृह्योक्तेः यदा सिंहस्थे सूर्ये सति तन्मध्यस्थ हस्तनक्ष
त्रात्पुष्यः कर्कटस्थो भवति तदा तस्मिन्पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः मासे
प्रोष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा तदा च श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः इति तत्रैव परिशिष्टोक्तेः अत्र
द्वावपि सौरौ मासौ ज्ञेयौ तेषां सौरस्यैवोक्तेः अत्र विशेषमाह कार्ष्णाजिनिः उपाकर्मणि चोत्सर्गे यथा
समेत्य च ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्तत इति उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वा
नध्याय इति मिताक्षरायामुक्तं अत्र नदीनां रजोदोषो नास्ति उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यत इति
गार्ग्योक्तेः अत्रैव रक्षाबंधनमुक्तं हेमाद्रौ भविष्ये उपाकर्मणि कर्तव्यं ऋषीणां चैव पूजनं ततोपराह्ण
समये रक्षापोटलिकां शुभां कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैरिति अत्रोपाकर्मानंतर्यस्य पूर्ण
तिथावार्षिकस्यानुवादो न तु विधिः गौरवात्प्रयोगविधिभेदेन क्रमायोगाच्छूद्रादौ तदयोगाच्च तेन प
रेद्युरुपाकरणेपि पूर्वेद्युरपराह्णे तत्करणं सिद्धं इदं भद्रायां न कार्यं भद्रायां द्वे न कर्तव्ये श्रावणी फा-
ल्गुनी तथा श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुनीति संग्रहोक्तेः तत्सत्वे तु रात्रावपि तदंते कुर्यादिति नि
र्णयामृते मदनरत्ने स्मृतिसंग्रहे नंदायां दर्शने रक्षाबलिदानं दशासु च भद्रायां गोकुलक्रीडा देशना
शाय जायते इति मदनरत्ने ब्रह्मवैवर्तात् भविष्ये उपलिप्ते गृहमध्ये दत्तचतुष्के न्यसेत्कुंभं पीठं तत्रोप

विशेद्राजामात्यैर्युतःशुभमुहूर्ते तदनुपुरोधानृपतेरक्षांबध्नीतमंत्रेण इदंरक्षाबंधनंनियतकालत्वात्भद्रावर्ज्यंग्रह
णादिनेपिकार्यंहोलिकावत् ग्रहसंक्रात्यादौरक्षानिषेधाभावात्सर्वेषामेववर्णानांसूतकेराहुदर्शने इतितत्कालीनक
र्मपरएवनत्वन्यत्र अन्यथाहोलिकायांकागतिः अतएवनित्येनैमित्तिकेजप्येहोमयज्ञक्रियासुच उपाकर्मणिचो
त्सर्गेग्रहवेधोनविद्यतइतिनियतकालीनेनदभावइतिदिक् उपाकर्मणितद्दिनेभिन्नपरंतत्रतन्निषेधादित्युक्तंप्राक्
मंत्रस्तु येनबद्धोबलीराजादानवेंद्रोमहाबलः तेनत्वामपिबध्नामिरक्षेमाचलमाचल ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रै
रन्यैश्चमानवैः कर्तव्योरक्षिताचारोद्विजान्संपूज्यशक्तितइति अथैवहयग्रीवोत्पत्तिः तदुक्तंकल्पतरौ श्रावण्यां
श्रवणेजातःपूर्वंहयशिराहरिः जगादसामवेदंतुसर्वकल्मषनाशनं स्नात्वासंपूजयेत्तंतुशंखचक्रगदाधरं अ-
श्वलायनेनश्रवणाकर्मोक्तं श्रावण्यांपौर्णमास्यांश्रवणाकर्मेति तत्रास्तमययोगिनीग्राह्या अस्तमितेस्थाली
पाकंश्रपयित्वेतिसूत्रात् 'अतएवनिशीथेदर्शप्रयोगांतःपातनियमात्तदंगैःप्रसंगसिद्धिरुक्ताहारदत्ते अन्यथा
परेद्युःप्रायोगिकःप्रसंगः प्रसंगस्ययाज्ञिकास्तुपौर्णिमादर्शशब्दयोःपर्वलक्षणवदहोरात्रवाचित्वात्तत्रैवकर्मका
लव्याप्तिर्ग्राह्येतिविकृतित्वाच्छेषपर्वेच्छंति श्रावणादिमासचतुष्टयकृष्णपक्षद्वितीयासुअशून्यशयनव्रतं तत्र
चंद्रोदयव्यापिनी दिनद्वयेतत्त्वेपरेतिनिर्णयामृते इतिकमलाकरभट्टकृतेनिर्णयसिंधौश्रावणमासः सिंहेप
राः षोडशघटिकाःपुण्यकालः अन्यत्पूर्ववत् अत्रगोप्रसवेद्भुतसागरेनारदः भानौसिंहगतेचैवयस्यगौःसंप्र
सूयते मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः तत्रशांतिंप्रवक्ष्यामियेनसंपद्यतेशुभं प्रसूतांतत्क्षणादेवतांगां

विप्रायदापयेत् ततोहोमंप्रकुर्वीतघृताक्तैराजसर्षपैः आहुतीनांघृताक्तानामयुतंजुहुयात्ततः व्याहृतिभिश्चायं
होमः सोपवासःप्रयत्नेनदद्याद्विप्रायदक्षिणामिति तथासिंहराशौगतेसूर्येगोप्रसूतिर्यदाभवेत् पौषेचमहिषीसूते
दिवेवाश्वतरीतथा तदानिष्टंभवेत्किंचित्तच्छांत्यैशांतिकंचरेत् अस्यवामेतिसूक्तेनतद्विष्णोरितिमंत्रतः जुहु
याच्चतिलाज्येनशतमष्टोत्तराधिकं मृत्युंजयविधानेनजुहुयाच्चतथायुतं श्रीसूक्तेनततःस्नायाच्छांतिसूक्तेनत
थापुनः मध्यरात्रेनिशीथेवायदागौःक्रंदतेसदा ग्रामेवास्वगृहेवापिशांतिकंपूर्ववद्विशेत् एवंश्रावणेवडवाप्र
सवोदिनेनिषिद्धः तदुक्तमथर्ववेदिनांगार्ग्यपरिशिष्टे माघेबुधेचमहिषीश्रावणेवडवादिवा सिंहेगावःप्रसू
यंतेस्वामिनोमृत्युदायकाइति अत्रतदुक्ताभूतारव्याशांतिःकार्या भाद्रकृष्णतृतीयाकज्जलीसंज्ञासापराग्राह्येति
दिवोदासीयउक्तं वचनंतुहरितालिकाप्रकरणेवक्ष्यामः भाद्रकृष्णचतुर्थीबहुलारव्यामध्यदेशेप्रसिद्धा सा
सायाह्नव्यापिनीग्राह्यादिनद्वयेतत्त्वेपूर्वाग्राह्या गौर्याश्चतुर्थीवटधेनुपूजादुर्गार्चनंदुर्भरहोलिकेच वत्सस्यपू
जाशिवरात्रिरेताःपरान्विताघ्नतिनृपंसराष्ट्रमिति दिवोदासीयेवचनात् अत्रवत्सपूजायाःपृथगुपादानात्धेनु
पूजाशब्देनबहुलारव्यागृह्यतइतिसएवव्याचरव्यौ मदनरत्नेप्येवं अत्रगोपूजायवान्नाशनंचतत्रैवोक्तं
भाद्रकृष्णषष्ठीहलषष्ठीसासप्तमीयुतेतिदिवोदासः भाद्रकृष्णसप्तम्यांशीतलाव्रतं तत्रपूर्वाग्राह्येतिहेमाद्रौ अथ
जन्माष्टमी साचकृष्णादिमासेनभाद्रपदकृष्णाष्टमी तथाभाद्रपदेमासिकृष्णाष्टम्यांकलौयुगे अष्टाविंशति
मेजातःकृष्णोसौदेवकीसुतइतिकल्पतरौब्राह्मोक्तेः अत्रेदंमाधवमतं अष्टमीद्विधा जन्माष्टमीजयंतीचेति

तत्राद्याकेवलाष्टमी येनकुर्वंतिजानंतः कृष्णजन्माष्टमीव्रतं तेभवंतिनराःप्राज्ञव्यालाव्याघ्राश्चकाननइतिस्कां
दात् दिवावायदिवारात्रौनास्तिचेद्रोहिणीकला रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतामितिपुराणांतरात् श्राव
णेबहुलेपक्षेकृष्णजन्माष्टमीव्रतं नकरोतिनरोयस्तुभवतिक्रूरराक्षसइतिभविष्योक्तेश्च केवलाष्टम्याएवोपो
ष्यत्वावगतेः सैवरोहिणीयुक्ताजयंती कृष्णाष्टम्यांभवेद्यत्रकलैकारोहिणीयदि जयंतीनामसाप्रोक्ताउपोष्या
साप्रयत्नतइतिवह्निपुराणात् अष्टमीकृष्णपक्षस्यरोहिणीऋक्षसंयुता भवेत्प्रोष्ठपदेमासिजयंतीनामसास्मृ
तेतिविष्णुरहस्याद्विवचनाच्च ज्योतिरादिवत्संज्ञयाकर्मभेदः रोहिणीयोगश्चाहोरात्रंमुख्यःनिशीथमात्रेमध्यमः
दिवसादावधमः अहोरात्रंतयोर्योगोह्यसंपूर्णोभवेद्यदि मुहूर्तमप्यहोरात्रेयोगश्चेत्तामुपोषयेदितिवसिष्ठसंहि
तोक्तेः अर्धरात्रेतुयोगोयंतारापत्युदयेसति नियतात्माशुचिःस्नातःपूजांतत्रप्रवर्तयेदितिविष्णुधर्मोक्तेः वा
सरेवानिशायांवायत्रस्वल्पापिरोहिणी विशेषेणनभोमासेसैवोपोष्यामनीषिभिरितिपुराणांतराच्च विशेषेणे
त्युक्तेर्भाद्रपदेपीदं श्रावणेवानभस्यैवेतिवक्ष्यमाणात् गौडास्तुनिशीथएवरोहिणीयोगोजयंतीनान्यथेत्याहुः
तन्न वासरेवानिशायांवेतिविरोधात् योगविशेषाद्गुणात्फलमित्यन्ये नेत्यकरणेदोषश्रुतेरुपेक्ष्याः तत्रजन्माष्टमी
व्रतंनित्यंपूर्वोक्तवचनेषुअकरणेनिंदाश्रुतेः वर्षेवर्षेतुयानारीकृष्णजन्माष्टमीव्रतं नकरोतिमहाप्राज्ञव्याली-
भवतिकाननइतिस्कांदेवीप्साश्रुतेश्च नकरोतिनरोयस्त्वितिपूर्वमुक्तेस्तत्रस्त्रीलिंगमतंत्रं मदनरत्नेस्कांदेतत्रफ
लमप्युक्तं जन्माष्टमीव्रतंयेवैप्रकुर्वंतिनरोत्तमाः कारयंत्यथवालोकान्लक्ष्मीस्तेषांसदास्थिरा सिद्ध्यंतिसर्व

कार्योणिकृतेजन्माष्टमीव्रतइति जयंतीव्रतंतुनित्यंकाम्यंच महाजयार्थंकुरुतांजयंतीमुक्तयेनघ धर्ममर्थंच-
कामंचमोक्षंचमुनिपुंगव ददातिवांछितानर्थान् येचान्येप्यतिदुर्लभाइतिस्कांदादौफलश्रुतेः शूद्रान्नेनतुयस्या
पंथवहस्तस्यभोजने तस्याःपंलभनेकुंतिजयंतीविसुखोनरः नकरोतियदाविष्णोर्जयंतीसंभवंव्रतं यमस्यव
शमापन्नःसहतेनारकींव्यथामित्यकरणेनिंदाश्रुतेश्च यदाचपूर्वेद्युःपरेद्युर्वारोहिणीयोगस्तदाजन्माष्टमी
जयंत्यामंतर्भूताज्ञेया नतुजन्माष्टमीव्रतंपृथक्कार्यं विष्णुधर्मवलवत् तदुक्तंमाधवेनैव यस्मिन्वर्षेजयंत्या
ख्योयोगोजन्माष्टमीतदा अंतर्भूताजयंत्यांस्यादृक्षयोगप्रशस्तितइति मदनरत्ननिर्णयामृतगौडमैथिलम
तेप्येवं हेमाद्रिस्तुरोहिणीसंयुतोपोष्यासर्वाघौघविनाशिनी अर्धरात्रादधश्चोर्ध्वंकलयावायदाभवेत् ज
यंतीनामसाप्रोक्तासर्वपापप्रणाशिनीत्यग्निपुराणादर्धरात्रएवरोहिणीयोगस्यप्राशस्त्यात् मुहूर्तमपिलभ्येते
त्यादीनांचार्धरात्रयोगेप्युपपत्तेर्नजयंतीव्रतंभिन्नं तत्वंतुहेमाद्रिमतेपिजयंतीव्रतंभिन्नमेव उदयेचाष्टमी
त्यस्यतेनजयंतीपरत्वोक्तेः किंच रोहिण्यामर्धरात्रेचयदाकृष्णाष्टमीभवेत् तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिज
न्मजमितिविष्णुधर्मोक्तेः समायोगेतुरोहिण्यांनिशीथेराजसत्तम समजायतगोविंदोबालरूपीचतुर्भुजः
तस्मात्तंपूजयेत्तत्रयथावित्तानुरूपतइतिवह्निपुराणाच्चार्धरात्रस्यकर्मकालत्वमवसीयते अतःकर्मणोयस्य
यःकालइत्यादिवचनात्पूर्वत्रैवप्राप्तेःपरदिनेसतोपिरोहिणीयोगस्यनप्रयोजकत्वं अन्यथाबुधवारादेरपित
त्वापत्तेःकिंच जयंतीशब्दोरात्रिविशेषवचनः अभिजिन्नामनक्षत्रंजयंतीनामशर्वरी मुहूर्तोविजयोनामय

त्रजातोजनार्दनइतिब्रह्मांडपुराणात् तेनतयोर्निरोहिण्यांगौणत्वान्नव्रतभेदः यत्तुवासरेवानिशायांवेति
तत्कैमुतिकन्यायेननिशीथयोगस्यैवस्तुत्यर्थंपूर्वदिनेर्धरात्रयोगाभावेभाशास्यार्थंयद्यपिदिवावायदिवारा
त्रौनास्तिचेद्रोहिणीकला रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतामित्यनेनरोहिणीयोगाभावेर्धरात्रव्याप्तेर्ग्रा
ह्यतोक्ता तथापियस्मिन्वर्षेजयंतीयोगोनास्तितत्रजयंतीव्रतलोपप्रासेअष्टमीमात्रेपिजयंतीव्रतंकार्यंइत्ये
वंपरमिदमितितदाशयः अत्रहिसत्रायामूर्यविश्वजितायजेत एषामसंभवेकुर्यादिष्टिंवैश्वानरींद्विजइति
वद्रोहिणीयोगाभावेविधानात्तत्कार्यापत्तिःस्यात् अतएवोक्तं जयंतीनामशर्वरीति यच्च स्कांदे उदयेचाष्ट-
मीकिंचिन्नवमीसकलायदि भवतेबुधसंयुक्ताप्राजापत्यर्क्षसंयुता अपिवर्षशतेनापिलभ्यतेवाथवानवेति
यच्चपाद्मे प्रेतयोनिगतानांतुप्रेतत्वंनाशितंतुतैः यैःकृताश्रावणेमासिअष्टमीरोहिणीयुता किंपुनर्बुधवा
रेणसोमेनापिविशेषतः किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदेतितद्व्रतादिविषयं उपवासाश्रवणा
दित्यनंतभट्टः जयंतीपरमितिहेमाद्रिःउदयेचंद्रोदयइतिकेचित् तन्न चंद्रोदयसत्वेसंदेहान्नवमीसक
लत्वयोगान्मानाभावाच्च तेनपूर्वेद्युःसप्तमीवेधेपरदिनेसूर्योदयेघटिकापिग्राह्या पूर्वविद्धाष्टमीतियायो
क्तेः इतियुक्तं अतोनव्रतभेदोनाप्यंतर्भावइत्यूचिवान् गौडास्तुनवमीक्षयपरमिदंवचनं नवमीसकलाय
दीतिविशिष्योक्तेः एतत्पूर्वदिनेजयंत्यभावपरमित्याहुः जयंत्यादिसर्वापवादोयमितिचूडामण्यादयः वयं
तुसत्यंव्रतभेदः लोकास्तुजन्माष्टमीमेवानुतिष्ठंति नहिश्रावणेवानभस्येवारोहिणीसहिताष्टमी यदास्त

ध्यानरेर्लब्धासाजयंतीतिकीर्त्तिता श्रावणेनभवेद्योगोनभस्येतुभवेद्ध्रुवमितिमाधवीयेवसिष्ठसंहितोक्ते
पिभाद्रेजयंतीकेनापिक्रियते अतःपूर्वेद्युरेवोपवासः यद्वागुणात्फले सप्तमेब्रह्मवर्चसकाममुप नयेदितिव
दित्यन्येतन्न नित्यत्वानुपपत्तेः अत्रगौणमुख्यचांद्राभ्यामेकएवमासइत्यन्ये तन्न एकवाक्येउभयनिर्देशो
बाधाद्द्वयायोगात् अतोजयंतीव्रतस्यापिनित्यत्वादुपवासद्वयंकार्यमितिब्रूमः अतएवहेमाद्रिमदनर
त्नादौजन्माष्टमीव्रतंजयंतीव्रतंचभिन्नमुक्तं भिन्नकालत्वात्सर्वथातावदनर्थोवानेनिमित्तं यद्यपि पूर्वो
परावास्यापिरोहिणीयुतैवकार्येतिग्रंथानांतत्संमतीयतेतदपिजयंतीपरमेवइदंचकाम्यमेवेत्यनंतभट्टः
तद्दूषणंहेमाद्रौज्ञेयं नित्यंकाम्यमितितुबहवः ननुयथाविष्णुशृंखलयोगेनश्रवणद्वादशीवामनजयंत्या-
दिसर्वसिद्ध्यैयथावैकादशीस्वल्पापिपरातथाकलाकाष्ठामुहूर्तोपियदाकृष्णाष्टमीतिथिः नवम्यांसैवग्राह्या
स्यात्सप्तमीसंयुतानहि इत्यादिवचनाद्धौदयादिवद्योगाधिक्येफलाधिक्यात्परैवजन्माष्टमीयुक्तेतिचेत् चा
र्त्तोमास्य नहितन्नव्रतभेदोद्वयोर्नित्यत्वद्वयोरकरणेदोषाच्छ्रुतेः इहत्वेतैस्त्रिभिर्हेतुभिःसंज्ञाभेदाद्धर्म
कालभेदाच्चोपवासभेदःस्पष्टएव एकदैवतत्त्वाच्छ्रवणद्वादशीवन्नपारणालोपदोषोपि तेनव्रतद्वयमेवयु-
क्तं द्वयोरपिनित्यत्वात् केचित्तु त्रेतायांद्वापरेचैवराजन्कृतयुगेतथा रोहिणीसहिताचेयंविद्वद्भिःसमुपोषि
ता अतःपरंमहीपालसंप्राप्तेतामसेकलौ जन्मनावासुदेवस्यभविताचव्रतमुत्तममितिहेमाद्रौवह्निपुराणात्क
लौजन्माष्टमीव्रतमेवनजयंतीव्रतमित्याहुः तन्न तामसेकलावित्युक्तेःपरमश्रेयोहेतोरस्यकलौपापिनाद

ऽभक्तसुच्यते तेनकंलौत्तामसानकरिष्यंति किंतुधन्याएवेत्यर्थः अन्यथाशूद्राश्चब्राह्मणाश्चाभविष्यंतियु
गेकलौइत्यादौविधिकल्पनापत्तेः अत्रनिशीथयोगएवग्राह्यः पूर्वोक्तवचनेषुतस्यैवमुख्यकालत्वोक्तेः अष्ट
मीशिवरात्रिश्चह्यर्धरात्रादधोयदि दृश्यतेघटिकायासापूर्वविद्धाप्रकीर्तितेतिमाधवीयेपुराणांतरादर्धरात्रेतु
रोहिण्यांयदाकृष्णाष्टमीभवेत् तस्यामभ्यर्चनंशौरेर्हंतिपापंत्रिजन्मजमितिभविष्योक्तेः अष्टमीरोहिणीयु
क्तानिश्यर्धेदृश्यतेयदि मुख्यकालइतिख्यातस्तत्रजातोहरिःस्वयमितिवसिष्ठसंहितोक्तेश्च तत्राष्टमीद्वेधा
रोहिणीरहितातद्युताच आद्यापिचतुर्धा पूर्वेद्युरेवनिशीथयोगिनीपरेद्युरेवोभयेद्युरनुभयेद्युश्चेतितत्राद्य-
योरसंदेहएवकर्मकालव्याप्तेः जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणमि
तिभृगूक्तेश्च अस्माकंचलरोहिण्युपवासोपिसिद्धः अंत्ययोःपरैव प्रातःसंकल्पकालव्याप्तेराधिक्यात् वर्ज
नीयाप्रयत्नेनसप्तमीसंयुताष्टमीतिब्रह्मवैवर्ताच्च एवमंशतः समव्याप्तावपि विषमव्याप्तौवाधिक्येननि-
र्णयः रोहिणीयुतापिचतुर्धा पूर्वेद्युरेवनिशीथेरोहिणीयुतापरेद्युरेवोभयेद्युरनुभयेद्युश्च अत्राप्याद्ययोर-
संदेहः कार्याविद्धापिसप्तम्यारोहिणीसहिताष्टमीतिपाद्मोक्तेः जयंत्यांपूर्वविद्धायामुपवासंसमाचरेदितिगारु
डाच्च सप्तमीसंयुताष्टम्यांनिशीथेरोहिणीयदि भवितासाष्टमीपुण्यायावच्चंद्रदिवाकराविति वह्निपुराणाच्च
द्वितीयेत्वसंदेहएव तृतीयपक्षेपरैव वर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी सऋक्षापिनकर्तव्यासप्तमीसंयु
ताष्टमीतिब्रह्मवैवर्तात् चतुर्थोपित्रेधा पूर्वेद्युर्निशीथेष्टमीपरेद्युरोहिणीपरेद्युरष्टमीपूर्वेद्युरोहिणी उभयेद्यु

रुभयस्यनिशीथसंबंधोवेति आद्येपरेद्युर्जयंतीयोगस्यसत्वात्परेवेतिमाधवः तदुक्तंनेनैव यस्मिन्वर्षेजयं-
त्याख्ययोगोजन्माष्टमीतदा अंतर्भूताजयंत्यांस्यादृक्षयोगप्रशस्तितइति पूर्वविद्धाष्टमीयात्तुउदयेनवमीदिने
मुहूर्तमपिसंयुक्तासंपूर्णासाष्टमीभवेत् कलाकाष्ठामुहूर्तापियदाकृष्णाष्टमीतिथिः नवम्यांसैवग्राह्यास्या
त्सप्तमीसंयुतानहीतिपाद्योक्तेश्च हेमाद्रिस्त्वाह अष्टम्याप्राधान्यात्तस्याश्चपूर्वेद्युःकर्मकालव्यापित्वात्पू
र्वैव पायंतुपूर्वेद्युर्निशीथेष्टम्यभावेज्ञेयं अंतर्भावोक्तिस्तुमूर्खवंचनमात्रमिति अन्येतुपूर्वविद्धाष्टमीवाक्ये
नजन्माष्टम्यांसूर्योदयेसप्तमीवेधनिषेधात् कलाघटीमात्राप्यौदयिकीग्राह्या कार्याविद्धापिसप्तम्येतिज
यंतीपरं जयंत्यांपूर्वविद्धायामुपवासंसमाचरेदित्येकवाक्यत्वात् तत्रापिद्वयोर्नित्यत्वात्कालभेदाच्चोपवा
सद्वयंभवत्येव यदातुकेवलाष्टमीशुद्धाधिकातदात्यागहेतोःसप्तमीवेधस्याभावात्पूर्वैव यदिवाविद्ध
न्यूनातदापरदिनेग्राह्यातिथेरभावात्पूर्वैव एवंसर्वाण्यौदयिकवाक्यानिसप्तमीवेधपराणि येतु जन्माष्ट
मीपूर्वविद्धांसऋक्षांसकलामपि विहायनवमींशुद्धामुपोष्यव्रतमाचरेदितिव्यासोक्तेर्विद्धायाःक्षयेशुद्ध
नवम्यामुपवासः दशमीवेधेद्वादश्युपवासवदित्याहुः तेनिर्मूलत्वादुपेक्ष्याःमुहूर्तमपिसंयुक्तेतिरोहिणी
योगेत्याज्यत्वोक्तेः तिथ्यंतपारणवाक्यानांनिर्विषयत्वापत्तेः नच्चजयंतीपराणिशुद्धाधिकापराणिवाना-
नि भृग्वादेःपूर्वविद्धाष्टम्यामपितिथ्यंतेपारणोक्तेः तेनकलाकाष्ठेतिवाक्यांतरवशाज्जयंतीपरमेतत् न
त्वंतुअष्टम्याःकर्मकालव्याप्तेः दिवावायदिवारात्रौनास्तिचेद्रोहिणीकला रात्रियुक्तामकुर्वीतविशेषेणो

दुसंयुतामितिपूर्वोक्तवाक्यैः रोहिणीयोगाभावेग्राह्यलोक्तेर्वचनात्कर्मकालव्यापिनींत्यक्त्वापूर्वापरावाल्पापिरोहिणी-
युताग्राह्या माधवमदनरत्ननिर्णयामृतानंतभट्टगौडमैथिलग्रंथादिष्वप्येवमिति युक्तंतुउपवासद्वयंकार्यंद्वयोर्नित्य
त्वादितितुचयं अंत्ययोःपरैव सप्तमीसंयुताष्टम्यांभूत्वाऋक्षंद्विजोत्तम प्राजापत्यंद्वितीयेह्निमुहूर्तार्धंभवेद्यदि तदा
ष्टयामिकंपुण्यंप्रोक्तंव्यासादिभिःपुरेतिस्कांदात् मुहूर्त्तेनापिसंयुक्तासंपूर्णासाष्टमीभवेत् किंपुनर्नवमीयुक्ताकुलको
ट्यास्तुमुक्तिदेतिपाद्माच्चेतिदिक् निंबादित्योपासकास्तुजन्माष्टमीरामनवमीशिवरात्र्यादौपूर्वेह्निकर्मकालीनांतिथिंत्यक्त्वा
द्वित्रिमुहूर्त्तापरैवतिथिर्ग्राह्या उदयव्यापिनीग्राह्याकुलतिथिरुपोषणे निंबार्कोभगवान्येषांवांछितार्थफलप्रदइतिहेमा-
द्रौमात्स्योक्तश्रुतिःसप्तमीयुतेभविष्योक्तेरित्याहुः नन्व यदिद्वितीयेदिवसेतुऋक्षतिथ्योर्न्यूनतिःस्यात्तन्नतदोपवासः पूर्वे-
प्रकुर्याद्दिवसेद्वितीयेदिनेशभक्तोथतदाव्रतायामितिमात्स्यवाक्येनतंत्रेकउपसंहारात्तत्सर्वार्थत्वेनमानाभावात् ऋक्षतिथ्यो
र्हस्तसप्तम्योःअन्यथात्रापिपंचम्यादौनदापत्तिः शिष्टाचारान्नेतिचेत् न तस्यन्यायवचोविरोधेहेयत्वात् इदानींक्वापि-
निंबार्कोपासनाभावाच्चेतिसंक्षेपः पारणंतु तिथिरष्टगुणंहंतिनक्षत्रंचचतुर्गुणं तस्मात्प्रयत्नतःकुर्यात्तिथिभांतेचपा
रणमितिब्रह्मवैवर्तात् तिथ्यर्क्षयोर्यदाच्छेदोनक्षत्रांतमथापिवा अर्धरात्रेथवाकुर्यात्पारणंत्वपरेहनीतिहेमाद्रौव
चनाच्चार्धरात्रेप्युभयांतेन्यतरांतेवेतिमुख्यःपक्षः सर्वेष्वेवोपवासेषुदिवापारणमिष्यतइतिब्रह्मवैवर्तेत्वन्यविषयं
दिनेमुख्यकालालाभेन्यतरांतेवाज्ञेयं गौडास्तु नरात्रौपारणंकुर्यादृतेवैरोहिणीव्रतात् तत्रनिश्यपितत्कुर्याद्वर्जयि-
त्वामहानिशामितिब्रह्मांडपुराणाद्रात्रौसार्धप्रहरमध्येकार्यमित्याहुः महानिशातुविज्ञेयामध्यमंमध्ययामयोः न

रुभयस्यनिशीथासंबंधोवेति आद्येपरेद्युर्जयंतीयोगस्यसत्वात्परेवेतिमाधवः तदुक्तंनेनैव यस्मिन्वर्षेजयं- प
सारव्ययोगोजन्माष्टमीतदा अंतर्भूताजयंत्यांस्यादस्योगप्रशस्तितइति पूर्वविद्धाष्टमीयात्तुउदयेनवमीदिने
मुहूर्त्तमपिसंयुक्तासंपूर्णासाष्टमीभवेत् कलाकाष्ठामुहूर्त्तापियदाकृष्णाष्टमीतिथिः नवम्यांसैवग्राह्यास्या
त्सप्तमीसंयुतानहीतिपद्योक्तेश्च हेमाद्रिस्त्वाह अष्टम्याप्राधान्यात्तस्याश्चपूर्वेद्युःकर्मकालव्यापित्वात्पू
र्वैव पायंतुपूर्वेद्युर्निशीथेष्टम्यभावेज्ञेयं अंतर्भावोक्तिस्तुपूर्ववद्धणमात्रमिति अन्येतुपूर्वविद्धाष्टमीवाक्यै
र्नजन्माष्टम्यांसूर्योदयेसप्तमीवेधनिषेधात् कलाघटीमात्राप्यौदयिकीग्राह्या कार्याविद्धापिसप्तम्येतिज
यंतीपरं जयंत्यांपूर्वविद्धायामुपवासंसमाचरेदित्येकवाक्यत्वात् तत्रापिद्वयोर्नित्यत्वात्कालभेदाच्चोपपत्ति
सद्व्यंभवत्येव यदातुकेवलाष्टमीशुद्धाधिकातदात्यागहेतोःसप्तमीवेधस्याभावात्पूर्वैव यदिवाविद्ध
न्यूनातदापरदिनेग्राह्यतिथेरभावात्पूर्वैव एवंसर्वाण्यौदयिकवाक्यानिसप्तमीवेधपराणि येतु जन्माष्ट
मीपूर्वविद्धासनक्षत्रासकलामपि विहायनवमीशुद्धामुपोष्यव्रतमाचरेदितिव्यासोक्तेर्विद्धायाःक्षयेशुद्ध
नवम्यामुपवासः दशमीवेधेद्वादश्युपवासवदित्याहुः तेनिर्मूलत्वादुपेक्ष्याः मुहूर्त्तमपिसंयुक्तेतिरोहिणी
योगेत्याज्यत्वोक्तेः तिथ्यंतपारणवाक्यानांनिर्विषयत्वापत्तेः नन्वजयंतीपराणिशुद्धाधिकापराणिवाता-
नि भृग्वाद्यैःपूर्वविद्धाष्टम्यामपितिथ्यंतेपारणोक्तेः तेनकलाकाष्ठेतिवाक्यांतरवशाज्जयंतीपरमेतत् न
त्वंतुअष्टम्याःकर्मकालव्याप्तेः दिवावायदिवारात्रौनास्तिचेद्रोहिणीकला रात्रियुक्तामकुर्वीतविशेषेणों

दुसंयुतामितिपूर्वोक्तवाक्यैः रोहिणीयोगाभावेग्राह्यलोक्तेर्वचनात् कर्मकालव्यापिनीत्यक्त्वापूर्वापरावास्यापिरोहिणी-
युताग्राह्या माधवमदनरत्ननिर्णयामृतानंतभट्टगौडमैथिलग्रंथादिषप्येवमिति युक्तंतुउपवासद्वयंकार्यंद्वयोर्नित्य
त्वादितितुनव्यं अंत्ययोःपरैव सप्तमीसंयुताष्टम्यांभूताऋक्षंद्विजोत्तम प्राजापत्यंद्वितीयेह्निमुहूर्तार्धंभवेद्यदि तदा
ष्टयाभिकंपुण्यंप्रोक्तंव्यासादिभिःपुरेतिस्कांदात् मुहूर्तेनापिसंयुक्तासंपूर्णासाष्टमीभवेत् किंपुनर्नवमीयुक्ताकुलको
व्यास्तमुक्तिदेतिपाद्माच्चेतिदिक् निंबार्कोपासकास्तुजन्माष्टमीरामनवमीशिवरात्र्यादौपूर्वेह्निकर्मकालीनांतिथिंत्यक्त्वा
द्वित्रिमुहूर्तापरैवतिथिर्ग्राह्या उदयव्यापिनीग्राह्याकुलेतिथिरुपोषणे निंबार्कोभगवान्येषांवांछितार्थफलप्रदइतिहेमा-
द्रौमात्स्योक्तमुक्तिसमीवतेभविष्योक्तोरित्याहुः नन्व यदिद्वितीयेदिवसेतुऋक्षतिथ्योर्भक्तिःस्यात्तदोपवासः पूर्वे-
प्रकुर्याद्दिवसेद्वितीयेदिनेशाभक्तोथनदाव्रताद्यमितिमात्स्यवाक्येनतंत्रेवउपसंहारात्सर्वार्थत्वेनमानाभावात् ऋक्षतिथ्यो
र्हस्तसप्तम्योःअन्यथाऋषिपंचम्यादौतदापत्तिः शिष्टाचाराच्चेतिचेत् न तस्यन्यायवचोविरोधेहेयत्वात् इदानींक्वापि-
निंबार्कोपासनाभावाच्चेतिसंक्षेपः पारणंतु तिथिरष्टगुणंहंतिनक्षत्रंचचतुर्गुणं तस्मात्प्रयत्नतःकुर्यात्तिथिभांतेचपा
पारणमितिब्रह्मवैवर्तात् तिथ्यृक्षयोर्यदाच्छेदोनक्षत्रांतमथापिवा अर्धरात्रेथवाकुर्यात्पारणंत्वपरेह्नीतिहेमाद्रौव
चनाच्चार्धरात्रेप्युभयांतेन्यतरांतेवेतिमुख्यःपक्षः सर्वेष्वेवोपवासेषुदिवापारणमिष्यतइतिब्रह्मवैवर्तेतत्स्यविषयं
दिनेमुख्यकाललाभेन्यतरांतेवाज्ञेयं गौडास्तु नरात्रौपारणंकुर्यादृतेवैरोहिणीव्रतात् तत्रनिश्यापितत्कुर्याद्वर्जयि-
त्वामहानिशामितिब्रह्मांडपुराणाद्रात्रौसार्धप्रहरमध्येकार्यमित्याहुः महानिशातुविज्ञेयामध्यमंमध्ययामयोः न

णानेनकौंतेयदेवकीं पूजयेन्नरः गायद्भिः किन्नराद्यैः सततपरिवृत्ता वेणुवीणानिनादैः शृंगारादर्शकुंभप्रवरकृतक-
रैः किंकरैः सेव्यमाना पर्यंकेस्वास्तृतेयामुदिततरमुखी पुत्रिणी सम्यगास्ते सादेवीदेवमाताजयतिसुतनयादेवकी-
कांतरूपा पादौसंवाहयंती श्रीर्देवक्याश्चरणांतिके निषण्णापंकजेपूज्यानमोदेव्यैश्रियेइति अर्धरात्रेवसोर्धारां-
पातयेद्गुडसर्पिषा नाडीवर्धापनेषष्ठीनामादेःकरणंमम ततोमंत्रेणवैदद्याच्चंद्रायार्घ्यंसमाहितः शंखेतोयंसमा
दायसपुष्पकुशचंदनं जानुभ्यांधरणींगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव गृहाणा
र्घ्यंशशांकेमेरोहिण्यासहितोमम ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणीकांतअर्घ्यंनःप्रतिगृह्य
तां यथापुत्रंहरिंलब्ध्वामासातेनिर्वृतिःपरा तामेवनिर्वृतिंदेहिसुपुत्रंदर्शयस्वमे इतिदेवक्यर्घः ततःपुष्पांजलिंद-
त्वायामेयामेप्रपूजयेत् प्रभातेब्राह्मणान्शक्त्याभोजयेद्भक्तिमान्नरः ओंनमोवासुदेवायगोब्राह्मणहितायच
शांतिरस्तुशिवंचास्तुइत्युक्त्वातांविसर्जयेत् इदंप्रतिमासकृष्णाष्टम्यामप्युक्तंमदनरत्नेवह्निपुराणे प्रतिमासंचतेपू
जामष्टम्यांयःकरिष्यति ममचैवाखिलान्कामान्सप्राप्स्यत्यसंशयं तथा अनेनविधिनायस्तुप्रतिमासंनरेश्वर
करोतिवत्सरंपूर्णंयावदागमनंहरेः दद्याच्छय्यांसुसंपूर्णांगोभीरत्नैरलंकृतां इतिजन्माष्टमीव्रतं भाद्रामावास्यायां
कुशग्रहणमुक्तंहेमाद्रौहारीतेन मासेनभस्यमावास्यातस्यांदर्भोच्चयोमतः अयातयामास्तेदर्भाविनियोज्याःपुनः
पुनः नभाःश्रावणःतेनदर्शांतमासेजन्माष्टम्यानंतरंदर्शोलभ्यते मदनरत्नेतुमासेनभस्येमावास्यातस्यांदर्भोच्चयोम
तइतिमरीचिवाक्यमुक्तं नभस्योभाद्रपदः तेनमहालयांतर्गतदर्शोलभ्यते अत्रगौणमुख्यचांद्राभ्यामेकएवद-

र्थइत्यन्ये भाद्रपदशुक्लतृतीयायांहरितालिकाव्रतं तत्रपराग्राह्या मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरे शुद्धाधिकायाम
प्येवंगणयोगप्रशंसनादितिमाधवोक्तेः चतुर्थीयुक्तायांफलाधिक्यंमाधवीयेआपस्तंबः चतुर्थीसहितायातुसातृती
याफलप्रदा. अवैधव्यकरास्त्रीणांपुत्रपौत्रप्रवर्धिनी द्वितीयायोगेप्रत्यवायमाहसएव द्वितीयाशेषसंयुक्तांयाकरोति
विमोहिता सावैधव्यमवाप्नोतिप्रवदंतिमनीषिणइति आद्यमघश्रावणिकाकज्जलीहरितालिका चतुर्थीमिश्रितास्त्री
भिर्दैवानक्तेविधीयते तृतीयानभसःशुक्लामघश्रावणिकास्मृता भाद्रस्यकज्जलीकृष्णाशुक्लाचहरितालिकेतिदि-
वोदासोदाहृतवचनाच्च भाद्रशुक्लचतुर्थीवरदचतुर्थी सामध्याह्नव्यापिनीग्राह्या प्रातःशुक्लतिलैःस्नात्वामध्याह्नेपू
जयेन्नृपेतिहेमाद्रौभविष्योत्तरेचपूजोक्तेः मदनरत्नेप्येवं परदिनएवांशेनसाकल्येनवामध्याह्नव्याप्त्यभावेसर्व
पक्षेषुपूर्वाग्राह्या तथाचबृहस्पतिः चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्याह्नव्यापिनीचेत्स्यात्परतश्चे-
त्परेहनीति मातृविद्धाप्रशस्तास्याच्चतुर्थीगणनायके मध्याह्नेपरतश्चेत्स्यान्नागविद्धाप्रशस्यतइतिमाधवी-
येस्मृत्यंतराच्चैतत्रगणेशरूपंस्कांदे एकदंतंशूर्पकर्णंनागयज्ञोपवीतिनं पाशांकुशधरंदेवंध्यायेत्सिद्धिवि-
नायकमिति इयंरविभौमयोरतिप्रशस्ता भाद्रशुक्लचतुर्थ्यायाभौमेनार्केणवायुता महतीसात्रविघ्नेशमर्चित्वे
ष्टंलभेन्नरइतिनिर्णयामृतेवाराहोक्तेः अत्रचंद्रदर्शनंनिषिद्धं तथाचापरार्केमार्कंडेयः सिंहादित्येशुक्लपक्षेच
तुर्थ्यांचंद्रदर्शनं मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंसदेति चतुर्थ्यांनपश्येदित्यन्वयः प्रधानक्रियान्वय
लाभात् तेनचतुर्थ्यांसुदिनस्यपंचम्यांननिषेधः गौडास्त्वेवमाहुः पराशरोपि कन्यादित्येचतुर्थ्यांतुशुक्लेचं-

द्रस्यदर्शनं मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंसदा नद्दोषशांतयेसिंहःप्रसेनमितिवैपठेदिति श्लोकस्तुविष्णुपु
राणे सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः सुकुमारकमारोदीस्तवह्येषःस्यमंतकइति भाद्रपदशुक्लपंचमीऋ
षिपंचमी सामध्याह्नव्यापिनीग्राह्या पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिमाधवीयेहारीतोक्तेः दिनद्वये
तत्त्वेहेमाद्रिमतेपरा सितापरयुतास्यात्पंचमीतिदीपिकोक्तेः माधवमतेपूर्वा सर्वत्रपंचमीपूर्वेत्युक्तेः युग्मवाक्या
न्निर्णयस्तूक्तः ऋषिपंचमीषष्ठीयुतेवेतिदिवोदासः अत्रऋषीन्प्रतिमासुपूजयित्वाऽकृष्टभूमिजशाकेनवर्त्त
नं एवंसप्तवर्षाणिकृत्वासप्तकुंभेषुप्रतिमासुसंपूज्यापरेह्नितत्तन्मंत्रेणाष्टोत्तरशतंतिलान्हुत्वासप्तब्राह्मणान्
भोजयेदितिनिर्णयामृते भाद्रशुक्लषष्ठीसूर्यषष्ठीसासप्तमीयुतेवेतिदिवोदासः शुक्लेभाद्रपदेषष्ठ्यांस्नानं
भास्करपूजनं प्राशनंपंचगव्यस्यअश्वमेधफलाधिकमितिवचनात् कल्पतरौभविष्ये येयंभाद्रपदेमा-
सिषष्ठीस्याद्भरतर्षभ योस्यांपश्यतिगांगेयंदक्षिणापथवासिनं ब्रह्महत्यादिपापैस्तुमुच्यतेनात्रसंशयः गां-
गेयःस्वामिकार्त्तिकेयः भाद्रपदशुक्लसप्तम्याममुक्ताभरणव्रतम् तत्रसप्तमीपूर्वायुताग्राह्या षण्मुन्योरितियु-
ग्मवाक्यात् भाद्रपदशुक्लाष्टमीदूर्वाष्टमीसापूर्वाग्राह्या श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी पूर्वविद्धातुकर्त
व्याशिवरात्रिर्बलेर्दिनमितिहेमाद्रौबृहद्यमोक्तेः शुक्लाष्टमीतिथिर्यातुमासिभाद्रपदेभवेत् दूर्वाष्टमीतुसाज्ञेया
नोत्तरासाविधीयतइतिपुराणसमुच्चयाच्च यत्तु मुहूर्त्तेरोहिणेष्टम्यांपूर्वायापदिचापरा दूर्वाष्टमीतुसाकार्याज्ये
ष्ठामूलंचवर्जयेदितितत्रैवपराकार्येत्युक्तं तत्पूर्वदिनेज्येष्ठादियोगेद्रष्टव्यं दूर्वाष्टमीसदात्याज्याज्येष्ठामूलर्क्ष-

संफता तथा ऐंद्रर्क्षेपूजितादूर्वाहंत्यपत्यानिनान्यथा भर्त्तुःश्वशुर्हरामूलेतस्मात्तांपरिवर्जयेदितितत्रैवतन्निषेधात्
इदमगस्त्योदयेकन्यार्केचनकार्यं शुक्लेभाद्रपदेमासिदूर्वासंज्ञातथाष्टमी सिंहार्कएवकर्तव्यानकन्यार्केकदाचन
सिंहस्थेसोत्तमासूर्येनुदितेमुनिसत्तमइतिमदनरत्नेस्कांदोक्तेः अगस्त्येउदितेतातपूजयेदमृतोद्भवं वैधव्यंपुत्र
शोकंचदशवर्षाणिपंचचेतितत्रैवदोषोक्तेश्च भाद्रपदशुक्लाष्टम्यामगस्त्योदयेभाविनिसतिपूर्वकृष्णाष्टम्यामे-
वकुर्यादितिहेमाद्रिः दीपिकाप्येवं इदंचव्रतंस्त्रीणांनित्यं यानपूजयेतेदूर्वांमोहादिह यथाविधि त्रीणिजन्मानि
वैधव्यंलभतेनात्रसंशयः तस्मात्संपूजनीयासाप्रतिवर्षंवधूजनैरितिपुराणसमुच्चयात् यदाज्येष्ठादिकंविना
ष्टमीनलभ्यतेतदातत्रैवोक्तं कर्त्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत् दूर्वामभ्यर्चयेद्भक्त्यानवंध्यादिवसंनये-
दिति अत्रविधिर्मदनरत्नेभविष्ये शुचौदेशेप्रजातायांदूर्वायांब्राह्मणोत्तम स्थाप्यलिंगंततोगंधैःपुष्पैर्धूपैःस
मर्चयेत् दध्यक्षतैर्द्विजश्रेष्ठअर्घ्यंदद्यात्त्रिलोचने दूर्वाशमीभ्यांविधिवत्पूजयेच्छ्रद्धयान्वितः मंत्रस्तु त्वंदूर्वेऽमृत
जन्मासिवंदितासिसुरासुरैः सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव यथाशाखाप्रशाखाभिर्विस्तृतासिमहीत
ले तथाममापिसंतानंदेहित्वमजरामरमिति अत्रानग्निपक्वंभक्षयेत् अनग्निपक्वमश्नीयाद्दध्यन्नंदधिफलंतथा
अक्षारलवणंब्रह्मन्नश्नीयान्मधनान्वितमितितत्रैवभविष्योक्तेः भाद्रपदेधिमासेसतिनिर्णयदीपेस्कांदे अधि-
मासेनुसंप्राप्तेनभस्यउदयेमुनेः अर्वाग्दूर्वाव्रतंकार्यंपरतोनैवकुत्रचित् अत्रैवज्येष्ठापूजोक्तामाधवीयेस्कांदे
मासिभाद्रपदेशुक्लपक्षेज्येष्ठर्क्षसंयुता रात्रिर्यस्मिन्दिनेकुर्याज्ज्येष्ठायाःपरिपूजनमिति इयंज्येष्ठायोगवशेनशु

र्वापरावाप्त्या दिनद्वययोगेपरा पूर्वेन्हिशात्रियोगेपूर्वैव नवम्यासहकार्यास्यादष्टमीनात्रसंशयः मासिभाद्रपदेशुक्लप
क्षेज्येष्ठर्क्षसंयुता राश्चिर्यस्मिन्दिनेकुर्यात्ज्येष्ठायाःपरिपूजनमितितत्रैवोक्तेः अस्यापवादः यस्मिन्दिनेभवेज्ज्ये
ष्ठामध्याह्नादूर्ध्वमप्यणुः तस्मिन्हविष्यंपूजाच न्यूनाचेत्पूर्ववासरइति इदंकेवलतिथौनक्षत्रेचोक्तम् तत्राद्यंकेवलति
थौकार्यम् अंत्यंकेवलर्क्षे तदुक्तंमात्स्ये प्रत्यब्दंकेतिथावुक्तंयज्ज्येष्ठादेवतंव्रतम् प्रतिज्येष्ठाव्रतंयच्चविहितंकेवलो
डुनि तिथावेवाचरेदाद्यंद्वितीयंकेवलर्क्षतइति अतएवमदनरत्नेभविष्येनक्षत्रमात्रेउक्तम् मासिभाद्रपदेपक्षेशु-
क्लेज्येष्ठायदाभवेत् रात्रौजागरणंकृत्वाएभिर्मंत्रैश्चपूजयेदिति दाक्षिणात्यास्त्वृक्षएवकुर्वंति हेमाद्रौस्कांदेपि मा-
सिभाद्रपदेशुक्लपक्षेज्येष्ठर्क्षसंयुते यस्मिन्कस्मिन्दिनेकुर्याज्ज्येष्ठायाःपरिपूजन मिति तथा मैत्रेणावाहयेद्देवीं
ज्येष्ठयांतुप्रपूजयेत् मूलेविसर्जयेद्देवींत्रिदिनंव्रतमुत्तममिति मंत्रस्तु एह्येहित्वंमहाभागेसुरासुरनमस्कृते
ज्येष्ठेत्वंसर्वदेवानांमत्समीपगताभवेत्यावाह्य तामग्निवर्णामितिसंपूज्य ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः
शर्वायैतेनमस्तुभ्यंशांकर्यैतेनमोनमः ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि एह्येहित्वंमहाभागेअर्घ्यंगृह्ण
सरस्वति इत्यर्घः भाद्रपदशुक्लद्वादश्यांश्रवणयोगरहितायांपारणंकुर्यात् आभाकासितपक्षेश्रुतिर्दिवोदासोदा
हृतवचनात् उपोष्यैकादशींमोहात्पारणंश्रवणेयदि करोतिहंतितत्पुण्यंद्वादशद्वादशीभवमिति तत्रैवस्कांदाच्च
अस्यतत्रैवप्रतिप्रसवः मार्कंडेयः विशेषेणमहीपालश्रवणंवर्धतेयदि तिथिक्षयेनभोक्तव्यंद्वादशींलंघयेन्नहीति
केचित्तु यदात्वपरिहार्योयोगस्तदाश्रवणनक्षत्रेत्रेधाविभक्तेमध्यमविंशतिघटिकायोगंत्यक्त्वापारणंकार्यम् तदु

कंविष्णुधर्मे श्रुतेश्च मध्येपरिवर्तमेतिस्कसिप्रबोधपरिवर्तनमेव वर्ज्य मिति केचिच्चतुर्धाविंभज्यमध्यपादद्वयंव
र्ज्यमाहुः अत्रमूलंचिंत्यं अत्रैवविष्णुपरिवर्तनोत्सवंकुर्यात् संध्यायांविष्णुसंपूज्य प्रार्थयेत् मंत्रस्तुतिथितत्वेउक्तः
ॐ वासुदेवजगन्नाथप्राप्तेयंद्वादशीतव पार्श्वेनपरिवर्तस्वसुखंस्वपिहिमाधवेति अत्रैवशक्रध्वजोत्थापन
मुक्तमपरार्केगर्गेण द्वादश्यांतुसितेपक्षेमासिप्रोष्ठपदेतथा शक्रमुत्थापयेद्राजाविश्वश्रवणवासवे इयमेवश्रवण
द्वादशी तत्रैकादश्यांद्वादशीश्रवणयोगेसैवोपोष्या एकादशीद्वादशीचवैष्णव्यमपितन्नचेत् तद्विष्णुशृंखलंनामवि
ष्णुसायुज्यकृन्नवेदिति विष्णुधर्मोक्तेः नारदीयेपि संस्पृश्यैकादशींराजन्द्वादशींयदिसंस्पृशेत् श्रवणंज्योति
षांश्रेष्ठंब्रह्महत्यांव्यपोहति द्वादशीश्रवणस्पृष्टास्पृशेदेकादशींयदि सएववैष्णवोयोगोविष्णुशृंखलसंज्ञितइतिहे
माद्रौमात्स्योक्तेश्च दिनद्वयेद्वादशीश्रवणयोगेपिपूर्वा निर्णयामृतेत्वस्यपूर्वार्धमन्यथापठितम् द्वादशीश्रवणर्क्षंचे
स्पृशेदेकादशींयदीति तेनहेमाद्रिमते एकादश्याःश्रवणयोगाभावेपितद्युक्तद्वादशीयोगमात्रेणविष्णुशृंखलंभवति
निर्णयामृतमतेतु श्रवणस्यैकादशीद्वादशीभ्यांयोगएवविष्णुशृंखलं नान्यथेति यदानिशीथानंतरंसूर्योदयावधिहि
कलामात्रमपिश्रवणर्क्षंभवति तदापिपूर्वैव तदुक्तंतत्रैवनारदीये इमांप्रकृत्य तिथिनक्षत्रयोर्योगोयोगश्चैवनराधि
प द्विकलोयदिलभ्येत सज्ञेयोत्स्वष्टयामिकइति द्वादशीश्रवणस्पृष्टाकृत्स्नापुण्यतमातिथिः नतुसातेनसंयुक्ता
तावत्येवप्रशस्यतइतिमदनरत्ने मात्स्याच्च दिवोदासीयेतु रात्रेःप्रथमपादेचेच्छ्रवणंहरिवासरे तदापूर्वामुपवसे
त्सातर्भानेचपारणमित्युक्तम् इदंतुनिर्मूलत्वात्सर्वविरोधाच्चोपेक्ष्यम् इयंबुधवारेतिप्रशस्ता बुधश्रवणसंयुक्तासे-

वचेद्द्वादशीभवेत् अत्यंतमहतीसास्याद्दत्तंभवतिचाक्षयमिति हेमाद्रौस्कांदात् यानितुपठंति उत्तराषाढसंयुक्ताश्रो
णामध्यान्हगापिवा आसुरीसेवनारास्याद्इतिपुण्यंपुराकृतम् उदयव्यापिनीग्राह्याश्रोणाद्वादशिकायुता विश्वर्क्ष
संयुतासाचेन्नैवसोपोष्याशुभेप्सुभिरित्यादीनि विष्णुधर्मस्कांदभविष्यादीनिवचनानितानिनिर्मूलानि यदपिस्मृत्य
र्थसारेउदयव्यापिनीग्राह्येत्युक्तम् यच्चबृहन्नारदीये उदयव्यापिनीग्राह्याश्रवणद्वादशीव्रतइति तद्यदाश्रुद्धा
धिकाद्वादशी परदिनएवोदयेश्रवणयोगः पूर्वेऽन्हिचतद्भिन्नेकालेयोगस्तत्परम् दिनद्वयेउदययोगेपूर्वैव बहुक
र्मकालव्यामेरित्युक्तंमदनरत्ने यदात्वेकादश्येवश्रवणयुतानद्वादशीतदापिपूर्वैव यदानप्राप्यतेऋक्षंद्वादश्यांवै
ष्णवंक्वचित् एकादशीतदोपोष्यापापघ्नीश्रवणान्वितेतिमदनरत्नेनारदीयोक्तेः यदापरेवर्क्षयुतातदापरा तत्रश
क्तेनोपवासद्वयंकार्यम् एकादशीमुपोष्यैव द्वादशींसमुपोषयेत् नचात्रविधिलोपःस्यादुभयोर्दैवतंहरिरितिभावि
ष्योक्तेः यत्तुविष्णुधर्मे पारणांतंव्रतंज्ञेयंव्रतांतेविप्रभोजनम् असमाप्तेव्रतेपूर्वेनैवकुर्याद्व्रतांतरमितितदेतद्भि-
न्नपरं अत्रगौडाः शृणुराजन्परंकाम्यंश्रवणद्वादशीव्रतमितिस्थूलशीर्षवचनात्काम्यमेवेदम् तेनाशक्तस्यानि
त्यैकादशीव्रतमेवेतिमन्यंते द्वादश्यामुपवासेनशक्रोह्यासीन्नृपसत्तमः चक्रवर्तित्वमतुलंसंप्राप्तोत्युत्तमांश्रियमि
तिगौडनिबंधेमार्कंडेयोक्तेश्च दाक्षिणात्यास्तु एकादश्यांनरोभुक्त्वा द्वादश्यांसमुपोषणात् व्रतद्वयकृतंपुण्यंसर्वं
प्राप्नोत्यसंशयमितिवराहवामनपुराणोक्तेः श्रवणद्वादशीव्रतमेवेत्याहुः भुक्त्वेतिफलाद्याहारपरम् नत्वन्नपरंअ
न्नाश्रितानिपापानीतिनिषेधात् उपवासद्वयंकर्तुंनशक्नोतिनरोयदि प्रथमेऽन्हिफलाहारीनिराहारोपरेहनीति-

दिनोदासीयेभानिथोक्तेश्च अशक्तोतु गृहीतैकादशीव्रतो यस्तं प्रत्युक्तं मात्स्ये द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं य-
दि उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिमिति पूजयेन्नतूपवसेदित्यर्थः अगृहीतैकादशीव्रतश्चेदेकादश्यां भुक्त्वा·
द्वादश्यामुपवसेत् एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयमिति नारदीयोक्तेः
पारणं तु भयान्तेऽन्यतरान्ते वा कुर्यात् तिथिनक्षत्रनियमे तिथिभान्ते च पारणमिति स्कान्दात् तिथिनक्षत्रसंयोगे उपवासो
यदा भवेत् पारणं तु न कर्तव्यं यावन्नैकस्य संक्षय इति नारदीयाच्चेति हेमाद्रिः यद्यप्यत्र नक्षत्रमात्रान्तेऽपि पारणं प्रतिभा
ति तथापि तिथिमात्रान्ते ज्ञेयम् नक्षत्रान्ते तिथिमध्येऽपि याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः ऋक्षान्ते पारणं
कुर्याद्धित्वा श्रवणरोहिणीमिति विष्णुधर्मे श्रवणान्तमात्रे पारणनिषेधात् रोहिण्यां तु भान्ते कुर्यात्तिथेर्वापि इति वह्नि
पुराणात् तदन्तेप्यकृत्वा न लभेच्च मरतीति नक्षत्रान्तोऽत्र कल्प्य इति मदनरत्ने असंभवे तु तिथ्यन्ते तिथिभान्ते वा पारणं यत्न·
चोदितम् यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणेति ज्ञेयम् यत्तु मदनरत्ने द्वादशी वृद्धौ श्रवणवृद्धौ वा श्रवणान्त एव
पारणं कुर्यात् पारणं तिथिवृद्धौ तु द्वादश्यामुडुसंक्षयात् वृद्धौ कुर्यात्त्रयोदश्यां तत्र दोषो न विद्यत इति वह्निपुराणादित्यु
क्तम् तत्सत्करणादेतस्यामेव श्रवणयुक्तैकादश्यां विहितविजयैकादशीव्रतपरं न तु श्रवणद्वादशीपरमिति मदन लैंगे
उक्त श्रवणद्वादशीपरमाहुः अत्र विधिर्मदनरत्ने विष्णुधर्मे तस्मिन्दिने तथा स्नानं यत्र कुत्र नसंगमे तथा दृ
पुनं तस्यां जलपूर्णं घटं द्विज वस्त्रसंवेष्टितं दत्वा छत्रोपानद्युगेन च नदुर्गतिमवाप्नोति गतिमग्र्यां च विंदति मंत्रस्तु
गानिये चरेज नार्दनपूजामभिधाय नमोनमस्ते गोविंद बुधश्रवणसंज्ञक अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भ

प्रीयतां देवदेवेशो मम संशयनाशनः वामनावतारनिमित्तोपवासस्तु उक्तो हेमाद्रौ भविष्ये द्वादश्यां नो विधिः प्रोक्तः श्रव
णेन युधिष्ठिर सर्वपापप्रशमनः सर्वसौख्यप्रदायकः एकादशी यदा चास्या श्रवणेन समन्विता विजया सा तिथिः प्रो
क्ता भक्तानां विजयप्रदेत्युपक्रम्य अथ काले बहुतिथे गते सा गुर्विणी भवत् स पुत्रेण नवमे मासि पुत्रं सा वामनं हरिमित्यु
क्त्वा एवं त्वसर्वसमभवदेकादश्यां युधिष्ठिर तेन सा देवदेवस्य सर्वथा विजया तिथिः एषा व्युष्टिः समाख्याता एकाद
श्यां मया तव पूर्वमेव समाख्याता द्वादशी श्रवणान्वितेत्युपसंहारादेकादश्यामेव व्युष्टिः फलं भागवतेऽष्टमस्कंधेऽनु-
द्वादश्यां वामनोऽसत्त्विरुक्ता श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिण
म् द्वादश्यां सविताऽतिष्ठन्मध्यंदिनगतो नृप विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः श्रोणायां वह्ने आभिजित्स्य
वणा प्रथमोंशः गौडा अप्येवम् अत्र कल्पभेदाद्व्यवस्था तद्विधिश्च हेमाद्रौ वह्निपुराणे नदीनां संगमे स्नात्वा दर्चयेद
त्र वामनम् सौवर्णवस्त्रसंयुक्तं द्वादशांगुलमुच्छ्रितम् ततो विधिवत्संपूज्य हिरण्मयेन पात्रेण दद्यादर्घ्यं प्रयत्नतः
नमस्ते पद्मनाभाय नमस्ते जलशायिने तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे नमः कमलकिंजल्कपीतनिर्मल
वाससे महाहवरिपुस्कंधधृतस्कंधाय चक्रिणे नमः शार्ङ्गसीरबाणपाणये वामनाय च यज्ञभुक्कुलदात्रे च वामना
य नमो नमः देवेश्वराय देवाय देवसंभूतिकारिणे प्रभवे सर्वदेवानां वामनाय नमो नमः एवं संपूजयित्वा तं द्वाद
श्यामुदये रवेः शृंगारसहितं तं तु ब्राह्मणाय निवेदयेत् वामनः प्रतिगृह्णाति वामनोऽहं ददामि ते वामनं सर्वतोभद्रं
द्विजाय प्रतिपादये इति अनंतभट्टोऽप्याह श्रवणद्वादश्यां जनार्दननामा विष्णुः पूज्यते श्रवणैकादश्यां वामना

वनारइति श्रवणयुतशुक्लैकादश्यलाभेतुदशमीविद्धापिश्रवणायुताकार्या दशम्येकादशीयत्रसानोपोष्याभवेत्तिथिः श्रव
णेनतुसंयुक्तासान्वेत्यात्सर्वकामदेति वन्हिपुराणादित्युक्तंमदनरत्ने पूजाचमध्यान्हेकार्या अन्होमध्येवामनोरामसमा
पितिपूर्वोक्तवचनात् अत्रेचदुग्धव्रतंसंकल्पयेत् तदुक्तम् दुग्धमाश्वयुजेमासीति अत्रेदंचिंत्यते दुग्धव्रतेपायसादि
वर्ज्यंनवेति नेतिकेचित् नहिप्रकृतिवर्जनेविकारवर्जनंयुक्तम् दधिघृतादीनामपिवर्जनापत्तेः नचयत्रप्रकृतिरसोप
लंभस्तद्वर्जनमितिवाच्यम् मांसविकारस्यौष्ट्रदध्यादेश्चावर्जनापत्तेः तस्माद्दध्यादिवत्पायसादिभक्ष्यमिति अत्रब्र
ूमः यत्रविकारेप्रकृतिरसोपलंभस्तस्यापिज्ञावानत्रविकारस्यापिनिषेधः अस्तिचमांसविकारेमांसप्रत्यभिज्ञा
मांसत्वानपायात् यत्तुऔष्ट्रदध्यादेरनिषेधापत्तिरिति तन्न औष्ट्रमितिविकार तद्भिन्नेननिषेधात् तथाचविज्ञाने
श्वरः औष्ट्रमेकशफंस्त्रैणमारण्यकमथाविकमित्यत्रऔष्ट्रमितिविकार तद्भिन्नान्छकृन्मूत्रादीनामपिनिषेधइत्याह
नन्वेवंसंधिन्यानिर्दशावत्सागोपयः परिवर्जयेदिति संधिन्यादिक्षीरनिषेधेपिदध्यादिग्रहणंस्यात् सत्यंप्रापे वच
नेनपरंनिषेधः तदाहापरार्केशंखः क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमा
हितइति व्रतंगोमूत्रयावकं तस्मात्पायसेदुग्धरसोपलंभाद्वर्जनम् अतएवामिक्षायांदधिसत्वेपिमाधुर्योपलंभा
त् पयोरूपत्वमुक्तंमीमांसकैः तदुक्तं पयएवघनीभूतमामिक्षेत्यभिधीयतइति दध्यादिषुतदभावादवर्जनमिति ए
तेन दध्यादिव्रतेतक्रादीनांनिषेधः उक्तोभयहेत्वभावादितिकेचित् पूर्वोक्तशंखवचनात्सर्वविकारनिषेधइतियुक्तं
प्रतीमः इतिदुग्धव्रतम् भाद्रपदशुक्लचतुर्दश्यामनंतव्रतम् तत्रत्रिमुहूर्ताव्योदयिकीग्राह्येतिमाधवः तदुक्त

उदयेत्रिमुहूर्तापिग्राह्यानंतव्रतेतिथिरिति मध्यान्हेभोज्यवेलायामितिकथायांश्रवणादुपरिहि देवेभ्योधारयतीतिवह्निधिक स्वनात् पूजाव्रतेषुसर्वेषुमध्यान्हव्यापिनीतिथिरितिमाधवीयेवचनात्मध्यान्हव्यापिनीग्राह्येतितुदिवोदासः मतापमार्तंडेप्येवं इदमेवनयुक्तं निर्णयामृतेतुघटिकामात्राप्योदयिकीत्युक्तम् तथाभाद्रपदस्यांतेचतुर्दश्यांद्विजोत्तम पौर्णमास्याःसमायोगेव्रतंचानंतकंचरेदितिभविष्योक्तेः मुहूर्तमपिचेन्माद्रेपूर्णिमायांचतुर्दशी संपूर्णांताविदुस्तस्यांपूजयेद्विष्णुमव्ययमितिस्कांदाच्चेति अत्रमूलंचिंत्यम् अयहेऔदयिकत्वेपूर्णत्वात्पूर्वेतियुक्तम् नत्वेवंतुविध्यर्थवादयोर्भिन्नार्थत्वेएकवाक्यतायोगात् संदिग्धेषुएकवाक्यत्वादितिन्यायेनपूर्वापरावामध्यान्हव्यापिन्येवमुख्या माधवस्तुसामान्यवाक्यान्निर्णयंकुर्वन्भ्रांतएव अनंतव्रतस्यपुराणांतरेष्वभावान्निबंधांतरेष्वभावाच्चवचनानिर्मूलमेवेति अथागस्त्यार्घ्यः तत्कालोव्रतहेमाद्रौभविष्ये कन्यायामागतेसूर्येअर्वाग्वैसप्तमेदिने कन्यायांसमनुप्राप्तेर्घ्यकालोनिवर्तते तेनउदयोत्तरमपिसप्तदिनमध्येइत्यर्थः यत्साध्ये आसप्तरात्रादुदयाद्यमस्यदातव्यमेतत्सकलंनरेण यावत्समाःसप्तदशाथवास्युरथोर्ध्वमप्यत्रवदंतिकेचित् यमस्यागस्त्यस्य उदयकालश्चदिवोदासीयेउक्तः उदेतियाम्यांहरिसंक्रमाद्रवेरेकाधिकेविंशतिमेत्यगस्त्यः सप्तसप्तमेस्तं वृषसंक्रमाच्चमयातिगर्गादिभिरभ्यभाणि अत्रविधिर्विष्णुरहस्ये काशपुष्पमयींरम्यांकृत्वामूर्तिंतुचारुणीः प्रदोषेविन्यसेत्तांतुपूर्णकुंभेष्वलंकृताम् कुंभस्थांपूजयेत्तांतुपुष्पधूपविलेपनैः दध्यक्षतबलिंदद्याद्रात्रौकुर्यात्प्रजागरं पूजांचवक्ष्यमाणार्घ्यमंत्रेणकार्या प्रभातेतांसमादाययायात्पुण्यंजलाशयम् निशावसानेतांपश्यन्जलांतेप्रतिमांमुनेः अर्घ्यंदद्यादगस्त्यायभक्त्यासम्यगुपो-

पितः मात्स्येतु अंगुष्ठमात्रंपुरुषंतथैवसौवर्णमत्स्यायतबाहुदंडं पूर्वकाशमयीत्वमशक्तो चतुर्भुजंकुंभमुखं
निधायधान्यानिसप्तांकुरसंयुतानि सकाशपुष्पाक्षतशक्तियुक्तंमंत्रेणदद्याद्द्विजपुंगवाय धेनुंबहुक्षीरवतींच
दद्यात्सवस्त्रघंटाभरणांद्विजाय भविष्ये विरूढैःसप्तधान्यैश्चवंशपात्रनिधापितैः सौवर्णरूप्यपात्रेणता-
म्रवंशमयेनवा मूर्ध्निस्थितेनमंत्रेणजानुभ्यांधरणींगतः विष्णुरहस्ये अगस्त्यःखनमानेतिपठन्मंत्रमिमं
मुनेः अर्घ्यंदद्यादगस्त्यायशूद्रेमंत्रविधिस्त्वयम् काशपुष्पप्रतीकाशवन्हिमारुतसंभव मित्रावरुणयोःपुत्र
कुंभयोनेनमोस्तुते विंध्यवृद्धिक्षयकरमेघतोयविषापह रत्नवल्लभदेवेशलंकावासनमोस्तुते वातापीभ-
क्षितोयेनसमुद्रःशोषितःपुरा लोपामुद्रापतिःश्रीमान्योसौतस्मैनमोनमः येनोदितेनपापानिविलयंयांतिव्या-
धयः तस्मैनमोस्त्वगस्त्यायसशिष्यायचपुत्रिणे अगस्त्यःखनमानेतिविप्रोर्घ्यंविनिवेदयेत् राजपुत्रिमहाभाग
ऋषिपत्निवरानने लोपामुद्रेनमस्तुभ्यमर्घ्यंमेप्रतिगृह्यताम् दत्वैवमर्घ्यंकौरव्यप्रणिपत्यविसर्जयेत् अर्चित
स्त्वंयथाशक्त्यानमोगस्त्यमहर्षये ऐहिकामुष्मिकींदत्वाकार्यसिद्धिंव्रजस्वमे विसर्जयित्वागस्त्यंतंविधायप्रतिपा
दयेत् अगस्त्योमेमनस्थोस्तुअगस्त्योस्मिघटेस्थितः अगस्त्योद्विजरूपेणप्रतिगृण्हातुसत्कृतः दानमंत्रः
अगस्त्यःसप्तजन्माघंनाशयत्वावयोरयम् अतुलंविमलंसौख्यंप्रयच्छत्वंमहामुने प्रतिग्रहमंत्रःविष्णुरह
स्ये त्यजेदगस्त्यमुद्दिश्यधान्यमेकंफलंरसम् होमंकृत्वाततःपश्चाद्वर्जयेन्मानवःफलम् होमश्चार्घ्यमंत्रेणाज्ये
न भविष्ये दत्वार्घ्यंसप्तवर्षाणिक्रमेणानेनपांडव ब्राह्मणःस्याच्चतुर्वेदःक्षत्रियःपृथिवीपतिः वैश्येनचधान्यनि

प्तिः शूद्रश्चधनवान्भवेत् यावदायुश्चयः कुर्यात्सपरंब्रह्मगच्छति इत्यगस्त्यार्घः भाद्रपौर्णमास्यांप्रपितामः
हात्सरांस्त्रीनुद्दिश्यश्राद्धंकार्यम् तदुक्तंहेमाद्रौब्राह्ममार्कंडेययोः नांदीमुखानांप्रत्यब्दंकन्याराशिगतेरवौ पौर्णः
मास्यांतुकर्तव्यंवराहवचनंयथेति नांदीमुखत्वंचोक्तंब्राह्मे पितापितामहश्चैवतथैवप्रपितामहः त्रयोह्यश्रुमु-
खाह्येतेपितरः परिकीर्तिताः तेभ्यः पूर्वतरायेचप्रजावंतः सुखैधिताः तेतुनांदीमुखानांदीसमृद्धिरितिकथ्यते ए
तच्चप्रत्यब्दमित्युक्तेः पक्षश्राद्धपक्षेसकृन्महालयपक्षेत्वावश्यकमितिप्रयोगपारिजाते अत्रमातामहाअपिका-
र्याः पितरोयत्रपूज्यंतेतत्रमातामहाअपीतिधौम्योक्तेः पितृशब्दस्यत्रजनकपरत्वेबहुवचनविरोधेनपितृभावा
पन्नपरत्वात् वार्षिकेतुवचनान्निवृत्तिः नचजीवत्पितृकस्यान्वष्टकायांमातृश्राद्धेतदापत्तिः इष्टापत्तेः अतएवसउक्त
श्राद्धेषुस्वमातृमातामहयोर्दद्यादितिमदनरत्नकालादर्शौ एतज्जीवत्पितृकश्राद्धेवक्ष्यामः केचित्तुअजहल्लक्षणया
पित्रादयोयत्रतत्रमातामहास्तेनात्रनेत्याहुः नचात्रनाम्नानांदीश्राद्धधर्मातिदेशः वैष्णवादिशब्दवद्देवतापरस्यत्र
नामकत्वाभावात् नापिनांदीमुखत्वंपितृविशेषणम् पारिभाषिकत्वादितिदिक् तथानिर्णयदीपेगार्ग्यः पौर्णमासीषु
सर्वासुनिषिद्धंपिंडपातनम् वर्जयित्वाप्रौष्ठपदींयथादर्शस्तथैवसेति इतिश्रीमीमांसकरामकृष्णभट्टात्मजभट्टकमलाकर
कृतेनिर्णयसिंधौभाद्रपदमासः कन्यासंक्रमेपराः षोडशघटिकाः पुण्याः शेषंप्राग्वत् अथमहालयः तत्रपृथ्वीचंद्रोदयेवृ
हन्मनुः आषाढीमवधिंकृत्वापंचमंपक्षमाश्रिताः कांक्षंतिपितरः क्लिष्टाअन्नमप्यन्वहंजलम् कन्यायोगेपुण्यतमत्व
माह शाट्यायनिः कन्यास्थार्कान्वितः पक्षः सोत्यंतंपुण्यमुच्यतइति अत्रविशेषमाहवृद्धमनुः मध्येवायदिवाप्यंते

तथाब्रह्मांडमार्कंडेययोः कन्यागतेसवितरि दिनानिदश
यत्रकन्यांव्रजेद्रविः सपक्षःसकलःश्रेष्ठःश्राद्धषोडशकंप्रति तथाब्रह्मांडमार्कंडेययोः कन्यागतेसवितरि यान्यहानितु
पंचच पार्वणेनेहविधिनाश्राद्धंतत्रविधीयते तथातत्रैवषोडशदिनान्युक्तानि कन्यागतेसवितरि यान्यहानितु
षोडश ऋतुभिस्तानितुल्यानिदेवोनारायणोब्रवीत् अत्रहेमाद्रिः षोडशत्वेत्रेधाव्याचख्यौ तिथिवृद्ध्यापक्षस्य षोड
शदिनात्मकत्वेश्राद्धवृद्ध्यर्थमेकःपक्षः भाद्रपदपूर्णिमयासहेतिद्वितीयः आश्विनशुक्लप्रतिपदासहेतितृतीयः अं
सएवतुयुक्तः अहःषोडशकंयत्तुशुक्लप्रतिपदासह चंद्रक्षयाविशेषेणसापिदर्शात्मिकास्मृतेतिदेवलोक्तेः
पक्षाः तदुक्तंहेमाद्रौब्राह्मे आश्वयुक्कृष्णपक्षेतुश्राद्धंकार्यंदिनेदिने त्रिभागहीनंपक्षंवात्रिभागंत्वर्धमेववा दिने
दिनेइतिपक्षपर्यंतत्वमुक्तम् त्रिभागहीनमितिपंचम्यादिपक्षः अर्धमित्यष्टम्यादिपक्षः त्रिभागमितिदशम्यादि
पक्षः त्रिभागहीनमितिचतुर्दशीसहितप्रतिपदादिचतुष्टयवर्जनाभिप्रायेणेतिकल्पतरुः अत्रदिनपदंतिथिपरं वी
तत्सक्षीयतिथित्वंश्राद्धव्याप्यतावच्छेदकम् तेनपंचदशतिथिव्यापिश्राद्धंसिध्यति तेनचतुर्दशीनिषेधोऽन्य-
कृष्णपक्षपरइतिगौडाः तन्न श्राद्धंशस्त्रहतस्यैवचतुर्दश्यांमहालये इत्यादिविरोधात् यच्च कश्चित् पूरणप्रत्ययलो
पेनतृतीयभागहीनंषष्ठ्यादिपक्षःतृतीयभागमेकादश्यादितदर्धंत्रयोदश्यादिउत्तरोत्तरंलघुकालोक्तेरिति तन्न गौ
तमादिवचनेनमूलकल्पनालाघवात् पक्षमित्यन्वयापत्तेश्च पंचम्यूर्ध्वंचतत्रापिदशम्यूर्ध्वंततोप्यतीतिविष्णुधर्मो
क्तेः षष्ठ्याद्येकादश्यादिपक्षावपिज्ञेयावितितत्त्वम् कालादर्शेपि पक्षाद्यादिचदर्शांतंपंचम्यादिदशादिच अष्ट
म्यादियथाशक्तिकुर्यादापरपक्षिकम् पक्षादिःप्रतिपत् दिक्दशमी दर्शांतमितिसर्वत्र गौतमोपि अथापरपक्षे-

द्रव्यगतोविधिः पौषादिक्रमः अन्वष्टकातुप्रागेवनिर्णीता तत्राष्टम्यपराण्हव्यापिनीग्राह्या अथाच्छादनपर्यंतंश्राद्धंपार्वणव
द्भवेदित्याश्वलायनकारिकोक्तेरपराण्हकालत्वाच्च पार्वणस्य पूर्वेद्युरष्टकाश्राद्धयोस्तुअष्टम्यनुरोधेननिर्णयः अतएवसूत्रम्
पूर्वेद्युःपितृभ्योदद्यात् अपरेद्युरन्वष्टक्यमितिच अत्रकामकालौविश्वेदेवौ इष्टिश्राद्धेक्रतूदक्षावष्टम्यांकामकालकावितिसा-
यणीयेशंखोक्तेः अनयोश्राद्धाकरणेप्रायश्चित्तमुक्तंमृग्विधाने एभिर्द्याभिर्जपेन्मंत्रंशतवारंतुतद्दिने आन्वष्टक्यंयदान्यूनंसंपूर्णं
यातिसर्वथेति अशक्तौत्वाश्वलायनः अथश्वोभूतेष्टकाः पशुनास्थालीपाकेनवाप्यनडुहोयवसमाहरेदग्निनावाकक्षमु-
पोषेदेषामेष्टकेतिनत्वेवानष्टकःस्यादिति मार्गशीर्षादिषुमलमासेसतितत्राष्टकानकार्या चतुर्णामितिग्रहणादित्युक्तंनारा
यणवृत्तौ तथाकाटकगृह्येपि माहालयाष्टकाश्राद्धोपाकर्माद्यपिकर्मयत् स्पष्टमासविशेषाख्याविहितंवर्जयेन्मलेइति मा
र्गादिरविवारेषु काम्यंव्रतमुक्तंहेमाद्रौ तत्रभक्ष्याण्युक्तानिसंग्रहेसौरधर्मे पत्रमिश्रंतुलस्याश्चिपलमथघृतंमार्गशीर्षादिभ
क्ष्यंमुष्टीनांत्रिस्तिलानांत्रिपलदधितथादुग्धकंगोमयंच त्रिलंतोयांजलीनांत्रिमरिचकमथोत्रिःपलाःसक्तवःस्युर्गोमूत्रंशर्करा
सद्यावीतिविधिनाभानुवारेक्रमेणेति इतिश्रीकमलाकरभट्टकृतेनिर्णयसिंधौद्वितीयपरिच्छेदेमार्गशीर्षमासःसमाप्तः
धनुःसंक्रमेपराःषोडशघटिकाःपुण्याः अन्यत्प्राग्वत् अत्रोत्सर्जननिर्णयोवक्तव्योप्युपाकर्मप्रसंगात्प्रागेवोक्तः कृत्यतत्त्वेभ-
विष्ये पौषेमासियदादेवीशुक्लाष्टम्यांबुधोभवेत् तस्यांस्नानंजपोहोमस्तर्पणंविप्रभोजनम् मत्प्रीतयेकृतंदेविशतसाहस्रि-
कंभवेत् अत्रैवरोहिण्यार्द्रायोगेपुण्यतमत्वंतत्रैवज्ञेयम् पौषशुक्लैकादशीमन्वादिःसाचोक्ताप्राक् पौषपूर्णिमानंतराःस-
मम्यष्टमीनवम्योष्टकाद्याःप्रागुक्ताः पौषामावास्यायांअर्धोदयोयोगविशेषः तदुक्तंमदनरत्नेमहाभारते अमार्कपातश्रवणैर्यु

पुण्यमाघयोर्मध्यवर्तिनीपौषीपौर्णमास्युत्तरामावास्येत्यर्थइ-

क्तंनेपुण्यमाघयोः अर्धोदयःसविज्ञेयःकोटिसूर्यग्रहैःसमइति तथा दिवैवयोगःशस्तोयंनतु

तिभट्टाः मदनरत्नेपुष्यस्यचमाघस्यचेत्यर्थउक्तः तन्न हेमाद्रिविरोधात् तत्राहिमाघएवोक्तः

रात्रौकदाचनेति इदमर्थमन्यनिबंधेष्वभावान्निर्णयामृतमात्रोक्तेर्निर्मूलमेव तेनहेमाद्र्यादिमतेरात्रावर्धोदयोभवत्येव केचि-

तुर्किंचिदूनोमहोदयइत्याहुस्तन्निर्मूलम् हेमाद्रौमदनरत्नेचस्कांदे माघामायांव्यतीपातेआदित्येविष्णुदैवते अर्धोदयंतदित्या

हुःसहस्रार्कग्रहैःसमम् तत्रैव माघमासेकृष्णपक्षेपंचदश्यांरवेर्दिने वैष्णवेनतुऋक्षेणव्यतीपातेसुदुर्लभे व्रतंकुर्यादित्य

र्धेन्वयः तत्रैव ब्रह्मविष्णुमहेशानांसौवर्णीःपलसंख्यया प्रतिमास्तुप्रकर्तव्यास्तदर्धेनद्विजोत्तम साग्रंशतत्रयंशंभोर्द्रोणा

नांतिलपर्वतः कर्तव्योपर्वतोविष्णुरुद्रयोःपूर्वसंख्यया शंभुरत्रब्रह्मा शय्यात्रयंततःकुर्यादुपस्करसमन्वितम् तिलैर्होमंकृ-

त्वाभानमादद्यादित्युक्तम् स्कांदे अर्धोदयेतुसंप्राप्तेसर्वगंगासमंजलम् शुद्धात्मानोद्विजाःसर्वेभवेयुर्ब्रह्मसंमिताः यत्किं

चिद्दीयतेदानंतद्दानंमेरुसन्निभमिति अत्रदानविशेषोनिर्णयामृतेस्कांदे चतुःषष्टिपलंमुख्यममत्रंतत्रकारयेत् चत्वारिं

शत्पलंवाथपंचविंशतिरेववा अमत्रंपात्रं तच्चकांस्यमयमित्युक्तंतत्रैव एवंकृपाटलंकार्यंकांस्यभाजनमुत्तममिति तथा

निधायपायसंतत्रपद्ममष्टदलंलिखेत् पद्मस्यकर्णिकायांतुकर्षमात्रंसुवर्णकम् तदभावेतदर्धंवातदर्धंवापिकारयेत् भू-

मौतुतंडुलैःशुद्धैःकृत्वाष्टदलमुत्तमम् अमत्रंस्थापयेत्तत्रब्रह्मविष्णुशिवात्मकं तेषांपूजाततःकार्याश्वेतमाल्यैःसुशोभ-

नैः वस्त्रादिभिरलंकृत्यब्राह्मणायनिवेदयेत् मंत्रस्तु सुवर्णपायसामत्रंयस्मादेतत्त्रयीमयम् आपत्तेस्तारकंयस्मात्तद्ग्र

हाणद्विजोत्तम ससुद्रमेरुवलांपृथ्वींसप्तद्वीपसंयुताम् तत्फलंलभतेमर्त्यःकृत्वेदंदानमुत्तममिति इतिश्रीकमलाकर

इति निर्णयसिंधौ पौषमासः ॥ अथ माघस्नानम् ॥ तत्र विष्णुः ॥ तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ॥ हविष्यं ब्रह्मचर्यं च माघस्नाने महाफलमिति ॥ सोरंभः सउक्तः ब्राह्मे तु सावन उक्तः ॥ एकादश्यां शुक्लपक्षे पौषमासे समारभेत् ॥ द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनमिति ॥ पाद्मेपि ॥ पुष्यस्यैकादशीं शुक्लामारभ्य स्थंडिलेशयः ॥ मासमात्रं निराहारस्त्रिकालं स्नानमाचरेत् ॥ त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेंद्रियः ॥ माघस्यैकादशीं शुक्लां यावद्व्याधरोत्तमेति ॥ त्रिकालस्नानं मासोपवासविषये निराहार इत्युक्तेः ॥ पृथ्वीचंद्रोदये त्वन्यथोक्तम् ॥ विष्णुः ॥ दर्शे वा पौर्णमास्यां वा प्रारभ्य स्नानमाचरेत् ॥ पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकर इति ॥ अत्र दर्शमिति शुक्लादिमुख्यचांद्राभिप्रायेण ॥ अयं तु पक्षो नेदानीं प्रचरति ॥ अत्राधिकारिणो भविष्ये ॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थोथ भिक्षुकः ॥ बालवृद्धयुवानश्च नरनारीनपुंसकाः ॥ स्नात्वा माघे शुभे तीर्थे प्राप्नुवंतीप्सितं फलम् ॥ पाद्मे ॥ सर्वेधिकारिणो ह्यत्र विष्णुभक्तो यथा नृप ॥ ब्राह्मे ॥ उष्णोदकेन वा स्नानमशक्ये सति कुर्वते ॥ वृद्धेषु सर्वगात्रेषु उष्णोदं न विशिष्यते ॥ येष्वावाप्नुते गौडनिबंधे च स्कांदे ॥ पौष्यां तु समतीतायां यावद्भवति पूर्णिमा ॥ माघमासस्य तावद्धि पूजा विष्णोर्विधीयते ॥ पितॄणां देवतानां च मूलकं नैव दापयेत् ॥ ब्राह्मणो मूलकं भुक्त्वा चरेच्चांद्रायणं व्रतम् ॥ अन्यथा याति नरकं क्षत्रविट्शूद्र एव च ॥ वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम् ॥ यदा तु माघो मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वये स्नानं तन्नियमाश्च कार्याः ॥ मासोपवासचांद्रायणादि तु मलमास एव समापयेत् ॥ तदुक्तं दीपिकायाम् ॥ नियतत्रिंशद्दिनत्वाच्छुभे मास्यारभ्य समापयेत् मलिने मासोपवासव्रतमिति ॥ मासोपवासपदं चांद्रायणादेरुपलक्षणम् ॥ स्नानारंभे च मंत्रो विष्णुनोक्तः ॥ तत्र चोत्थाय नियमं गृण्हीयाद्विधिपूर्वकम् ॥ माघमासमिमं पूर्णं स्नास्येहं देव माधव तीर्थ

स्नास्यजलेनित्यमितिसंकल्प्यचेतसीति प्रत्यहंमंत्रश्चपाद्मे दुःखदारिद्र्यनाशायश्रीविष्णोस्तोषणायच प्रातःस्नानंकरो
म्यहमाघेपापविनाशनम् मकरस्थेरवौमाघेगोविंदाच्युतमाधव स्नानेनानेनमेदेवयथोक्तफलदोभव इमंमंत्रंसमुच्चा
र्यस्नायान्मौनसमन्वितइति प्रत्यहंसूर्यार्घ्यम् मंत्रस्तु पृथ्वीचंद्रोदयेपाद्मे सवित्रेप्रसवित्रेचपरंधामजलेमम त्वत्ते
जसापरिभ्रष्टंपापंयातुसहस्रधेति स्नानकालश्चसूर्योदयः त्रिस्थलीसेतौ मकरस्थेरवौयोहिनस्नायादभ्युदितेरवाविति
माघमासेरटंत्यापःकिंचिदभ्युदितेरवौवितिचपाद्मवचनात् संप्राप्तेमाघमासेतुतपस्विजनवल्लभे क्रोशंतिसर्ववारीणिसमु
द्यच्छतिभास्करे पुनीमःसर्वपापानित्रिविधानिनसंशयइतिनारदीयोक्तेः योमाघमास्युषसिसूर्यकराभितप्तेस्नानंस-
माचरतिचारुनदीप्रवाहे उद्धृत्यसप्तपुरुषान्पितृमातृवंश्यान्स्वर्गंप्रयात्यमरदेहधरोनरोसौ इतिभविष्योत्तरवचना
च्च ब्राह्मेत्वरुणोदयउक्तः अरुणोदयेतुसंप्राप्तेस्नानकालेविचक्षणः माधवांघ्रियुगंध्यायन्यःस्नातिसुरपूजितइति न
था अरुणोदयमारभ्यप्रातःकालावधिप्रभो माघस्नानवतांपुण्यंक्रमात्त्रयविधारणा उत्तमंतुसनक्षत्रंमध्यमंलुप्ततार
म् सवितर्युदितेभूपततोहीनंप्रकीर्तितमिति तेनाशक्त्यपेक्षयाव्यवस्था इदंचस्नानंप्रयागेतिप्रशस्तम् काश्यांशत
गुणंप्रोक्तंगंगायमुनसंगमे सहस्रगुणितासापिभवेत्पश्चिमवाहिनी पश्चिमाभिमुखीगंगाकालिंद्यासहसंगता हं
तिकल्पकृतंपापंसामाघेनृपदुर्लभेत्यादिपाद्मादिवचोभ्यः विस्तरस्तुपत्सितामहकृतप्रयागसेतौज्ञेयः ब्राह्मे यत्रकुत्रा
पियोमाघेप्रयागस्मरणान्वितः करोतिमज्जनंतीर्थेसलभेद्गांगमज्जनं तथासमुद्रेप्यतिप्रशस्तम् तदुक्तंपृथ्वीचंद्रोदये
प्रभासखंडे माघेमासिचयःस्नायान्नैरंतर्येणभावतः पौंडरीकफलंतस्यदिवसेदिवसेभवेत् माघस्नानंकाम्यमेवेतिभ

ट्टाः विधवादिवाक्येसदायश्यशब्दान्नित्यत्वावगनेर्नित्यकाम्यामितुयुक्तम् मासपर्यंतस्नानासंभवेतुत्र्यहमेकाहंवास्नाया
त् महामाघींपुरस्कृत्यसस्नोतत्रद्दिनत्रयमितिलिंगात् अस्मिन्योगेत्वशक्तोपिस्नायादपिदिनत्रयम् प्रयागेमाघमासेतुत्र्यहं
स्नानस्ययत्फलम् नाश्वमेधसहस्रेणतत्फलंलभतेभुवीतिपाद्मादिवचनात् अत्रमकरसंक्रमोरथसप्तमीमाघीतित्र्यहमि-
त्येके माघशुक्लदशम्यादीत्यन्ये मकाराद्यत्र्यहइत्यपरे माघमासाद्यत्र्यहइतिकेचित् त्रयोदश्यादीतिबहवः माहामाघींपुर
स्कृत्यसस्नोतत्रदिनत्रयमितिपाद्मोक्तेः एतस्यार्थवादत्वाद्यत्किंचिद्दिनत्रयमितिभट्टाः तत्तुसंदिग्धेषुवाक्यशेषादिति
न्यायात्त्रयोदश्याद्येवेति प्रयागंविनापिपाद्मे अस्मिन्योगेत्वशक्तोपिस्नायादपिदिनत्रयमिति माघस्नानेनियमास्तुना
रदीये नवह्निंसेवयेत्स्नातोह्यस्नातोपिवराननेहोमार्थंसेवयेद्वह्निंशीतार्थंनकदाचन अहन्यहनिदातव्यास्तिलाःशर्क
रयान्विताः त्रिभागस्तुतिलानांहिचतुर्थःशर्करान्वितः अनभ्यंगीचरारोहेसर्वंमासंनयेद्व्रती तथा अशक्तशरीरस्तुयः
कथंस्नानमाचरेत् पदेपदेश्वमेधस्यफलंप्राप्नोतिमानवः तथा शंखचक्रधरंदेवंमाधवंनामपूजयेत् वह्निंहुत्वाविधानेनतत
स्त्वेकाशनोभवेत् भूशय्याब्रह्मचर्येणशक्तःस्नानंसमाचरेत् अशक्तोब्रह्मचर्यादौस्वेच्छासर्वत्रकथ्यते तथा तिलस्नायीति
लोद्वर्तीतिलहोमीतिलोदकी तिलभुक्तिलदाताचषट्तिलाःपापनाशनाइति प्रयागासंभवेकाश्यांदशाश्वमेधोत्तरस्थप्रया
गतीर्थेस्नानमुक्तं काशीखंडे काश्यांद्वैप्रयागेयेनपासिस्नांतिमानवाः दशाश्वमेधजनितंफलंतेषांभवेद्ध्रुवमिति स्नानो-
त्तरंमदनपारिजातेविष्णुः काष्ठमौनान्नमस्कृत्यपूजयेत्पुरुषोत्तमम् अवश्यमेवकर्तव्यंमाघस्नानमितिश्रुतिः भविष्ये
तैलमामलकांश्चैवतीर्थेदेयास्तुनित्यशः ततःप्रज्वालयेद्वह्निंसेवनार्थंद्विजन्मनाम् एवंस्नानावसानेतुभोज्यंदेयमना

रितम् भोजयेद्द्विजदांपत्यं भूषयेद्वस्त्रभूषणैः कंबलाजिनरत्नानि वासांसि विविधानि च चोलकानि च देयानि प्रच्छादनपटा
स्तथा उपानहौ तथा गुप्तमोचकौ पापमोचकौ अनेनविधिनादद्यान्माधवः प्रीयतामिति पाद्मे भूमौशयीत होतव्यं माज्यंति
लसमन्वितम् तथा अन्नं चैव यथाशक्त्या देयं माघेन शाधिप सुवर्णरक्तिकामात्रं दद्याद्दिवसे तथा माघान्ते तु विशेषो नारदी
ये माघावसाने सुभगे षड्रसं भोजनं स्मृतम् सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरंजनः दंपत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते
त्रिंशन्तु मोदका देयाः शर्करातिलसंयुताइति अत्रैकादशीविधानेन व्रतस्योद्यापनं तथेति पाद्मवचनात् पूर्वेन्हि उपवासपूजना
दि कृत्वा परेन्हि तिलचर्वाज्यैरष्टोत्तरशतं होमं कृत्वा सवित्रे प्रसवित्रे चेति पूर्वोक्तमंत्रमुक्त्वा दिवाकर जगन्नाथ प्रभाकर नमोस्तु ते परि
पूर्णं कुरुष्वेहमाघस्नानमुपःपतेइतिसमापयेदिति संक्षेपः मकरसंक्रान्तौ हेमाद्रिमते परतः चत्वारिंशत् घटिकाः पुण्याः त्रिंश
त्कर्कटके नाड्यो मकरे तु दशाधिकाइति ब्रह्मवैवर्तात् माधवमते तु विंशतिः त्रिंशत्कर्कटके पूर्वा मकरे विंशतिः परेति वृद्धवसिष्ठो
क्तेः यदा तु सूर्यास्तात्पूर्वं संक्रान्तिर्भवति तदोभयमते पूर्वमेव पुण्यकालः रात्रौ तु प्रदोषे निशीथे वा मकरसंक्रमे माधवमते द्विती
यदिन एव पुण्यम् यद्यस्तमयवेलायां मकरं याति भास्करः प्रदोषे वार्धरात्रे वा स्नानं दानं परेहनीति वृद्धगार्ग्यवचनात् अ
स्तमयप्रदोषः प्रदोषे पूर्वरात्रे कार्मुकं तु परित्यज्य झषं संक्रमते रविः प्रदोषे वार्धरात्रे वा स्नानं दानं परेहनीति
भविष्योक्तेश्च तदाभोगः परेहनीति हेमाद्रौ पाठः कालादर्शनिर्णयामृतमदनपारिजातादयोप्येवमूचुः दा
क्षिणात्यास्त्वेतदेवाद्रियंते यत्तु हेमाद्रिणा घोवाशब्दो यथार्थे द्वितीयस्तथार्थे यथा प्रदोषे पूर्वेद्युस्तथार्धरात्रे परेन्ह्येवेत्युक्तं
तस्मै नमोस्तु तेन परेन्हि पुण्यं वक्तुं प्रदोष इति दिनद्वये पुण्यनिरासार्थं अर्धरात्रग्रहणम् हेमाद्रिस्मृत्यर्थसारानंतभट्ट

दिमतेतु निशीथात्पूर्वं पश्चाच्च संक्रांतौ पूर्वदिने परदिने वा पुण्यं धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा पूर्वापरविभागेन रात्रौ सं-
क्रमणं यदा दिनांते पंच नाड्यस्तु तदा पुण्यतमाः स्मृताः उदयेपि तथा पंच दैवे पित्र्ये च कर्मणीति स्कांदवचनात् पूर्वाऽपरविभागे-
नेति मकरकर्कविषयं पूर्वोक्तवचोविरोधादिति मदनरत्ने उक्तम् षडशीतिमुखे तीते अतीते चोत्तरायण इत्यादि विरोधाच्च तेन पू-
र्वैकवाक्यतयायमर्थः रात्रौ पूर्वभागे मकरसंक्रमे परेऽह्न्युदये पंच नाड्यः पुण्याः रात्रावपरभागे कर्कसंक्रमे पूर्वदिनांते पंच ना-
ड्य इति एवं सर्वेषामविरोधः मकरे सामान्येन परदिने पुण्यत्वेपि पुण्यातिशयार्थमिदम् यत्तु देवलयज्ञपार्श्वौ आसन्ने संक्र-
मं पुण्यं दिनार्धं स्नानदानयोः रात्रौ संक्रमणे भानोर्विषुवस्य थनोर्दिवेति अत्र माधवः अयने दिवा जाते नदर्धं पुण्यम् कर्के पूर्वं म
करे त्वपरम् एतन्मध्यंदिनायनपरमिति हेमाद्रिस्तु रात्रौ विषुवत्यासन्नादिनार्धं पुण्यम् अयने त्वासन्नादिनं पुण्यम् दिनेइतिपाठे
उभयत्रादिनार्धं पुण्यं इत्याह एतदेवोक्तं दीपिकायाम् अथायनमधः पश्चान्निशीथाद्वेघ घासन्नमहस्तदर्धमथवा पुण्य-
मिति तत्त्वंतु आसन्नसंक्रममित्यस्य विषुवत्येवान्वयः अयने रात्रौ सति दिने पुण्यम् कस्मिन्नित्यपेक्षायां कर्के पूर्वेऽह्नि मक
रे परेऽह्नि इति वाक्यांतरवशाद्वक्ष्ये उच्यमानेन कोपि विरोधः यत्त्वनंतभट्टः अथ संक्रमणं भानोर्निशीथात्प्राक् यदा भवेत्
अयनं विषुवं तत्र प्राग्दिनांतिमनाडिकाः पंच पुण्यतमाः पश्चान्निशीथाच्चेद्भवेत्तथा आद्याः परदिनस्यापि तद्वदित्येष निर्णय
इति अपरार्केप्येवम् अस्तंगते यदा सूर्ये झषं याति दिवाकरः प्रदोषे वार्धरात्रे वा तदा पुण्यं दिनद्वयमिति बोधायनवचना
द्दिनद्वयं वा पुण्यकालः तदा पुण्यं दिनांतरमिति मदनरत्ने पाठः गुर्जरप्राच्योदीच्यास्त्विदमेवाद्रियंते अत्रापि पूर्ववत् व्या
ख्येयम् तिथित्वादयोगोऽयं ग्रंथास्तु प्रदोषार्धरात्रभिन्ने रात्रेः पूर्वभागे पूर्वदिने परभागे च परदिने पुण्यमन्यसंक्रांतिवत्

विशिष्यतयोर्निर्देशात् प्रदोषश्च प्रदोषोस्तमयादूर्ध्वं घटिकाद्वयमिष्यते इति वत्सोक्त इत्याहुः तन्न अस्तंगत इति त्रितय
वेप्यर्थापत्तेः अतः प्रदोषपदेन तद्भिन्ने चरात्रिरुच्यते अत एव यावन्नोदयते रविरिति हृद्गार्ग्यादिभिर्दक्षिणायने पूर्वरा
त्रौसंक्रमे पूर्वदिनमुक्तम् वत्सोक्तिरध्ययनादिपरा इह तु त्रिमुहूर्त एव प्रदोषः मकरे दानविशेषो हेमाद्रौ स्कांदे धेनुं
तिलमयीं राजन् दद्याद्यश्चोत्तरायणे सर्वान्कामानवाप्नोति विंदते परमं सुखं विष्णुधर्मेपि उत्तरे त्वयने विप्र वस्त्रदानं
महाफलम् तिलपूर्णमनड्वाहं दत्वा रोगैः प्रमुच्यते इति शिवरहस्येपि तस्यां कृष्णतिलैः स्नानं कार्यं चोद्वर्तनं शुभैः ति-
लादेयाश्च विप्रेभ्यः सर्वदैवोत्तरायणे तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः कल्पतरौ कालिकापुराणे होमं तिलैः प्र
कुर्वीत सर्वदैवोत्तरायणे ताम्रयोदेवायविप्रेभ्यो हाटकेन समं ददेत् उत्तरायणमासाद्य नरः कस्मात्स शोचति तथा म-
करेरात्रावपि श्राद्धादि भवतीत्युक्तं प्राक् माघामायां योगविशेषो धर्मोदये प्रागेवोक्तः माघकृष्णचतुर्दश्यां यमतर्पणमुक्तं
हेमाद्रौ यमेन अनर्कास्तु दिते काले माघकृष्णचतुर्दशीम् स्नातः संतर्प्य तु यमं सर्वपापैः प्रमुच्यत इति माघशुक्लचतुर्थी ति-
लचतुर्थी सा प्रदोषव्यापिनी ग्राह्या माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणः येल्लांदुदेर्वापि धुंति तेव्यीः स्फरसरडुहामिति
शीरकंडान् माघमासे चतुर्थ्यां तु तस्मिन्काल उपोषितः अर्चयित्वा तु योदेवि जागरं तत्र कारयेदिति त्रिस्थलीसेतौ लैंगाच्च इय
मेव कुंदचतुर्थी सा प्रदोषव्यापिनी ग्राह्या माघशुक्लचतुर्थ्यां तु कुंदपुष्पैः सदाशिवम् संपूज्य यो हि तः काशीं संप्राप्नोति-
श्रियं नर इति कालादर्शे कौमोर्क्तेः माघशुक्लपंचमी श्रीपंचमी तदुक्तं हेमाद्रौ वाराहे माघशुक्लचतुर्थ्यां तु वरमारा
धः पंचम्यां कुंदकुसुमैः पूजां कुर्यात्समृद्धये इयं माधवमते पूर्वा हेमाद्रिमते परा चैत्रशुक्ले श्रीपंचमी दिवोदासः माघशुक्ल

सप्तमीरथसप्तमी साअरुणोदयव्यापिनीग्राह्या सूर्यग्रहणतुल्यातुशुक्लामाघस्यसप्तमी अरुणोदयवेलायांतस्यांस्नानंमहा
फलमितिचंद्रिकायांविष्णुवचनात् अरुणोदयवेलायांशुक्लामाघस्यसप्तमी प्रयागेयदिलभ्येतकोटिसूर्यग्रहैःसमेतिवचना
च्च यत्तुदिवोदासीये अचलासप्तमीदुर्गाशिवरात्रिर्महाभरः द्वादशीवत्सपूजायांसुखदाप्राग्युतासदेतिषष्ठीयुतत्वमुक्तम्
तद्यदापूर्वेद्युर्घटिकाद्वयंषष्ठीसप्तमीचपरेद्युःक्षयवशादरुणोदयात्पूर्वंसमाप्यतेतत्परंज्ञेयम् तत्रषष्ठ्यांसप्तमीक्षयेप्र-
वेश्याअरुणोदयेस्नानंकार्यम् मदनरत्नेभविष्योत्तरे माघेमासिसितेपक्षेसप्तमीकोटिभास्करः कुर्यात्स्नानार्घ्यदानाभ्यामा
युरारोग्यसंपदः अत्रविधिर्भविष्ये कृत्वापष्ठ्यामेकभक्तंसप्तम्यांनिश्चलंजलम् रात्र्यंतेचालयेत्वास्वंदत्त्वाशिरसिदीपकम्
तथाजलेप्रकम्प्य नकेनचाल्यतेयावत्तावत्स्नानंसमाचरेत् सौवर्णेराजतेपात्रेभक्त्यालाबुमयेथवा तैलेनवर्तिदीप्तव्याम
हारजनरंजिता महारजनंकुसुंभम् समाहितमनाभूत्वादत्त्वाशिरसिदीपकम् भास्करंहृदयेध्यात्वाइमंमंत्रमुदीरयेत्
नमस्तेरुद्ररूपायरसानांपतयेनमः वरुणायनमस्तेस्तुहरिवासनमोस्तुते जलेपरिहरेद्दीपंध्यात्वासंतर्प्यदेवताइति चंद
नेनालिखेत्सप्तमष्टपत्रंसकर्णिकम् मध्येशिवंसपत्नीकंप्रणवेनचसंयुतम् पूर्वादिदलेषु रविभानुविवस्वद्भास्करसवितृअर्क
सहस्रकिरणसर्वात्मकान्संपूज्यगृहंगच्छेदिति स्नानमंत्रश्चकाशीखंडे यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु तन्मेरोगंच
शोकंचमाकरीहंतुसप्तमी एतज्जन्मकृतंपापंयच्चजन्मांतरार्जितम् मनोवाक्कायजंयच्चज्ञाताज्ञातेचयेपुनः इतिसप्तविध
पापंस्नानान्मेसप्तसप्तिके सप्तव्याधिसमायुक्तंहरमाकरिसप्तमी एतन्मंत्रत्रयंजप्त्वास्नात्वापादोदकेनरः केशवादित्यमा
लोक्यक्षणान्निःकलुषोभवेत् दिवोदासीयेमदनरत्नेच इक्षुदंडेनजलंचालयित्वासप्तार्कपत्राणिबदरीपत्राणिचशिर-

सन्निधाय पूर्वोक्तैर्मंत्रैः स्नात्वा तिलपिष्टमयाः पूपैर्हैमं सूर्यं संपूज्य विप्राय दद्यात् अर्घ्यमंत्रो मदनरत्ने सप्तसप्तिवहप्रीत स-
प्तलोकप्रदीपन सप्तमीसहितो देव गृहाणार्घ्यं दिवाकर ततः जननी सर्वलोकानां सप्तमी सप्तसप्तिके सप्तव्याहृतिके देवि
नमस्ते सूर्यमंडल इति प्रार्थयेत् सौरागमे अर्कपत्रैः सबदरैर्दूर्वाक्षतसचंदनैः अष्टांगविधिनार्घ्यं दद्यादादित्यतुष्टये
अन्नदानविशेषो मदनरत्ने भविष्ये ताम्रपात्रे यथाशक्त्या मृन्मये वाथ भक्तिमान् स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा कां-
चनं तालकं कृत्वा अशक्तस्तिलपिष्टजम् संछाद्य रक्तवस्त्रेण पुष्पैर्धूपैस्तथार्चयेत् दानमंत्रस्तु आदित्यस्य प्रसादेन प्रातःस्ना-
नफलेन च दुष्टदौर्भाग्यदुःखघ्नं मया दत्तं तु तालकम् तालकं कर्णाभरणमिति तत्रैवोक्तम् दीपपात्रमिति हेमाद्रौ तत्रैव-
भविष्योत्तरे एवंविधं रथवरं रथवाजियुक्तं हैमं च हेमशतदीधितिना समेतम् दद्याच्च माघसितसप्तमिवासरे यः सोसंगव
क्रगतिरेव महीं भुनक्ति इयं मन्वादिरपि इयं च शुक्लपक्षस्थत्वात्सौर्वाणिहकी ग्राह्या यदा माघो मलमासो भवति तदा मासद्व-
ये मन्वादिश्राद्धं कुर्यात् मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेपि चेति स्मृतिचंद्रिकोक्तेः माघशुक्लाष्टमी भीष्माष्टमी तदुक्तं
हेमाद्रौ पाद्मे माघमासि सिताष्टम्यां सतिलं भीष्मतर्पणम् श्राद्धं च ये नराः कुर्युस्ते स्युः संततिभागिन इति भारतेपि शुक्ला-
ष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् संवत्सरकृतं पापं तत्क्षणादेव नश्यतीति धवलनिबंधे स्मृतिः अष्टम्यां तु सितपक्षे-
भीष्माय तु तिलोदकम् अन्नं च विधिवद्दद्युः सर्वे वर्णा द्विजातयः सर्ववर्णा इति द्विजातय इति संबोधनम् तर्पणमंत्रस्तत्रैव वै-
याघ्रपद्यगोत्राय सांकृत्यप्रवराय च
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे वसूनामवताराय शंतनोरात्मजाय च अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे

इति एतज्जीवत्पितृकस्यापि भवति जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोरिति पृथ्वीचंद्रोदये जीवत्पितृकनिर्णये पितृचरणैरुक्तम् एतच्चापसव्येन कार्यमिति दिवोदासीये अत्र श्राद्धकाम्यं तर्पणं च नित्यम् ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् संवत्सरकृतं तेषां पुण्यं नश्यति सत्तमेति मदनरत्ने वचनात् माघशुक्लद्वादशी भीष्मद्वादशी त्वया कृतमिदं वीर तव नाम्ना भविष्यति सभीष्मद्वादशीत्येषा सर्वपापहरा शुभेति हेमाद्रौ पाद्मवचनात् इयं पूर्वयुता युग्मवाक्यात् माघीपूर्णिमा परेत्युक्तं प्राक् तथा हेमाद्रौ ब्राह्मे माघस्य योऽश्वजीवे द्रोणं महामाघीति कथ्यते तत्रैव ज्योतिषे मेषस्थे तथा सौरिः सिंहे च गुरुचंद्रमाः भास्करः श्रवणर्क्षे च महामाघी निसा स्मृता तथा भविष्ये वैशाखी कार्तिकी माघी तिथयोतीवपूजिताः स्नानदानविहीना स्ता ननेयाः पांडुनंदन तथा तिलपात्राणि देयानि कंचुकाः कंबलास्तथेति माघपूर्णिमानंतराष्टमी माघी अष्टका तन्निर्णयः पूर्वेद्युरन्वष्टकानिर्णयश्च पूर्वमुक्तः मलमासे चैता न भवंतीत्येतत्सर्वं मार्गशीर्षप्रकरणेऽभिहितम् तथा च तसृष्वष्टकास्वशक्तानेपाऽऽवश्यकी हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वेत्याश्वलायनोक्तेः तथा माघाष्टकां प्रक्रम्य तामेकाष्टकेत्याचक्षत इत्यापस्तंबवचनाच्चेत्यादि प्रयोगपारिजाते ज्ञेयम् इति श्रीकमलाकरभट्टकृते निर्णयसिंधौ द्वितीयपरिच्छेदे माघमासः कुंभे षोडश घटिकाः पुण्याः शेषं प्राग्वत् फाल्गुनकृष्णाष्टम्यां विशेषः कल्पतरौ फाल्गुनस्य च मासस्य कृष्णाष्टम्यां महीपते इत्युपक्रम्य जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी उपोषितोऽत्र नृपतिः सम्युदस्य न दैन्यदा रामपत्नीं च संपूज्य सीतां जनकनंदिनीमिति फाल्गुनकृष्णचतुर्दशी शिवरात्रिः सा च केषुचिद्वचनेषु प्रदोषव्यापिनी ग्राह्येत्युक्तम् केषुचिन्निशीथव्यापिनी तत्राद्या माधवी

ये त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् स्मृत्यंतरेपि प्रदोषव्यापिनी ग्राह्या शिवरात्रिच-
तुर्दशी रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् अत्र प्रदोषो रात्रेः उत्तरार्धे तस्या हेतुत्वोक्तेः कामिकेपि आदित्यास्तमये का-
ले अस्ति चेद्या चतुर्दशी तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमेति द्वितीयापि तत्रैव नारदसंहितायाम् अर्धरात्रयु-
ता यत्र माघकृष्णा चतुर्दशी शिवरात्रिव्रतं तत्र सोश्वमेधफलं लभेत् स्मृत्यंतरेपि भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथेति ईशानसंहितायाम् माघकृष्णचतुर्दश्यामादिदेवो महानिशि शिवलिंगतयोद्भूतः
कोटिसूर्यसमप्रभः तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिरिति अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी तत्तिथावे-
व कुर्वीत शिवरात्रिव्रतं व्रती नार्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी नैव तत्र व्रतं कुर्यादायुरैश्वर्यहानितः अर्धरात्रश्च
द्वितीययामांत्यतृतीययामाद्यघटीद्वयरूप इति माधवः वचनं तूक्तं प्राक् एवं सति पूर्वेद्युरेवोभयव्याप्तौ पूर्वैव त्रयोद-
शी यदा देवि दिनभुक्तिप्रमाणतः जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशीति स्कांदोक्तेः दिनभुक्तिरस्तमयः जयंती शि-
वरात्रिश्च कार्ये भद्राजयान्वित इति स्कांदाच्च दिनद्वये निशीथव्याप्तौ तु हेमाद्रिमते पूर्वा अर्धरात्रात्पुरस्ताच्चेज्ज-
या यदा भवेत् पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैरिति पाद्मवचनात् मदनरत्नेप्येवम् गौडा अप्येवमाहुः नि-
र्णयामृते तु सर्वापि शिवरात्रिः प्रदोषव्यापिन्येव अर्धरात्रवाक्यानि कैमुतिकन्यायेन प्रदोषस्तावकानीत्युक्तम् तन्न
अर्धरात्रस्य पूर्वकर्मकालत्वोक्तेः परदिने प्रदोषनिशीथोभयव्याप्तिसत्त्वात्परैवेति तु माधवः इदमेव च युक्तं प्रतीमः परे-
द्युः प्रदोषार्धरात्रस्यैकदेशव्याप्तौ पूर्वेद्युः संपूर्णतद्व्याप्तौ च सत्यपि परेद्युः प्रदोषनिशीथोभययोगे पूर्वेद्युः संपूर्णव्याप्तेः

पूर्वैव व्याप्यार्धरात्रंयस्यांतुलभ्यतेयाचतुर्दशी तस्यामेव व्रतंकार्यंमत्प्रसादार्थिभिर्नरैः तदूर्ध्वाधोनिता भूता साकार्या
व्रतिभिःसदेतिमाधवधृतेशानसंहितोक्तेः पूर्वेद्युर्निशीथस्यपरेद्युःप्रदोषस्येत्येकैकव्याप्तौतुपूर्वैव जयायोगस्यप्राश
स्त्यात् तच्चोक्तंनागरखंडे माघफाल्गुनयोर्मध्येअसितायाचतुर्दशी अनंगेनसमायुक्ताकर्तव्यासासदातिथिरिति
पाद्मेपि अर्धरात्रात्परस्ताच्चेज्जयायोगोयदाभवेत् पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रियैरिति स्कांदेपि भवेद्यत्र
त्रयोदश्यांभूतव्याप्तामहानिशा शिवरात्रिव्रतंतत्रकुर्याज्जागरणंतथेति महतामपिपापानांदृष्टावैनिष्कृतिःपरा न-
हिशाकुर्वतांपुंसांकुहूयुक्तांतिथिंशिवामिति स्कांदेदर्शयोगस्यनिंदितत्वाच्च यदाचतुर्दशीपूर्वेद्युर्निशीथादूर्ध्वंप्रवृत्तापि
रेद्युश्चनिशीथादर्वागेवसमाप्तातदापरेद्युरेकव्याप्तिसत्वात्परैव माघासितेभूतदिनंहिराजन्नुपैतियोगंयदिपंचदश्या
जयाप्रयुक्तानतुजातुकुर्याच्छिवस्यरात्रिंप्रियकृच्छिवस्येतिवचनात् एवंदिनद्वयेप्रदोषव्याप्त्यभावेनिशीथव्या
प्तिसत्वात्पूर्वैव तेनदिनद्वयेनिशीथव्याप्तौप्रदोषव्याप्त्यानिर्णयः दिनद्वयेप्रदोषव्याप्तौनिशीथेननिर्णयः
एकैकव्याप्तौतुनिशीथेननिर्णयइति इयंचरविभौमसोमवारेषुशिवयोगेचातिप्रशस्ता हेमाद्रौतीर्थ
खंडेलैंगे फाल्गुनस्यचतुर्दश्यांकृष्णपक्षेसमाहिताः कृत्तिवासेश्वरंलिंगमर्चयंतिशिवंशुभे तेयांतिपरमंस्थानं
सदाशिवमनामयम् शिवरात्रिपारणेतुविरुद्धवाक्यानिदृश्यंते स्कांदे कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिचतुर्दशी ए-
ताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेत् जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच पूर्वविद्धैवकर्तव्यातिथिभांतेचपार
णमितितिथिमध्येपिपारणंस्कांदेउक्तम् उपोषणंचतुर्दश्यांचतुर्दश्यांतुपारणम् कृतैःसुकृतलक्षैश्चलभ्यतेवाथवानवा

ब्रह्मांडोदरमध्येतु यानितीर्थानिसंतिवै संस्नातानिभवंतीह भूताद्यांपारणेकृते तिथीनामेवसर्वासामुपवासव्रतादि
षु तिथ्यंतेपारणंकुर्याद्विनाशिवचतुर्दशीमिति अत्रयामत्रयादर्वाक् चतुर्दशीसमाप्तौ तदंतेन दूर्ध्वगामिन्यांतुप्रा
थिमध्यएवेतिहेमाद्रिमाधवादयोव्यवस्थामाहुः तन्न तिथ्यंतेतिथिभांतेवापारणंयत्रचोदितम् यामत्रयोर्ध्वगामि
न्यांप्रातरेवहिपारणेत्यादिसामान्यवचनैरेवव्यवस्थासिद्धेरुभयविधवाक्यवैयर्थ्यापत्तेः वयंतुतिथ्यंतेपारणंभ
वेदितिकृष्णाष्टम्यादिविषयमेव नतुशिवरात्रिविषयम् तदुपादानंतुपूर्वश्रुतत्वमात्रकथनार्थम् कथमन्यथास्कांदे
यशून्यस्तद्देवैर्वाक्यैर्वातिथिमध्येपारणाविधानंघटते तस्माद्विनाशिवचतुर्दशीमितिपर्युदस्तत्वाच्छिवरात्र्याःसर्वप्रका
रेषुतिथिमध्यएवपारणेतिब्रूमः शिष्टाचारोप्येवमेव दीपिकायांतुरात्रावपितिथ्यंतएवोक्तम् व्रतान्तिथेरंतेनिशीथेपि
वाश्नीयादिति मदनरत्नकालादर्शयोस्तु सार्धसप्तमयपर्यंतंव्यापनाच्चेत्परेहनि दिवैवपारणंकुर्यात्पारणेनैवदोषभा
गित्युक्तम् तन्न तिथिमध्येपारणविधानान्निषिद्धफलायोगाच्चतिथ्यंतानपेक्षणात् दोषाप्रसक्त्याचतुर्थपादासंगतेः
तेनेदंशिवरात्रिभिन्नव्रतपरंज्ञेयम् इदंचव्रतंसंयोगपृथक्त्वन्यायेननित्यंकाम्यंच तथाचमाधवीयेस्कांदे परात्परतरं
नास्तिशिवरात्रिःपरात्परम् नपूजयतिभक्त्येशंरुद्रंत्रिभुवनेश्वरम् जंतुर्जन्मसहस्रेषुभ्रमतेनात्रसंशयइत्यकरणेप्र
त्यवायश्रवणात् वर्षेवर्षेमहादेविनरोनारीपतिव्रता शिवरात्रौमहादेवंनित्यंभक्त्याप्रपूजयेदितिवीप्साश्रुतेः अर्णवो
यद्वाशक्त्येनलक्ष्यतेहिसर्वानपि चलंत्येतेकदाचिद्धिनिश्चलंहिशिवव्रतमितिवचनाच्चनित्यता ममभक्तस्तुयोदेवि
शिवरात्रिमुपोषकः गणत्वमक्षयंदिव्यमक्षयंशिवशासनम् सर्वान्भुक्त्वामहाभोगांस्ततोमोक्षमवाप्नुयादितिस्कांदा

त् द्वादशाब्दादिकमेतस्याश्चतुर्विंशाब्दिकं तु वेति तत्रैवेशानसंहितावचनात् काम्यता तत्रैव शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् आचंडालमनुष्याणां भुक्तिमुक्तिप्रदायकम् अत्र जागरोपवासपूजाः समुदिताः व्रतं न तु प्रत्येकम् समुदितानां फलसंबंधात् यत्तु अथवा शिवरात्रिं च पूजाजागरणैर्नयेत् तथा अखंडितव्रतो यो हि शिवरात्रिमुपोषयेत् सर्वान्कामानवाप्नोति शिवेन सह मोदते कश्चित्पुण्यविशेषेण व्रतहीनोपि यः पुमान् जागरं कुरुते तत्र स रुद्रसमतां व्रजेदित्यादि स्कांदं तत्तु कल्प्यत्वादशक्तपरम् साधेतरप्रतिमासशिवरात्रिस्तु शिवरात्रिशब्दस्य माघकृष्णचतुर्दश्यामेव रूढत्वान्माघमासस्य शेषे या प्रथमा फाल्गुनस्य च कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्तितेति हेमाद्रौ वचनाच्च नायं निर्णयस्तत्रेति रात्रौ यामचतुष्टये पूजाविधानाद्यस्मिन् दिने अधिकरात्रिव्याप्तिः साग्राह्या साम्ये तु पूर्वैवेति हेमाद्रिरूचिवान् वस्तुतस्तु प्रतिमासकृष्णचतुर्दश्यामपि सर्वकामप्रदं कृष्णचतुर्दश्यां शिवव्रतमित्युपक्रम्य चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभमिति हेमाद्रौ कालोत्तरे शिवरात्रिशब्दप्रयोगात् कौंडपायिनामयनाग्निहोत्रे नैत्यकाग्निहोत्रधर्मा इव तद्धर्मप्राप्तिः स्यादेव अतः प्रदोषनिशीथोभयव्याप्त्यैव निर्णय इति वयं प्रतीमः अस्यारंभो हेमाद्रौ स्कांदे आदौ मार्गशिरे मासि दीपोत्सवदिनेपि वा गृहीयान्माघमासे वा द्वादशैवमुपोषयेत् तथा दीपोत्सवे तथा माघे कृष्णायां तु चतुर्दशी द्वादशस्वपि मासेषु प्रकुर्यादिह जागरम् एवं द्वादशवर्षेषु द्वादशैव तपोधनान् वरयेदिति शेषः चतुर्दशाथवा विप्रान् आचार्यं च वृत्वा कुंभोपरि न्यसेद्देवमुमया सहितं शिवम् सौवर्णं व्यथवा रौप्ये वृषभे संस्थितं शुभमित्युक्तम् हैमीं मूर्तिं संपूज्य स्थिरं चरं वा लिंगं पंचामृतसहस्रशतपंचाशत्तदर्धान्यतर कुंभैः संस्नाप्य संपूज्य जागरं कृत्वा परे द्युस्तिलान्सहस्रं शतं वा हुत्वा विप्रेभ्यो वस्त्राणि द्वादश गाश्च दत्वा

च्चार्पयधेनुंशय्यांचदत्वाविप्रान्भोजयेदितिमदनरत्नेउक्तम् माघामावास्यायुगादिः तदुक्तम् माघमासेत्वमावास्येति अ
न्यत्प्राग्वत् तथान्योपिविशेषोविष्णुपुराणे माघासितेपंचदशीकदाचिदुपैतियोगंयदिवारुणेन ऋक्षेणकालःसपरःपि-
तॄणांनह्यल्पपुण्यैर्नृपलभ्यतेसौ चिति वारुणंशतभिषक् इदंचकुंभादित्येज्ञेयमितिहेमाद्रिः भारते कालेधनिष्ठाय-
दिनामनस्मिन्भवेत्तुभूपालतदापितृभ्यः दत्तंतिलान्नंप्रददातितृप्तिंवर्षायुतंतत्कुलजैर्मनुष्यैरिति फाल्गुनपौर्णमा-
सीहोलिका साचसायान्हव्यापिनीग्राह्या सायान्हेहोलिकांकुर्यात्पूर्वाण्हेक्रीडनंगवामितिवचनादितिनिर्णयामृतेउक्त
म् ज्योतिर्निबंधेतु प्रतिपद्भूतभद्रासुयार्चिताहोलिकादिवा संवत्सरंचतद्राष्ट्रंपुरंदहतिसाद्भुतम् प्रदोषव्यापिनीग्रा-
ह्यापौर्णिमाफाल्गुनीसदा तस्यांभद्रामुखंत्यक्त्वापूज्याहोलानिशामुखइतिनारदवचनात्प्रदोषव्यापिनीत्युक्तम् हेमा-
द्रौमदनरत्नेचभविष्ये अस्यांनिशागमेपार्थसंरक्ष्याःशिशवोगृहे गोमयेनोपलिप्तेचसचतुष्केगृहांगणइत्यादिनात
त्रैवतद्विधानाच्च तेनेयंपूर्वविद्धा श्रावणीदुर्गानवमीदूर्वाचैवहुताशनी पूर्वविद्धैवकर्तव्याशिवरात्रिर्बलेर्दिनमिति
बृहद्यमब्रह्मवैवर्तोक्तेश्च दिनद्वयेप्रदोषव्याप्तौपरैव पूर्वदिनेभद्रासत्वात्तत्रचहोलिकानिषेधात् तदुक्तंनिर्णया
मृतेमदनरत्नेचपुराणसमुच्चये भद्रायांदीपिताहोलीराष्ट्रभंगंकरोतिवै नगरस्यचनैवेष्टा तस्मात्तांपरिवर्जयेत्
तथा भद्रायांद्वेनकर्तव्ये श्रावणीफाल्गुनीतथा श्रावणीनृपतिंहंतिग्रामंदहतिफाल्गुनी तथा दिना
र्धात्परतोपिस्यात्फाल्गुनीपौर्णिमायदि रात्रौभद्रावसानेतुहोलिकादीप्यतेतदेति यदातुपूर्वदिनेचतुर्दशीप्रदोष-
व्यापिनीपरदिनेचक्षयवशात्सायान्हात्प्रागेवपूर्णिमासमाप्यतेतदापूर्वदिनेसंपूर्णरात्रौभद्रासत्वात्तत्रचतन्निषे

धात्परेह्नि प्रतिपद्येवकुर्यात् सार्धयामत्रयंवास्याद्द्वितीयदिवसेयदा प्रतिपद्वर्धमानातुतदासाहोलिकास्मृतेतिभविष्यवच
नादितिनिर्णयामृतकारः मदनरत्नेप्येवम् यत्तुवन्हौवन्हिंपरित्यजेदितिभविष्यम् वन्हौहोलिकायां वन्हिंप्रतिपदंवर्जये
दित्यर्थः तदुक्तंभिन्नविषयमितितत्रैवोक्तम् अन्येतुतस्यांभद्रामुखंत्यक्त्वेत्यर्थःप्रदोषव्यापिनीचेत्स्याद्यदापूर्वदिनेत
था भद्रामुखंवर्जयित्वाहोलिकायाःप्रदीपनमितिनारदवचनात् निशागमेप्रपूज्येतहोलिकासर्वदाबुधैः नदिवापूज
येढुंढांपूजिताटुःखदाभवेदिति दिवोदासीयेवचनात् यामत्रयोर्ध्वयुक्ताचेत्प्रतिपत्तुभवेत्तिथिः भद्रामुखंपरित्यज्य
कार्याहोलामनीषिभिरितिविद्याविनोदेभिधानाच्च भद्रामुखंविहायपूर्वदिनएवकार्येत्याहुः भद्रामुखंतुनाड्यस्तु-
पंचवदनंगलकस्तथैकेतिरत्नमालोक्तंज्ञेयम् शिष्टाचारोप्येवमेव अत्रचेच्चन्द्रग्रहणंतदानंतोर्ध्वाङ्गिशिभद्रावर्ज-
पौर्णमास्यांहोलिकादीपनम् अथपरेन्हिग्रस्तोदयस्तदापूर्वदिनेभद्रावर्ज्यंरात्रौचतुर्थयामेविधिपूर्वकुर्याद्धोलिकाका
र्यं ग्रहोत्तरं प्रतिपत्त्वात्तत्पूर्वंचादिवाहोलानिषेधादितिदिवोदासचंद्रप्रकाशौ वस्तुतस्तु परदिनेप्रदोषेपौर्णमा
सीसत्वेकर्मकालस्पर्शेचतुर्थयामादिगौणकालग्रहणेमानाभावाद्भद्राभावाच्चग्रहणकालएवहोलाकार्या नचसर्वे-
षामेववर्णानांसूतकंराहुदर्शने स्नात्वाकर्माणिकुर्वीतश्रृतमन्नंविवर्जयेदितिनिषेधात्कथंसूतकेहोलेतिवाच्यम् त
स्योत्तरार्धशेषत्वात् पूजामन्त्रस्तु असृक्पाभयसंत्रस्तैःकृतात्वंहोलिबालिशैः अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभवेति यत्तुवा
र्तिककारेहोलिकाआचारप्राप्तेत्युक्तम् तत्रहेमाद्र्याद्युदाहृतभविष्यवचनान्यसिद्धानिकृत्वाचिंताज्ञेया आर्त्यधिकरणव-
त् हुताशिनीमलमासेनभवति इयंमन्वादिरपि सातुपौर्णमासीहेकीयात्या मलमासेसतिमन्वादिश्राद्धंमासद्वयेकार्यं

फाल्गुन्यांसंयतोभूत्वागोविंदस्यपुरंव्र
पित्फलंभाक् कृत्यांनिनामपौत्राहो नरोदोलागतंदृष्ट्वागोविंदंपुरुषोत्तमम् फाल्गुन्यांसंयतोभूत्वागोविंदस्यपुरंव्र
जेत् चैत्रकृष्णप्रतिपदिवसंतोत्सवः साचोदयिकीग्राह्या प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवावितिभविष्योक्तेः दिन
द्वयेतथात्वेपूर्वा वत्सरादौवसंतादौबलिराज्येतथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैरितिवृद्धवसिष्ठवचना
त् अत्रविशेषोहेमाद्रौभविष्ये चैत्रेमासिमहाबाहोपुण्येतुप्रतिपद्दिने यस्तुश्वपचंस्पृष्ट्वास्नानंकुर्यान्नरोत्तमः
नतस्यदुरितंकिंचिन्नाधयोव्याधयोनृपेति तथा प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ कृत्वाचावश्यकार्याणिसंतर्प्य
पितृदेवताः वंदयेद्धोलिकाभूतिंसर्वदुःखोपशांतये मंत्रश्च वंदितासिसुरेंद्रेणब्रह्मणाशंकरेणच अतस्त्वंपाहिनो
देविभूतेभूतिप्रदाभवेति अत्रचूतकुसुमप्राशनमुक्तंतत्रैवपुराणसमुच्चये वृत्तेतुषारसमयेसितपंचदश्यांप्रातर्वसंत
समयेसमुपस्थितेच संप्राश्यचूतकुसुमंसहचंदनेनसत्यंहिपार्थपुरुषोथसमाःसुखीस्यात् मंत्रस्तु चूतमग्र्यंवसंत
स्यमाकंदकुसुमंतव सचंदनंपिबाम्यद्यसर्वकामार्थसिद्धयइति चैत्रामावास्यामन्वादिः साचापराह्णव्यापिनीग्राह्या
कृष्णपक्षस्थत्वात् इतिफाल्गुनमासःसमाप्तः एवंनिरूपितमिदंगहनंतुकालतत्त्वंविचार्यवचनेभ्यनयेभ्यसम्यक् तद्दो
षदृष्टिमपहायविवेचनीयंविद्वद्भिरित्यविरतंप्रणतोस्मितेषु १ मयासहायसहायदिदृगदितंमंदमतिनाकिमेतच्छक्यंया
ध्यवसितुमपिस्वस्यमतिना तदेवंयत्किंचिद्गदितमिहविख्यातमहिमाप्रतापोयंसर्वोविकसतिगुरुपित्रोश्चरणयोः २ यो
भट्टतंत्रगहनार्णवकर्णधारःशास्त्रांतरेषुनिखिलेष्वपिमर्मभेत्ता योत्रश्रमःकिलकृतःकमलाकरेणप्रीतोस्तुतेनसकृ
तीबुधरामकृष्णः ३ इतिश्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टसूनुदिनकरभट्टानुजभट्टकमलाकरकृतेनिर्णय

सिंधौ संवत्सरकृत्यनिरूपणं नाम द्वितीयपरिच्छेदः समाप्तः शोधितोयं परिच्छेदो द्वितीयस्तु यथामति भालचंद्रेणसा
हाय्याद्विदुषां हि प्रयत्नतः १ तत्राप्यशुद्धं कुत्रापि दृष्टं चेद्दृष्टिलोपतः ज्ञात्वा क्षंतव्यमित्यस्त्रां प्रार्थये विदुषोन्वहम् २ श
के १७७९ पिंगलनामाब्दे आश्विनवद्यचतुर्दश्यां समाप्तः विठ्ठलसखाराम अग्निहोत्रीयांचे छापखान्यांत छापिलें.

इतिनिर्णयसिंधौद्वितीयपरिच्छेदः समाप्तः

अथनिर्णयसिंधोस्तृतीयपरिच्छेदेश्राद्धप्रकरणंप्रारभ्यते। श्रीः

श्रीगणेशायनमः अथश्राद्धनिर्णयः नानानिबंधचेमत्यभ्रांतचित्तोद्दिधीर्षया कमलाकरसंज्ञेनक्रियतेश्राद्धनिर्णयः न
त्स्वरूपमाह पृथ्वीचंद्रोदयेमरीचिः प्रेतंपितॄंश्चनिर्दिश्यभोज्यंयत्प्रियमात्मनः श्रद्धयादीयतेयत्रतच्छ्राद्धंपरिकीर्तितम् श्रा
ह्मणस्वीकारांतश्चतुर्थ्यंतपदोपनीतपित्राद्युद्देश्यकस्त्यागःश्राद्धमित्यर्थः तत्रयद्यपिहोमपिंडभोजनानिप्रधानमितिहेमा-
द्रिः होमश्चपिंडदानंचतथाब्राह्मणभोजनम् श्राद्धशब्दाभिधेयंस्यादेकस्मिन्नौपचारिकमिति श्रीधरश्च तथापिकल्पत
रुपंचक्ष्यामः निमित्तभेदेभोजनस्यपिंडानांचनिषेधोनप्राधान्यंविरुणद्धि असोमयाजिनोदधिपयोयागवत् यच्चशूलपा
णिः नित्यश्राद्धमदैवंस्यादर्घ्यपिंडविवर्जितमिति हारीतीयेनित्यश्राद्धेमघादौपिंडनिषेधोस्तिनचप्राप्तिंविनासः नचाति
देशांविनाप्राप्तिः नचांगत्वेनापिप्रातिदेशः प्रधानस्यानतिदेशात् सप्तमेउपकारकत्वेनातिदेशोक्तेः तेनभोजनंप्रधानंपिंडो-
गं पिंडदानमात्रविधिस्त्वंगभूतात्कर्मांतरमेवप्रकरणांतरन्यायादिति तन्न जातश्राद्धेनदद्यात्तुपक्वान्नंब्राह्मणेष्वपि नपक्वं
भोजयेद्विप्रान्सच्छूद्रोपिकदाचनेत्यादौ जातश्राद्धशूद्रश्राद्धादौभोजनस्यनिषेधेनांगत्वापत्तेः नतोपशोकरोतीतिवदुप
नीव्यविरोधेनविकल्पापत्तेश्च तेनश्राद्धशब्दाभिधेयत्वेनोभयप्राप्तौनिषेधः पर्युदासोवादीक्षितोनददातिनजुहोतिनासो-
मयाजीसन्नयेदितिवत् इतितत्वं धर्मप्रदीपेपि यजुषांपिंडदानंतुबह्वृचानांद्विजार्चनम् श्राद्धशब्दाभिधेयंस्यादुभयं
सामवेदिनां नचपितॄन्यजेतपितृभ्योदद्यादित्युभयप्रयोगदर्शनाद्यागदानोभयात्मकम् पितरोदेवताइतिपित्रुद्देश्यक
त्वाद्यागत्वंविप्रापेक्षयाचदानत्वमित्यविरुद्धम् एतेननायंयागः देवतोद्देशेनत्यागोयागः यागोद्देश्याचदेवतेत्यात्माश्रया
दितिगौडमतमपास्तम् चैधशब्दविशेषोद्देश्यत्वस्यतस्येदमितिस्वत्वारोपप्रतियोगित्वस्यवादेवतात्वात् तत्रैवस्कमंत्रः

श्राद्धात्परतरं नान्यत् श्रेयस्करमुदाहृतम् आदित्यपुराणे नसंतिपितरश्चेतिकृत्वामनसियोनरः श्राद्धं न कुरुते तत्र तस्य रक्तं
पिबंतिते तद्भेदानाह विश्वामित्रः नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिंडनम् पार्वणं चेतिविज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टकम्
कर्मांगं नवमं प्रोक्तं दैविकं दशमं स्मृतम् यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतमिति एषां लक्षणानि भविष्ये अहन्यहनि
यच्छ्राद्धं तन्नित्यमिति कीर्तितम् वैश्वदेवविहीनं तदशक्तावुदकेन तु एकोद्दिष्टं तु यत् श्राद्धं तन्नैमित्तिकमुच्यते तदप्यदैवं क-
र्तव्यमयुग्मान् भोजयेद्द्विजान् कामाय विहितं काम्यमभिप्रेतार्थसिद्धये वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते गंधोदक
तिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिंडनम् नित्येन तु-
ल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि एतदुभयमेव स्त्रियाः तेन स्त्रीकर्तृकं स्त्रीसंप्रदानकं चैतदुभयनियम इति कल्पतरुः अमा-
वास्यायां यत्क्रियते तत्पार्वणमिति स्मृतम् क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः अत्र पर्व चतुर्दश्यष्टमी चैव अमावा-
स्या च पौर्णिमा पर्वाण्येतानि राजेंद्र रविसंक्रमणं तथेति विष्णुपुराणोक्तं संक्रांत्यादि गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्य-
ते बहूनां विदुषां संपत्सुखार्थं पितृतृप्तये क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषि-
भिः निषेककाले सोमे च सीमंतोन्नयने तथा ज्ञेयं पुंसवने चैव श्राद्धं कर्मांगमेव च देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते
गच्छन्देशांतरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः शरीरोपचये श्राद्धमर्थोपचय एव च
पुष्ट्यर्थमेतद्विज्ञेयमौपचयिकमुच्यते गोष्ठ्यां श्राद्धकर्तृसमुदाये संभूय सामग्रीसंपादनेन श्राद्धमित्यर्थः युगपत्तीर्थादि
गामी विदुषां श्राद्धसंपादनस्य कार्यार्थी भिन्नपाकाशक्तो बहुपितृकश्राद्धमेकः कुर्यादिति कल्पतरुः शंखधरश्च शुद्धिश्राद्धमा-

श्रीगणेशायनमः अथश्राद्धनिर्णयः नानानिबंधपाथोधिभ्रांतचित्तोर्मिधीर्यया कमलाकरसंज्ञेनक्रियतेश्राद्धनिर्णयः न
त्रश्राद्धस्वरूपमाह पृथ्वीचंद्रोदयेमरीचिः प्रेतंपितॄंश्चनिर्दिश्यभोज्यंयत्प्रियमात्मनः श्रद्धयादीयतेयत्रतच्छ्राद्धंपरिकीर्तितम् ब्रा
ह्मणस्वीकारांतश्चतुर्थ्यंतपदोपनीतपित्राद्युद्देश्यकस्त्यागःश्राद्धमित्यर्थः तत्रयद्यपिहोमपिंडभोजनानिप्रधानमितिहेमा-
द्रिः शेषश्चपिंडदानंचतथाब्राह्मणभोजनम् श्राद्धशब्दाभिधेयंस्यादेकस्मिन्नौपचारिकमिति श्रीधरश्च तथापिकचिद्रु
द्रेपंचस्थाम निमित्तभेदेभोजनस्यपिंडानांचनिषेधोनप्राधान्यंविरुणद्धि असोमयाजिनोदधिपयोयागवत् यच्चशूलपा
णिः नित्यश्राद्धमदेवंस्यादर्घ्यपिंडविवर्जितमिति हारीतोयेनित्यश्राद्धमघादौपिंडनिषेधोस्तिनचप्राप्तिविनासः नचाति
देशांविनाप्राप्तिः नचांगत्वेनपिनातिदेशः प्रधानस्यातिदेशात् सप्तमेउपकारकत्वेनातिदेशोक्तेः तेनभोजनंप्रधानंपिंडों-
गं पिंडदानमात्रविधिस्त्वंगभूतात्कर्मांतरमेवप्रकरणांतरन्यायादिति तन्न जातश्राद्धेनदद्यात्तुपक्वान्नंब्राह्मणेष्वपि नपक्वं
भोजयेद्धीमान्सच्छूद्रोपिकदाचनेत्यादौ जातश्राद्धशूद्रश्राद्धादौभोजनस्यनिषेधेनांगत्वापत्तेः नतोपशोकरोतीतिवद्दुप
जीव्यविरोधेननिकल्पापत्तेश्च नेनश्राद्धशब्दाभिधेयत्वेनोभयप्राप्तोनिषेधःपर्युदासोवादीक्षितोनददातिनजुहोतिनासो-
मयाजीसन्नयेदितिवत् इतितत्त्वं धर्मप्रदीपेपि यजुषांपिंडदानंतुबह्वृचानांद्विजार्चनम् श्राद्धशब्दाभिधेयंस्यादुभयं
सामवेदिनां नच्चपितॄन्यजेतपितृभ्योदद्यादित्युभयप्रयोगदर्शनाद्यागदानोभयात्मकम् पितरोदेवताइतिपित्रुद्देश्यक
त्वाद्यागत्वंनिष्प्राप्तेक्ष्यात्वदानत्वमित्यविरुद्धम् एतेननायंयागः देवतोद्देशेनत्यागोयागः यागोद्देश्याचदेवतेत्यात्माश्रया
दितिमोहमतमपास्तम् चैधशब्दविशेषोद्देश्यत्वस्यतस्येदमितिस्वत्वारोपप्रतियोगित्वस्यवादेवतात्वात् तत्रैवस्कंदः

श्राद्धात्परतरं नान्यत्श्रेयस्करमुदाहृतम् आदित्यपुराणे नसंतिपितरश्चेतिकृत्वामनसियोनरः श्राद्धंनकुरुतेतत्रतस्यरक्त
पिबंतिते तद्भेदानाहविश्वामित्रः नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धंसपिंडनम् पार्वणंचेतिविज्ञेयंगोष्ठ्यांशुद्ध्यर्थमष्टकम्
कर्मांगंनवमंप्रोक्तंदैविकंदशमंस्मृतम् यात्रास्वेकादशंप्रोक्तंपुष्ट्यर्थंद्वादशंस्मृतमिति एषांलक्षणानिभविष्ये अहन्यहनि
यच्छ्राद्धंतन्नित्यमितिकीर्तितम् वैश्वदेवविहीनंतदशक्तावुदकेनतु एकोद्दिष्टंतुयत्श्राद्धंतंनैमित्तिकमुच्यते तदप्यदैवंक
र्तव्यमयुग्मान्भोजयेद्द्विजान् कामायविहितंकाम्यमभिप्रेतार्थसिद्धये वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते गंधोदक
तिलैर्युक्तंकुर्यात्पात्रचतुष्टयम् अर्घ्यार्थंपितृपात्रेषुप्रेतपात्रंप्रसेचयेत् येसमानाइतिद्वाभ्यामेतज्ज्ञेयंसपिंडनम् नित्येनतु
ल्यंशेषंस्यादेकोद्दिष्टंस्त्रियाअपि एतदुभयमेवस्त्रियाः तेनस्त्रीकर्तृकंस्त्रीसंप्रदानकंचैतदुभयमितिनियमइतिकल्पतरुः अमा·
वास्यायांयत्क्रियतेतत्पार्वणमितिस्मृतम् क्रियतेवापर्वणियत्तत्पार्वणमितिस्थितिः अत्रपर्व चतुर्दश्यष्टमीचैवअमावा-
स्याचपौर्णिमा पर्वाण्येतानिराजेंद्ररविसंक्रमणंतथेति विष्णुपुराणोक्तंसंक्रांत्यादि गोष्ठ्यांयत्क्रियतेश्राद्धंगोष्ठीश्राद्धंतदुच्य
ते बहूनांविदुषांसंपत्त्यर्थंपितृतृप्तये क्रियतेशुद्धयेयत्तुब्राह्मणानांतुभोजनम् शुद्ध्यर्थमितितत्प्रोक्तंवैनतेयमनीषि-
भिः निषेककालेसोमेचसीमंतोन्नयनेतथा ज्ञेयंपुंसवनेचैवश्राद्धंकर्मांगमेवच देवानुद्दिश्ययच्छ्राद्धंतत्तुदैविकमुच्यते
गच्छन्देशांतरंयस्तुश्राद्धंकुर्यात्तुसर्पिषा यात्रार्थमितितत्प्रोक्तंप्रवेशेचनसंशयः शरीरोपचयेश्राद्धमर्थोपचयएवच
पुष्ट्यर्थमेतद्विज्ञेयमौपचयिकमुच्यते गोष्ठ्यांश्राद्धकर्तृसमुदायेसंभूयसामग्रीसंपादनेनश्राद्धमित्यर्थः युगपत्तीर्थादि
प्राप्तौविदुषांश्राद्धसंपादकत्वार्थंभिन्नपाकाशक्तौबहुपितृकश्राद्धमेकःकुर्यादितिकल्पतरुः शंखधरस्य शुद्धिश्राद्धंप्रा-

अन्नपार्वणैकोद्दिष्टवृद्धिसपिंडीकरणात्मकं चतुर्विधमेवमुख्यम् तस्यैवायं प्रपंचः अथश्राद्धदेशाः
यम्मिन्नानभिनिमेथिलाः अन्नपार्वणैकोद्दिष्टश्राद्धसपिंडीकरणात्मकं चतुर्विधमेव दक्षिणाप्रवणे
मनुः शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् पृथ्वीचंद्रोदये विष्णुधर्मे दक्षिणाप्रवणे
देशे तीर्थादौ च गृहेऽपि वा भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः तत्रैव प्रभासखंडे तीर्थादष्टगुणं पुण्यं स्वगृहे ददतः
शुभे भारते तस्य देशाः कुरुक्षेत्रं गया गंगा सरस्वती प्रभासं पुष्करं चेति तेषु श्राद्धं महाफलं स्कांदे तुलसीकाननच्छा
यायत्र यत्र भवेद्द्विज तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे माधवीये श्राद्धोपक्रमे व्यासः महोदधौ प्रयागे च काश्यां च
कुरुजांगले शंखः गंगायमुनयोस्तीरे पयोष्ण्यमरकंटके नर्मदाबाहुदातीरे भृगुलिंगे हिमालये गंगाद्वारे प्रयागे च नैमि
षे पुष्करे तथा सन्निहत्यां गयायां च दत्तमक्षयतां व्रजेत् अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः गयाशीर्षवटे श्राद्धं-
योनो दद्यात्समाहितः एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् आदित्या
पुराणे पंचक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः उत्तरे ब्रह्मयूपस्य यावद्द
क्षिणमानसम् एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतमिति शूलपाणौ बृहस्पतिः गंगायां धर्मपृष्ठे च सरसि ब्रह्म
णस्तथा गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च दृष्ट्वैतानि पितॄंश्चार्च्य वं
शान्विंशतिमुद्धरेत् त्रिस्थलीसेतौ वायवीये शमीपत्रप्रमाणेन पिंडं दद्याद्गयाशिरे उद्धरेत्सप्तगोत्राणि कुलमेकोत्त
रशतम् सप्तगोत्राणि तु पिता माता च भार्या च भगिनी दुहिता तथा पितृमातृष्वसा चैव सप्तगोत्राणि वै विदुरिति
एषां गोत्राणामेकोत्तरशतं कुलं पुरुषा इत्यर्थः तेचोक्तास्तत्रैव तत्वानि विंशतिश्चैव द्वादशैकादशा दश अष्टा

विनिचगोत्राणांकुलमेकोत्तरंशतम् तत्वानिचतुर्विंशतिः तेचद्वादशपूर्वाद्वादशापराः एवमग्रेपि प्रयोगपारिजा
तेपाद्मे शालग्राममयीमुद्रासंस्थितायत्रकुत्रचित् वाराणस्यांपद्याधिक्यंसमंताद्योजनत्रयम् तथा यत्किंचित्से
तृकंकुर्यात्सपिंडंवालदंतिके विष्णुलोकंसगच्छेत्तुलभतेशाश्वतंपदम् तत्रैववाराहे चक्रांकस्यतुसान्निध्येय
त्कर्मक्रियतेनरैः स्नानंदानंतपःश्राद्धंसर्वमक्षयतांव्रजेत् अथनिषिद्धदेशाः पृथ्वीचंद्रोदयेस्कांदे त्रिशंकोर्वर्जे
येद्देशंसर्वंद्वादशयोजनम् उत्तरेणमहानद्यादक्षिणेनतुकीकटान् देशस्त्रैशंकवोनामश्राद्धकर्मणिवर्जितः ब्रा
ह्मीये मनश्चाश्रमधर्माश्च देशावर्ज्याःप्रयत्नतः यमः रूक्षंकृमिहतंक्लिन्नंसंकीर्णानिष्टगंधिकम् देशंत्वनिष्ट
शब्दंचवर्जयेच्छ्राद्धकर्मणि तत्रैवशंखः गोगजाश्वादिपृष्ठेषुकृत्रिमायांतथाभुवि नकुर्याच्छ्राद्धमेतेषुपारक्या
स्वचभूमिषु यमः परकीयप्रदेशेषुपितॄणांनिर्वपेत्तुयः तद्भूमिस्वामिपितृभिःश्राद्धकर्मविहन्यते ब्राह्मभारतयो
रपि परकीयगृहेयस्तुस्वान्पितॄन्तर्पयेद्यदि तद्भूमिस्वामिनस्तस्यहरंतिपितरोबलात् अग्रभागंततस्तेभ्योदद्यान्मूल्यं
चजीवितम् श्राद्धार्हाणामग्रभागंश्राद्धंतदनर्हाणांशूद्राणांतुमूल्यमितिकेचित् षोडशीपिंडेबांधवानामपिपिंडोक्तेः
येबांधवाबांधवायेत्यादितर्पणवाधापत्तेश्च नामगोत्रपूर्वंश्राद्धनिषेधोनान्यत्रेतिगौडाः विप्रास्तुतस्यशूद्रापुत्रश्राद्ध
निषेधोनान्यत्र अन्नदानंचान्नत्यागापूर्वंकार्यमितिमैथिलाः तन्न अग्रभागस्यश्राद्धपरत्वेमानाभावात् अन्नदाने
चनिषेधाभावात् त्यागापूर्वकरणेनांगेनव्यवधानापत्तेः अंगत्वेचमानाभावात् इदंचस्वाम्यनुज्ञाभावेनदुक्तंतत्रैवब्रा
ह्मे सरित्कुलसप्तगेहेषुस्वेष्वनुज्ञापितेषुच श्राद्धमेतेषुदातव्यंवर्ज्यमेतेषुनोच्यते किरातेषुकलिंगेषुकोंकणेषुखसेषु

प

पूर्वेणकरतोयायानदेयंश्राद्धमुच्यते इदंकाम्यविषयम् अन्यथानद्यांनांस-
पि सिंधोरुत्तरकूलेपुनर्मदायाश्चदक्षिणे पूर्वेणकरतोयायानदेयंश्राद्धमुच्यते इदंकाम्यविषयम् अन्यथानद्यांनांस-
र्वश्राद्धाकरणापत्तेः नर्मदादक्षिणेपवादःस्कांदे सत्घस्यचोद्भवोयत्रयत्रगोदावरीनदी पृथिव्यामपिकृत्स्नायांसप्रदेशो
निपावनः परकीयत्वापवाद् आदित्यपुराणे अटवीपर्वताःपुण्यानदीतीराणियानिच सर्वाण्यस्वामिकान्याहुर्नहितेषु
परिग्रहः वनानिगिरयोनद्यस्तीर्थान्यायतनानिच देवखाताश्चगर्ताश्चनस्वाम्यंतेषुविद्यते स्मृतिसारे नैकवासा
नच्छीपेनांतरिक्षेकदाचन श्रुतिस्मृत्यादितंकर्मनकुर्यादशुचिःक्वचित् दिवोदासीये म्लेंछदेशेतथारात्रौसंध्यायां
चनिष्पर्जितः नश्राद्धमाचरेद्विद्वान्नचाशौचकथंचन अथश्राद्धकालाः तेचसंक्रांतियुगादिमहालयादयः प्रायेण
पूर्वपरिच्छेदद्वयेउक्ताएव केचिदुच्यंते पृथ्वीचंद्रोदयेवृद्धपराशरः श्राद्धंचद्दावचंद्रेभछायाग्रहणसंक्रमे नवोद
केनधान्येचनवछन्नेतथागृहे नवेक्षवेषुचेहंतेपितरोहिमघास्वपि पितरःस्पृहयंत्यन्नमष्टकासुमघासुचेतिशा
तातपपाठः नवोदकेनवकूपवाप्यादावितिकेचित् वर्षोपक्रमेआर्द्राप्रवेशइतिगौडाः नवान्नश्राद्धेविशेषोज्योतिषे
ज्येष्ठाशेषार्द्रगेसूर्येमृगनेत्राभिशासके नवान्नेभोजनश्राद्धंजन्मचंद्रतिथौनच आश्लेषाकृत्तिकाज्येष्ठामूलाजप
दकेषुच भृगुभौमदिनेरिक्तेतिथौनाद्यान्नवोदनम् तत्रैव वृश्चिकेशुक्लपक्षेतुनवान्नंशस्यतेबुधैः अतःकृष्णपक्षे
नेतिगौडाः मैथिलास्तु अकृत्वाग्रयणंचैवधान्यजातंनयोलभेइतिवाराहोक्तेः प्रतिधान्यंश्राद्धमाहुः तन्न जातपद
स्यश्राद्धयोग्यसमूहपरत्वात् हेमाद्रौजातूकर्ण्यः ग्रहोपरागंचसुतेचजातेपित्र्येगयायामयनद्वयेच नित्यंचशंखेचत
थैवपद्मेदत्तंभवेन्निष्कसहस्रतुल्यम् शंखंप्राहुरमावास्यांक्षीणचंद्रांद्विजोत्तमाः अष्टकासुभवेत्पद्मंतत्रदत्तंतथाक्ष

क्षयम् तत्रैवशंखः यदाविष्टिर्व्यतीपातोभानुवारस्तथैवच पद्मकंनामतत्प्रोक्तमयनाच्चचतुर्गुणम् याज्ञवल्क्यः अ
मावास्याष्टकावृद्धिः कृष्णपक्षोयनद्वयम् द्रव्यंब्राह्मणसंपत्तिर्विषुवत्सूर्यसंक्रमः व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः
श्राद्धंप्रतिरुचिश्चैवश्राद्धकालाः प्रकीर्तिताः कृष्णपक्षःसर्वोपि शाकेनापरपक्षंनातिक्रमेत् मासिमासि वोशनमिति
श्रुतेः ऊर्ध्वंवाचतुर्थ्यायदहः संपद्यते कृतेचतुर्दशीमितिकात्यायनोक्तेः मासिमासिकार्यमपरपक्षस्यापराह्णः श्रेया
ननित्यापस्तंबोक्तेश्च वीप्सयासर्वकृष्णपक्षेषुनित्यम् तेनोपसंहारान्महालयपरत्वंपरास्तम् अत्रप्रत्यहंपंचम्यादियद
हःसंपत्तिर्वेतित्रयःपक्षाः यदैकदिनेश्राद्धंतदादर्शे पृथगेव याज्ञवल्क्येनामावास्यायाः पृथङ्निर्देशात् एतेनकृ-
ष्णपक्षेयदहःसंपद्यते अमावास्यायांतुविशेषेणेतिनिगमोक्तेर्मुख्योपरपक्षश्राद्धस्यामावास्येतिशूलपाणिमतमप्यपा-
स्तम् अशक्तोदर्शेनापिमासिश्राद्धसिद्धिरितिनारायणवृत्तिः निरग्निकानांकस्मिंश्चिद्दिनेआहिताग्नेस्तुदर्शएव न
दर्शेनविनाश्राद्धमाहिताग्नेर्द्विजन्मनइतिमनूक्तेः सर्वकृष्णपक्षाशक्तोमात्स्ये अनेनविधिनाश्राद्धंत्रिरब्दस्यहनिर्व-
पेत् कन्याकुंभवृषस्थेर्केकृष्णपक्षेचसर्वदा कर्कोपि आहिताग्नेःसंवत्सरेपिः श्राद्धनियमइतिदेवलः अनेनविधि
नाश्राद्धंकुर्यात्संवत्सरंसकृत् हिम्बतुर्यो यथाश्राद्धंमासेमासेदिनेदिने कृष्णपक्षेष्वपिमहालयस्यश्रेष्ठत्वं तच्चोक्तंप्राक् व्य
तीपातेविशेषमाहहेमाद्रौशंखः फलंलक्षमसुत्पन्नोभ्रमणेकोटिरुच्यते पतनेशतकोट्यस्तुपातेचैवदत्तमक्षयम् ज्यो
तिःशास्त्रे द्वाविंशतिस्तथोत्पत्तौभ्रमणेनैकविंशतिः पतनेदशनाड्यस्तुपतितेसमनाडिकाः अंत्योचद्वौव्यतीपातो
भानुक्तोहेमाद्रौमार्कंडेयः यदाचश्रोत्रियोभ्येतिगृहंवेदविदग्निचित् तेनैकेनापिकर्तव्यंश्राद्धंचविषुवच्छुभम् इदं

पिंडं कार्यमिति हेमाद्रिः एतज्जीवत्पितृकोपि कुर्यात् उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे तीर्थे ब्राह्मण आयाते षडेते जीव
पा प्तुरिति मैत्रायणीयपरिशिष्टोक्तेः तिथिविशेषे फलविशेषो याज्ञवल्क्येनोक्तः कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि
,द्यूतं वाणिज्यं द्विशफैकशफांस्तथा ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरौप्ये सकुप्यके ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् एताः कृष्णपक्षस्था एव महालये तु फलभूमेति पृथ्वीचंद्रोदयः पौर्णमास्यां
नच ब्रह्मोपितामहः अमावास्याव्यतीपाते पौर्णमास्यष्टकासु च विद्वान्श्राद्धमकुर्वाणो नरकं प्रतिपद्यते एतन्माघ्यादिपरम्
विष्णुः श्राद्धं पाके च कर्तव्यं यवपाके च पार्थिव पौर्णमासी तथा माघी श्रावणी च नृपोत्तम प्रोष्ठपद्यामतीतायां तथा कृष्णात्रयोदशी
एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिरिति विष्णुधर्मोक्तेः विष्णुः माघी प्रोष्ठपदूर्ध्वं कृष्णात्रयोदशीति अत्र माघी पौ
र्णमासीति कल्पतरुः श्रावण्यूर्ध्वमपि मघायोगसंभवात्त्रयोदशी विशेषणमिति गौडाः नक्षत्रेष्वपि याज्ञवल्क्यः स्वर्गं
ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा पुत्रान्श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् प्रवृत्तचक्रतां चापि वाणिज्यप्रभृती
नपि अरोगित्वं यशो वीतशोकतां परमां गतिम् धनं वेदान्भिषक्सिद्धिं कुप्यं गामप्यजाविकम् अश्वानायुश्च विधिवत् यः
श्राद्धं संप्रयच्छति कृत्तिकादिभरण्यंतं स कामान्प्राप्नुयादिमान् फलांतराण्यपि महाभारते कौर्मादेर्ज्ञेयानि माधवीये मरीचिः कृत्तिका
दिषु ऋक्षेषु श्राद्धे यत्फलमीरितम् विष्कंभादिषु योगेषु तदेव फलमिष्यते बृहस्पतिः आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयम्
सर्वान्कामान्श्रियं विद्यां धनमायुर्यथाक्रमम् सूर्यादिदिवसे येतच्छ्राद्धकृल्लभते फलम् बवादिकरणे येतच्छ्राद्धकृल्लभते फलम्
अन्यानि च षण्णवतिश्राद्धादीनि मयोक्तानि मार्कंडेयपुराणे श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छ

या अथश्राद्धाधिकारिणः चंद्रिकायांस्मृतः मातुःपितुःप्रकुर्वीतसंस्थितस्यौरसःसुतः पैतृमेधिकसंस्कारंमंत्रपूर्वकमाद
तः तत्रैवहेमाद्रौशंखः पितुःपुत्रेणकर्तव्यापिंडदानोदकक्रिया पुत्राभावेतुपत्नीस्यात्तदभावेतुसोदरः अत्रयद्यपिपुत्रपदंक्षे
त्रजादिद्वादशविधपुत्रपरम् तेचद्वादशपुत्रायाज्ञवल्क्येनोक्ताः औरसोधर्मपत्नीजस्तत्समःपुत्रिकासुतः क्षेत्रजःक्षेत्र-
जातस्तुसगोत्रेणेतरेणवा गृहेप्रच्छन्नउत्पन्नोगूढजस्तुसुतःस्मृतः कानीनःकन्यकाजातोमातामहसुतःस्मृतः अक्षता
यांक्षतायांवाजातःपौनर्भवस्तथा दद्यान्मातापितावायंसपुत्रोदत्तकोभवेत् क्रीतश्चताभ्यांविक्रीतःकृत्रिमःस्यात्स्वयंकृतः
दत्तात्मातुःस्वयंदत्तोगर्भेविन्नःसहोढजः उत्सृष्टोगृह्यतेयस्तुसोपविद्धोभवेत्सुतः पिंडदोंशहरश्चैषांपूर्वाभावेपरःपर
इति तथापि दत्तौरसेतरेषांतुपुत्रत्वेनपरिग्रहइतिहेमाद्र्यादिपुराणे कलावितरेषांपुत्रत्वनिषेधादौरसदत्तकपरमेव
यद्यपि पिंडदोंशहरश्चैषांपूर्वाभावेपरःपरइति याज्ञवल्क्योक्तेरौरसाभावेदत्तकप्राप्तिस्तथाप्यौरसाभावेपौत्रः तदभावेप्र
पौत्रस्तदभावेदत्तकादयइतिज्ञेयम् पुत्रेणलोकान्जयतिपौत्रेणानंत्यमश्नुते अथपुत्रस्यपौत्रेणब्रध्नस्याप्नोतिविष्टपमि
तिजीमूतवाहनधृतवसिष्ठहारीतशंखलिखितोक्तेः लोकानंत्यंदिवःप्राप्तिःपुत्रपौत्रप्रपौत्रकैरिति याज्ञवल्क्योक्तेश्च पुत्रः
पौत्रश्चतत्पुत्रःपुत्रिकापुत्रएवच पत्नीभ्रातातनत्नश्चपितामातास्नुषातथा भगिनीभागिनेयश्चसपिंडःसोदकःस्त
था असन्निधानेपूर्वेषामुत्तरेपिंडदाःस्मृताः स्मृतिसंग्रहे प्रपौत्रानंतरंपुत्रिकापुत्रोक्तेस्तत्समत्वाच्च दत्तकस्य यद्यपिबृह
स्पतिना पौत्रश्चपुत्रिकापुत्रःस्वर्गप्राप्तिकरावुभौ रिक्थेचपिंडदानेचसमानौपरिकीर्तिताविति पौत्रसाम्यमुक्तम् याज्ञवल
क्येनच औरसोधर्मपत्नीजस्तत्समःपुत्रिकासुतइति औरससाम्यम् तथापिलोकेराजसमोमंत्रीत्यादौकिंचिन्न्यूने-

साम्ययोगाच्चस्त्वर्थंतत् नतुसमविकल्पइतिभ्रमितव्यम् पुत्रः पौत्रः प्रपौत्रोवा भ्रातावा-
प्यशब्दप्रयोगात् गौणमुख्ययोः साम्ययोगाच्चस्तत्वर्थंतत् ... सर्वेषांसमानोदकसंततिः मातृपक्षसपिंडेनसंबंधोयोजले
भ्रातृसंततिः सपिंडसंततिर्वापिक्रियार्हानृपजायते तेषामभावेसर्वेषांसमानोदकसंततिः मातृपक्षसपिंडेनसंबंधोयोजले
नवा कुलद्वयेपिचोच्छिन्नेस्त्रीभिःकार्याक्रियानृप तत्संघातगतैर्वापितद्विक्थात्कारयेन्नृप इतिविष्णुपुराणाच्चेति प्रपौत्रानंत
रंदत्तकाद्यइति पृथ्वीचंद्रमदनरत्नकालादर्शादयः मदनपारिजातेप्येवम् बोपदेवरुद्रधरादयस्तु पुत्रेषुविद्यमानेषुना-
न्यंवैकारयेत्स्वधामितिस्मृतेर्नो पितामहःपितुःपश्चात्संचसंयदिगच्छति पौत्रेणैकादशाहादिकर्तव्यंश्राद्धषोडशम् नेत
सौत्रेणकर्तव्यंप्रचयांश्चेप्सितामहइति छंदोगपरिशिष्टेच पुत्रशब्दस्यद्वादशविधसुतपरत्वात्पूर्वाभावेपरःपरइत्यस्या
न्यपरत्वाच्चदत्तकाद्यभावेपौत्रादीनामधिकारइत्याहुः तद्गौणमुख्ययोःसाम्यायोगात्दत्तकेसतिपौत्रस्यांशहरत्वस्याप्य-
भावापत्तेःपुत्रपदस्यौरसमात्रपरत्वाच्चिंत्यम् अतएवनिषेधादुपनीतपौत्रसत्त्वेप्यनुपनीतपुत्रस्यैवाधिकारः औरसश्चानु
पनीतोपिकुर्यादित्याह पृथ्वीचंद्रोदयेस्मृतिः श्राद्धंकुर्यादवश्यंतुप्रमीतपितृकोद्विजः व्रतस्थोवाव्रतस्थोवा एकएवभवे
यदि इदंमनुः कुर्यादनुपनीतोपिश्राद्धमेकोहियःसुतः पितृयज्ञाहुतिंपाणौजुहुयाद्ब्राह्मणस्यसः एकोमुख्यऔरस
इत्यर्थः मनुः नह्यस्मिन्युज्यतेकर्मकिंचिदामौंजिबंधनात् नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादृते ब्रह्मवेदः स्मृ
तुरपि नाभिव्याहरयेद्ब्रह्मयावन्मौंजीनिबध्यते मंत्रानजुपनीतोपिपठेदेवैकऔरसः अयंमंत्रपाठः त्रिवर्षकृतचूड
स्यैव अनुपनीतोपिकुर्वीतमंत्रवत्पितृमेधिकम् यद्यसौकृतचूडःस्याद्यदिस्याच्चत्रिवत्सरइतिस्मृतेः यत्तुव्याघ्रः
कृतचूडस्तुकुर्वीतउदकंपिंडमेवच स्वधाकारंप्रयुंजीतवेदोच्चारंनकारयेदिति यच्चस्मृतिसंग्रहे कृतचूडोनुपेतश्च

पित्रोः श्राद्धंसमाचरेत् उदाहरेत्स्वधाकारंनतुवेदाक्षराण्यसाविति तत्प्रथमवर्षचूडाविषयमितिमाधवमदनरत्नपृथ्वीचंद्राः
त्रिवर्षोर्ध्वंमंत्रवत्त्वस्यविकल्पइतिचंद्रिकाबोपदेवश्च दत्तकादिपरोनिषेधइतिवयम् मदनरत्नेस्कांदे यज्ञेषुमंत्रवत्कर्म
पत्नीकुर्याद्यथानृप तथोर्ध्वदैहिकंकर्मकुर्यात्साधर्मसंस्कृता अशक्तौतुकात्यायनः असंस्कृतेनुपत्न्यात्वग्निदानंसमं
त्रकम् कर्तव्यमितरत्सर्वंकारयेदन्यमेवहि पुत्रश्चनजन्मनोधिकारीकिंतुवर्षोत्तरमित्याह कालादर्शः चौलाद्वाब्दिका-
द्वाक्नकुर्यात्सेतृमेधिकम् मदनरत्नेसमंतुरपि पुत्रश्चोत्पत्तिमात्रेणसंस्कुर्यादृणमोचनात् पितरंनाब्दिकाच्चौलात्पै-
तृमेधेनकर्मणा एतच्चौरसस्यैव दत्तकादीनांतूपनीतानामेवाधिकारइतिकालादर्शः पृथ्वीचंद्रोदयेपिस्कांदे पित्रोरनु-
पनीतोपिविदध्यादौरसःसुतः और्ध्वदैहिकमन्येतुसंस्कृताःश्राद्धकारिणइति अस्यचापि दर्शमहालयादावनुपनीतस्या-
धिकारोस्माभिःपूर्वमुक्तः प्रपौत्राभावेदत्तकादयएकादशपुत्राः तदभावेभर्तुःपत्नी तस्याश्चस्वः अपुत्राशयनंभर्तुःपा-
लयंतीव्रतेस्थिता पत्न्येवदद्यात्तत्पिंडंकृत्स्नमंशंलभेतचेतिवृद्धमनूक्तेः भार्यापिंडंपतिर्दद्याद्भर्त्रेभार्यातथैवच श्वश्र्वादे-
श्चस्नुषाचैवतदभावेसपिंडकाइति पुत्राभावेतुपत्नीस्यात्पत्न्यभावेतुसोदरइतिचहेमाद्रौशंखोक्तेः पृथ्वीचंद्रोदयस्तु
कानीनगूढसहजपुनर्भूतनयाश्चये पत्न्यभावेधिकुर्युस्तेअप्रशस्ताःस्मृताहितेइतिस्मृतिसंग्रहात् पत्न्यभावेकानीनादय
इत्याह पत्युरपिसपत्नीपुत्रेसतिनाधिकारः पितृपत्न्यःसर्वामातरइतिसुमंतूक्तेः विदध्यादौरसःपुत्रोजनन्याऔर्ध्वदै-
हिकम् तदभावेसपत्नीजःक्षेत्रजाद्यास्तथास्मृताः तेषामभावेतुपतिस्तदभावेसपिंडकाइतिमदनरत्नेकात्यायनोक्तेश्च ब-
ह्वीनामेकपत्नीनामेषएवविधिःस्मृतः एकाचेत्सुत्रिणीतासांसर्वासांपिंडदस्तुसइतिबृहस्पतिवचनाच्च अपरार्केप्येवम् ते

नयस्त्वशुद्धिविवेकेउक्तंसत्यपिसपत्नीपुत्रेपत्न्यरेवाधिकारइति तन्निरस्तम् यच्चतत्रैवकात्यायनः नभार्यायाःपतिर्दद्याद
पुत्रायाअपिक्वचित् यच्चविष्णुपुराणम् कुलद्वयेपिचोत्सन्नेस्त्रीभिःकार्याक्रियानृपेति यच्चमार्कंडेयपुराणम् सर्वाभा
वेस्त्रियःकुर्युःस्वभर्तॄणाममंत्रकमितितदासुरादिविवाहोढाविषयम् धर्मैर्विवाहेरूढायासापत्नीपरिकीर्तिता क्रयक्री-
तातुयानारीनसापत्न्यभिधीयते नसादैवेनवापित्र्येदासींतांमुनयोविदुरितिमाधवीयेशातातपोक्तेः यत्तुशूलरत्नाकरः
शूलपाणिश्च अपुत्रस्यचयापुत्रीसापिपिंडप्रदाभवेत् तस्यपिंडान्दशैकंवाएकाहेनैवनिक्षिपेत् इतिजाबालोक्तेः भर्तु
र्धनहरापत्नीतांविनादुहितास्मृता अंगादंगात्संभवतिपुत्रवद्दुहितानृणामितिबृहस्पतिनादुहितुर्धनहारित्वोक्तेश्चपुत्राभा
वेकन्यातदभावेसपत्नीपुत्रइत्याहतुः तत्पूर्वविरोधात् मातुर्दुहितरःशेषमृणात्ताभ्यऋतेन्वयइतिदौहित्रुर्मातृधनग्रा
हित्वेनप्रभस्यतच्छाद्धानधिकारापत्तेश्चोपेक्ष्यम् वचनंतुभ्रातृपुत्राद्यभावविषयम् पत्न्यभावेअविभक्तस्यसोदरः पू
र्वोक्तशंखवचनात् विभक्तस्यतुदुहिताधनहारित्वात् पूर्वोक्तजाबालवचनाच्च तत्राप्यूढानूढसमवायेऊढेव दुहिता-
पुत्रवत्कुर्यात्मातापित्रोस्तुसंस्कृता आशौचमुदकंपिंडमेकोद्दिष्टंसदातयोरितिभारद्वाजोक्तेः तदभावेदौहित्रः धनहारित्वा
त् मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतादितिचंद्रिकायांवृद्धमनूक्तेः य-
थात्रतस्थोपिसुतःपितुःकुर्यात्क्रियानृप उदकाद्यांमहाबाहोदौहित्रोपिनथार्हतीत्यपरार्केभविष्योक्तेश्च एतद्धनहारिणा
अपश्यकंनान्यस्येत्याहतत्रैवस्कंदः श्राद्धंमातामहानांतुअवश्यंधनहारिणा दौहित्रेणार्थनिष्कृत्यैकर्तव्यंपूर्ववदुत्तरमिति
नेनदौहित्रोत्र पुत्रीकृतइतिदेवयाज्ञिकोक्तिःपरास्ता अत्रपत्नीदौहित्रसमवायेंशपरत्वात्पत्न्येवकुर्यात् दौहित्रभ्रातृ-

पुत्रसत्वेविभक्तस्यदौहित्रः अविभागेभ्रातृपुत्रः भ्रातृतत्पुत्रसत्वेकनिष्ठश्चेत् भ्रातेकज्येष्ठश्चेत्तत्पुत्रः कुर्यादितिदाक्षिणात्यग्रंथाः हारलता
देतु भ्रातुर्भ्रातास्वयंचकेनद्भार्यानेन्नचियत्ते तस्यभ्रातृकलश्चके यस्यनास्तिसहोदरइतिब्राह्मोक्तेः पत्नीकुर्यात्सुताशावेपत्न्याभावेसहो
दरइतिकोमांत्र ज्येष्ठभ्रातेवकुर्यान्नतत्पुत्रः यत्तुमातुजस्यनथाग्रजइति तत्कनिष्ठभ्रातृसत्वविषयम् यच्चमनुः सर्वेषामेकजातानामेकश्चे
त्पुत्रवान्भवेत् सर्वांनांस्तेनपुत्रेणपुत्रिणोमनुरब्रवीदिति तत्सहोदर भावविषयमित्युक्तं एतेनपुत्रत्वातिदेशोयम् अतस्तस्मिन्सतिए
कादशपुत्राः प्रतिनिधयोनकार्याः सएवपिंडदोंशहरश्चेति अत्रापीति वाचस्पतिमनुटीका कल्पतरुरत्नाकरादयःपरास्ताः द्वा·
दशांपुत्राभावेपत्नीदुहितरइतियाज्ञवल्क्योक्तेश्च तस्माद्दत्तपुत्रप्रशंसेयमितिविज्ञानेश्वरः अविभक्तविषयंवा मदनरत्ने·
स्मृतिसंग्रहे पुत्रःकुर्यात्पितुःश्राद्धंपत्नीचतदसन्निधौ धनहार्यथदौहित्रस्ततोभ्राताचतत्सुतः भ्रात्रोः सहोदरोभ्राताकु·
र्याद्द्वाहादितत्सुतः ततस्त्वसोदरोभ्रातातदभावेचतत्सुतइति भ्रातृपुत्राभावेक्रमेणापितृमातृस्नुषास्वसृतत्पुत्रादयः
धनहारित्वात् भगिनीतत्सुतयोर्विशेषमाह मदनरत्नेकात्यायनः अनुजाअग्रजावापिभ्रातुःकुर्वीतसत्क्रियाम् -त-
तः स्वसोदरातद्वक्रमेणतनयस्तयोः अपरार्केकार्ष्णाजिनिः पुत्रःशिष्योथवापत्नीपिताभ्रातास्नुषागुरुः स्त्रीहारीधन
हारीचकुर्यात्पिंडोदकक्रियाम् मार्कंडेयपुराणे पुत्रोभ्राताचतत्पुत्रः पत्नीमातातथापिता वित्ताभावेतुशिष्यश्चकुर्वीरं·
न्नौर्ध्वदैहिकम् तेनधनहारीएतद्भिन्नइतिकल्पादर्शः अत्रपाठक्रमोनविवक्षितः पूर्ववाक्येषर्थतत्तः शब्दादिभिःश्रौत
क्रमोक्तेः अथजिह्वायाअथवक्षसइतिवत् पृथ्वीचंद्रोदयेवृद्धमनुः स्नुषास्वस्रीयतत्पुत्रज्ञातिसंबंधिबांधवाः पुत्रा
भावेतुकुर्वीरन्सपिंडांतंयथाविधि मार्कंडेयपुराणे पुत्राघत्सन्नचंधोश्वसरवापिश्वशुरस्यच जामातास्नेहवत्कुर्यात्

सिलपैनूमोधिकम् चंद्रिकायां वृद्धशातातपः मातुलोभागिनेयस्य स्वस्रीयोमातुलस्यच श्वशुरस्यगुरोश्चैवसख्युर्मा
नामहस्यच एतेषांचैवभार्याणांस्वसुर्मातुःपितुस्तथा श्राद्धमेषांतुकर्तव्यमितिवेदविदोविदुः शुद्धिविवेके पृथ्वीचंद्रो
दयेचश्राद्धे दत्तानांवाप्यदत्तानांकन्यानांकुरुतेपिता चतुर्थेहनितास्तेषांकुर्वीरन्सुसमाहिताः दत्तावाग्दत्ताः मातामहा
नांदौहित्राः कुर्वन्त्यहनिचापरे तेपित्तेषांप्रकुर्वन्तिद्वितीयेहनिसर्वदा जामातुःश्वशुरश्चक्रुस्तेषांतेपिचसंयताः मित्राणां
तदपत्यानांश्रोत्रियाणांगुरोस्तथा भागिनेयस्तुतानांचसर्वेषांत्वपरेहनि राज्ञोसतिसपिंडेतुनिरपत्येपुरोहितः मंत्रीचान
दशौचंतुपुरावीर्त्याकरोतिसः अत्राद्वितीयाहादौश्राद्धविधानमस्थिसंचयपरम् कालादर्शे दाहादिमंत्रवसिष्ठोविदध्यादं
रसःसुतः तदभावेतुपौत्रश्चप्रपौत्रःपुत्रिकासुतः दौहित्रोधनहारीचभ्रातानस्तुत्रएवच पितामातासपत्नीचस्वसानसु
त्रएवच सपिंडःसोदकोमातुःसपिंडश्चसहोदकः स्त्रीचशिष्यर्त्विगाचार्याजामाताचसखापिच उत्सन्नबंधोरिक्थे
रयेदवनीपतिः गौतमः पुत्राभावेसपिंडामातृसपिंडाशिष्याश्चदद्युस्तदभावेऋत्विगाचार्यौ यत्तुचंद्रिकायांवृद्धशातात
पः मौत्याच्छ्राद्धंप्रकर्तव्यंसर्वेषांवर्णलिंगिनामितितत्सवर्णविषयम् ब्राह्मणास्त्वन्यवर्णानांनकुर्यात्कर्मकिंचन कामाल्लो
भाद्भयान्मोहात्कृत्वातज्जातितांव्रजेत् इतिब्राह्मोक्तेः नब्राह्मणेनकर्तव्यंशूद्रस्याप्यौर्ध्वदेहिकम् शूद्रेणवाब्राह्मणस्य
विनापारसवात्क्वचित् इतिपारसवोत्तेश्च पारसवःऊढशूद्रापुत्रः अत्रेदंतत्त्वम् सर्वत्रपुत्रादेःसर्वस्याभावेपत्न्यादेरधि
कारउक्तः तत्राभावोसन्निधिर्नाशश्चोच्यते अतएवपूर्वत्र असन्निधानेपूर्वेषामित्युक्तम् तत्रासन्निधौपत्न्यादेःसर्वा
धिकारेप्राप्ते प्रोषितावसितेपुत्रःकालादपिचिरादपि एकादशाद्याःक्रमशोज्येष्ठस्यविधिवत्क्रियाः ज्येष्ठेनैवतुयत्कृ

मित्संधेर्देशांतरेपवादा पुत्रनाशएवपत्न्यादेः सपिंडनादधिकारः असन्निधौतुतसूर्वमेवनोर्ध्वं अतोनाधिकारिणाभ्रात्रा
दिना कृतमप्यकृतमेवेतिपुनरावर्तनीयम् मासिकापकर्षोप्यावर्तनीयः एकादशाहमासिकानिनिवर्तंतेति तज्ज्यायसापिक
र्तव्यं सपिंडीकरणंपुनर्निमित्तवदावृत्तिविधानाभावादितिकेचित् तन्न अस्यानिर्मूलत्वात् अनस्तदपिकनिष्ठकृतमावर्तनेन
वृद्धिश्चैनपिंडपितृयज्ञार्थंतुकृतंनावर्तते नासपिंड्याग्निमान्पुत्रः पितृयज्ञंसमाचरेत् नपार्वणंनाभ्युदयंकुर्वन्नलभतेफल
मिति इत्युत्तरनिषेधनादिति भ्रात्रावाभ्रातृपुत्रोवेत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात् यथात्रज्येष्ठक
र्तृकत्वबाधस्तथापुत्रकर्तृकत्वस्यापिबाधः सपिंडनेतुबहुवक्तव्यंतन्निर्णयेवक्ष्यामः अधिकारविशेषेणक्रियाव्यवस्थो-
क्ताविष्णुपुराणे पूर्वाःक्रियामध्यमाश्चतथाचैवोत्तराःक्रियाः त्रिप्रकाराःक्रियास्त्वेतास्तासांभेदान्शृणुष्वमे आदाहाद्द्वाद
शाहाच्चमध्येयास्तुःक्रियानृप ताःपूर्वामध्यमामासिमास्येकोद्दिष्टसंज्ञिताः प्रेतेपितृत्वमापन्नेसपिंडीकरणादनु क्रियंते
याःक्रियाःपुत्रप्रोच्यंतेतानृपोत्तराः पितृमातृसपिंडैश्चसमानसलिलैस्तथा तत्संघातगतैश्चैवराज्ञावाधनहारिणा पू
र्वामध्याश्चकर्तव्याःपुत्राद्यैरेवचोत्तराः दौहित्रैर्वानरश्रेष्ठकार्यास्तत्तनयैस्तथा मृताहनितुकर्तव्याःस्त्रीणामप्युत्तराःक्रि
याः दौहित्रतत्सुतयोर्धनहारिणोरिदम् एवमन्यस्यधनहर्तुः पश्चार्धहरःसपिंडदायीत्यापस्तंबोक्तेः प्रेतस्यप्रेतकार्याणि-
अकृत्वाधनहारकः वर्णानांयद्वधेप्रोक्तंतद्व्रतंप्रयतश्चरेदितिपृथ्वीचंद्रोदयेव्याघ्रपादोक्तेः मदनरत्नेस्कांदेपि मलमेनन्म
नुष्याणांद्रविणंयस्यकीर्तितमितिउक्त्वा कथितस्तस्यनिर्दिष्टानिष्कृतिःपावनीपरा आदेहपतनात्तस्यकुर्यात्पिंडोदक-
क्रियां इत्युक्तम् क्रियानिबंधेकात्यायनः नत्वमातानचपिताकुर्यात्पुत्रस्यपैतृकम् नाग्रजश्चतथाभ्राताभ्रातृणांचकनी

यसाम् पृथ्वीचंद्रोदये बोधायनः पित्रा श्राद्धं न कर्तव्यं पुत्राणां तु कथंचन भ्रात्रा चैव न कर्तव्यं भ्रातॄणां च कनीयसाम् यदि स्ने-
हेन कुर्यात्तां सपिंडीकरणं विना गयायां तु विशेषेण ज्यायानपि समाचरेत् अन्याभावे पित्रादिरपि कुर्यात् उत्सन्नबांधवे प्रे-
तं पिता भ्राताथवाग्रजः जननी चापि संस्कुर्यान्न हदेनोन्यथा भवेदिति स्मृत्यंतरोक्तेः ब्रह्मचारिणां तु शुद्धिविवेके पृथ्वीचं-
द्रोदये च ब्राह्मे असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः श्राद्धं तु मातापितृभिर्न तु तेषां करोति सः श्राद्धं मासिकाब्दिका-
दि सर्वं कार्यमित्यर्थः न त्विति निषेधोन्यसत्वे यत्तु छंदोगपरिशिष्टे न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित् न दीक्ष-
णात्परं यज्ञे न कृच्छ्रादितप पितर्यपि मृते नैषां दोषो भवति कर्हिचित् आशौचं कर्मणोंते स्यात् त्र्यहं वा ब्रह्मचारिणाम्
यच्च याज्ञवल्क्यः न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथेति तदप्यन्यसत्वे अन्याभावे तु ब्रह्मचारिणापि कार्यम्
चोक्तवृद्धमनुवचनात् आचार्यपित्रुपाध्यान्निर्हृत्यापि व्रती व्रती संकटान्नं च नाश्नीयान्न च तैः सह संवसेदिति तेनैवो-
ब्रह्मचारिणः शिवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोरिति वसिष्ठोक्तेः अत्राशौचमेकाहं वक्ष्यामः प्रागुपनयनान्मृत-
स्य तु पंचवर्षोत्तरं सपिंडीकरणवर्ज्यं षोडशश्राद्धादि सर्वं कार्यमित्युक्तमदेवजानीये असंस्कृतानां भूमौ पिंडं दद्यात्संस्कृता-
नां कुशोष्विति मत्स्योवचनाच्च एतच्चाग्रे वक्ष्यामः अविभक्तानां विशेषमाह पृथ्वीचंद्रोदये मरीचिः बहवः स्युर्यदा पु-
त्राः पितुरेकत्र वासिनः सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ज्येष्ठस्य कर्तृ-
त्वेपि सर्वे फलभागिन इत्यर्थः तेन ये ब्रह्मचर्यपरान्नवर्जनादयः फलसंस्कारास्ते सर्वेषां भवंतीति सिद्धम् संसृष्टी-
नामप्येवम् तुल्यत्वात् विभक्तानां विशेषमाहोशनाः नवश्राद्धं सापिंड्यं श्राद्धान्यपि च षोडश एकेनैव तु कार्याणि स-

विभक्तधनेष्वपि लघुहारीतः सपिंडीकरणांतानियानिश्राद्धानिषोडश पृथक्नैवसुताःकुर्युःपृथक्द्रव्याअपिक्वचित्
ऊर्ध्वंसपिंडीकरणात्सर्वंकुर्युःपृथक्पृथक् मदनरत्नेविभक्तास्तुपृथक्कुर्युःप्रतिसंवत्सरादिकम् एकेनैवाविभक्तेषु कृते
सर्वैःकृतंभवेत् एतेनाब्दिकादिष्वविभक्तानामनियमइतिवदन्शूलपाणिःपरास्तः दत्तकस्तुजनकस्यपुत्राद्यभावेदद्या
त्ततत्सुते गोत्ररिक्थेजनयितुर्नभजेद्दत्रिमःसुतः गोत्ररिक्थानुगःपिंडोव्येतिददतःस्वधेतिमनूक्तेः इदंजनकस्यपु
त्रसत्त्वविषयम् एतच्चप्रवरमंजर्यांकात्यायनलौगाक्षिभ्यांस्पष्टमुक्तम् अथयेदत्तकक्रीतकृत्रिमपुत्रिकापुत्राःपरप
रिग्रहेणानार्षेयाजातास्तेद्व्यामुष्यायणाभवंति यथाशौंगशैशिरीणांयानिचान्यान्येवंसमुत्पत्तौनिकुलानिभवंतिस्या
दिनाद्वयोःपित्रोःप्रवरानुक्तोक्तम् अथयद्येषांस्वासुभार्यास्वपत्यंनस्याद्रिक्थंहरेयुः पिंडंचैभ्यस्त्रिपुरुषंदद्युःयद्युभ-
योर्नस्यादुभाभ्यामेवदद्युरेकस्मिन् श्राद्धेपृथगुद्दिश्यैकपिंडेद्वावनुकीर्तयेत्परिगृहीतारंचोत्पादयितारंचातृतीयात्पुरुषा
दिति हेमाद्रौकार्ष्णाजिनिः यावंतःपितृवर्ज्याःस्युस्तावद्दत्तकादयः प्रेतानांयोजनंकुर्युःस्वकीयैःपितृभिःसह द्वाभ्यां
सहायतत्पुत्राःपौत्रास्त्वेकेनतत्समं चतुर्थःपुरुषेच्छेदस्तस्मादेषांत्रिपूरुषी साधारणेषुकालेषुविशेषोनास्तिवर्गिणाम्
मृताहेत्वेकमुद्दिश्यकुर्युःश्राद्धंयथाविधीति अस्यार्थमाहहेमाद्रिः दत्तकादयःजनकपालकयोःकुलेप्रेतानांस्ववर्गीयैःसपिंड
नंकुर्युः दत्तकानांपुत्रास्तुपितुर्दत्तकस्यपितृभ्यांजनकपालकाभ्यांस्वपितामहाभ्यांसपिंडनंकुर्युः तेषांपौत्राःस्वपितरंदत्तकेनपि
तामहेनतज्जनकेनचसपिंडयेयुः चतुर्थोपितत्कुलस्यएव तेषांप्रपौत्रस्तुदत्तकस्यप्रपितामहस्यपालककुलस्थंचतुर्थंयोजं-
येन्नया छंदइत्यन्नदर्शमहानयादौतुद्वयोःपित्रोःपितामहयोःप्रपितामहयोर्वाश्राद्धंदेतस् तत्रद्वयोःपित्रादयोःपृथक्पिंडदा

नं द्वयोरुद्देशेने फेवेति अत्रकेचित् आवयोरयमितिपरिभाष्य योदत्तस्तस्य द्वयोः पित्रोःश्राद्धम् यस्त्वपरिभाष्यदत्तःसगृही-
तुरेव सपालकायेवदद्यादित्याहुः अत्रमूलंतएवप्रष्टव्याः यस्तुतस्यजनकस्यपुत्रपत्न्याद्यभावेदत्तकोद्वयोर्दद्यादन्यथापालका
पेन मागुक्तकात्यायनवचनात् मानवीयमप्येतद्विषयमेव गोत्रंतुश्राद्धेपालकस्येव विवाहादौतूभयोरित्यादिमत्कृतप्रव
दर्पणेज्ञेयम् यस्तुमूल्यक्रीतायां परभार्यायांदास्यांचोत्पन्नः सबीजिनेएवदद्यात् मूल्यंविनास्वयमुपगतायांतुक्षेत्रिणएव
तदुक्तंपृथ्वीचंद्रोदयेकौर्मे अनियोगात्सुतोयस्तु शुल्कतोजायतेत्विह प्रदद्याद्बीजिनेपिंडं क्षेत्रिणेतुततोन्यथेति क्षेत्रजादेर्वि
शेषस्तुकलौनदभावान्नोच्यतइतिदिक् जारजानांविशेषमाह अपरार्केनारदः जायंतेत्वनियुक्तायामेकेनबहुभिस्तथा अ-
रिक्थभाजस्तेसर्वे बीजिनामेवतेसुताः दद्युस्तेबीजिनेपिंडंमाताचेच्छुल्कतोहृता अशक्तोपह्वतायांतुपिंडदावोढुरेवते ध
र्मार्थंश्राद्धकरणेफलमाहचंद्रिकायांशातातपः मोक्षार्थंश्राद्धंतुकर्तव्यंसर्वेषांवर्णलिंगिनाम् एवंकुर्वन्नरः सम्यक् महतीं श्रिय
माप्नुयात् गयायामपितत्रैव ब्रह्मवैवर्ते आत्मजोवाथवान्योपिगयाशीर्षेयदातदा यन्नाम्नापातयेत्पिंडं तन्नयेद्ब्रह्मशा-
श्वतम् एतच्चपदाफलभूमार्थिनाद्रिस्त्रिर्वाक्रियतेतदाप्रेताशौचश्राद्धवर्ज्यंकुर्यात्तस्यप्रेतत्वविमोक्षार्थत्वात्तस्यचजा
तत्वादितिकेचित् वस्तुतस्तुसन्यासिश्राद्धवदत्रापिसर्वंकार्यम् सागोधिकारादितियुक्तंप्रतीमः सन्यस्तपित्रादिस्तत्पितुःपि
त्रादिभ्यःसर्वश्राद्धेषुदद्यादित्युक्तंप्राक् वक्ष्यतेचजीवत्पितृकश्राद्धे अत्रस्त्रीशूद्राणांश्राद्धंमंत्रवर्ज्यंतूष्णींभवति स्त्रीणाम-
प्यमंत्रकंश्राद्धंतथाशूद्रास्तुतस्यच मात्द्विजाश्चव्रतादेशात्तेचकुर्युस्तथैवतदितिहेमाद्रौमरीचिवचनात् अयमेवविधिः
प्रोक्तःशूद्राणांमंत्रवर्जितः अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यतेइतिब्राह्मोक्तेश्च गृह्यतेसंबध्यते अस्यश्राद्धप्रकरणे

पाठेऽपिपरिभाषात्वान्नप्रकरणेनसंकोचोयुक्तः तेनशूद्रस्यस्नानदानादावपिविप्रेणमंत्रपाठःकार्यः अमंत्रश्चेतिविशेषणान्नक्रि
याअपीतिशूलपाणिः यत्तुतेनोक्तम् मंत्रजन्यनियमादृष्टसिद्धिस्तुनमस्कारेण अनुमतोस्यनमस्कारोमंत्रइतिगौ।नमोक्ते
रिति तन्न दृष्टद्वारैवाहितत्प्राप्तिर्नस्वातंत्र्येण अन्यथानखविपूतेष्यवघातजन्यादृष्टार्थसोपिक्लृप्तेतोनिकिंचिदेतत् तेनापि
तृणांनामगोत्रतद्व्यारोपत्राद्विजालापपिनाममंत्रउक्तस्तत्रसतिप्रसवमात्रार्थयुक्तंनतिलावपनादावपि अत्रकेचित् वैदि
कमंत्रोविप्रस्य पौराणस्तुशूद्रैःपठनीयः नहिवेदेष्वधिकारःकश्चिच्छूद्रस्यविद्यते पुराणेष्वधिकारोमेदर्शितोब्राह्मणै
रिहेतितत्रैवपाद्मोक्तेरित्याहुः गौडाअप्येवम् तन्न नाध्येतव्यमिदंशास्त्रंवृषलस्यतुसन्निधाविति कौर्मे पुराणाभिषे
धेनचेदस्यदूरापास्तत्वात् अध्येतव्यंब्राह्मणेनवैश्येनक्षत्रियेणच श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन श्रौतंस्मार्त-
चयेधर्मंप्रोक्तमस्मिन्नृपोत्तम तस्माच्छूद्रैर्विनाविप्रंनश्रोतव्यंकदाचनेतितत्रैवपुराणाधिकारेभविष्योक्तेश्च एतेनना
ध्येतव्यमितिनिषेधोमंत्रेतरपुराणपरइतिश्रीदत्तादिमतमपास्तम् तेनपौराणमंत्राणामेवविप्रेणपाठोनवैदिकानामितिसि
द्धम् द्विजाश्चिपस्तुसंकल्पमात्रंस्वयंकृत्वावैदिकमंत्रयुक्तंसर्वंब्राह्मणद्वाराकारयेदितिप्रयोगपारिजाते अतएवस्त्री
णामित्यकृतविवाहस्त्रीपरमितिहेमाद्रिराह अनुपनीतस्तुवैदिकमंत्रयुक्तंसर्वंस्वयमेवकुर्यादित्युक्तंप्राक् यत्तुप्राक्द्विजा
श्चमंत्रादेशादितितदशक्तविषयमचूडाविषयंवेतिदिक् शूद्रस्यतुसदामश्राद्धमेव सदैवतुशूद्राणामामश्राद्धमितिधौम्य
नइतिस्मृतेः षष्ठीचंद्रोदयेमात्स्येपि एवंशूद्रोपिसामान्यंवृद्धिश्राद्धंचसर्वदा नमस्कारेणमंत्रेणकुर्यादामान्नवत्स
दा तत्रैव वृद्धपराशरः आमान्नेनतुशूद्रस्यतूष्णींतुद्विजपूजनम् कृत्वाश्राद्धंतुनिर्वाप्यसजातीनाशयेदथ सएव

धर्मेप्सवस्तु धर्मज्ञा यदि शूद्राः प्रकुर्वते अग्नौ

आमंशूद्रस्यपक्वान्नं पक्वमुच्छिष्टमुच्यते हेमाद्रौभविष्ये
करणमंत्रवर्जं नमस्कारोविधीयते आवाहनादिकर्तव्यंयथाशूद्रेणतच्छृणु देवानांदेवनाम्नातुपितॄणांनामगोत्रतः पिंडादीन्नि
यम्यनमस्कारोविधीयते आवाहनादिकर्तव्यंयथाशूद्रेणतच्छृणु देवानांदेवनाम्नातुपितॄणांनामगोत्रतः पिंडादीन्नि
पद्दीरनामतोगोत्रतस्तथा शूद्राणांगोत्राभावेपि काश्यपंगोत्रंज्ञेयम् तस्मादाहुः सर्वाःप्रजाःकाश्यप्यइतिश्रुतेः गोत्रन
शेतुकाश्यपइतिब्यौघपादोक्तेश्चेतिहेमाद्रिः एवमन्यत्रगोत्राज्ञाने एवंतर्पणादिषुज्ञेयम् तत्रैवभविष्ये शूद्रस्कग्
केननपिंडान्निर्वपेत्तथा सक्तुमूलंफलंतस्यपायसंवाभवेस्मृतम् गोत्नमः अन्नमतोस्यनमस्कारोमंत्रइति देवताभ्यःपि
तृभ्यश्चेत्ययंनमस्कारमंत्रइतिकेचित् विज्ञानेश्वरोप्येवमाह हेमाद्रिस्तु शूद्रोप्यमंत्रकंकुर्यादनेनविधिनाबुधइतिमा·
त्स्ये मंत्रनिषेधान्नाममंत्रेणेत्याह पृथ्वीचंद्रोदयेस्कांदे राजकार्येनियुक्तस्य बंधनिग्रहवर्तिनः व्यसनेषुचस·
र्वेषुश्राद्धंविप्रेणकारयेत् यत्तुभारतेराजधर्मेषु यवनाःकिराताःगांधाराश्चीनाःशाबरबर्बराः शकास्तुषाराः ·
श्चपल्हवाश्चांध्रमद्रकाइत्युक्त्वा ब्रह्मक्षत्रप्रसूताश्चवैश्याःशूद्राश्चमानवाः कथंधर्मांश्चरिष्यंतिसर्वेविषय
नइतिचोक्त्वाचेदधर्मक्रियाश्चैवतेषांधर्मोविधीयते पितृयज्ञास्तथाकूपाःप्रपाश्चशयनानिच दानानिचयथाकालं
द्विजेभ्योविसृजेत्सदा तथा दक्षिणासर्वयज्ञानांदातव्याभूतिमिच्छता पाकयज्ञामहार्हाश्चकर्तव्याःसर्वदस्युभि
इतिम्लेच्छादीनांश्राद्धविधानं तदपिसजातीयभोजनद्रव्यदानादिपरंनतुश्राद्धपरमिति इतिश्रीनारायणभट्टसू
नुरामकृष्णभट्टात्मजकमलाकरभट्टकृतेनिर्णयसिंधौअधिकारनिर्णयः अथापिनरः हेमाद्रौमात्स्यदेवलो
मगोत्रंपितॄणांतुप्रापकंहव्यकव्ययोः अग्निष्वात्तादयस्तेषामाधिपत्येव्यवस्थिताः नाममंत्रास्तथादेशाभवांतर

गतानपि प्राणिनः प्रीणयंस्तेवं तदाहारत्वमागतान् देवोयदि पिताजातः शुभकर्मानुयोगतः तस्यान्नममृतंभूत्वादे
वत्वेप्यनुगच्छति गांधर्वेभोगरूपेणपशुत्वेचतृणंभवेत् श्राद्धान्नंवायुरूपेणनागत्वेप्युपतिष्ठति पानंभवतियक्ष
त्वेराक्षसत्वेतथामिषम् दनुजत्वेतथामद्यंप्रेतत्वेरुधिरोदकम् मनुष्यत्वेन्नपानादिनानाभोगकरंभवेत् अत्रपित्रा
दिशब्दैर्जनकादीनामेवदेवतात्वमुच्यते नवस्वादीनाम् असावेतत्तइति यजमानस्यपित्रेइतिशतपथश्रुतेः यस्य
पिताप्रेतःस्यात्सपित्रेपिंडंनिधायेतिविष्ण्वादिस्मृतेश्च यत्तुमनुदेवलौ वसवःपितरोज्ञेयारुद्राज्ञेयाःपितामहाः प्र
पितामहास्तथादित्याश्रुतिरेषासनातनी यच्चयाज्ञवल्क्यः वसुरुद्रादितिसुताःपितरःश्राद्धदेवताइति तदभेदध्या
नार्थं यानितुहेमाद्रौनंदिपुराणे विष्णुःपितास्यजगतोदिव्योयज्ञःसएवच ब्रह्मापितामहोज्ञेयोह्यहंचप्रपितामह
इति यच्चभविष्ये अनिरुद्धःस्वयंज्ञेयःप्रद्युम्नश्चपितास्मृतः संकर्षणस्तुजनकोवासुदेवस्ततःपिता स्वयंकर्ता
यत्तुतथैव प्रथमोवरुणोज्ञेयःप्राजापत्यस्तथापरः तृतीयोग्निःस्मृतःपिंडोह्येषपिंडविधिःस्मृतः यच्चमनुः सोमपा
नामविप्राणांक्षत्रियाणांहविर्भुजः वैश्यानामाज्यपानामशूद्राणांतुसुकालिनः यच्चआदित्यपुराणे मासाश्चपितरोज्ञे
याऋतवश्चपितामहाः संवत्सरःप्रजानांचसएकःप्रपितामहः यच्चनंदीपुराणे अग्निष्वात्ताब्राह्मणानांपितरःपरिकी
र्तिताः राज्ञांबर्हिषदोनामविशांकाव्याःप्रकीर्तिताः सुकालिनस्तुशूद्राणांव्यामाम्लेछांत्यजातिषुइति अत्रावाहनादि
षुपित्रादयः समुच्चयेनविकल्पेनवायथाचारंतत्तद्देवतारूपेणवाच्याइतिहेमाद्र्यादयः हेमाद्रौब्राह्मे पार्वणंकुरुते
यस्तुकेवलंपितृहेतुकम् मातामहंनकुरुतेपितृहासप्रजायते धौम्यः पितरोयत्रपूज्यंतेतत्रमातामहाध्रुवम् अवि

कर्षूसमन्वितंमुक्त्वा तथाद्यंश्राद्धषोडशम् प्रत्याब्दि
शेषेणकर्तव्यंविशेषान्नरकंव्रजेत् अस्यापवादमाहकात्यायनः कर्षूसमन्वितंमुक्त्वा तथाद्यंश्राद्धषोडशम् प्रत्याब्दि
कंतुशेषेषुपिंडाःस्युःषडितिस्थितिः कर्षूसमन्वितंसपिंडीकरणं दर्शादौसपत्नीकानामेवदेवतात्वम् स्वेनभर्त्रास
हंश्राद्धंमाताभुंक्तेस्वधासमं पितामहीचस्वेनैवतथैवप्रपितामहीतितत्रैवोक्तेः चंद्रिकायांचतुर्विंशतिमते क्षयाहं
वर्जयित्वैकंस्त्रीणांनास्तिपृथक्क्रिया केचिदिच्छंतिनारीणांपृथक्श्राद्धंमहर्षयः अन्वष्टकासुवृद्धौचगयायांचक्ष
येहनि अत्रमातुः पृथक्श्राद्धमन्यत्रपतिनासहेतिकात्यायनोक्तेश्च अस्यानिर्मूलतांवदंतोगौडास्त्वज्ञाएव अत्रभाग
इत्यध्याहारः अन्यथासपत्निकायैमात्रे इतिप्रयोगापत्तेः अत्रमातृशब्दोजनन्यामेवमुख्यः तेनसपत्नमातृभ्योनद
द्यात् एवंपितामह्यादिशब्दैःपितृजनन्यादयएवोच्यंतइतितत्सपत्नीभ्योनदेयमितिहेमाद्रिः कारुण्येनतुसहात्वपादौदे
यमितिसएव अथविश्वेदेवाः हेमाद्रौशंखबृहस्पती इष्टिश्राद्धेक्रतुर्दक्षौसत्योनांदीमुखेवसू नैमित्तिकेकामका
लौकाम्येचधुरिलोचनौ पुरूरवार्द्रवौचैवपार्वणेसमुदाहृतौ तत्रैव उत्पत्तिंनामचैतेषांनविदुर्येद्विजातयः अयं
रणीयस्तैः श्लोकश्रद्धासमन्वितैः आगच्छंतुमहाभागाविश्वेदेवामहाबलाः येपत्रविहिताःश्राद्धेसावधानाभवंतुते
इति इष्टिश्राद्धंप्रतिरुचिमित्युक्तमितिकल्पतरुः आधानादिकर्मांगमित्यन्ये नैमित्तिकमेकोद्दिष्टम् एकोद्दिष्टंतुयत्
श्राद्धंतन्नैमित्तिकमुच्यतइतिभविष्योक्तेः एतद्यद्यपिएकोद्दिष्टंदेवहीनामितितत्रविश्वेदेवनिषेधस्तथापिनवश्राद्धे
द्वादशमासिकेच कामकालौज्ञेयौ नवश्राद्धंदशाहानिनवमिश्रंतुषड्ऋतून् अतःपरंपुराणंवैत्रिविधंश्राद्धमुच्यते य
स्मिन्नेवपुराणेवाविश्वेदेवानलेभिरे- आसंनत्तन्वेच्छाद्धंषलमंत्रवर्जितमितिवकृचपरिशिष्टात् एतच्चानकृतानामे

वतेपामेवोक्तेः अन्येषांतुनात्रविश्वेदेवाइतिकात्यायनोक्तेस्तन्निषेधएवेतिपृथ्वीचंद्रोदयः अन्येतुनैमित्तिकंसपिंडीकरणमाहुः
भविष्ये यद्यप्येकोद्दिष्टंतच्छब्देनोक्तं तथापितद्यदैवंकर्तव्यमयुग्मान्भोजयेद्द्विजानिति तत्रैवविश्वेदेवनिषेधात् य-
द्यपिसपिंडीकरणेंशतएकोद्दिष्टत्वंतथापिसपिंडीकरणंश्राद्धंदैवपूर्वंनियोजयेदितिवचनात्तत्परत्वम् हेमाद्रौवादित्यपु
राणे विश्वेदेवौक्रतुर्दक्षः सर्वास्विष्टिषुकीर्तितौ नित्यंनांदीमुखेश्राद्धे वसूसत्यौचपैतृके नवान्नलंभनेदेवौ काम कालौ
सदैवहि अपिकन्यागतेसूर्ये कार्यस्येचधुरिलोचनौ पुरूरवार्द्रवौनेवाविश्वेदेवौतुपार्वणे क्वचिद्विश्वेदेवापवादमाह हेमाद्रौशा
तातपः नित्यंश्राद्धमदैवंस्यादेकोद्दिष्टंतथैवच मातृश्राद्धंचयुग्मैःस्याददैवंप्राङ्मुखैःपृथक् योजयेद्दैवपूर्वाणिश्रा
द्धान्यन्यानियत्नतः नांदीश्राद्धेभिन्नप्रयोगपक्षेमातृश्राद्धमदैवमितिहेमाद्रिः अथविप्राः तेचोत्तममध्यमाधमभे
देनात्रिविधाः तत्राद्याः अत्रमदीयाःश्लोकाः त्रिणाचिकेतस्त्रिमधुश्चबह्वृचोप्याथर्वणोयाजुषसामगौच षडंगविच्च-
त्रिसुपर्णवेत्ताप्यथर्वशीर्षाध्ययनेरतश्च शताग्रुर्वेदार्थविदोधवकास्यान्ब्रह्मचारीचतथाग्निचिच्च सीदहृतिःसत्य
वाक्सूरुपैःस्वैर्मातापित्रोःपंचभिःख्यातवंशः पत्नीसुकोज्येष्ठसामापुराणवेत्तापुत्रीचेतिहासेष्वभिज्ञः योगीभिक्षुः
सामगोब्रह्मवेत्तापंचाग्निश्चश्रोत्रियस्तत्सुतोवा शंभुध्यायीश्रीशपादाब्जसेवीपांथश्चैतेतूत्तमाः संप्रदिष्टाः भिक्षु
र्योगीपांथएतेत्वलभ्याभार्यालुब्धाश्चेत्तदाभोजनीयाः श्राद्धेविप्रेपूपाविष्टेषुपश्चात्संप्राप्ताश्चोद्भवपंक्तौतुभोज्याः अत्र
मूलंहेमाद्रौज्ञेयम् तत्रैवनारदः योचेथनीननारस्यभोजयेदिनरान्द्विजान् विजानन्चसंतोग्राये कव्यंनयातिराक्षसान्
दीपकलिकायांदक्षः विनामांसेनमधुनाविनादक्षिणयाशिषाः परिपूर्णभवेच्छ्राद्धंयांतिशुश्राद्धभोजिषु एतच्चज्ञातिवि

पयम् त्रिनाचिकेतस्त्रिसुपर्णौयजुर्वेदैकदेशौतद्व्रतेनतदध्यायिनो यस्यसमपूर्वेसोमपाःसत्रिसुपर्णइतिबोपदेवः त्रिमधु
ऋग्वेदैकदेशः तदध्यायी केचिन्नाचिकेतंचयनंत्रिः कृतवानित्यर्थमाहुस्तद्धेमाद्रिविरुद्धं हेमाद्रौगौतमः युवभ्योदा
नंप्रथमंपितृवयसइत्येके मात्स्यमनुः यश्चव्याकुरुतेवाचंयश्चमीमांसतेध्वरम् सामस्वरविधिज्ञश्चपंक्तिपावनपाव
नाः कौर्मे असमानप्रवरकोह्यसगोत्रस्तथैवच असंबंधीचविज्ञेया ब्राह्मणाश्राद्धसिद्धये गारुडे श्राद्धेषुविनि-
योज्यास्ते ब्राह्मणाब्रह्मवित्तमाः येयोनिगोत्रमंत्रांतेवासिसंबंधवर्जिताः मनुः नमित्रंभोजयेच्छ्राद्धे धनैःकार्यो
स्यसंग्रहः नारिंनमित्रंयंविद्यात्तंतुश्राद्धेनिमंत्रयेत् द्वयोर्भार्ययोः श्राद्धभोजननिषेधः पितृपुत्रौभ्रातरौद्वौनिरग्निगु-
र्विणीपतिम् सगोत्रप्रवरंचैवश्राद्धेषुपरिवर्जयेदितिश्राद्धदीपकलिकायांजातूकर्ण्योक्तेः अथमध्यमाः हेमाद्रौकौर्म-
गार्ग्यौ नैकगोत्रेहविर्दद्याद्यथाकन्यातथाहविः अभावेत्वन्यगोत्राणामेकगोत्रांस्तुभोजयेत् अत्रकेचित् स्वशाखी
यान्मुख्यानाहुः पंक्तिंच निमंत्रयीतपूर्वेद्युः स्वशाखीयान्द्विजोत्तमान् स्वशाखीयद्विजाभावेद्विजानन्यान्निमंत्रयेदि-
ति इदंतुनिर्मूलत्वाद्धेमाद्रिणादूषितत्वाच्चोपेक्ष्यम् मनुरपि यत्नेनभोजयेच्छ्राद्धे ब्राह्मणंवेदपारगम् शाखांतगमथाध्वर्युं
छंदोगंवासमाप्तिगम् एषामन्यतमोयस्यभुंजीतश्राद्धमर्चितः पितॄणांतस्यतृप्तिःस्याच्छाश्वतीःसाप्तपौरुषी अत्रमाम-
काःश्लोकाः मातामहोमातुलभागिनेयदौहित्रजामातृगुरुस्वशिष्याः ऋत्विक्चयाज्यश्वशुरौस्ववंधुश्यालागुणाढ्या
स्त्वनुकल्पभूताः बंधवोमातृष्वसृपितृष्वसृमातुलपुत्राइतिबोपदेवः अत्रमूलंहेमाद्रौज्ञेयम् सगुणस्वस्त्रीयाद्यतिक्रमेदोषएव
सप्तपूर्वान्सप्तपरान्पुरुषानात्मनासह अतिक्रम्यद्विजानेतान्नरकेपातयेत्स्वकं संबंधिनस्तथासर्वान्दौहित्रंविट्पतिं-

यस्यन्वैवगृहिणीरजस्वलास्त्वार्थेणा
स्तेनशिल्पिपतृवादकारकान् अर्थकामरतशूद्रयाजकश्मश्रुहीनजारमुंडिनिर्घृणानं पुत्रहीनमथकूटसाक्षिणंप्रातिहारिक
करतशापदायकान् क्लीबकुष्ठातिविलोहितेक्षणान्कुब्जवामनमृषाभिशापिनः अत्रमूलंहेमाद्रौपृथ्वीचंद्रोदयेचज्ञेयम्
मयाज्ययाजकम् स्वासमदातृपरिवेतृयाजकस्तेनाहिस्त्रकमुखान्विवर्जयेत् ग्राम्यप्रेष्योवार्धुषिकोगायकःस
भारतेदानधर्मेषु श्राद्धवर्ज्यविप्राधिकारं कितवोभ्रूणहायस्त्रीपशुपालोनिराकृतिः अभिशस्तस्तथास्तेनःशिल्पंय
र्विक्रयी सामुद्रिकोराजभृत्यस्तैलिकःकूटकारकः पित्राविवदमानश्चयस्यचोपपतिर्गृहे श्वभिश्चयःपरिक्रामेद्यः
श्वोपजीवति पर्वकारश्चसूचीचमित्रध्रुक्पारदारिकःअव्रतानामुपाध्यायः कांडपृष्ठस्तथैवच ईदृशाब्राह्मणाज्ञेयाअ
श्रनार्हाएवच परिवित्तिस्तथास्तेनोदुश्चर्मागुरुतल्पगः कुशीलकोदेवलकोनक्षत्रैर्यश्चजीवति कांडपृष्ठःशस्त्रशास्त्रंस्त्वापरशाखयोपनीतः तदध्या
पंक्तेयायुधिष्ठिर तथा ऋणकर्ताचयोराजन्यश्चवार्धुषिकोनरः कांडपृष्ठश्च्युतोमार्गात्सोपांक्त्येयःप्रकीर्तितइ-
ति क्षत्रियवैश्यवृत्तौ नारदस्तु तस्यामेवतुयोवृत्तौब्राह्मणोवसतेरसान् कांडपृष्ठःसतुप्रोक्तःकांडपृष्ठानसंशयः अन्येपिहेमाद्रौमा
त्स्याह हारीतः शूद्रापुत्राःस्वयंदत्तायेचैतेक्रीतकाःसुताः तेसर्वेमनुनाप्रोक्ताःकांडपृष्ठानसंशयः तत्रैववराहपुराणे अंगवंग
त्रिशंकून्बर्बरानंध्रान्चीनद्रविडकोंकणान् कर्णाटकांस्तथाभीरान्कालिंगांश्चविवर्जयेत् आवंत्यान्मागधांश्चैवब्राह्मणांस्तुवि
कलिंगांश्चसौराष्ट्रान्गुर्जरांस्तथा आभीरान्कोंकणांश्चैवद्राविडान्दाक्षिणापथान् मानकूटास्तुलाकूटाःशिल्पिनोग्रामयाजकाः रा
वर्जयेत् चंद्रिकायांयमः काणाःकुब्जाश्चषंढाश्चकृतघ्नागुरुतल्पगाः समयानांचभेत्तारःप्रदानेयेनिवारकाः प्र
जभृत्यांधबधिरमूकखल्वाटपंगवः वणिजोमधुहर्तारोरोगदावनदाहकाः

ज्योपनिहताश्च वृथाप्रव्रजिताश्चये यश्चप्रव्रजिताज्जातः प्रव्रज्यावसितश्चयः अवकीर्णीचवीरघ्नोगुरुघः पितृदूषकः श्राद्धकाशिकायांकात्यायनः द्विर्नग्नः कीरुदुश्चर्मा शक्नोतिकपिलस्तथा छिन्नोष्ठश्छिन्नलिंगश्चनैवकेतनमर्हति द्विर्नग्नः पित्रोर्वंशोत्रिपुरुषं विच्छिन्नवेदाग्निः हेमाद्रौमरीचिः अविद्धकर्णः कुणाश्चलंबकर्णस्तथैवच वर्जनीयाः प्रयत्नेन ब्राह्मणाः श्राद्धकर्मणि श्राद्धे मूकश्चपूतिनाशश्चछिन्नांगश्चाधिकांगुलिः गलरोगीचगडुमान्स्फुटितांगश्चसज्वरः षंदनूवरमंदाश्चश्राद्धेष्वेतान्विवर्जयेत् लंबकर्णंचाहतत्रैवगोभिलः हनुमूलादधःकर्णौलंबौतुपरिकीर्तितौ व्यंगुलौ व्यंगुलौशस्तावितिशातातपोब्रवीत् चंद्रिकायांयमः व्यंगुलातीतकर्णस्यभुंजतेपितरोनतु षंदश्चात्रचंद्रिकोक्तः सप्तविधोग्राह्यः यथा षंढकोवातजःषंदः पंडःक्लीबोनपुंसकः कीलकश्चेतिसप्तैवक्लीबभेदाः प्रकीर्तिताः पराशरमाधवीयेतुचतुर्दशविधउक्तः तेषांस्वरूपाणितत्रैवज्ञेयानि चंद्रिकायांशातातपः अग्निष्टोमादिभिर्यज्ञैर्येयजंत्यस्पदक्षिणैः तेषामन्ननभोक्तव्यमपांक्तास्तेप्रकीर्तिताः एतच्चशक्तौसत्यां अपरार्केभारते अव्रतीकितवस्तेनः प्राणिविक्रयकोपिवा पश्चाद्वैसीतवान्सोमं सोपिकेतनमर्हति श्राद्धदीपकलिकायांयमः अपत्नीकश्चवर्ज्यःस्यात्सपत्नीकोप्यनग्निकः तत्रैवआश्वलायनः प्रतिमाविक्रयंयोवैकरोतिपतितस्तुसः जीवितार्थंपरास्थानि धृत्वातीर्थंप्रयातियः मातापित्रोर्विनाशोपिपतितःपरिकीर्तितः तत्रैवजातूकर्ण्यः यत्रमातुलजोद्वाहीयत्रवावृषलीपतिः श्राद्धंनगच्छेत्तद्विप्राः कृतंयच्चनिरामिषम् पितृपुत्रौभ्रातरौद्वौनिरग्निंगुर्विणीपतिम् सगोत्रप्रवरंचैवश्राद्धेषुपरिवर्जयेत् बृहन्नारदीये शंखंचक्रंमृदायस्तुकुर्यात्तप्तायसेनवा सशूद्रवद्बहिःकार्यः सर्वस्माद्द्विजकर्मणः धारणंचक्राद्यंकनंचगीतनृत्यादिकं-

तथा एकजातेरयंधर्मोनजातुस्याद्द्विजन्मनः तेनयेत्तसमुद्रादिविधयस्तेशूद्रविषयाइति पृथ्वीचंद्रोदये शिवकेशव-
योरंकान्शूलचक्रादिकान्द्विजः नधारयेतमतिमान्वैदिकेवर्त्मनिस्थितइत्याश्वलायनोक्तेश्च नृयंचोदशदर्धनि
द्रुपितिश्रीधरस्वामी अन्येपिनिषेधाःनिबंधेषुज्ञेयाइतिदिक्, अत्रविप्राणांप्रारब्धत्वात्तयेवतद्वर्ज्यानांनिषेधेसिद्धेपुनर्वर्ज्यपा
पानंनिषिद्धवर्ज्यंनिर्गुणप्राप्त्यर्थमितिविज्ञानेश्वरः कुष्ठिकाणादेरपवादोहेमाद्रौवसिष्ठः अपिचेन्मंत्रवित्युक्तःशारीरैःपङ्क्तिदू
षणैः अदूष्यंतंयमःप्राहपङ्क्तिपावनएवसः कश्चिद्विप्राणांजातिमात्रेणप्रारब्धत्वमुक्तम् चंद्रिकायामाग्नेये यदिपुत्रोगयां
गच्छेत्कदाचित्कालपर्ययात् तानेवभोजयेद्विप्रान्ब्रह्मणायेप्रकल्पिताः ब्रह्मणाकृतसंस्थाना विप्राब्रह्मसमाःस्मृताः उ
मानुषागयाविप्राब्रह्मणायेप्रकल्पिताः तेषुतुष्टेषुसंतुष्टाःपितृभिःसहदेवताः तत्रैव नविचार्यंकुलंशीलंविद्याचतप-
एवञ्च पूजितैस्तैस्तुसंतुष्टादेवाःसपितृगुह्यकाः गयायांनिर्गुणाअपितेएवभोज्याइति हेमाद्रिः अक्षय्यवटश्राद्धएव त-
न्नियमोनान्यत्रेति त्रिस्थलीसेतौपितामहचरणाः पृथ्वीचंद्रोदयेपिपाद्मे तीर्थेषुब्राह्मणंनैवपरीक्षेतकदाचन अन्नार्थि
नमनुप्राप्तंभोज्यंतंमनुरब्रवीत् स्कांदेपि ब्राह्मणान्नपरीक्षेततीर्थेक्षेत्रनिवासिनः मनुः नब्राह्मणंपरीक्षेतदैवेकर्मणि
धर्मवित् पित्र्येकर्मणितुप्राप्तेपरीक्षेतप्रयत्नतः असंभवपरमेतदितिमेधातिथिः हेमाद्रौव्यासः गायत्रीसारमात्रोपि
वरंविप्रःसुयंत्रितः नायंत्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी काणाःकूटाश्चकुब्जाश्चदरिद्राव्याधितास्तथा स
र्वेश्राद्धेनियोक्तव्यामिश्रिताःवेदपारगैः अत्रविप्रनिमंत्रणम् चंद्रिकायांवाराहे वस्त्रशौचादिकर्तव्यंश्वःकर्तास्मीतिजा
नता स्थानोपलेपनंकृत्वाततोविप्रान्निमंत्रयेत् दंतकाष्ठंचविसृजेद्ब्रह्मचारीशुचिर्भवेत् तत्रैवप्रचेताः दक्षिणंचरण

विप्रःसव्यंवैक्षभियस्तथा पादावादायवैश्याद्वौशूद्रःप्रणतिपूर्वकं बृहस्पतिः उपवीतीततोभूत्वादेवार्थंतुद्विजोत्तमान् अप सव्येनपित्र्येथस्वयंशिष्योथवासुतः प्रचेताः सवर्णंप्रेषयेद्दासंद्विजानांतुनिमंत्रणे पृथ्वीचंद्रोदयेस्कांदे राजकार्येनियुक्तस्य बंधनिग्रहवर्तिनः व्यसनेषुचसर्वेषुश्राद्धंविप्रेणकारयेत् चंद्रिकायांयमः अभोज्यंब्राह्मणस्यान्नंवृषलेननिमंत्रितम् त थैववृषलस्यान्नंब्राह्मणेननिमंत्रितम् तत्रैवपैठीनसिः सप्तपंचद्वौवाश्रोत्रियान्निमंत्रयेत् आश्वलायनसूत्रे एकैकमेकै कस्यद्वौद्वौत्रींस्त्रीन्वावृद्धौफलभूयस्त्वंत्वेवनति शाट्यश्राद्धेगौतमः नवावरान्भोजयेदयुजोवायथोत्साहम् याज्ञवल्क्यः द्वौदै वेप्राक्त्रयःपित्र्येउदगेकैकमेववा मातामहानामप्येवंतंत्रंवावैश्वदेविकम् दीपकलिकायांपाराशरः संपत्तावर्थपात्राणामे कैकस्यत्रयस्त्रयः पित्रादेर्ब्राह्मणाःभोक्ताचत्वारोवैश्वदेविके वृद्धयाज्ञवल्क्यः दशैकंपंचवाविप्रान् पार्वणेविनियोजयेत् अत्रवैश्वदेवेद्वौचतुरोवोपवेश्यपित्रादीनामेकैकस्यस्थाने एकंत्रीन्पंचसप्तनववोपवेशयेदितिनिष्कृष्टोर्थः मनुः द्वौदैवेपितृ कृत्येत्रीनेकैकमुभयत्रवा भोजयेत्सुसमृद्धोपिनप्रसज्येतविस्तरे सत्क्रियांदेशकालौचशौचंब्राह्मणसंपदम् पंचैतान्विस्तरोहं तितस्मान्नेहेतविस्तरम् पृथ्वीचंद्रोदयेशातातपः द्वौदैवेथर्वणौविप्रौप्राङ्मुखावुपवेशयेत् पित्र्येतूदङ्मुखांस्त्रीन्वबह्वृचा ध्वर्युसामगान् अत्यशक्तोहेमाद्रौदेवलः एकेनापिहिविप्रेणषट्पिंडंश्राद्धमाचरेत् षडर्घ्यान्दापयेत्तत्रषड्भ्योदद्यात्तथाहविः गोभिलः यद्येकंभोजयेच्छ्राद्धेछंदोगंतत्रभोजयेत् ऋचोयजूंषिसामानित्रितयंतत्रविद्यते अत्रवैश्वदेवेविशेषमाह तत्रैवव सिष्ठः यद्येकंभोजयेच्छ्राद्धेदैवंतत्रकथंभवेत् अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच देवतायतनेकृत्वाततःश्राद्धंसमाचरे त्प्रास्येदग्नौतदन्नंतुदद्याद्वाब्रह्मचारिणे एतच्चसपिंडीकरणवर्जंज्ञेयम् नत्वेवैकंसर्वेषांकाममनाद्येइत्याश्वलायनोक्तेः अ

सपिंडीकरणेतुनियतंत्रिभिर्भवित-
स्यार्थउक्तोनारायणवृत्तौ आद्यंसपिंडीकरणंतद्वर्ज्येषुसर्वश्राद्धेषुकामंत्रयाणामेकंभोजयेत्. कारिकापि दैवेपि
त्र्यमिति अनाद्येपार्वणवर्जितेवा अभोजनेआमहेमश्राद्धेदोवा अन्नाभावेवेतिव्याख्यांतरंतत्रैवज्ञेयम्. एकस्मिन्ब्राह्मणेदैवेसाग्नेरग्निर्भवेत्स-
न्येथवैवैकेकंसपिंडीकरणंविनेति अनेकविप्रेसाग्नेर्विशेषमाह पृथ्वीचंद्रोदयेप्रचेताः निधाय दर्भान्निचय मासनेषुस
दा अनग्नेःकुशमुष्टिःस्याच्छ्राद्धकर्मणिसर्वतः सर्वथाविप्रालाभेतत्रैवहेमाद्रौवसत्यव्रतः निधाय दर्भानिचय मासनेषुस
माहितः प्रैषानुप्रैषसंयुक्तंसर्वंश्राद्धंप्रकल्पयेत् अत्रानन्यभावात्सत्रेइव कल्पिकं कार्यं यजमानविधौनदक्षिणेतिकेचित् न
न अदृष्टार्थायाः दक्षिणायाः प्राप्तेः सर्वंतस्मिंजटेतुभ्यंयच्चश्राद्धमदक्षिणमितिपाद्यात् विदध्याद्धोत्रमन्यश्चेद्दक्षिणार्द्धह
रोभवेत् स्वयंचेदुभयंकुर्यादन्यस्मैप्रतिपादयेदितिछंदोगपरिशिष्टाच्च एवंयतिश्राद्धेपिकात्यायनः यज्ञवल्कनिमुख्येच स्त्री
भेदर्भवटोतथा दर्भसंख्यानविहिताविष्टरास्तरणेषुच मातृश्राद्धेतुविप्रालाभेसुवासिन्योपिभोजनीयाइत्याहापरार्केवृद्धवसिष्ठः मातृश्राद्धे
तुविप्राणामलाभेपूजयेदपि पतिपुत्रान्विताभव्यायोषितोष्टौकुलोद्भवाइति अथावितिहद्धिश्राद्धविषयम् पाद्मेउत्तरखंडे सकृदभ्यर्च्य
तंलिंगंशालग्रामशिलांचयः पीठेसंस्थापयित्वातुश्राद्धंचकुरुतेनरः पितरस्तस्यतिष्ठंतिकल्पकोटिशतंदिवि चंद्रिकायांमात्स्ये पठन्ति
मंत्र्यनियमान्श्रावयेत्पैतृकान्बुधः अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा यत्तुमनुः सर्वाया-
सविनिर्मुक्तैःकामक्रोधविवर्जितैः भवितव्यंभवद्भिर्नःश्वोभूतेश्राद्धकर्मणीतितत्पूर्वेद्युर्निमंत्रणपरंनत्तदहः तत्रैवदेवलः असंभ-
वेपरेद्युर्वाब्राह्मणांस्तान्निमंत्रयेत् अज्ञानीनसमानार्षानयुग्मानात्मशक्तितः कात्यायनः अनिंद्येनामंत्रितोनापक्रामे-
त्केतनंगृह्यशक्तः अथश्राद्धकर्तृभोक्तृनियमाः तत्रनिमंत्रितविप्रत्यागेपरार्केयमः केतनंकारयित्वातुयोतिपातयति

द्विजम् ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते आमंत्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् भाति कृच्छ्रासु घोरासु तिर्यग्योनिषु-
जायते प्रमादात्त्यागे तु हारीतः प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः तर्पयित्वा यथान्यायं सर्वं न फलमश्नुते प्रमादाभा-
वे तु नारायणः एकस्मिन्नेन सिग्रासे ब्राह्मणो नियतः शुचिः यतिश्चांद्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते यमः आमंत्रितस्तु
यो विप्रो भोक्तुमन्यत्र गच्छति नरकाणां शतं गत्वा चंडालेष्वभिजायते तत्रैव देवलः पूर्वं निमंत्रितोन्येन कुर्यादन्यप्रतिग्रह-
म् भुक्त्वा हारोथवा भुंक्ते सुकृतं तस्य नश्यति यादि विप्रो विलंबेत तदोक्तं आदित्यपुराणे आमंत्रितश्चिरं नैव कुर्याद्विप्रः कदा
चन देवतानां पितॄणां च दातुरन्नस्य चैव हि चिरकारी भवेद्द्रोही पच्यते नरकाग्निना पृथ्वीचंद्रोदये यमः निमंत्रितस्तु यो-
विप्रो ह्यध्वानं याति दुर्मतिः भवंति पितरस्तस्य तं मासं पांसुभोजनाः आमंत्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः पितरस्त-
स्य तं मासं भवंति रुधिराशनाः आमंत्रितस्तु यो विप्रो भारमुद्वहते द्विजः पितरस्तस्य तं मासं भवंति स्वेदभोजनाः निमंत्रित
स्तु यो विप्रः प्रकुर्यात्कलहं यदि पितरस्तस्य तं मासं भवंति मलभोजनाः शंखः निमंत्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः
श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा मैथुनं कृतवापि निषिद्धम् ऋतुकाले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित् न
च गच्छन्नवाप्नोति ह्यनिष्टानि फलानि तु इति तत्रैव माधवीये च वृद्धमनूक्तेः श्राद्धं करिष्यन्कृत्वा वा भुक्त्वा वापि निमंत्रितः
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि भोक्ष्यन्करिष्यन्वः श्राद्धं पूर्वरात्रौ प्रयत्नतः व्यवायं भोजनं चापि ऋतावपि विवर्जे
येदिति चैवाश्वलायनोक्तेश्च विज्ञानेश्वरेण तु श्राद्धकृतो गच्छतोपि न दोष इत्युक्तम् तत्त्वगतिकल्पे ज्ञेयं वृहस्पतिः
द्विनिशां ब्रह्मचारी स्याच्छ्राद्धकृद्ब्राह्मणैः सह अन्यथा वर्तमानौ तु स्यातां निरयगामिनौ पुनर्भोजनमध्वानं भारमाया-

समैथुनम् श्राद्धकृच्छ्राद्धभुक्चैवसर्वमेतद्विवर्जयेत् स्वाध्यायंकलहंचैवदिवास्वापंतथैवच यत्तुश्राद्धकाशिकायां-
पुराणसमुच्चये कृत्वातुरुधिरस्रावंनविद्वान्श्राद्धमाचरेत् एकंद्वेत्रीणिवाविद्वान्दिनानिपरिवर्जयेदिति तन्निर्मूल-
म् पृथ्वीचंद्रोदयेयमः पुनर्भोजनमध्वानंभाराध्ययनमैथुनम् संध्यांप्रतिग्रहंहोमंश्राद्धभोक्ताष्टवर्जयेत् संध्यानि
षेधःप्रायश्चित्तात्पूर्वज्ञेयः यथाहोशनाः दशकृत्वःपिबेदापोगायत्र्याश्राद्धभुग्द्विजः ततःसंध्यामुपासीतजपेच्चजु
हुयादपि गौडास्तु सायंसंध्यांपरान्नंचछेदनंचवनस्पतेः अमावास्यांनकुर्वीतरात्रिभोजनमेवच द्यूतंचकलहंचैवसा
यंसंध्यांदिवाशयम् श्राद्धकर्ताचभोक्ताचपुनर्भुक्तिंचवर्जयेदितिकामधेनौवराहाद्युक्तेः श्राद्धकर्तुरपिसायंसंध्यानिषे
धमाहुः शिष्टास्तुनिर्मूलत्वमाहुः होमनिषेधस्तुस्वविषयः सूतकेचप्रवासेचअशक्तौश्राद्धभोजने एवमादिनिमि
त्तेषुहावयेन्नतुहापयेदिति छंदोगपरिशिष्टात् तत्रैवादित्यपुराणे निमंत्रितस्तुनश्राद्धेकुर्याद्भार्यादिताडनम् चंद्रि-
कायांप्रचेताः श्राद्धभुक्प्रातरुत्थायप्रकुर्याद्दंतधावनम् श्राद्धकर्तानकुर्वीतदंतानांधावनंबुधः हेमाद्रौजाबालिः दंत-
धावनतांबूलेतैलाभ्यंगमभोजनम् रत्यौषधपरान्नंचश्राद्धकृत्सप्तवर्जयेत् विष्णुरहस्ये श्राद्धोपवासदिवसेखादि-
त्वादंतधावनम् गायत्र्याशतसंपूतमंबुप्राश्यविशुध्यति पुनर्भोजनमध्वानंयानमायासमैथुनम् दानप्रतिग्रहोहोमं-
श्राद्धभुक्त्वष्टवर्जयेत् सोमोसत्तौ वनस्पतिगतेसोमेयस्तुहिंस्याद्वनस्पतिम् घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंश-
यः एतद्धिहितेध्मादिव्यतिरेकेण वनस्पतिगतेसोमेनडुहोयस्तुवाहयेत् नाश्नंतिपितरस्तस्यदशवर्षाणिपंचच वन
स्पतिगतेसोमेमंथानंयस्तुकारयेत् गावस्तस्यप्रणश्यंतिचिरकालमुपस्थिताः वनस्पतिगतस्वरूपमाह पृथ्वी चंद्रो

दयेव्यासः त्रिमुहूर्तंवसेदर्केत्रिमुहूर्तंवसेज्जले त्रिमुहूर्तंवसेद्गोषुत्रिमुहूर्तंविनश्यतो कलिकायांवृद्धमनुः निमंत्र्यविप्रां-
स्तदहर्वर्जयेन्मैथुनंक्षुरम् प्रमत्ततांचस्वाध्यायंक्रोधाशौचेतथानृतम् केचिन्निमंत्रणात्पूर्वंश्राद्धार्थंपूर्वेद्युर्हि क्षौरंकुर्वंति न
चमूलंमृग्यम् मरीचिः षष्ठ्यांपर्वसुपक्षादौरिक्तायभद्रातिथिष्वपि पातेश्राद्धेव्रताहेच क्षौरंवर्ज्यंनिशासुच यदाकर्तुरश
क्त्यानन्तपुत्रशिष्यादिश्राद्धंकरोति तदाकर्त्राप्रतिनिधिनाचप्रागुक्तनियमाःकार्याः नशक्नोतिस्वयंकर्तुंयदाप्यनवकाश-
तः श्राद्धंशिष्येणपुत्रेणतदान्येनापिकारयेत् नियमानाचरेत्सोपिनियतांश्चवसुंधरे यजमानोपितान्सर्वानाचरेत्सुस
माहितइति हेमाद्रौवाराहोक्तेः स्त्रियस्तुपाद्मे मुक्तकच्छातुयानारीमुक्तकेशीतथैवच हसतेवदतेचैव निराशाःपितरो-
गताः आश्वलायनः श्राद्धेन्हिभोजयेद्दासोनबालानपिपल्लतः प्राक्पिंडदानाद्गांधाधेनोलंकुर्यात्स्वविग्रहम् धास्तोगृहे
अथश्राद्धवस्तूनि तत्रादौकुशाः पृथ्वीचंद्रोदयेदक्षः समित्पुष्पकुशादीनांद्वितीयःपरिकीर्तितः अष्टधाभक्तेदिनेद्वि-
तीयोभागइत्यर्थः तत्रैवयमः समूलस्तुभवेद्दर्भःपितॄणांश्राद्धकर्मणि मूलेनलोकान्जयतिशक्रस्यसुमहात्मनः व्या
सः तर्पणादीनिकार्याणिपितॄणांयानिकानिचित् तानिस्युर्द्विगुणैर्दर्भैःसप्तपत्रैर्विशेषतः शालंकायनः सपिंडीकरणं
यावत्ऋजुदर्भैःपितृक्रिया सपिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत् शंखः अनंतर्गर्भिणंसाग्रंकौशंद्विदलमेवच प्रादे
शमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् हारीतः पवित्रंब्राह्मणस्यैवचतुर्भिर्दर्भपिंजुलैः एकैकंन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्र
मम् स्मृत्यर्थसारे सर्वेषांवाभवेद्द्वाभ्यांपवित्रंग्रंथितंनवम् रत्नावल्याम् द्वयोस्तुपर्वणोर्मध्येपवित्रंधारयेद्बुधः हे
माद्रौस्कांदे अनामिकाधृतादर्भाह्येकानामिकयापिवा द्वाभ्यामनामिकाभ्यांतुधार्येदर्भपवित्रके पवित्राभावेतुत-

भेचस्कमंत्रः समूलाग्रोविगर्भैस्तुकुशोद्वौदक्षिणेकरे सव्येचैवतथात्रीन्वैबिभृयात्सर्वकर्मसु बोधायनः हस्तयोरुभयोर्द्वौद्वायास
नेपितथैवच दर्भग्रहणेमंत्रमाह शंखः विरिंचिनासहोत्पन्नपरमेष्ठीनिसर्गज नुदसर्वाणिपापानिदर्भस्वस्तिकरोभव स्मृत्यर्थ-
सारे हुंफट्कारेणमंत्रेणसकृच्छित्वासमुद्धरेत् भरद्वाजः श्वेतक्रियार्थेपित्र्यर्थमभिचारार्थमेवच दक्षिणाभिमुखश्छिंद्यात्प्राची
नावीतिकोद्विजः कुशाभावेपरार्केस्कमंत्रः कुशाःकाशाःशरागुंद्रोयवादूर्वाथबल्वजाः गोकेशामुंजकुंदाश्चपूर्वाभावेपरःपरः
शादोविशेषमाह शंखः काशहस्तस्तुनाचामेत्कदाचिद्विधिशंकया प्रायश्चित्तेनयुज्येतदूर्वाहस्तस्तथैवच पृथ्वीचंद्रोदयेयमः
मासिमास्युत्पृतादर्भामासिमास्येवचोदिताः षट्त्रिंशन्मते मासेनस्यादमावास्यादर्भोग्राह्योनवःस्मृतः गृह्यपरिशिष्टे ये
चपिंडाश्रितादर्भायैःकृतंपितृतर्पणम् अमेध्याशुचिलिप्ताये तेषांत्यागोविधीयते लघुहारीतः पथिदर्भाश्चितोदर्भायेदर्भ
त्रभूमिषु स्तरणासनपिंडेषुषट्कुशान्परिवर्जयेत् ब्रह्मयज्ञेचयेदर्भायेदर्भाःपितृतर्पणे हतामूत्रपुरीषाभ्यांतेषांत्यागोविधीय
ते हेमाद्रौ अन्यानिचपवित्राणिकुशदूर्वात्मकानिच हेमात्मकपवित्रस्यकलांनार्हंतिषोडशीम् अथहविः हेमाद्रौप्रचेताः
कृष्णमाषास्तिलाश्चैवश्रेष्ठाःस्युर्यवशालयः महायवाव्रीहियवास्तथैवचमधूलिकाः कृष्णाःश्वेताश्चलोहाश्चग्राह्याःस्युःश्रा
द्धकर्मणि महायवावेणुबीजम् मधूलिकायावनालाइतिहेमाद्रिः कल्पतरुश्चभारते वर्धमानतिलंश्राद्धमक्षय्यंमनुरब्रवीत्
सर्वकामैःसयजतेयस्तिलैर्यजतेपितॄन् चंद्रिकायांदेवलः इष्टापूर्तेमृताहेचदर्शाद्यष्टकासुच पात्रेभ्यस्तेषुकालेषुदेयंनै
वकुभोजनम् सायणीये अगोधूमंचयच्छ्राद्धंमाषमुद्गविवर्जितम् तैलपक्वेनरहितंकृतमप्यकृतंभवेत् हेमाद्रावत्रिः अ
गोधूमंचयच्छ्राद्धंकृतमप्यकृतंभवेत् तत्रैवब्राह्मे यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा संतर्पयेत्पितॄन्मुद्गैःश्यामाकैःसर्ष

पद्मैः नीवारैर्हरिश्यामाकैःप्रियंगुभिरथार्चयेत् हेमाद्रौकार्ष्णाजिनिः यदिसंजीवनश्चासीत्तद्या तस्ययत्नतः सतृप्तोदु-
स्तरंमार्गंततोयातिनसंशयः कालिकायामाश्वलायनः कदल्यादिफलैः शक्तैर्मूलैरार्द्रादिकैरपि गोरसैर्मधुनाद्यैश्चाद्धेसं-
तर्पयेत्पितॄन् कदल्याम्रफलादीनिश्राद्धेसंपादयेत्सुधीः हेमाद्रौपृथ्वीचंद्रोदयेचमार्कंडेयः गोधूमैरिक्षुभिर्मुद्गैः सतीनैः
श्चणकैरपि श्राद्धेषुदत्तैःप्रीयंतेमासमेकंपितामहाः विदार्याचभरुंडैश्चशालैःशृंगाटकैस्तथा केबुकैश्चतथाकंदैःकर्कंधु
बदरैरपि पालेवतैरारुकैश्चाप्यक्षोटैःपनसैस्तथा काकोल्याक्षीरकाकोल्यातथापिंडालकैःशुभैः लाजाभिश्चसधाना-
भिस्त्रपुसैश्चारुचिर्भटैः सर्षपाराजशाकाभ्यामिंगुदैराजजंबुभिः प्रियालामलकैर्मुख्यैःफल्गुभिश्चतिलंटकैः वेत्रां
कुरैस्तालकंदैश्चंचिकाक्षीरिकावनैः लोचैःसमोचैर्लकुचैस्तथावैबीजपूरकैः मुंजातकैःपद्मफलैर्भक्ष्यभोज्यैश्चसंस्कृ-
तैः रागखांडवचोष्यैश्चत्रिजातकसमन्वितैः दत्तैस्तुमासंप्रीयंतेश्राद्धेषुपितरोनृणाम् एषांकोशहेमाद्यादिव्याख्यावैद्य
काद्यनुसारेणमध्यदेशभाषयानामान्युच्यंते सतीनैःकलापैः कलापस्तुसतीनकइत्यमरः बटुरीतिप्रसिद्धैः विदार्याल
कंदेन भरुंडंजलजम् मखाणाइतिश्राद्धमंजर्यां भूकूष्मांडमित्यन्ये शृंगाटकंसिंघाडा केबुकःकंचनारः कंदःसूर
णः अर्शोघ्नःसूरणःकंदइत्यमरः कर्कंधुर्वन्यसूक्ष्मबदरम् पालेवतंकोशातकी आरुकंअरुइ अक्षोटंअखरोट् का
कोलीक्षीरकाकोल्यौगौडेषुप्रसिद्धे पिंडालकंकथनी महाराष्ट्राणांमोहलकंदइतिप्रसिद्धम् त्रपुसादयस्त्रयःकर्कटीभे
दाः चिर्भटंखर्बुजम् सर्षपोतिदीर्घश्चांदसः प्रियालंचिरौंजी फल्गुउडुंबरम् तिलंटकंपटोलम् तालकंदःकंदविशेषः
चंचिकातिंतिणीचिंचीवा क्षीरिकाखिरणी मोचंकदलीफलम् लकुचंवडहरम् मुंजातकंगौडदेशेप्रसिद्धम् पद्मफलंगट्टा

रागखांडवः पिप्पलीशुंठीयुक्तस्तुद्गयूषस्तुखांडवः रागखांडवतांयानि शर्करासंयुतंतुनत् इत्युक्तः पानविशेषः क्रिजा
नंलयंगेलापत्रकाणि मदनरत्नेकोर्मे कालशाकंचवास्तूकंमूलकं कृष्णानालिका प्रशस्तानीति शेषः हेमाद्रौ पृथ्वीचंद्रोद
येच वायुपुराणे कालशाकंमहाशाकं द्रोणशाकंतथार्द्रकम् विल्वामलकमृद्वीकापनसाम्रातदाडिमम् चव्यंपालिवताक्षो
टखर्जूरंचकसेरुकम् कोविदारश्चकंदश्च पटोलं बृहतीफलम् पिप्पलीमरिचंचैव एलाशुंठीचसेंधवम् शर्करागुडकर्पूरव
दरीद्रोणपत्रकम् तथा मधुकंरामठंचैव कर्पूरंगुडमेवच श्राद्धकर्मणि शस्तानि सैंधवंत्रपुसंतथा रामठंहिंगुः कसेरुः
कोविदारश्चतालकंदस्तथाविसम् तमालंशतकंदश्च मधालुः शीतकंदकम् कालेयंकालशाकंच सुनिषण्णसुवर्चलम्
मांसंशाकंदधिक्षीरंचांबुवेत्रांकुरस्तथा कट्फलंकौंकणी द्राक्षालकुचंमोचमेवच अलाबुंजीवकंचारंकर्कंधुर्मधुसाह्वयम्
वैकंकतंनारिकेलं शृंगाटकपरूषकम् पिप्पलीमरिचंचैव पटोलं बृहतीफलम् एवमादीनिचान्यानि स्वादूनि मधुराणिच
नागरंचार्द्रकंदेयं दीर्घमूलकमेवचेति तथा शर्कराक्षीरसंयुक्ताः पृथुकानित्यमक्ष्याः द्रोणशाकं गूमइति प्रसिद्धम् मृद्
वीका द्राक्षा आम्रातंआंबाडाइति प्रसिद्धो वृक्षः तत्फलंच पालिवतंजंबीरं पालिआलमितिगौडप्रसिद्धंवा खर्जूरं खजूरइ
ति प्रसिद्धं कसेरुः जलजः कंदः कोविदारः कंचनारसदृशः तालकंदः तालमूली विसंभसीडम् शतकंदः शतावरी शी
तकंदः शालुकंसेरुकीति प्रसिद्धम् कालेयंकालसंज्ञः शाकः दारुहरिद्रा चेति पृथ्वीचंद्रादयः सुनिषण्णं कर्कटी सदृशां
सुन्दरियाइतिगौडप्रसिद्धम् सुवर्चलंशाकविशेषः कट्फलंश्रीपर्णीवृक्षफलम् कौंकणीअमृतरसाद्राक्षा तिंदुकंडिंडिस
मितिकेदेवः तिंदुफलंवा जीवकंफलविशेषः चारंक्षुद्रनालम् मधुसाह्वयंमधुकपुष्पंफलंवा वैकंकतंचैचीतिगौडा-

स्यानम् परूषकंपरूसमितिप्रसिद्धम् नागरंशुंठी पृथ्वीचंद्रोदयेब्राह्मे आम्रमाम्रातकंबिल्वंदाडिमंबीजपूरकम् प्राचीनामल
कंक्षीरंनारिकेलंपरूषकम् नारंगकंचखर्जूरंद्राक्षानीलकपित्थकम् एतानिफलजातानिश्राद्धेदेयानियत्नतः मात्स्ये अन्नंतुसदधि
क्षीरंगोघृतंशर्करान्वितम् मासंप्रीणातिसर्वान्वैपितॄनित्याहकेशवः याज्ञवल्क्यः हविष्यान्नेनवैमासंपायसेनतुवत्सरम् मात्स्य
हारिणौरभ्रशाकुनछागपार्षतैः ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमं मासवृद्ध्याभितृप्यंतिदत्तैरिहपितामहाः खड्गामिषंमहा
शल्कंमधुमुन्यन्नमेवच लोहामिषंकालशाकंमांसंवाध्रीणसस्यच निगमः त्रिःपिबंत्विंद्रियक्षीणंश्वेतंवृद्धमजापतिम् वाध्री
णसंतुतंप्राहुर्याज्ञिकाःश्राद्धकर्मणि वाध्रीणसोजरच्छागइतिमेधातिथिः कात्यायनः छागोस्रमेषानालभ्यशेषाणिक्रीत्वालब्ध्वा
वास्वयम् मृतानांवाहृत्यपचेत् कौर्मे क्रीत्वालब्ध्वास्वयंवाथमृतानाहृत्यवाद्विजः दद्याच्छ्राद्धेप्रयत्नेनतदस्याक्षय्यमुच्यते श्रा
द्धेदत्तस्यमांसस्याभक्षणेदोषमाहमनुः नियुक्तस्तुयथान्यायंयोमांसंनात्तिमानवः सप्रेत्यपशुतांयातिसंभवानेकविंशतिम्
अत्रबहुप्रवचनेषुश्राद्धेमांसमधुनोःप्राशस्त्योक्तेः विनामांसेनयत्श्राद्धंकृतमप्यकृतंभवेत्इतिहेमाद्रौदयलोक्तेः यच्छ्राद्धंमधु
नाहीनंतद्रसैःसकलैरपि मिष्टान्नैरपिसंयुक्तंपितॄणांनैवतृप्तये अणुमात्रमपिश्राद्धेयदिनस्याच्चमाक्षिकम् नामापिकीर्तनीयंस्या
त्पितॄणांप्रीतयेततइतिहेमाद्रौब्राह्मोक्तेश्चमांसमधुनोःश्राद्धेनियतत्वंगम्यते गौडनिबंधेमात्स्यकल्पतरूक्तेः मध्वभावेगुडोदेयः
क्षीरस्यचतथादधि नलभ्यतेघृतंयत्रकुर्यात्तत्रवतीजयं श्राद्धकलिकायांनागरखंडे कथंचिद्यदिविप्रेभ्योनदत्तंभोजनेमधु
पिंडास्तुनैवदातव्याःकदाचिन्मधुनाविना बृहत्पराशरस्तुमांसंनिषेधति यस्तुप्राणिवधंकृत्वामांसैस्तर्पयतेपितॄन् सविद्वा
न्चंदनंदग्ध्वाकुर्यादंगारविक्रयम् क्षिप्त्वाकूपेयथाकिंचिद्बालआदातुमिच्छति पतत्यज्ञानतःसोपिमांसेनश्राद्धकृत्तथा

सएव सर्वथान्नंप्रदानस्यात्तदैवामिषमाश्रयेत् ब्राह्मणश्चस्वयंनाद्यात्तच्चश्वादिहतंयदि भागवतेपि नदद्यादामिषंश्राद्धे-
नचाद्याद्धर्मतत्त्ववित् मुन्यन्नैःस्यात्पराप्रीतिर्यथानपशुहिंसया तथेतिशेषः अत्रकेचित् मुन्यन्नंब्राह्मणस्योक्तंमांसंक्षत्रि-
यवैश्ययोः मधुप्रदानंशूद्रस्यसर्वेषांचाविरोधियदितिहेमाद्रौपुलस्त्योक्त्याव्यवस्थामाहुः पृथ्वीचंद्रोदयस्तु अक्षतागोप-
शुश्चैवश्राद्धेमांसंतथामधु देवराच्चसुतोत्पत्तिः कलौपंचविवर्जयेत् इतिनिगमोक्तेः वरातिथिपितृभ्यश्चपशूपाकरणक्रि-
येति कलिवर्ज्येषुहेमाद्रावादिपुराणात् बृहन्नारदीये मांसदानंतथाश्राद्धेवानप्रस्थाश्रमस्तथेत्युक्त्वा इमान्धर्मान्क-
लियुगेवर्ज्यानाहुर्मनीषिणइति बृहन्नारदीयेभिधानाच्चमांसविधिः कलिव्यतिरिक्तविषयः कलौमांसनिषेधानांचदे-
शाचाराद्व्यवस्था तथाचबृहन्नारदीये श्राद्धंप्रकृत्य यथाचारंप्रदेयंतुमधुमांसादिकंतथा देशाचाराःपरिग्राह्यास्तत्त-
द्देशीयजैर्नरैः अन्यथापतितोज्ञेयःसर्वधर्मबहिष्कृतइति यस्मिन्देशेपुरेग्रामेत्रैविद्येनगरेपिवा योयत्रविहितोधर्मस्तं
धर्मंनविचारयेदितिभृगूक्तेश्चेत्याहुः तन्न होलाकाधिकरणन्यायेनदेशविशेषव्यवस्थापकपदकल्पनायोगात् निरू-
तत्पितामहचरणैर्मांसमीमांसायामितिदिक् मनुः संवत्सरंतुगव्येनपयसापायसेनच वाध्रीणसस्यमांसेनतृप्तिर्द्वाद-
शवार्षिकी त्रिपिबंत्विंद्रियक्षीणंश्वेतंवृद्धमजापतिम् वाध्रीणसंतुतंप्राहुर्याज्ञिकाःश्राद्धकर्मणि क्षीरादौविशेषमाहहेमा-
द्रौसुमंतुः पयोदधिघृतंचैवगवांश्राद्धेषुपावनम् माहिषीणांघृतंप्राहुःश्रेष्ठंनतुपयःक्वचित् याज्ञवल्क्यः संधिन्य-
र्दशावत्सागोपयःपरिवर्जयेत् औष्ट्रमेकशफंस्त्रैणमारण्यकमथाविकम् हेमाद्रौहारीतः नवसूतायाःसप्तरात्रादि-
त्येके दशरात्रादित्यपरे मासेनोपेयुषंभवतीतिधर्मविदः एतद्गोभावपरम् देवलः अजाविमहिषीणांतुपयःश्राद्धे

पुर्वर्जयेत् विकारान्पयसश्चैवमाहिषंतुघृतंहितम् तत्रैवब्राह्मे माहिषंचामरंमार्गमाविकैकशफोद्भवम् स्त्रैणमौष्ट्रं
पाविनंचदधिक्षीरंत्यजेद्बुतम् सगुडंमरिचाक्तंतुतथापर्युषितंदधि दीर्णतक्रमपेतंचनष्टस्वादंचफेनवत् माहिषाप
वादोःपरार्कब्राह्मे देयंतक्रंतुसघृतंनवनीतादनुस्तम् आरण्यमाहिषीक्षीरंशर्कराक्तानिसंयुतम् मध्वक्तंतुहि-
तंचैवदद्यात्तदमृतंयतः स्कांतिःक्षीरशरः श्राद्धेषुप्रयुचैवम् यद्यपियाज्ञवल्क्येन अन्नंपर्युषितंभोज्यंस्नेहाक्तं
चिरसंस्थितम् अस्नेहाअपिगोधूमयवगोरसविक्रियाइति पर्युषितंदध्यादिभोज्यमुक्तं तथापिगुडमरीचाक्तस्य-
पर्युषितदोषोनोच्यतइतिहेमाद्रिः तत्रैवब्राह्मे कालशाकंतंदुलीयंवास्तुकंमूलकंतथा शाकमारण्यकंचैवदद्याच्छ्रा
द्धेषुनित्यशः तंदुलीयंसूक्ष्मपत्रमितिहेमाद्रिः माहाराष्ट्राणांमाठइतिप्रसिद्धम् आरण्यकंफांजीचूचादि तत्रैव दाडिमं
मागधींचैवनागराद्रकतिंतिणी आम्रातकंजीरकंचकुवरंचैवयोजयेत् मागधीपिप्पली नागरंशुंठी कुवरंकुस्तुंबरम्
धणियाइतिप्रसिद्धम् वायवीये अगस्त्यस्यशिखास्ताम्राःकाषायाःसर्वएवच शिखानवपल्लवाः प्रभासखंडे आ
रामस्यतुसीमंताःकलायाःसर्वएवच सीमंताःनवपल्लवाः कौर्मे तमालंशतकंदंचमध्वालुंशीतकंदली मध्वालुः
मोहलकंदः शीतकंदलीरतालुइतिप्रसिद्धम् अथवर्ज्यंमार्कंडेयपुराणे यच्चोत्कोचादिनाप्राप्तंपतिताद्यदुपार्जितम्
अन्यायकन्याशुल्कार्थद्रव्यंचात्रविगर्हितम् पित्रर्थंमेप्रयच्छस्वेत्युक्त्वायच्चाप्युपाहृतम् चंद्रोदयेशंखः भूस्तृणंसु
रसाशिग्रुपालंकीमृत्तुकंतथा कूष्मांडालाबुवार्ताककोविदारांश्चवर्जयेत् पिप्पलींमरिचंचैवतथावैपिंडमूलकम् कृ
तंचलवणंसर्वंवंशाग्रंचविवर्जयेत् ३ राजमाषान्मसूरांश्चकोद्रवान्कोरदूषकान् लोहितान्वृक्षनिर्यासान्श्राद्धकर्म

णावर्जयेत् भूस्तृणंकाश्मीरदेशेप्रसिद्धम् सरसानिर्गुंडीतिमाधवः तुलसीतिपृथ्वीचंद्रोदयः साचभक्ष्यत्वेननिषिद्धा
नपुष्पत्वेननिगोडाः पालंक्यापालकइतिप्रसिद्धा मृत्तुकंजलजःशाकः ससकमितिपाठेखदिरशाकइतिहेमाद्रिः मरी
चान्याद्रीणीतिहेमाद्रिः कृतलवणंसांभरभिन्नम् सैंधवंलवणंचैवतथामानससंभवम् पच्चसामुद्रिकंभवेदितिशूल
पाणोपादः पवित्रेपरमेह्येतेप्रत्यक्षेअपिनित्यशइतिवायवीयोक्तेः मानसंसांभरम् यत्तुभविष्यम् तर्जन्यादंतकाष्ठ-
चप्रत्यक्षंलवणंतथेति तत्रक्षारलवणम्खारीतिप्रसिद्धम् निषिद्धंभुत्काक्षारलवणंत्रिरात्रंतुवनेवसेदिति ब्राह्मो
क्तेरितिशूलपाणिः क्षारलवणमितियावत् क्षारमिश्रंलवणंनिषिद्धमितिवाचस्पतिः राजमाषाः रक्तराइतिप्रसिद्धाः
कोरदूषकः वनकोद्रवः चंद्रिकायांशंखः पिंडालकंचतुंडीरंकरमर्दंचनालिकम् कूष्मांडंबहुबीजानिश्राद्धेदत्वाव्रजत्य
धः पिंडालकंमहाराष्ट्रेषुपेंडरमितिप्रसिद्धम् तुंडीरंबिंबीफलमितिकेदेवः करमर्दंकरवंदमितिप्रसिद्धम् तत्रैव विडा
लोच्छिष्टमाघ्रातंश्राद्धेयत्नेनवर्जयेत् कूष्मांडमहिषीक्षीरमाढक्योराजसर्षपाः चणकाराजमाषाश्चघ्नंतिश्राद्धंनसं
शयः हृद्धपराशरः करीरफलपुष्पाणिविडंगमरिचानिच जंभारिकासजंबीराखपक्वंबीजपूरकम् जंबलाबूनिपिप्पल्य.
पटोलंपिंडमूलकम् मसूरांजनपुष्पंचश्राद्धेदत्वापतत्यधः जंबूसूक्ष्मं माधवीयेचतुर्विंशतिमते यावनालान्कुलि-
त्थांश्चवर्जयेदितिविपश्चितः यावनालाजोंधलाः अन्नयानिचणकादीनिविहितनिषिद्धानितेषांविकल्पः अन्यथा श्या
माकेश्चणकैःशाकैर्नीवारैश्चप्रियंगुभिः गोधूमैश्चतिलैर्मुद्गैर्मासंप्रीणयतेपितॄनिति गोधूमैरिक्षुभिर्मुद्गैःसतीनै
श्चणकैरपीतिहेमाद्रौकौर्मविष्णुधर्मादिविरोधःस्यात् पिप्पलीमरिचादेस्तुप्रत्यक्षस्यनिषेधोनत्वन्यद्रव्यमिश्रस्य सो

वीरातितैलैर्लवणादिभिस्तु पाकस्यासिद्धेर्महतीह्यपेक्षा तद्वीजपूरान्नमरिचादियोगात्सिद्धंप्रदेयंननुदुष्यतीहेति पृथ्वीचंद्रो
दये स्मृत्पराशरोक्तेः तत्रैव दातुश्चपात्रस्यमनसोभिलाषः श्रद्धाभवेचनचदीयमाने श्राद्धेषुदेयंविधिवत्तदेयत दत्तम
क्षय्यमितिब्रुवंति एतन्निषिद्धेतरविषयम् चंद्रिकायाम् कृष्णधान्यानिसर्वाणिवर्जयेच्छ्राद्धकर्मणि नवर्जयेत्तिलां
श्चैवमुद्गमाषांस्तथैवच मात्स्ये मसूरशणनिष्पावराजमाषकुसुंभिकाः पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः न
देयाःपितृकार्येषुपयश्चाजाविकंतथा कोद्रवोदारवरककपित्थमधुकातसी एतान्यपिनदेयानिपितृभ्यःश्राद्धमिच्छ
ता निष्पावावल्लाः यत्तुमार्कंडेयः प्रियंगवःकोद्रवानिष्पावाश्चात्रशोभनाइतितत्रनिष्पावःश्वेतशिंबीतिदानसाग
रेऽश्वमेधप्रकाशेचोक्तम् बिल्वंचरक्तंनिषिद्धम् जंबीरंरक्तबिल्वंचशालस्यापिफलंत्यजेदितिब्राह्मोक्तेः पारिभद्रो निंबत
रुरित्यमरः रक्तमंदारइतिहेमाद्रिः आटरूपोवासानपुष्पं उद्दारः कांचनारः मधुकंज्येष्ठीमध्वीतिचंद्रिका चरकायनस्तु
क्रः हेमाद्रौब्रह्मांडे आसनारूढमन्नाद्यंपादोपहतमेवच अमेध्यैरंगसंस्पृष्टंशुष्कंपर्युषितंचयत् द्विःस्विन्नंपरि
दग्धंचतथैवाग्रावलेहितम् शर्कराकीटपाषाणैःकेशैर्यच्चाप्युपद्रुतम् पिण्याकंमथितंचैवतथातिलवणंचयत्
सिद्धाःकृताश्चयेभक्ष्याःप्रत्यक्षलवणीकृताः वाससाचावधूतानिवर्ज्यानिश्राद्धकर्मणि द्विःस्विन्नंयत्सकृत्पाकेन
भक्ष्यमपिहिंगुजीरकादिसंस्कारार्थंपुनःपच्यतेनतद्वर्ज्यं पचुतिक्तशाकान्नविकारादिद्विःपाकेनैवभक्षणार्थंनिषिद्धं अग्राव
लेहितमास्वादितपूर्वम् पर्युषितस्यसदानिषेधेपिपुनर्वचनम् अपूपाश्चकरंभाश्चधानावटकसक्तवः शाकंमांसमपू
पंचसूपंकृसरमेवच यवागूःपायसंचैवयच्चान्यत्स्नेहसंयुतम् सर्वंपर्युषितंभोज्यंशुक्तंचेत्परिवर्जयेदितिमाधवीयेयमो

कपित्थंकु कंचैवनालिकेलंचपोनिकम् जं-
कवटकादेरपिपर्युषितस्यनिषेधार्थमितिचंद्रिकादयः वर्ज्येषुविश्वामित्रः मर्कटकाःलंकाइति
चूफलादिपक्वंचपिण्याकंतंदुलीयकम् हेमाद्रौषट्त्रिंशन्मते वर्ज्यामर्कटकाःश्राद्धेराजमाषास्तथैवच
प्रसिद्धाःपैठीनसिः वृंताकंनालिकापोतकुसुंभाश्मंतकानिच शाकानामभक्ष्याइति पोतंपोईतिप्रसिद्धम् कुसुंभंकरड
इतिमहाराष्ट्रेप्रसिद्धम् मार्कंडेयः वर्ज्याश्चाभिषवानित्यंशतपुष्पागवेधुकाः जंबीरकंफलंवर्ज्यंकोविदारश्चनित्यशः अ
भिषवःसूक्तमितिचंद्रिका संधानकमितिपृथ्वीचंद्रः शतपुष्पाओवाइतिप्रसिद्धम् शाठ्यायनः मारिषंनालिकाचैवरक्ता
याचकलंबिका असुरान्नमिदंसर्वंपितॄणांनोपतिष्ठते मारिषंमध्यदेशेमरुसाइतिमहाराष्ट्रेराजगिराइतिप्रसिद्धम् कलं
बिम्बयेण्वाकृतिपत्रा तत्रैव गांधारिकापटोलानिश्राद्धकर्मणिवर्जयेत् गांधारिकातंदुलीयमितिचंद्रिका जवासाख्याइ
रालभेतिकेचित् भारते हिंगुद्रव्येषुशाकेषुअलाबुंलशुनंतथा कुकुंडकान्यलाबूनिकृष्णंलवणमेवच पुनरलाबुग्रहण
मुभयालाबुनिषेधार्थमितिपृथ्वीचंद्रः कुकुंडकंवर्तुलंछत्राकम् तत्रैव कुस्तुंबुरुंकलिंगोत्थंवर्जयेदम्लवेतसम् हेमाद्रौ
ब्राह्मे वार्ताकंपंचशिंबंचलोमशानिफलानिच कलिंगंरक्तचारंचवीणाकंधनचारकम् कृपालंकांचमारीचकरंज-
पिंडमूलकम् गृंजनंचुलिकांचैवगाजरंजीवकंतथा वृंताकंश्वेतम् कंडूरांश्चैववृंताकंकूष्मांडंचविवर्जयेत् इतिदेवलोक्तेः
तेनकृष्णस्यानिषेधइतिचंद्रिकामाधवौ वस्तुतस्तुसदाश्वेतनिषेधात्पुनःश्राद्धेनिषेधोव्यर्थः तेनभक्ष्यस्यकृष्णवृंताक
स्यापिनिषेधार्थमिदमितिवयं कंडूराकपिकच्छूः कुंभांडंवृत्तालाबुः पंचशिंबंवल्लमसूरराजमाषमठकुलित्थाः लोमशा-
निकपित्थानि रक्तचारंलोहितचारफलम् वीणाकंकृष्णादीर्घकर्कटी घनचारकंचिरस्थितचारफलंचारोलीतिप्रसिद्धम्

कपालंनारिकेलम् कांचेकतुद्दक्षफलम् मारीचंआर्द्रमरीचानि गृंजनंपलांडुभेदःपश्चिमादिशिप्रसिद्धः नतुगाजरम् तस्य
पृथगुक्तेः हेमाद्रिणातुगृंजनंगाजरमेवोक्तम् गौडश्राद्धकौमुद्यामप्येवम् तच्चिंत्यम् चुक्रिकाचिरकालशक्तंपानकम्-
चंद्रिकायांहारीतः नवदप्लक्षोदुंबरपीलुदधित्थनीपमातुलिंगानिभक्षयेत् पीलुःश्लेष्मातकःपोकरसंज्ञः दधित्थंकपि
त्थं स्मृतिसारे क्षीरेतुलवणंदत्वाउच्छिष्टेपिनयद्धृतम् स्नानंरजकतीर्थेषुताम्रेगव्यंसुरासमम् गौडनिबंधेसागरेस्मृ-
तिः नारिकेरोदकंकांस्येताम्रपात्रेस्थितंमधु गव्यंचताम्रपात्रस्थंमद्यतुल्यंघृतंविना ताम्रपात्रेघृतंमांसंयच्चगव्यंघृते-
तरत् आमिषंतुगवांमांसंदधिमद्यंपयोरजः द्रव्यांतरयुतंमांसंपयसासयुतंदधि पयोतुघृतसारंचताम्रपात्रेनदुष्यति
अथजलंयाज्ञवल्क्यः शुचिगोतृप्तिकृत्तोयंप्रकृतिस्थंमहीगतम् वर्ज्यंजलमुक्तंहेमाद्रौब्रह्मांडे दुर्गंधिफेनिलंक्षारंपं
किलंपल्वलोदकम् नभवेद्यत्रगोतृप्तिर्नक्तंयच्चाप्युपाहृतम् यन्नसर्वार्थमुत्सृष्टंयच्चाभोज्यनिपानजम् तद्वर्ज्यंसलिलंतात
सदैवश्राद्धकर्मणि निपानोजलाशयः शुद्धितत्वेशंखः स्नानमाचमनंदानंदेवतापितृतर्पणम् शूद्रोदकेर्नकुर्वीततथामेध्या
द्विनिःसृतैः हेमाद्रावादित्यपुराणे चिरंपर्युषितंवापिशूद्रस्पृष्टमथापिवा जान्हव्याःस्नानदानादौपुनात्येवसदापयः कात्या
यनः अपोनिशिनगृह्णीयात्नपिबेच्चकदाचन उद्धृत्याग्निमुपर्यग्नेःधार्मोधाम्नइत्तारयेत् रजोदोषेतुप्रागुक्तम् नारदी
ये त्यजेत्पर्युषितंपुष्पंत्यजेत्पर्युषितंजलम् नत्यजेज्जान्हवीतोयंतुलसीबिल्वपत्रकम् अन्यान्यपिपृथ्वीचंद्रोदयेमात्स्ये
मध्यान्हःखड्गपात्रंचतथानेपालकंबलः रौप्यंदर्भास्तिलागावोदौहित्रश्चाष्टमःस्मृतः पापंकुत्सितमित्याहुस्तस्यसंताप
कारिणः अष्टावेतेयतस्तस्मात्कुतपाइतिविश्रुताः आद्ये यतिस्त्रिदंडःकरुणाराजतंपात्रमेवच दौहित्रंकुतपःकालःछा

गःकृष्णाजिनंतथा शस्तानीतिशेषः दौहित्रंखड्गपात्रमितिकल्पतरुः अपरार्केस्मृत्यंतरे अपत्यंदुहितुश्चैवखड्गपात्रंतथैव
च घृतंनकपिलायागोर्दौहित्रमितिकीर्तितम् ब्रह्मांडे अमावास्यागतेसोमेयात्तुखादतिगोस्तृणम् तस्यागोर्यद्भवेत्क्षीरंतद्दौहि
त्रमुदाहृतम् स्मृतिसंग्रहे उच्छिष्टंशिवनिर्माल्यंवांतंचमृतकर्पटम् श्राद्धेसप्तपवित्राणिदौहित्रःकुतपस्तिलाः उच्छिष्टं
वत्सस्यदुग्धमित्यर्थः शिवनिर्माल्यंगंगोदकम् वांतंमधु मृतकर्पटंतसरीपट्टं तिलेषुआपस्तंबः अटव्यांयेसमुत्पन्नाअकृ
ष्टफलितास्तथा तेवैश्राद्धेपवित्राःस्युस्तिलास्तेनतिलास्तिलाः अभावेग्राम्याः गौराःकृष्णास्तथारण्यास्तथैवत्रिविधास्ति-
ला इतिब्राह्मोक्तेः अथवर्ज्यानि चंद्रिकायांयमः कुक्कुटोविड्वराहश्चकाकश्चाथबिडालकः वृषलीपतिश्चवृषलः षंढो-
वीरारजस्वला एतेतुश्राद्धकालेवैवर्जनीयाःप्रयत्नतः खंजःकाणःकुणिःश्वित्रीदाताप्रेष्यकरस्तथा न्यूनांगोप्यतिरिक्तां-
गस्तमप्यपनयेत्ततः वायवीये अन्नंपश्येयुरेतेतुयदिवैहव्यकव्ययोः उत्सृष्टव्यंप्रधानार्थंसंस्कारस्त्वापदिस्मृतः सु-
मंतुः चंडालादिवीक्षितमन्नमभोज्यमन्यत्रगृह्यहिरण्योदकस्पर्शात् तत्रैवजमदग्निः शद्भवत्योथकूष्मांड्यः पा
वमान्यस्तरत्समाः पूतेनवारिणादर्भैरन्नदोषमपानुदन् चंद्रोदये पादुकोपानहौछत्रंचित्रकांबरंतथा रक्तपुष्पंचमा
र्जारंश्राद्धभूमौविवर्जयेत् निर्णयदीपे घंटानिनादोहयसन्निधानंशंबूकशंखौकदलीदलंच उन्मत्तजात्यर्कहयारिजानि-
श्राद्धस्यवैगुण्यकराण्यमूनि हयारिजंमहिषीक्षीरादि अथश्राद्धदिनकृत्यम् चंद्रोदयेउशनाः गोमयोदकैर्भूमिभाज-
नंकुर्यात् पराशरः कांजिकंदधितक्रंचशृतंवाऽशृतमेवच पूर्वमेवनदातव्यमेकोद्दिष्टेथपार्वणे हेमाद्रौपराशरः गृ-
हाग्निशिशुदेवानांब्रह्मचारितपस्विनाम् तावन्नदीयतेकिंचित्यावत्पिंडान्ननिर्वपेत् कौर्मे तिलानवकिरेत्तत्रसर्वतोबं

धयेद्जान् तत्रैवदेवलः नथैवपंक्तितोदाना प्रातःस्नातासहांबरः आरभेतनवैःपात्रैरन्नारंभंचबांधवैः अत्रात्म
नेपदात्स्वयमेवपाकः कार्यः अशक्तोपत्न्यानदभावेबांधवैः ततस्तानिपपाचाशक्तःसीताजनकनंदिनीतिपाद्मलिंगादिति
हेमाद्रिः श्राद्धदीपकलिकायामाश्वलायनः समानप्रवरैर्मिश्रैःसपिंडैश्चगुणान्वितैः कृतोपकारिभिश्चैवपाककार्यंप्र
शस्यते व्यासः गृहिण्यैवचस्नाता पाकंकुर्यात्प्रयत्नतः निष्पन्नेषुचपाकेषुपुनःस्नानंसमाचरेत् पृथ्वीचंद्रोदये
ब्राह्मे रजस्वलांचपाखंडांपुंश्चलींपतितांतथा त्यजेच्छूद्रांतथावंध्यांविधवांचान्यगोत्रजाम् व्यंगकर्णीचतुर्थाहःस्ना
तामपिरजस्वलाम् वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् मातृपितृवंशजाभिन्नांस्त्यजेदित्यर्थः स्मृतिसारे नपाकं
कारयेत्सखीमन्यांवाप्यन्यगोत्रजाम् मृतवंध्यांचगर्भघ्नींगर्भिणींचैवदुर्मुखीम् पाकभांडानितुहेमाद्रौनागरखंडे सौवर्णा
न्यथरौप्याणिकांस्यताम्रोद्भवानिच मार्तिक्यान्यपिभव्यानिनूतनानिदृढानिच तत्रैवादित्यपुराणे पचेदन्नानिस्नातः
पात्रेषुशक्तिषुस्वयम् स्वर्णादिधातुजातेषुमृन्मयेष्वपिवाद्विजः अच्छिद्रेष्वविलिप्तेषुतथानुपहतेषुच नायसेषुनभिन्ने-
षुदूषितेष्वपिकर्हिचित् पूर्वंकृतोपयोगेषुमृन्मयेषुनतुक्वचित् वायुपुराणे नकदाचित्पचेदन्नमयःस्थालीषुपैतृकम् अ
यसोदर्शनादेवपितरोविद्रवंतिहि कालायसंविशेषेणनिंदंति पितृकर्मणि फलानांचैवशाकानांछेदनार्थानियानितु
महानसेपिशस्त्राणितेषामेवहिसन्निधिः इष्यतेनेतरस्यात्रशस्त्रमात्रस्यदर्शनम् श्राद्धदेशेतुविदुषापितृणांतृप्तिमिच्छ
ता महानसेपिशुक्रनामापिकार्यंनदर्शनम् तत्रैव पचमानस्तुभांडेषुभक्ष्यांस्ताम्रमयेषुच समुद्धरतिवैघोरात्पितॄन्
दुःखमहार्णवात् तैजसानामभावेतुपिठरेमृन्मयेपिच नवेशक्तोप्रकुर्वीतपाकंपित्रर्थमादरात् तत्रैवादिपुराणे पक्वान्न

विवाहे प्रेतकार्ये च माता पित्रोः स्वयेहः
स्थापनार्थं तु शस्तं ते दारुजान्यपि दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः यमः
नि नवभांडानि कुर्वीत यज्ञकाले विशेषतः अथ पाकाग्निः हेमाद्रौ प्रजापतिः औपासनेनान्नसिद्धिरग्नौकरणमेव च गृह्या
नं द्रोदये गिराः शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते मनुः वैवाहिके
ग्नौ कुर्वीत गृह्यं कर्म यथाविधि पंचयज्ञविधानं च पक्तिं चान्वाहिकीं द्विजः श्राद्धस्य गृह्यत्वं चोक्तमपरार्केण अत्र विशेषः
कर्मप्रदीपे प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात् शेषं महानसे कृत्वा नत्र पाकं समाचरेत् पाकांते गिंतसाद्धत्य गृह्या
ग्नौ तु पुनः क्षिपेत् ततोस्मिन्वैश्वदेवादिकर्म कुर्यादतंद्रितः तदभावे लौकिके ततः पचेयुरन्नानि निर्वापानंतरं शनैः वै
वाहिके ग्नावन्यत्र लौकिके वापि संयत इति कलिकायां सग्रहोक्तेः पित्र्यर्थ निर्वाप कल्वे त्वर्थः अतएव हेमाद्रौ वायुपुराणे पित्र
र्थं निर्वपेद्भूमौ कूर्चे वा दर्भसंस्कृते इति तत्रैव पाद्ममात्स्ययोः अग्निमान्निर्वपेत्सेवं चरुं वा सममुष्टिभिः पितृभ्यो निर्वप
मानि सर्वं दक्षिणतोन्यसेत् चरुग्रहणान्न शाकादावित्ति हेमाद्रिः पिंडपितृयज्ञार्थ पाकविषयोयं निर्वाप इति तु युक्तम्
अयं चेतरेषामग्निः आश्वलायनानां तु गुरुणाभिभूता अन्यनो वापक्षीयमाणा अमावास्यायां शांतिकर्म कुर्वीरन्नित्यादि
सूत्रेण पचनाग्ने स्त्याग मुक्त्वा इहैवायमितरो जातवेदा इत्यर्धर्चेन शमीमयीभ्यामरणिभ्यामग्निं मंथेत्स पचनाग्निर्भवती
ति सूत्रे वृत्तौ चोक्तेः पचनाग्नावेव पाकः बोधायनेनाप्युक्तम् आहृत्य पचनाग्निमौपासनं चाभिमन्त्रजंतीति स्मार्ताग्नेप
कस्त्वन्य शाखाविषय इति केचित् यत्तु तत्र पूर्वोक्तस्य सर्वाधान विषयत्वं युक्तम् शिष्टाचारोपि न पचनोत्पत्ते अंडावि
लायामपि सर्वाधान पक्षे वैश्वदेवं श्राद्धं च पचने कुर्यादन्यथौपासने इत्यक्तम् अग्नौकरणं तु प्रयोगपारिजातादिभिराव

द्विकादिसर्वश्राद्धेषु पिंडपितृयज्ञव्यतिषंगोक्ते लौकिकेपचनेवापाकेकृतेपिगृह्याग्नौपक्वचरुणैवकार्यमितिप्रतिभाति-
मदनरत्नेप्येवम् विधुरोत्सन्नाग्न्यादेस्तु एषोद्दिष्टविधानेनाग्निसंपादनमित्युक्तम् हरिहरभाष्ये इतिपाकाग्निः चंद्रि
कायांमार्कंडेयः अन्हःषट्सुमुहूर्तेषुगतेषुप्रयतान्द्विजान् प्रत्येकंप्रेषयेत्तेषांप्रदायामलकोदकम् देवलः ततोनि
वृत्तेमध्यान्हेलूनरोमनखान्द्विजान् अभिगम्ययथान्यायंप्रयच्छेद्दंतधावनम् तैलमभ्यंजनंस्नानंस्नानीयंचपृ-
थग्विधम् पात्रैरौदुंबरैर्दद्याद्वैश्वदेविकपूर्वकम् औदुंबरेस्त्वाचमयेः अत्रक्षौरामलकस्नानादिनिषिद्धतिथ्या-
दिव्यतिरिक्तविषयमितिहेमाद्रिर्माधवश्च यत्तुचंद्रिकायांप्रचेताः तैलमुद्वर्तनंस्नानंदद्यात्सूर्योण्हएवतु श्राद्धभु
ग्भ्योनखश्मश्रुच्छेदनंतुनकारयेदिति तन्निषिद्धतिथ्यादिविषयम् निषिद्धतिथ्यादित्वपाग्रुक्तम् अभ्यंगेतुकालिकायांकात्याय-
नः तैलमुद्वर्तनंदेयंब्राह्मणेभ्यःप्रयत्नतः नैरभ्यंगश्चकर्तव्योवर्ज्यकालंनचिंतयेत् अपरार्केप्रचेताः स्नातोधिकारीभवति
दैवेपित्र्येचकर्मणि श्राद्धकृत्शुक्लवासाःस्यान्मौनीचविजितेंद्रियः हेमाद्रौजाबालः तांबूलंदंतकाष्ठंचस्नेहस्नानमभोजन
म् रत्यौषधपरान्नानिश्राद्धकर्ताविवर्जयेत् वस्त्रेविशेषमाहनचैवभृगुः नग्नःस्यान्मलवद्वासानग्नःकौपीनकेवलः द्वि
कच्छोनुत्तरीयश्चअकच्छोवस्त्रएवच नग्नःकाषायवासाःस्यान्नग्नश्चार्द्रपटःस्मृतः नग्नोद्विगुणवस्त्रःस्यान्नग्नोरक्तप
टःस्मृतः नग्नस्तुस्निग्धवस्त्रःस्यान्नग्नःस्यूतपटस्तथा ततःकर्ताऊर्ध्वपुंड्रंकुर्यात् जपेहोमेतथादानेस्वाध्यायेपितृकर्मणि
तत्सर्वंनश्यतिक्षिप्रमूर्ध्वपुंड्रंविनाकृतमितिहेमाद्रावुक्तेः यज्ञोदानंजपोहोमःस्वाध्यायःपितृकर्मच वृथाभवतिविप्रेंद्राऊ-
र्ध्वपुंड्रंविनाकृत मितिबृहन्नारदीयात् ऊर्ध्वंतिलकंकुर्यात् दैवेपित्र्येचकर्मणीतिवृद्धपराशरोक्तेश्च अन्येतु ऊर्ध्वपुंड्रंद्विजा

तोनामग्निहोत्रसमोविधिः श्राद्धकालेतुसंप्राप्ते कर्ताभोक्ताचतन्त्यजेत् वामहस्तेचदर्भास्तु गृहेरंगवलिंतथा ललाटेतिलकंद
स्वा निराशाः पितरोगताइतिसंग्रहोक्तेः ऊर्ध्वपुंड्रंत्रिपुंड्रंवाचंद्राकारमथापिवा श्राद्धकर्तानकुर्वीतयावत्पिंडान्ननिर्वपेदिति
विश्वप्रकाशेवचनाच्चनकार्यमित्याहुः अत्राचाराद्व्यवस्था अतएवबृहन्नारदीये ऊर्ध्वपुंड्रंचतुलसींश्राद्धेनेच्छंतिकेचनेति
ऊर्ध्वपुंड्रविधिर्विप्रविषयः निषेधःकर्तृपरइतिपृथ्वीचंद्रः यत्तुहेमाद्रौदेवलः ललाटेपुंड्रकंदृष्ट्वास्कंधेमाल्यंतथैवच निराशाः
पितरोयांतिदृष्ट्वाचवृषलीपतिमिति तत्रंधेनत्रिपुंड्रविषयम् शाकपिंडदानाद्गंधाद्यैर्नालंकुर्यात्स्वविग्रहमित्याश्वलायनोक्तेः
पुंड्रंवर्तुलमित्यपरार्केमदनरत्नेच पृथ्वीचंद्रस्तुपुंड्रंत्रिपुंड्रम् ऊर्ध्वंवातिलकंकुर्यान्नकुर्याद्वैत्रिपुंड्रकम् निराशाःपितरोयांतिदृष्ट्वा
चैवत्रिपुंड्रकमितिस्हसराशरोक्तेः भोक्तुस्तिर्यग्लेपोभवत्येव वर्जयेत्तिलकंभालेश्राद्धकालेचसर्वदा तिर्यगप्यूर्ध्वपुंड्रंवाधार
येत्तुभयत्नतइतिव्यासोक्तेरित्याह पृथ्वीचंद्रोदयेशाले सदर्भेणतुहस्तेनयःकुर्यात्तिलकंबुधः आचम्यसविशुद्ध्येतदर्भैः
चैवहि श्राद्धारंभकालमाहापरार्केगोतमः आरभ्यकुतपेश्राद्धंकुर्यादारोहणंबुधः विधिज्ञोविधिमास्थायरोहिणंतुनलंघये-
त् एतदेकोद्दिष्टेपार्वणेनूक्तंमात्स्ये ऊर्ध्वंमुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् मुहूर्तपंचकंह्येतत्स्वधाभवनमिष्यते तथा म
न्हेसर्वदायस्मान्मंदीभवतिभास्करः तस्मादनंतफलदस्तत्रारंभोविशिष्यते अथश्राद्धपरिभाषा चंद्रिकायांकात्यायनः
क्षिणंपातयेज्जानुंदेवान्परिचरन्सदा पातयेदितरंजानुंपितॄन्परिचरन्सदा बौधायनः प्रदक्षिणंतुदेवानांपितॄणामप्रदक्षिण
म् देवानामृजवोदर्भाःपितॄणांद्विगुणास्तथा पृथ्वीचंद्रोदयेशंखः आवाहनार्घ्यसंकल्पेपिंडदानान्नदानयोः पिंडाभ्यंजन-
कालेतुतथैवांजनकर्मणि अक्षय्यासनयोःपाद्येगोत्रंनामप्रकाशयेत् तत्रैवपरिशिष्टे क्षणेचपिंडदानेचगंधधूपाक्षयेन

संकल्पेचासनेदीपेअंजनाभ्यंजनेतथा अनार्घ्यदानावंतेषुगोत्रंनामचकीर्तयेत् कलिकायांसंग्रहे आसनावाहनेपाद्येअन्नदा
नेतथैवच अक्षय्येपिंडदानेचषट्सुनामानिकीर्तयेत् मात्स्ये संबंधंप्रथमंब्रूयाद्गोत्रंनामतथैवच पश्चाद्रूपंविजानीयात्क्र
मएषसनातनः तत्रैव सकारेणतुवक्तव्यंगोत्रंसर्वत्रधीमता सकारःकुतपोज्ञेयस्तस्मात्यत्नेनतंवदेत् यथाकाश्यपसगोत्रेति
पराशरसगोत्रस्यवृद्धस्यतुमहात्मनः भिक्षोःपंचशिखस्याहंशिष्यःपरमधार्मिकइतिमोक्षधर्मेषुप्रयोगाच्च तेनगोत्रस-
गोत्रयोःपर्यायत्वाच्छास्त्राभेदाद्व्यवस्थेतिशूलपाणिः एतच्चेषामाम्नातंतेषामेव हेमाद्रौपृथ्वीचंद्रोदयेच गोत्रंस्वरांतंसर्वत्र-
गोत्रस्याक्षय्यकर्मणि गोत्रस्तुतर्पणेप्रोक्त एवंदातानमुह्यति सर्वत्रैवपिलःप्रोक्तःपितातर्पणकर्मणि पितुरक्षय्यकाले-
तुपित्र्येसंकल्पनेतथा शर्मन्नर्घ्यादिकेकार्येशर्मातर्पणकर्मणि शर्मणोक्षय्यकालेतुपितॄणांदत्तमक्षयम् स्वरांतंसंबुध्यंत
मितिहेमाद्रिः तत्रैवचंद्रिकायांचस्मृत्यंतरे गोत्रस्यत्वपरिज्ञानेकाश्यपंगोत्रमुच्यते यस्मादाहश्रुतिःसर्वाःप्रजाःकश्य
पसंभवाः यत्तुसत्याषाढः अथाज्ञातबंधोःपुरोहितगोत्रेणाचार्यगोत्रेणवेति तद्विवाहपरम् नामोच्चारणेविशेषमा
हहेमाद्रौबौधायनः शर्मांतंब्राह्मणस्योक्तंवर्मांतंक्षत्रियस्यतु गुप्तांतंचैववैश्यस्यदासांतंशूद्रजन्मनः पित्रादिनामाज्ञा
नेतत्रैव पृथिवीषत्सितावाय्वयस्त्पिताचांतरिक्षसत् अभिधानापरिज्ञानेदिविषत्प्रपितामहः पित्रादीनांनामयदापु
त्रैर्नज्ञायतेतदा आपस्तंबसूत्रेप्येवम् एतदन्यशाखापरम् आश्वलायनानांतूक्तम् तत्सूत्रे यदिनामान्यविद्वांस्ततः
पितामहप्रपितामहेतिब्रूयात् तत्कारिकापि नामानिचेन्नजानीयाततेत्यादिवदेत्क्रमात् ततेतिसंबंधमात्रपरम् तत्त
नपितृव्यादावपितथेतिगौडाः स्त्रीणांदातेनामज्ञेयम् दातेनामस्त्रीणामपीति पृथ्वीचंद्रोदयेगोभिलोक्तेः केचिद्देवी

विप्रान्क्षिपेत्कयत्किंचिद्दीयते पितॄन्देयते तत्सर्वं स
शब्दांतमाहुः अन्येतु देवीदाइति द्वयोः समुच्चयमाहुः हेमाद्रौ नारायणः विप्राक्षिपेत्कयत्किंचिद्दीयतेपितॄन्देयते तत्सर्वं स
फलं ज्ञेयं विपरीतं निरर्थकम् चंद्रिकास्मृत्यर्थसारयोश्च नारदीये अक्षय्यासनयोः षष्ठी द्वितीयावाहनेतथा अन्नदानेचतु-
र्थीनिशेषाः संबुद्धयः स्मृताः यत्तु व्यासः चतुर्थीचासनेनित्यं संकल्पेचविधीयते प्रथमा तर्पणे प्रोक्ता संबुद्धिमपरेजगुरिति
अत्रशाखाभेदाद्व्यवस्थेति हेमाद्रिः हेमाद्रौ भृगुः अर्घ्यावनेजनं पिंडमन्नं प्रत्यवनेजनम् संबुद्धिं तत्र कुर्वीत शेषे षष्ठी विधीय-
ते तत्रैव मातुर्विशेषो नागरखंडे मातर्मात्रे तथा मातुरासने कल्पने क्षये गोत्रे गोत्रायेगोत्रायाः प्रथमाद्याविभक्तयः हेमाद्रौ प्र
भासखंडे यज्ञोपवीतिनाकार्यं दैवं कर्म प्रदक्षिणम् प्राचीनावीतिनाकार्यं पितृकर्माप्रदक्षिणम् अनुपनीतस्त्रीशूद्रादेस्तूत्त-
रीयेणैव सव्यापसव्ये ज्ञेये तस्योपवीतस्थानीयत्वात् अपसव्यं क्रमाद्दृत्वा कश्चित्सगोत्रज इति ब्राह्मे चोतिवा
चस्पतिः यत्तु केचित् सदोपवीतिनाभाव्यमित्यस्य पुरुषार्थत्वात् प्राचीनावीतकालेप्युपवीतांतरेण तत्कार्यमेवेति तन्न
विशेषेण बाधात् जमदग्निः सूक्तस्तोत्रजपं त्यक्त्वा पिंडाघ्राणं च दक्षिणाम् आह्वानं स्वागतं चार्घ्यं विना च परिवेषणम्
विसर्जनं सोमनस्यमाशिषां प्रार्थने तथा विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना पितॄनुद्दिश्य कर्तव्यं प्राचीनावीति
नासदा हेमाद्रौ संग्रहे आदौ विप्रांघ्रिशौचां तेभ्यर्चने विकिरे कृते पिंडानभ्यर्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा आचा
मेच्छ्राद्धकर्ता च स्थानेष्वेतेषु सप्तसु आद्यंतयोर्द्विराचामेच्छेषेषु तु सकृत्सकृत् तत्रैव श्राद्धारंभेवसाने च पादशौ
चार्चनांतयोः विकिरे पिंडदाने च षट्स्वाचमनमिष्यते आश्वलायनः दानाध्ययनदेवार्चाजपहोमव्रतादिकान् न
कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात् एतन्नित्यवर्ज्यमिति चोपदेवः इदं विष्णुभिन्नदेवपरम् विष्णोर्निवेदिता

न्नेनयष्टव्यंदेवतांतरम्‌· पितृभ्यश्चापिनद्देयंतदानंत्यायकल्पते .पितृशेषंतुयोदद्याद्धरयेपरमात्मने रेतोधाःपितरस्तस्यभ·
वंतिक्लेशभागिनइतिस्कांदात्‌ पितरःसर्वमनुष्याविष्णुनाशितमश्नंतीतिश्रुतेः यःश्राद्धकालेहरिभुक्तशेषंददातिभक्त्यापितृदे
वतानाम्‌ तेनैवपिंडांस्तुलसीविमिश्रानाकल्पकोटिंपितरस्तृप्ताइतिब्राह्मोक्तेश्चेतिश्रीधरस्वामिनृसिंहपरिचर्योदयः एत·
त्सर्वंनिबंधविरोधान्निर्मूलम्‌ अन्नविशेषोहेमाद्रौविष्णुधर्मे श्राद्धाग्निंतुसमभ्यर्च्यनृवराहंजनार्दनम्‌ शिवपुराणे पूजयित्वा
शिवंभक्त्यापितृश्राद्धंप्रकल्पयेत्‌ पूर्वनिषेधस्तुविहितभिन्नपरः तथाहेमाद्रौ देव्यर्चादक्षिणांगादिःपादजान्वंसमूर्धसु शि
रोंसजानुपादेषुवामांगादिचपैतृके कलिकायांस्मृत्यंतरे श्राद्धारंभेतुयेदर्भाःपादशौचेविसर्जयेत्‌ अर्चनादौतुयेदर्भाउच्छि
ष्टांतेविसर्जयेत्‌ मार्जनादौतुयेदर्भाःपिंडोत्थानेविसर्जयेत्‌ उत्तानादौतुयेदर्भादक्षिणांतेविसर्जयेत्‌ प्रार्थनादौतुयेदर्भान
मस्कारेविसर्जयेत्‌ ऊहमाहविष्णुः मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः मंत्रोहेनयथान्यायंशेषाणांमंत्रवर्जितम्‌ य
थान्यायमितियत्रबहुवचनात्पितृशब्दस्तत्रसर्वपितृवाचित्वान्नोहः तत्रापिशुंधंतांपितरइत्यत्रोहएव सर्वपितृवाचि
त्वेउत्तरमंत्रद्वयवैयर्थ्यात्‌ बहुवचनंतुनोह्यतेप्रकृतावसमर्थत्वात्पाशानितिवत्‌ ऋगंतेचनोहः तस्माद्‌न्वंनोहेदिति
निषेधात्‌ एकोद्दिष्टेप्येवम्‌ प्रेतैकोद्दिष्टेत्वेकवन्मंत्रानूहेनैकोद्दिष्टइतिविष्णूक्तेरूहः अत्रबहुवचनस्याप्यूहोवचनात्‌ द्व
यादौतुविशेषंवक्ष्यामः शेषाणामितिपितृव्यादेकोद्दिष्टेआवाहनादिमंत्रवर्ज्यंकार्यमितिकल्पतरुः ऊहयोग्यपितृपदवा·
न्मंत्रएवतत्रनप्रयोज्यः नतूहः नापिपितृपदरहितःप्रयोज्यइतिशूलपाणिः अर्थांतरंचोक्तंप्राक्‌ चतुर्विंशतिकारिकापि अ
र्घ्यप्रदानमंत्रेतुमात्रादिपदमावपेत्‌ शुंधंतामितिपित्रादौमात्रादिपदमावपेत्‌ मातृश्राद्धेपिंडदानेयेचत्वामत्रान्वित्यत्र

नोहरतिरचितकृत् तथा मातुःश्राद्धेप्यनूहेनकुर्यात्पिंडानुमंत्रणम् दशादानमुपस्थानंतद्वत्कार्यमितिस्थितिः प्रवाहणमनूहेनत
हृत्साधनमिष्यते तथा आयंतुनस्तिलोसीतिउशंतस्त्वेतियानितु अनूह्याःपितृशब्दोत्रापितृसामान्यवाचकः आपस्तंबानांतुव
क्ष्यते हेमाद्रौमार्कंडेयः स्नातःस्नातान्ससमाहूतान्स्वागतेनार्चयेत्पृथक् कलिकायांनारदीये प्रायश्चित्तविशुद्धात्मानेभ्योऽ
प्रगृह्यच दद्यादेवस्नदंडार्थंहिरण्यंकुशमेवच तत्रैवसंग्रहे तिथिवारादिकंज्ञात्वासंकल्प्यचयथाविधि प्राचीनावीतिना·
कार्यंसर्वंसंकल्पनादिकम् संबंधंप्रथमंब्रूयान्नामगोत्रेनतथैवच वस्वादिरूपतांचापितत्पितॄणामनुक्रमात् चंद्रोदयेनारदीये
श्राद्धार्थंसमनुप्राप्तान्विप्रान्भूयोनिमंत्रयेत् आपस्तंबस्तुपूर्वेद्युर्निमंत्रणंपरेद्युर्द्वितीयंतृतीयमामंत्रणमित्याह शुभंप्रयानि
मंत्रणीयाइतिनिवेदनरूपम्आद्यं तद्विधिमाहशौनकः गृहीत्वाऽमुकसंज्ञस्याऽमुकगोत्रस्यचामुके श्राद्धेतुवैश्वदेवार्थंकरणी
यःक्षणस्त्वया इत्येवंश्राद्धकृद्ब्रूयाद्दानंतथेतिवदेत्तुसः श्राद्धस्यकर्तासंब्रूयात्तंप्राप्नोतुभवानिति सवदेत्प्राप्नवानीतिइतरस्तंप्रति·
द्विजः देवोपार्वणेपुरूरवार्द्रवौवाच्यो पित्रादेरप्यनेनैवतृणीतविधिनाद्विजान् ततःकर्ताचकृत्वोनाहिताग्निः पिंडपितृयज्ञं
परिस्तरणादीन्याधानांतंकुर्यात् अपर्याधाननोप्येवमितिप्रयोगपारिजातेपरिशिष्टेच भाष्यकारमतेआह्निकेप्येवम् हन्तिकारमतेनेदम्
हेमाद्रौशंभुः संमार्जितोपलिप्तेतुद्वारेकुर्वीतमंडले उदक्प्लवमुदीच्यंस्याद्दक्षिणंदक्षिणाप्लवम् व्याघ्रः उत्तरेसतसंयुक्ता·
पूर्वाग्रान्विन्यसेत्कुशान् दक्षिणेदक्षिणाग्रांस्तुसतिलान्विन्यसेत्कुशान् तत्रैवबौधायनः चतुरस्रंत्रिकोणंचवर्तुलंचार्धचंद्र
कम् कर्तव्यमानुपूर्व्येणब्राह्मणादिषुमंडलम् तत्रैवलौगाक्षिः हस्तद्वयमितंकार्यंवैश्वदेविकमंडलम् दक्षिणेचचतुर्हस्तं·
पितॄणामंघ्रिशोधने कालिकायांसंग्रहेतु प्रादेशमात्रंदेवानांचतुरस्रंतुमंडलम् रत्नाषडंगुलंतस्माद्दक्षिणेवर्तुलंतथैवोक्तं

स्मृत्यंतरे गर्तः पंचांगुलो विप्रे आगुमात्रो महीभुजि प्रादेशमात्रो वैश्ये च साधिकः स तु शूद्रके तिर्यगूर्ध्वप्रमाणेन व्याख्यातो देवपि-
त्र्ययोः चतुरस्रं वर्तुलं च कथितं गर्तलक्षणं पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजान् तिष्ठंश्चेत्क्षालनं कुर्यान्निराशाः पितरो
गता इति तत्सभूलत्वे मंडलार्थे पृथक् ज्ञेयम् तत्र गोमये हेमाद्रौ भृगुः अत्यंतजीर्णदेहायां वंध्यायाश्च विशेषतः आर्तायान
वसूतायान गोर्गोमयमाहरेत् मात्स्ये अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत् विप्राणां क्षालयेत्पादानभिवंद्य पुनः पुनः
प्राङ्मुखस्थितः कुर्याद्विप्रपादाभिषेचनम् तत्रैव भविष्ये प्रक्षालयेद्विप्रपादान् शन्नो देवीरिति त्वृचा पृथ्वीन्वं द्रोदयेहृद्
वसिष्ठः नकुशप्रंथिहस्तस्तु पाद्यं दद्याद्विचक्षणः कालिकायां संग्रहे ततः प्रक्षालयेत्पादौ भार्यास्त्याविततचारिणा तथा श्रा
द्धकाले पदा पत्नी वामे नीरप्रदा भवेत् आसुरं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते तत्रैव नाथः प्रक्षालयेत्पादौ कर्ता पित्रादि
कर्मसु पाद्यानंतरमर्घ्यमपि दद्यादिति हेमाद्रिः तत्रैव लौगाक्षिः मंडलादुत्तरे देशे दद्यादाचमनीयकम् तत्रैव विधा
य क्षालनं तेषां द्विरन्वमनमिष्यते स्वयं चापि द्विराचामेद्विधिज्ञः श्रद्धयान्वितः हेमाद्रौ नारदीये यत्राचमनवारीणि पादप्र
क्षालनोदकैः संगच्छंते बुधाः श्राद्धमासुरं तत्प्रचक्षते हेमाद्रौ व्यासः सव्येन वासनं धृत्वा दक्षिणे दक्षिणं करम् व्याहृ
तीभिः समस्ताभिरासनेषूपवेशयेत् समाध्वाभिनिवेशोत्तादक्षिणं जानु संस्पृशन् आस्यतामिति तान्ब्रूयादासनं संस्पृ
शन्नपि हेमाद्रौ शातातपः द्वौ दैवे अथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत् पित्र्ये तूदङ्मुखांस्त्रींश्च बह्वृचाध्वर्युसामगान्
याज्ञवल्क्यः द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा मनुहेमाद्रौ हारीतः दक्षिणाग्रदर्भेषु प्राङ्मुखान् ब्राह्मणान्भो
जयेदुदङ्मुखान्नित्ये के इति तन्मैत्रायणीयविषयम् प्राङ्मुखान्भोजयेदुदङ्मुखान्नित्ये क इति तत्परिशिष्टात् विकल्प

इतिहेमाद्रिः माधवीयेयमः भिक्षुकोब्रह्मचारीवाभोजनार्थमुपस्थितः उपविष्टेष्वनुप्रासः कामंतमपिभोजयेत् कौर्मे अतिथिर्यस्यनाश्नातिनतच्छ्राद्धंप्रचक्षते विप्रनियमोमाधवीये पवित्रपाणयःसर्वेतेचमौनव्रतान्विताः उच्छिष्टोच्छिष्ट- संस्पर्शंवर्जयंतःपरस्परम् तत्रासनानिपृथ्वीचंद्रोदयेयमः आसनंकुतपंदद्यात्तिलदर्भपवित्रकम् हेमाद्रौचमत्कारखंडे पितॄणांधारितंहैमंराजतंवापिचासनम् येनताम्रमयंदत्तमासनंपितृकर्मणि सर्वेदिव्यासनारूढानहिमच्यवंतेदिवः हेमा- द्रौनागरखंडे अयःशंकुमयंपीठमदेयंनोपवेशने कलिकायांसंग्रहे क्षौमंदुकूलंनैपालमाविकंदारुजंतथा तार्णंपार्णंदृशीं चैवविष्टरादिंचविन्यसेत् अग्निदग्धान्यायसानिभग्नानिचविवर्जयेत् हेमाद्रौछागलेयः पश्चाद्भागादुपक्रम्यप्राच्यां- पंक्तिर्यथाभवेत् दक्षिणासंस्थितास्त्वेषापितॄणांश्राद्धकर्मणि पुलस्त्यः श्रीपर्णीवारुणीक्षीरीजंबुकाम्रकदंबकम् सप्त- मंबकुलंपीठंपितॄणांदत्तमक्षयम् संग्रहे शमीचकाश्मरीशेलुःकदंबोवारुणस्तथा पंचासनानिशस्तानिश्राद्धेदेवार्चनेत या कारिका द्वौदैवेप्राङ्मुखौपित्र्येत्रीन्विप्रानुदगाननान् पैठीनसिः कुतपःश्राद्धवेलायांश्रोत्रियोयदिदृश्यते आश्वला- यनः नीवीवासोदशांतेनस्वरक्षार्थंप्रबंधयेत् वृद्धयाज्ञवल्क्यस्तु दक्षिणेकटिदेशेतुतिलैःसहकुशत्रयम् यत्तुकातीयम् नीवीकार्यादशाग्रास्त्रिर्वामकुक्षौकुशैःसहेति तद्वृद्धिश्राद्धे पितॄणांदक्षिणेपार्श्वेविपरीतास्तुदैविक इतिस्मृत्यंतरात् वामे- दक्षिणेवेत्याचाराद्व्यवस्थेतिमदनपारिजाते आचार्यः प्राणायामत्रयंकृत्वागायत्रीस्मरणंतथा श्राद्धकर्तास्मीतिवदे- त्त्रिर्विप्रैर्वाच्यंकुरुष्वच ब्राह्मे ततस्तिलान्गृहीत्वास्मिन्विकिरेच्चाग्रदक्षिणम् अन्यद्यापरयायुक्तोजपेदपहताइति स्मृत्य- र्थसारे अपहताइतितिलान्विकीर्यउदीरतामितृचाप्रोक्षेत् पराशरः तद्विष्णोरितिमंत्रेणगायत्र्याचप्रयत्नतः प्रोक्षयेद-

दन्नजातंतुशूद्र इत्यादिशङ्ख्ये हेमाद्रौब्रह्मांडे श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरम् वस्त्रादींश्चापितॄन्ध्यात्वाततःश्राद्धंप्रवर्तने
देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच नमःस्वाहायैस्वधायैनित्यमेवनमोनमः आदिमध्यावसानेषुत्रिरावृत्तंजपेद्बुधः पितरः-
क्षिप्रमायांतिराक्षसाःप्रद्रवंतिच तत्रैवस्कांदे निधारक्षांतत्स्करान्दर्भोरक्षंतुराक्षसान् पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्ष-
कः यसिद्धः शकुन्तीभिःकूष्मांडीभिःपावमानीभिश्चपाकादिप्रोक्षयेत् अथदेवार्चा तत्रप्रत्यक्चारमाद्यंतयोरपोदद्यादित्युक्तं
गृहेस्मृत्यर्थसारेच हेमाद्रौब्राह्मे आसनेष्वासनंदद्याद्वामेवादक्षिणेपिवा पितृकर्मणिवामेचदैवेदद्यात्तुदक्षिणे मन्वेताः आ-
सनेष्वासनंदद्यान्नतुपाणौकदाचन धर्मोसीत्यथमंत्रेणगृह्णीयुस्तेतुतान्कुशान् धर्मोसिविशिराजाप्रतिष्ठितइतिमंत्रः गा-
लवः दर्भानादायहस्ताभ्यांगृहीत्वादक्षिणेकरे दैवेक्षणःक्रियतांतुनिरंगुष्ठंकरंततः ओंतथेतिद्विजाब्रूयुस्तेप्राप्नोतुभवा-
निति कर्ताब्रूयात्ततोविप्रःप्राप्नवानीतिवैवदेत् पृथ्वीचंद्रोदयेबृहन्नारदीये यवैर्दर्भैश्चविश्वेषांदेवानामिदमासनम् दत्वेति
भूयोदद्याद्दैवेक्षणइतिक्षणम् तच्चषष्ठ्याचतुर्थ्यावाकार्यमितिसएव ततोर्घ्यंकल्पयेदितिमन्वादयः शौनकजयंताभ्यामर्घ्य-
सहितस्यदेवार्चनस्योक्तेः आश्वलायनानांदैवेर्घ्यदानंवोपदेवः तत्रपरिशिष्टप्रयोगपारिजातविरोधात् हरिहराद्युक्तेर्दैवेष्वर्घ्यंद-
द्यात् देवेभ्योपिपृथक्दद्यात्स्वाहार्घ्यंश्रुतिचोदनादितिशौनकोक्तेः अथार्घ्यपात्रम् पृथ्वीचंद्रोदयेमात्स्यपाद्मयोः पात्रंवनस्पतिम-
यंतथापर्णमयंपुनः जलजंवापिकुर्वीततथासागरसंभवम् ब्राह्मे सौवर्णताम्ररौप्याश्मस्फाटिकंशंखशुक्तयः भिन्नान्यपिहियो-
ग्यानिपात्राणिपितृकर्मणि हेमाद्रौप्रजापतिः सौवर्णंराजतंताम्रंखड्गंमणिमयंतथा यज्ञियंचसमंवापिअर्घ्यार्थंपूरयेद्बुधः अ-
त्रविप्रैकत्वद्वित्वचतुष्ट्वादावर्घ्यपात्रेद्वेएव मानवसूत्रेतुदैवेश्वदैविके त्रीणिपित्र्ये एकैकमुभयत्रचेत्युक्तम् तदेक

विप्रयम् पात्रालाभपरंत्वेतिहेमाद्रिः मदनरत्नेतुदैवे एकपात्रमुक्तम् पृथ्वीचंद्रोदयेपित्र्याणिपित्रकपात्राणिद्वे द्वेवैश्वदे
विकइति गृह्यपराशरोक्तेद्वेएवेत्याह बह्वृचानांतुदैवेविप्राद्विस्वेप्येकमर्घ्यपात्रंअर्धशोदयादित्यक्तंपरिशिष्टेप्रयोगपा
रिजातेच कलिकायांहारीतः दत्तमक्षय्यतांयातिखड्गेनार्घ्यंतुयत्कृतम् वृद्धमनुः मृन्मयंदारुजंपात्रमयःपात्रंचय-
द्भवेत् राजतंदैविकेकार्येशिलापात्रंचवर्जयेत् पुराणसमुच्चये मृत्स्नामयंतथाकांस्यमारकूटंजतुसंभवम् त्रपुःसीस-
लोहभवंसदापात्राणिवर्जयेत् तत्रैव अष्टांगुलंभवेत्पात्रंपितृणांराजतंशुभम् दशांगुलंतुदेवानांसौवर्णंशक्तितः कृतं
स्थापयेदर्घ्यपात्रेद्वेस्रुवजेनकुशोपरि द्वेद्वेपवित्रेचाधिवत्पात्रयोश्चोपरिक्षिपेत् यज्ञपार्श्वः पवित्रेस्थेतिमंत्रेणपवित्रे
छेदयेत्तुते ओषधीमंतरेकृत्वाअंगुष्ठांगुलिपर्वणोः स्पंयेनकाष्ठेनलोहेननमृन्मयनखादिभिः वसिष्ठः तूष्णींप्रोक्ष्यांभ
सापात्रेकुर्यादूर्ध्वविलेततः पूरयेत्पात्रयुग्मंतुकृत्वोपरिपवित्रके वृद्धपराशरः पात्रद्वयमथार्घ्यार्थंतैजसंचैकवस्तकः
प्राङ्मुखोमरतीर्थेनशन्नोदेव्यादकंक्षिपेत् यवोसीतियवांस्तत्रतूष्णींपुष्पाणिचंदनम् मानवसूत्रे समनसःप्रक्षि
प्योसूयययवान्प्रक्षिप्येति यवोसीतिमंत्रः पाद्मे यवोसिधान्यराजोसिवारुणोमधुमिश्रितः निर्णोदःसर्वपापानां
पवित्रमृषिभिःस्मृतः राजोवावारुणोमधुसंयुतइतिपरिशिष्टपाठः गोभिलेनतु यवोसिसोमदेवत्यइतितिलमं-
त्रोत्रस्वाहायुक्तउक्तः हेमाद्रौयमः यवहस्तस्ततोदेवान्विज्ञाप्यावाहनंप्रति आवाहयेदनुज्ञातोविश्वेदेवासइत्यृचा
वृद्धपराशरः ततःसव्यकरंन्यस्यविप्रदक्षिणजानुनि देवानावाहयिष्येहमितिवाचमुदीरयेत् आवाहयेत्यनुज्ञा
तोविश्वेदेवासआगत विश्वेदेवाःशृणुतेममितिमंत्रद्वयंपठेत् श्राद्धविशेषेविश्वेदेवानाम ज्ञानेहेमाद्रौगृह्यप-

ति: उसन्तिंनामचैतेषांनविदुर्येद्विजातय: अयमुच्चारणीयस्तेमंत्र:श्रद्धासमन्वितैः आगच्छंतुमहाभागाविश्वेदेवामहा
बला: येअत्रविहिता:श्राद्धेसावधानाभवंतुते इदंचावाहनमर्घ्यपात्रासादनात्प्राक् हेमाद्रिणोक्तम् तत्रकातीयै:प्रा
क्कार्यंनथैवतत्सूत्रात् अन्येस्तदुत्तरं पृथ्वीचंद्रोदयेशंख: सयवंपुष्पमादायचरणादिशिरोंतिकम् अर्चयेत्सर्वनं
कुर्यादंतरेचोदकंतथा पित्र्येतुमूर्धादिपादांतं पादप्रभृतिमूर्धांतं दैविकेपूजनंभवेत् शिर:प्रभृतिपादांतंनमोवइति
पैतृके इतिमदनरत्नेमंत्रेतसोक्ते: कलिकायांसंग्रहे तितःकृतांजलिर्भूत्वापठेन्मंत्रोसमाहित: विश्वेदेवा:शृणुतेमा
गच्छंत्वपरंतत: हेमाद्रौजानुकर्ण्य: ततोर्घ्यपात्रसंपत्तिंवानयित्वाद्विजोत्तमान् तदग्रेचार्घ्यपात्रंतुस्वाहार्घ्याइति
विन्यसेत् गार्ग्य: दत्वाहस्तेपवित्रंचकृत्वापूजांचपादत: यादिव्याइतिमंत्रेणहस्तेत्वर्घ्यंविनिक्षिपेत् संग्रहे विश्वे
देवाइदंवो र्घ्यमितिदानंसमादिशेत् तदंतेस्वाहानमइतिगार्ग्यं यादिव्याइतिमंत्रेणस्वाहाकारंनमोंतकमितिहे-
माद्रौनागरखंडात् अथर्वणसूत्रेतु पाद्यमर्घ्यमाचमनीयमितिद्विजकरेनिनयेदित्युक्त्वेयत्रयमुक्तम् गभस्ति:अ
र्घ्यंचपिंडदानंचस्वस्त्यक्षय्येतथैवच गंधपुष्पादिकंसर्वंहस्तेनैवतुदापयेत् प्रतिविप्रंयादिव्येत्यावृत्ति: बह्वृचानांत्व
नेनदत्तार्घ्यानुमंत्रणम् तत:पात्रंदक्षिणेदेवेभ्य:स्थानमसीतिन्युब्जमुत्तानंवाकार्यमितिगारुडेउक्तम् एतदापस्तं-
बानांनियतमन्येषांन हेमाद्रौविष्णुधर्मे गंधै:पुष्पैश्चधूपैश्चवस्त्रैश्चाप्यथभूषणै: अर्चयेद्ब्राह्मणान्शक्त्याश्रद्द-
धान:समाहित: पृथ्वीचंद्रोदयेमार्कंडेय: चंदनागरुकर्पूरकुंकुमानिप्रदापयेत् विष्णु: चंदनकुंकुमकर्पूरागरुप-
द्मकान्यनुलेपनार्थेति व्यास: अपवित्रकरोगंधेगंधद्वारेतिपूजयेत् कलिकायांस्मृति: गंधद्वारेतिचेगंधेमायनेते

चपुष्पकम् धूरसीत्यनुनाधूपमुद्दीप्यस्वेतिदीपकम् युवंवस्त्राणिमंत्रेणवस्त्रंदद्यात्प्रयत्नतः आसनेस्वासनंब्रूयादर्घ्येस्वर्घ्यमि
त्रोत्तमः स्वगंधश्चस्वपुष्पाणिस्वमाल्यानिस्वधूपकः स्वज्योतिश्चैवदीपेतुस्वाच्छादनमितिक्रमः विभाणांगंधेनवर्तुलंत्रि
पुंड्रंयानकार्यम् हेमाद्रौदेवलः ललाटेपुंड्रकंदृष्ट्वास्कंधेमालांतथैवच निराशाःपितरोयांतिदृष्ट्वाचवृषलीपतिम् पुं-
ड्रंवर्तुलमित्यपरार्केमदनरत्नेच पुंड्रंत्रिपुंड्रंवर्तुलमर्धचंद्रंच ऊर्ध्वंचतिलकंकुर्यान्नकुर्याद्वैत्रिपुंड्रकम् ऊर्ध्वंचतिलकंकु
र्यादैवेपित्र्येचकर्मणि निराशाःपितरोयांतिदृष्ट्वाचैवत्रिपुंड्रकम् इतिवृद्धपराशरोक्तेः तिर्यग्लेपोभवत्येव वर्जयेत्ति-
लकंभालेश्राद्धकालेचसर्वदा तिर्यगप्यूर्ध्वपुंड्रंवाधारयेत्तुप्रलत्नइतिव्यासोक्तेरितिपृथ्वीचंद्रः यत्तुनारदीये ऊर्ध्वपुंड्रं
चतुलसीश्राद्धेनेच्छंतिकेचनेतिनत्कर्तृपरम् हेमाद्रौब्राह्मे पूतिकंमृगनाभिंचरोचनांरक्तचंदनम् कालेयकंतूग्रगंधं
तुरुष्कंचापिवर्जयेत् कस्तूर्याविकल्पइतिहेमाद्रिः वृद्धशातातपः पवित्रंतुकरेकृत्वायःसमालभतेद्विजान् राक्षसा-
नांभवेच्छ्राद्धंनिराशाःपितृभिर्गतैः पुष्पंतुब्राह्मे जातीचंपकलोध्राश्चमल्लिकाबाणबर्बरी चूताशोकादरूषंचतुलसी
शतपत्रकम् कुब्जकंतगरंचैवमृगमारण्यकेतकी यूथिकामातिमुक्तंचश्राद्धयोग्यानिभोद्विजाः कमलंकुमुदंपद्मंपुंडरी
कंचयत्नतः इंदीवरंकोकनदंकल्हारंचनिवेदयेत् हेमाद्रौचाग्नुभाविष्ययोःस्वकुमारैःकिसलयैर्यवदूर्वांकुरैरपि संपूज
नीयाःपितरःश्रेयस्कामेनसर्वदा स्कांदे जातिश्चसर्वादानव्यामल्लिकाश्वेतयूथिका जलोद्भवानिसर्वाणिकुसुमानिच
चंपकम् तत्रैववृद्धमनुः ननियुक्तःशिरस्वाकर्ज्यमाल्यंशिरसिधारयेत् वर्ज्यानिपृथ्वीचंद्रोदयेभविष्ये केतकींतुल-
सीपत्रंविल्वपत्रंचवर्जयेत् द्रोणंचकरवीरंचधत्तूरंकिंशुकंतथा माधवीये स्मृत्यर्थसारेचतुलसीनिषिद्धा तुलसा-

निषेधोनिर्मूलइतिहेमाद्रिः समूलत्वेपिपिंडपरः तुलसीगंधमाघ्रायपितरस्तुष्टमानसाः प्रयांतिगरुडारूढास्तत्सदंचक्रपा
णिनइति प्रयोगपारिजातेपाद्मोक्तेरितिबोपदेवः वृद्धपराशरः नजातीकुसुमैर्विद्वान्बिल्वपत्रैश्चनार्चयेत् जपादिकुसुमं
झिंटीरूपिकासकुरंटिका पुष्पाणिवर्जनीयानिश्राद्धकर्मणिनित्यशः हेमाद्रौशंखः उग्रगंधीन्यगंधीनिचैत्यवृक्षोद्भवानि
च पुष्पाणिवर्जनीयानिरक्तवर्णानियानिच जलोद्भवानिदेयानिरक्तान्यपिविशेषतः अंगिराः नजातीकुसुमानिदद्या-
न्नकदलीपत्रमिति जात्याविकल्पइतिहेमाद्रिः निषेधःपिंडविषयः कुंदशर्भौचनोदद्यान्नोन्मत्तंगरुडध्वजे पिंडेजातीं
चनोदद्याद्देवीमर्केणनार्चयेदिति वृद्धयाज्ञवल्क्योक्तेरितिबोपदेवः स्मृतिसारे अगस्त्यंभृंगराजंचतुलसीशतपत्रिका
चंपकंतिलपुष्पंचषडेतेपितृवल्लभाः केतकींकरवीरंचबकुलंकुंदकंतथा पाटलांचैवजातींचश्राद्धेयत्नेनवर्जयेत् केचि
त्पिंडेपितुलसीमाहुः पितृपिंडार्चनंश्राद्धेयैःकृतंतुलसीदलैः प्रीणिताःपितरस्तेस्तुयावच्चंद्रार्कमेदिनीतिमार्कंडेयोक्तेः
धूपस्तत्रैवविष्णुधर्मे धूपस्तुगुग्गुलुर्देयस्तथाचंदनसारजः अगरुश्चसकर्पूरस्तुरुष्कस्त्वकृतथैवच विष्णुः घृतमधु-
युक्तंगुग्गुलुंश्रीखंडदेवदारुसरलादिदद्यादिति तत्रैवदेवलः येहिप्राण्यंगजाधूपाहस्तवाताहृताश्चये नतेश्राद्धेनियो-
क्तव्यायेचकेचोग्रगंधयः घृतंनकेवलंदद्याद्दुष्टंवातृणगुग्गुलुम् दीपमाहविष्णुः घृतेनदीपोदातव्यस्तिलतैलेनवापुनः
वसामेदोद्भवंदीपंप्रयत्नेनविवर्जयेत् वस्त्रंब्राह्मे कौशेयंक्षौमकार्पासंदुकूलमहतंतथा श्राद्धेष्वेतानिनोदद्यात्कामा-
नाप्नोतिचोत्तमान् हेमाद्रौब्रह्मवैवर्ते यज्ञोपवीतंदातव्यंवस्त्राभावेविजानता पितृभ्योवस्त्रदानस्यफलंतेनाश्नुतेऽखि
लम् तत्रैवपाद्मे निष्क्रयोवायथाशक्तिवस्त्राभावेप्रदीयते अन्यान्यपिचदेयानि तत्रैवकालिकापुराणे धात्वादिनि

र्मिनारस्यादीपिकाःश्राद्धकर्मणि पितृनुद्दिश्ययोदद्यात्संभवेद्राजनंश्रियः योधूपदानपात्रंतुपात्रमारार्तिकस्यच दद्या
त्पितृभ्यःप्रयतस्तस्यस्वर्गेक्षय्यागतिः विष्णुधर्मे यःकंचुकंतथोष्णीकांपितृभ्यःप्रतिपादयेत् ज्वरोद्भवानिदुःखानि-
सकलानिनपश्यति स्त्रीणांश्राद्धेतुसिंदूरंदद्यश्चांडानकानिच निमंत्रिताभ्यःस्त्रीभ्योयेतेस्यःसौभाग्यसंयुताः हेमा
द्रावादित्यपुराणे नकृष्णवर्णंदातव्यंनापिकार्पाससंभवम् पितृभ्योनापिमलिनंनोपयुक्तंकदाचन नाच्छिद्रितंनापद
शंनधौतंकारुणापिच कार्पासनिषेधोन्यसंभवे तत्रैव पितृन्सत्कृत्यवासोभिर्दद्याद्यज्ञोपवीतकम् यज्ञोपवीतदा
नेनविनाश्राद्धंतुनिष्फलम् एतद्यतिशूद्रस्त्रीश्राद्धेपिदेयमितिहेमाद्रिः तत्रैवनृसिंहपुराणे कमंडलुंताम्रमयंश्रा
द्धेषुप्रददातियः काष्ठेनानिर्मितंचापिनारिकेलमथापिवा दद्यात्कमंडलुंश्राद्धेसश्रीमानभिजायते योमृत्तिकाविर
चितान्श्राद्धेषुचघटान्शुभान् प्रदद्यात्करकान्वापिसोक्षय्यंविंदतेफलम् तत्रैव उपानच्छत्रवस्त्राणिभुक्तिपात्रंक
मंडलुम् शयनासनयानानिदर्पणव्यजनानिच अन्नंसुसंस्कृतंगंधांस्तांबूलंदीपचामरम् पितृभ्योयःप्रयच्छे-
त्तुविष्णुलोकंसगच्छति सौरपुराणे चामरंतालवृंतंचश्वेतछत्रंचदर्पणम् दत्वापितृणामेतानिभूमिपालोभवे
दिह तत्रैवनंदिपुराणे अलंकाराःप्रदातव्यायथाशक्तिहिरण्मयाः केयूरहारकटकमुद्रिकाकुंडलादयः तथास्त्री
श्राद्धेषुप्रदेयास्त्वलंकारास्तुयोषिताम् मंजीरमेखलादामकर्णिकाकंकणादयः आदर्शव्यजनछत्रशयनासन
पादुकाः मनोज्ञाःपटवासाश्चस्रग्गंधाश्चूर्णवृष्टयः अंगारधानिकाःशीतेयोगपट्टाश्चपष्टयः कटिसूत्राणिशो
भाणिमेखलाश्चैवकंबलाः कर्पूरादेश्चभांडानितांबूलायतनंतथा भोजनाधारयंत्राणिपतद्ग्राहांस्तथैवच तथ

जनं शलाकाश्च केशानां च प्रसाधनम् एतान्दद्यात्तु यः सम्यक् सोऽश्वमेधफलं लभेत् स्कांदे सौवर्णराजतं वापि कांस्येनाप्यथ निर्मितम् दत्वा भोजनपात्रं तु सम्राट् भवति भूतले वामनपुराणे वंदीकृतास्तु ये केचित्स्वयं वा यद्विपरैः येन केनाप्युपायेन यस्तान्मोचयते नरः पितरस्तस्य गच्छंति शाश्वतं पदमव्ययम् पराशरः वाचयेत्सरिपूर्णं तं वासो दत्वा विधानतः नारदीये दैवेभ्यः समनुज्ञातो यजेत्पितृगणं तथ तत्रापि त्र्येऽआसनाद्यशेषमर्चनकांडं वैश्वदेविकं ज्ञेयम् विशेषस्तूच्यते तत्रासने द्विगुणभुग्नाः कुशाः अत्रावाहनमासनात्पूर्वं वार्घ्यपूरणोत्तरं वाग्नौकरणोत्तरं वेति स्मृतिषु पक्षा उक्ताः एषां शाखाभेदेन व्यवस्था द्वितीयपक्ष एव बहुसंमतः तत्रार्घ्यमाहाश्वलायनः तैजसाश्ममयमृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वपः प्रसिच्य शन्नो देवीरित्यनुमंत्र्य तिलानावपति तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वधा नम इति अश्ममयं स्फाटिकादि मृन्मयं हस्तकृतमेव कुलालचक्रनिष्पन्नमासुरं दैविकं नतत् तदेव हस्तघटितं दैविकं केवलं तथेति छंदोगपरिशिष्टात् अन्यान्यपि पात्राणि पूर्वमुक्तानि मनुः अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत् पात्राण्यासादयेत्त्रीणि न तु ब्राह्मणसंख्यया दत्तकादेः कर्तुर्द्विपितृत्वाद्द्वावपि वचनात्त्रीण्येव पात्राणीति हरिहरः माधवीये बैजवापः अर्घ्ये पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित् एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि हेमाद्रावप्येवम् अत्रानुमंत्रणं सकृत् तिलोसीत्यस्य प्रतिपात्रमावृत्तिः पितृशब्दस्यानूहश्चेति वृत्तिकृत् दर्भास्त्रिगुणं पवित्रम् तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे एकोद्दिष्टे शलाकैकां निधायोदकमाहरेदिति हेमाद्रौ चतुर्विंशतिमतात् तत्रैव विष्णुः दक्षिणाग्रदर्भेषु दक्षिणापवर्गं चमसेषु पवित्रान्तर्हितेष्वप आसिंचेच्छन्नो-

देवीरितिमंत्रेण जलासेचनंचक्रुचभिन्नविषयम् अस्मिन्पक्षेप्रतिपात्रंमंत्रावृत्तिः कारिकायाम् गंधपुष्पाणिचैतेषुपात्रेषु
प्रक्षिपेदथ श्राद्धे जलंक्षीरंदधिघृतंतिलतंडुलसर्षपान् कुशाग्रमथपुष्पाणिदत्वाचामेत्ततःस्वयम् जानूकृत्य: ततो
र्घ्यपात्रसंपत्तिंवाचयित्वाद्विजोत्तमान् तदग्रेचार्घ्यपात्राणिस्वधार्घ्याइतिविन्यसेत् ततस्तिलहस्तोपिप्रसव्यजानोर्दक्षि
णकरंन्यस्यावाहनंपृच्छेत् अत्रगोत्रसंबंधनामानिद्वितीयांतत्त्वंचप्रागुक्तम् बैजवापगृह्ये तिष्ठन्पितॄनावाहयिष्या
मीत्यामंत्र्य कोर्भे अपसव्यंततः कृत्वापितॄणांदक्षिणामुखः आवाहनंततःकुर्यादुशंतस्त्वेत्यृचाबुधः आवाह्य तदनु-
ज्ञातोजपेदायंतुनस्ततः अत्रसव्यस्यापिप्रागुक्तोविकल्पः अत्राद्यमंत्रावृत्त्यास्मत्पितरममुकशर्माणममुकगोत्रंवसुरू-
पमावाहयामीत्यायस्त्वमूर्धोद्दिपोहंततिलान्विकीर्यायंतुनइतिसर्वेतिसकृज्जपेदितिनिबंधाः अत्रोपवेशनसंवेशनपा
द्यार्घ्याचमनीयान्यपिहेमाद्रिणोक्तानितान्यथर्ववेदिनांनियतानि भालेपांतेपात्रप्रपितामहादिपित्र्यंतंप्रातिलोम्येनसर्वः प्र-
योगः यारादे गंधपुष्पार्चनंकृत्वादद्यादुक्तोतिलोदकम् गार्ग्यः शिरस्तःपादतोवापिसम्यगभ्यर्चयेत्ततः ततःस्व-
धार्घ्याइतिपितृपितामहादिविप्राग्रेप्रत्येकंनिवेदयेदितिकारिकायाम् वृत्तौच आश्वलायनः अप्रसव्येनेतरपाण्यंगु
ष्ठांतरेणोपवीतित्वाद्दक्षिणेनवासव्योपगृहीतेनपितरिदंतेर्घ्यपितामहेदंतेर्घ्यप्रपितामहेदंतेर्घ्यइत्यपःपूर्वंताः प्रति-
ग्राहयिष्यन्सकृत्स्वधार्घ्याइतिपृच्छति स्वनुसृष्टास्त्वनुमंत्रयीत यादिव्याआपःपृथिव्यासंबभूवुर्याअंतरिक्षाउत
पार्थिवीर्याः हिरण्यवर्णायाज्ञियास्तानआपःशंस्योनाभवंतु अर्घ्यादिप्राक्गंधादेर्यज्ञोपवीतमेव अर्घ्यदानात्प्राग-
न्याअपोदद्यात् यद्यप्यत्रसव्येनदक्षिणेनवार्घ्यंदद्यादस्फुटम् तथापिदक्षिणेनेत्यभिमतोर्थः कारिकायांवृत्तौचैवम्

पित्रादेस्त्रिभिः पात्रैर्दद्यात् पितुःस्थानेविप्रत्रयंचेदेकार्घ्यंविभज्यदद्यात त्रयाणांस्वधार्घ्याइतिसकृत्प्रश्नः एवंपैतामहादावपि
अन्यजलदानमर्घ्यमंत्राश्चप्रतिविप्रमावर्तंते तेषुगंधादौचप्रतिविप्रंपदार्थानुसमयः कांडानुसमयोवा पित्रादित्रयाणामेकवि
प्रपक्षेत्रिभिः पात्रैरेकस्यैवार्घ्यंदद्यादितिहेमाद्रिः कारिकापि स्वधार्घ्याइत्यर्घ्योस्त्वाउपवीतीनिवेदयेत् निवेदनात्प्राक्प्राची
नावीतमेवेत्यर्थः अर्घ्यंसशेषमादायदक्षिणेनतुपाणिना सव्यहस्तगृहीतेननिनयेत्पितृतीर्थतः दत्वादत्वाभिनीतास्तायाः
दिव्याइत्यनुमंत्रयेत् यत्तु यादिव्याइतिमंत्रेणहस्तेष्वर्घ्यंविनिक्षिपेदिति यच्चयाज्ञवल्क्यःदत्वार्घ्यादिकंहि
जइति यच्चव्यासः गोत्रसंबंधनामानिपितॄणामनुकीर्तयन् एकैकस्यतुविप्रस्यअर्घ्यपात्रंविनिक्षिपेदितितद्धस्तातिरिक्त
विषयम् ततआचामेत् एवंमातामहेष्वपि आश्वलायनः सस्रवान्समवनीयताभिरद्भिःपुत्रकामोमुखमनक्तिसंस्रवःशेषःसं
स्रवोहिपारिशिष्टोभवतीतिशतपथश्रुतेः केचित्तुहस्तगलितांबुवदंति समवनीयांत्येद्वेपात्रेपितृपात्रेआसिच्येतिवृत्तिः
प्रथमेपात्रेसंस्रवान्समवनीयेतिकातीयसूत्राच्च प्राज्ञेतु प्रतिबिंबावलोकनमुक्तम् स्कांदेत्वायुःकामस्यनेत्रासेचनमु
क्तम् पित्र्यविप्रैःप्राङ्मुखस्यकर्तुरभिषेकःकार्यइतिकेचित् आश्वलायनः नोद्धरेत्प्रथमंपात्रंपितॄणामर्घ्यपातितम् आ
वृत्तास्तत्रतिष्ठंतिपितरःशौनकोब्रवीत् यावद्विप्रविसर्जनमितिदुर्यपादेयमीयःपाठः अत्रवृत्तिः पितृपात्रंसमवनयनदे
शान्नचालयेदाश्राद्धसमाप्तेः यस्मात्तत्रतृतीयपात्रेणावृत्ताइति यद्वा प्रथमपात्रमेवन्युब्जंकुर्यादिति कामाभावेपीदमे
वशेषप्रतिपादनम् हेमाद्रौकौर्मे संस्रवांश्चततःसर्वान्पात्रेकुर्यात्समाहितः पितृभ्यःस्थानमसीतिन्युब्जंपात्रंनिधापये
त् शूलपाणौयमस्तु पैतृकंप्रथमंपात्रंतस्मिन्पैतामहंन्यसेत् प्रपितामहंततोन्यस्यनोद्धरेन्नचचालयेदित्याह अथसंस्र

सैवकवाक्यतयार्थ इति केचित् अत्रिः गंधादिभिस्तदभ्यर्च्य तृतीये
वानानीय तृतीयेनाच्छाद्य न्युब्जीकुर्यादिति सचैकवाक्यतयार्थ इति केचित् अर्चनं न्युब्जीकृते पितुल्यम् न्युब्जमुत्तरेणोन्य-
नापिधापयेत् पितृभ्यः स्थानमसीति शङ्खोद्देशोर्चितेर्चयेत् अर्चनं न्युब्जीकृते पितुल्यम् न्युब्जमुत्तरेणोन्य-
सेदिति प्रचेतसोक्तेः सर्वविप्रोत्तरतोन्यसेदिति हेमाद्रिः कल्पतरौ विप्रवामे इति हलायुधः कर्तुर्वामे इति शू-
लपाणिः उत्तानं विश्वतं चापि पितृपात्रं न तद्भवेदिति उशनसोक्तेर्न्युब्जतैव साधुः मातामहादिसंस्रवानपि पितृपात्रे
वगृहीत्वा प्रयाजवत्तंत्रेण न्युब्जीकुर्यादिति शूलपाणिः एकोद्दिष्टे तु हेन न्युब्जतेति पितृभक्तौ श्रीदत्तः यमोपि स्रष्टम्
तान भन्यत्रनीतसुहृदादित्तं तथा पात्रं दृष्ट्वा प्रजं त्याश पितरस्तं शपंति च वैश्वदेवे उत्तानमिति मदनपारिजातः बैजवापः न
स्योपरि कुशान्दत्वा प्रदद्याद्देवपूर्वकम् गंधपुष्पाणि धूपं च दीपं वस्त्रोपवीतके अत्र गंधादेर्दैवे पित्र्ये च पदार्थानुसमयस्य याज्ञ
वल्क्योक्तकांडानुसमयेन विकल्पो ज्ञेयः बह्वृचानां तु सूत्रे देवानुक्तेः कांडानुसमय एव अत्र प्राचीनावीति नामगोत्रसंबुद्ध्याद्युक्तं
मागन्यद्देववत् तदंते आचमनं च हेमाद्रौ कालिकापुराणे निर्वर्त्य ब्राह्मणादेशात् क्रियामेवं यथाविधि भाजनानि ततो दद्यात्
हस्तशौचं पुनः क्रमात् आदेशात्पात्राणि दद्यादित्यन्वयः तेन तत्रापि प्रश्नानुज्ञे ज्ञेये तत्रैव ब्राह्मे मंडलानि च कार्याणि नैवारेश्च
र्णकैः शुभैः गौरमृत्तिकया वापि भस्मना गोमयेन वा भृगुः भस्मना वारिणा वापि कारयेन्मंडलं ततः चतुःकोणं द्विजाग्र्यस्य
कोणं क्षत्रियस्य तु मंडलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् बह्वृचपरिशिष्टे तु दैवे चतुरस्रं पित्र्ये वृत्तं मंडलं कृत्वा क्रमे
णासयवान्सतिलांश्च दर्भान्दद्यादित्युक्तम् मार्कंडेयः यातुधानाः पिशाचाश्च क्रूरा ये चैव राक्षसाः हरंति रसमन्नस्य मंडले-
नविवर्जितम् हेमाद्रौ हारीतः भूमावेव निदध्यान्नोपरि पात्राणीति तानि च हेमाद्रावत्रिराह भोजने हैमरौप्याणि दैवे पि-

ज्ञेयथाक्रमम् हारीतः राजतपार्णताम्रकांस्यपात्राणिभोजनेइति तत्रैवबाराहे सौवर्णानीहरौप्याणिकांस्यानितदसंभवे अन्यान्यपिहिकार्याणिदारुजान्यपिजानता नायसान्यपिकार्याणिपैत्तलानिनतुक्वचित् नचसीसमयानीहशस्यंतेत्रपुजान्य-पि अत्रिः पंचाशत्पलिकंकांस्यंत्वधिकंभोजनायवै गृहस्थैस्तुसदाकार्यमभावेहेमरौप्ययोः पालाशेभ्योविनानस्युःपर्णपात्राणिभोजने इत्थीत्वंद्रस्तु कांस्यपात्रेहविर्दत्त्वानिराशाःपितरोगताइतिश्राद्धोक्तेः कांस्यपात्रनिषेधमाह बोपदेवस्तुस्मृतिसंग्रहसुदाजहार आर्द्रपलाशपत्राणिमधुकोदुंबराणिच पात्रिकाकुरुजप्लक्षककचानिकमाज्जगुः कदलीचूतपनसजंबुपुन्नागचंपकाः अलाभेमुख्यपात्राणांग्राह्याःस्युःपितृकर्मणीति हेमाद्रौतुकदलीपत्रनिषेधमाहांगिराः नजानीकुसुमानिदद्याच्चकदलीपत्रमिति क्रतुः असुराणांकुलेजातारंभापूर्वपरिग्रहे तस्यदर्शनमात्रेणनिराशाःपितरोगताः एवंपात्राण्यासाद्यभस्ममर्यादांकृत्वाविप्रहस्तशोधनंकुर्यात् तत्रापिशंगरक्षाणोइतिमंत्रद्वयंकेचित्पठंति मात्स्ये अकृत्वाभस्ममर्यादांयःकुर्यात्पाणिशोधनम् आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते तत्रैवब्रह्मांडे प्रक्षाल्यहस्तपात्रादिपश्चाद्दर्भविधानवत् प्रक्षालनजलंदर्भैस्तिलैर्मिश्रंक्षिपेच्छुचौ मंडलोपरीतिहेमाद्रिः अथाग्नौकरणम् हेमाद्रौमार्कंडेयः आहिताग्निस्तुजुहुयाद्दक्षिणाग्नौसमाहितः अनाहिताग्निश्चौपासनेऽग्न्याभावेद्विजेप्सुवा वायवीये आहृत्यदक्षिणाग्निंतुहोमार्थंवैप्रयत्नतः अग्न्यर्थंलौकिकंचापिजुहुयात्कर्मसिद्धये आहिताग्निःसर्वाधानी अर्धाधानीतुगृह्यएवेतिचंद्रिकापरार्कमिताक्षरामाधवादयः तस्यापिदक्षिणाग्नौलौकिकोगृह्यइतिहेमाद्रिःकल्पतरुश्च आद्यपक्षएवतुयुक्तः बहुसंमतश्च यद्यपिस्मार्तांग्नौकरणंश्रौतेदक्षिणाग्नौनयुक्तम् तथापिवचनाद्भवतीतिहेमाद्रिचंद्रिकादयः इदंदर्शश्राद्धएव आब्दिकादि

पक्षांतकर्मनिर्वर्त्यवैश्वदेवंच साग्निकः पिंडयज्ञंततः
पुत्तु सर्वधानीपाणौ अर्धाधानीगृह्येकुर्यादिति हेमाद्रिमाधवादयश्च पश्चात् अत एवात्रवचनेसाग्निकः आहिताग्नि
कुर्यात्ततोन्वाहार्यकंबुध इति लौगाक्ष्यादिभिः क्रमोक्तेर्विच्छिन्नदक्षिणाग्निसत्वात् अर्धाधानिनः गृह्ये एवव्यतिषंगे-
क्तो हेमाद्रिणा एतदापस्तंबादीनामेव आश्वलायनस्याहिताग्नेः पाणावेवेति वृत्तिः पितृयज्ञेतुजुहुयाद्दक्षिणाग्नौ समाहितः
णेति प्रयोगपारिजाते परिशिष्टेच बोपदेवस्त्वाह होमशब्दः पिंडपितृयज्ञपरः संधायाग्निं ततः कुर्याद्धोममग्निं समुत्सृ
श्राद्धे स्वोपासनाग्नौतु निरग्निर्लौकिकेनले अनग्निर्दूरभार्यश्च पार्वणे समुपस्थिते बह्वृचस्य त्वनग्नेरपि पाणि
जेदिति त्रिकांडमंडनोक्तेः श्राद्धे गृह्याग्नावेवेति लौकिकाग्न्यादिविधानं च तैत्तिरीयादिविषयं इत्याचष्ट्येवम्
होम एव अग्निपाणिं विना सूत्रे विधानांतरानुक्तेः अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति मनूक्तेश्च काम्यमाभ्युदये ष्टम्यामेको
क्वचित्साग्नेरपि पाणिहोम उक्तो गृह्यपरिशिष्टे अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् एकोद्दिष्टं सपिंडीक
द्दिष्टं तथाष्टमम् चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपीति स्थालीपा
रणं शूद्रेत्वन्निषेधात् बह्वृचभाष्यकारास्तु सर्वैकोद्दिष्टेषु पाणिहोममाहुः इदं बह्वृचानामेव अत्रेदं तत्त्वम् स्थालीपा
केन सह पिंडार्थमुधृत्येति सूत्रेणात्रापूर्वः स्थालीपाकश्चोद्यते सर्वश्राद्धेषु प्रसंगात्तेनानुवादोयमिति वृत्तिकारोक्तेः
पार्वणे आर्थिकस्यानंगस्य व्यतिषंगस्य वार्षिकादिष्वनतिदेशादर्धाधानिनोपि पाणिहोम एवेति वृत्तिस्वरसः एवंम
सिकादावपि षोडशे मासिके श्राद्धे सपिंडीकरणे तथा पाणावेव तु होतव्यमन्यत्राग्नौ तु हूयत इति बोपदेवोदाहृतवच
नाच्च भाष्यकारमतेतु सूत्रे स्थालीपाकेनेति करणत्वान्नित्यवच्छ्रवणाच्च पार्वणे सांगं ततः काम्यादिषु तदभावे कार्य

स्यपिंडदानस्याप्यभावः एतदेशाज्ञस्यविज्ञनाचपिवार्षिकादौव्यतिषंगउक्तः प्रयोगपारिजातेपरिशिष्टेन्व तेनैतन्मतेर्धा-
धानिनोग्नावेव वस्तुतस्तुस्थालीपाकेसहशाखयाप्रस्तरंप्रहरतीतिवत्सहभावमात्रश्रुतेः पत्नीपतेलक्षुरूपलक्षणसिच-
नांगत्वम् तत्वेवानींगानुरोधेनप्रधानभूतपिंडदानस्यागोयुक्तः तेनव्यतिषंगाभावेप्यग्नौहोमोभवतीतिबोपदेवः अ-
नाहिताग्नेर्गृह्याग्निमतस्तुसर्वमतेग्नावेव वार्षिकादौवृत्तिमतेव्यतिषंगोन अन्यमतेत्वस्ति अत्रयथाचारमनुष्ठेयम्
आश्वलायनः उद्धृत्यघृताक्तमन्नमनुज्ञापयत्यग्नौकरिष्येकरवैकरवाणीतिवाप्रत्यनुज्ञाक्रियतांकुरुष्वकुर्वित्यथाग्नौजु-
होतियथोक्तंपुरस्तादिति व्यतिषंगपक्षेइदमितिवृत्तिः करवैकरवाणीत्यग्नावित्यनुषंगः पुरस्तात्पिंडपितृयज्ञे तच्चैवं
मेक्षणेनावदायावदानसंपदाजुहुयात्सोमायपितृमतेस्वधानमोग्नयेकव्यवाहनायस्वधानमइतिस्वाहाकारेणवाग्निंप्र-
र्वेयज्ञोपवीतीमेक्षणमनुप्रहरेदिति अवदानसंपदाउपस्तरणाद्यपेक्षयेत्यर्थः व्यतिषंगपक्षे अतिप्रणीतेयंहोमोन्यथाग्नु-
रव्येअतिप्रणतेग्नाविध्ममुपसमाधायेतिबह्वृचपरिशिष्टात् केचित्तस्यरक्षोनिबर्हणार्थत्वान्मुख्येवदंति तदेतद्विरोधा-
च्चिंत्यम् प्रयोगपारिजातेप्येवम् शौनकः स्वाहाकारेणहोमेतुभवेद्यज्ञोपवीतवान् तत्रभागग्नयेहुत्वापश्चात्सोमाय-
हूयते अग्नौयज्ञोपवीत्येवप्रक्षिपेन्मेक्षणंततः छंदोगपरिशिष्टे अग्नौकरणहोमश्चकर्तव्यउपवीतिना अपसव्येन
वाकार्योदक्षिणाभिमुखेनच कातीयानांत्वपसव्यमेवपिंडपितृयज्ञवत्हुत्वेतिसर्वातिदेशात् सव्यंतु छंदोगपरम्
गोभिलेनैतदुत्तरमेवापसव्योक्तेः छंदोगाजुहुयुः सव्येनापसव्येनयाजुषाइतिरुद्रयाज्ञवल्क्योक्तेश्च अथपाणिहो-
मः आश्वलायनः अभ्यनुज्ञायांपाणिष्वेवेति पिंडपितृयज्ञकल्पाभावेनाग्न्यभावेकाम्यादिविषयर्थः तेनबह्वृचा

पाणिषिति बहुवचनात्सर्वविप्रपाणिषु होम इति वृत्तिः एवं मातामहेपि
नामेकोद्दिष्टे पाणिहोमोभवत्येव निषेधोन्यपरः यत्तु हेमाद्रौ कात्यायनः
शौनकोपि सर्वेषामुपविष्टानां विप्राणामथ पाणिषु विभज्य जुहुयात्सर्वं सोमायेत्यादिमंत्रतः यत्तु तत्रैव
पित्र्येयः पंक्तिमूर्धन्यस्तस्य पाणावनग्निकः हुत्वा मंत्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेदिति बह्वृचातिरिक्तानाम् यत्तु तत्रैव
शिलातिक इति तत्तीर्थश्राद्धविषय
मित्युक्तम् अग्न्यभावे तु विप्रस्य पाणौ वाथ जलेपि वा अजकर्णेश्वकर्णे वा गोष्ठे वाथ शिलातिक इति तत्तीर्थश्राद्धविषय
म् तद्यदा पांसमीपेस्यात्तदा इज्ञेयो विधिस्तदेति तत्रैव कात्यायनोक्तेः निर्जले जकर्णादौ यत्तु चंद्रोदये यमः देवविः
करेनग्निः कृत्वाग्नौकरणं द्विज इति तदभार्यपरम् अपत्नीकोयदा विप्रः श्राद्धं कुर्वीत पार्वणम् पित्र्यविप्रेरनुज्ञातो विश
देवेषु हूयत इति तत्रैव कात्यायनोक्तेः हूयत इति छांदसोव्यत्ययः हेमाद्रौ वायवीये विधुरो दैविके कुर्यात्तेषां पित्र्ये नि
वेदयेत् देवविप्रानेकत्वे तत्रैव वैश्वदेविये देकस्मिन् भवेयुर्बह्वादयो द्विजाः तदेकपाणौ होतव्यं स्याद्दुधिर्विहितस्तदा
सोप्याद्यः प्रथमं वा नियम्येतेति न्यायात् तेन मृतभार्यस्य दैवे होमः अनुपनीतब्रह्मचार्यादेस्तु पित्र्ये अग्न्यभावे स
तत्त्वावधायद्भार्यां न विंदतीति हेमाद्रौ जातूकर्ण्योक्तेः सभार्यस्यनष्टाग्नेरपि पित्र्यविप्रकरे इति पृथ्वीचंद्रः उपवीतिस्त्वेदै
वे होमः प्राचीनावीतेन पित्र्ये यद्वा सर्वत्र दैवपित्र्यकरयोर्विकल्प इति हेमाद्रौ मदनरत्ने पारिजाते च यदा तु पितृमाताम
हयोर्दैवपित्र्यविप्रभेदस्तदा भेदेन पाणिहोम इत्यपरार्कचंद्रिकादयः यदा तु दैवं तंत्रं तदा तंत्रेण सकृद्दैवपाणिहोम इति
केचित् हेमाद्रिस्तु मातामहस्य भेदेपि कुर्यात्तंत्रेण साग्निक इति कातीयस्मृतेर्भेदमाह एवं पित्र्येपि माधवीयेप्येवं
म् एवं साग्नेरपि विदेशादौ पाणिहोमो ज्ञेयः यत्तु कर्केणाग्निं विना श्राद्धमेव नास्तीत्युक्तम् तत्सापिंडीकरणवार्षिका

यकरणापत्तेर्यत्किंचिदेव यत्तु बृहन्नारदीये अनग्निर्दूरभार्यश्च पार्वणे समुपस्थिते भ्रातृभिः कारयेच्छ्राद्धं साग्निकैर्विधिवत्-
द्विजाः क्षयाहदिवसे मासे स्वस्याग्निर्दूरगो यदि तथैव भ्रातरः स्युश्चेल्लौकिकाग्नावितिस्थितिः औपासनाग्नौ दूरस्थे स-
मीपे भ्रातरि स्थिते यद्यग्नौ जुहुयाद्वापि पाणौ वा स हि पातकी औपासनाग्नौ दूरस्थे केचिदिच्छंति सत्तमाः पाणावेव तु हो-
तव्यमिति नैतत्समंजसम् तदुद्धानादराडुपेक्ष्यम् हेमाद्रौ यमः अग्नौकरणवत्तत्र होमो विप्रकरे भवेत् पर्युक्ष्य दर्भानास्-
तीर्य यतो ह्यग्निसमो द्विजः मेक्षणेन करेण वा होमः मेक्षणप्रहरणं नेति वृत्तिः स्मृतिरत्नावल्याम् नानुज्ञा पाणिहोमे
स्यान्न स्तः पर्यूहनोक्षणे नाग्नेस्तमध्यादिनित्यमस्याताप्यमेक्षणे कर्काचार्योप्येवमाह माधवीये चंद्रिकायां चानुज्ञा-
दि सर्वं भवतीत्युक्तम् पाणिहोमे मन्त्राद्यौहापरार्केशौनकः अनग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्ववत्त-
थास्त्विति आश्वलायनः यदि पाणिष्वाचांते ष्वन्यदन्नमनुदिशत्यन्नमन्ने सृष्टं दत्तमक्षय्यमिति पाणौ हुतं पात्रे निधाय वि-
प्रेरान्नस्य भोजनार्थमन्ने परिविष्टे हुतशेषं पात्रेषु दद्यादित्यर्थः सृष्टं प्रभूतम् नैमित्तिकं चेदमान्वमनं न हुतभक्षणनि-
मित्तम् अन्नं पाणितले दत्तं पूर्वमश्नंत्यबुद्धयः पितरस्तेन तृप्यंति शेषान्नं न लभंति ते यच्च पाणितले दत्तं यच्चान्यदुप-
कल्पितम् एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते इति बह्वृचपरिशिष्टात् हेमाद्रावप्याचमने हेत्वर्थवादउक्तः पाण्या-
स्यो हि द्विजः स्मृत इति भाष्ये त्वाचांतेषु भक्षितेषु च मुभक्षणे भक्षणोत्तरं चनाचमनम् अग्निसाम्यात् पूर्वो निषेधस्तु
सपिंडीकरणे ज्ञेयः ददातिचोदितत्वात् न तत्र जुहोतिचोदितत्वादित्युक्तं न त्वेतद्धृद्संमतम् यत्तु बौधायनेन तस्मिंस्तु
प्राशिते दद्याद्यदन्नं प्रकृतं भवेदिति भक्षणमुक्तं तत्त्वच्छाखीयानामेवेति हेमाद्रिः तत्रैव यमः पित्र्यपाणिहुताच्छेषं पितृ

पात्रेषुनिक्षिपेत् अग्नौकरणशेषंतुनदद्याद्वैश्वदेविके एतदग्निहोमेपिसमं तथाकर्कस्तु सूत्रेहुतशेषंदत्वेत्यविशेषात्सर्ववि
प्रेषुदद्यादित्याह तत्रैवचन्द्रवसिष्ठः पित्र्यविप्रकरेहुत्वाशेषंपात्रेषुनिक्षिपेत् पिंडेभ्यःशेषयेत्किंचिन्नदद्याद्वैश्वदेविके
थापस्तंबानांसूत्रे उद्ध्रियतामग्नौचक्रियतामित्यामंत्रयते काममुद्ध्रियतांकाममग्नौचक्रियतामित्यतिसृष्टउद्धरेज्जुहुया
च्च नष्टाग्निविधुरादेर्विशेषोबृहन्नारदीये नष्टाग्निर्दूरभार्यश्चपार्वणेसमुपस्थिते संधायाग्निंततोहोमंकृत्वातंविसृजे
त्पुनः अयाश्चेतिनत्कालेग्निंसंधायहुत्वात्यजेदित्यर्थः एतदापस्तंबानामेव पाणिहोमस्तुछंदोगादीनाम् विश्वरूपः
शेपि साग्निरौपासनेनाग्निरग्नौकुर्वीतलौकिके पाणौहोमंप्रशंसंतिनत्वापस्तंबशाखिनाम् स्नातकाविधुरायस्तु ये
दिवाब्रह्मचारिणः अग्नौकरणहोमंतुकुर्युस्तेलौकिकेनले अयाश्चाग्नेमनोज्योतिरुद्धृत्यम्योरहनीतिहुनेत् ततोज्ञानो
ग्नींधनाद्याज्यभागांतेयन्मेमातेत्यादीन्जुहुयात् तत्रसप्तान्नाहुतयः षडाज्यस्येतित्रयोदश व्यस्ययोवा यथा यन्मेमा
ताप्रलुलोभतन्मेरेतःपितावृंक्तांयाभिसर्पतीतिद्वाभ्यां ममुष्मैस्वाहेतिपितुर्नाम्नाद्वौहोमौ यन्मेपितामहीप्रलुलोभतन्मे
रेतःपितामहोवृंक्तां अंतर्दधेइतितन्नाम्नापितामहायद्वौ यन्मेप्रपितामहीतन्मेरेतःप्रपितामहोवृंक्तांअंतर्दधेऋतुभिरि
तितन्नाम्नाप्रपितामहायद्वौ मातामहेषूहः यन्मेमातामहीतन्मेमातामहोवृंक्तां अन्यमातामहाइद्धमित्यादौ यन्मे
मातुः पितामहीप्रलु॰ रेतोमातुःपितामहोवृंक्तां अन्यंमातुःपितामहाइद्धं यन्मेमातुःप्रपितामहीप्रलुलोभ॰ रेतोमातुः
प्रपितामहोवृंक्तां अन्यंमातुःप्रपितामहाइद्धं सर्वत्राप्यमुष्याइत्यत्रङेंतंतन्नामयोज्यम् तदुक्तंसंग्रहे योज्यःपित्रा-
दिशब्दानांस्थानेमातामहादिकः अन्नहोमेतथास्पर्शेजलपिंडादिदानके यन्मेमातामहीत्यादितत्रोदाहरणंभवे

ततोयेचेहेत्येकान्ताहुतिः ततःस्वाहापित्र्येइत्याद्येनाज्यंहुत्वास्विष्टकृतंहुत्वासर्वभक्ष्यंकिंचिदादायोदगुप्यांभस्मापोह्य
तत्रतूष्णींस्वाहाकारेणजुहोति परिषेचनांतंस्थालीपाकवत् अयमग्नौकरणहोमोमासिकश्राद्धएव तच्चस्मार्ताग्न्यभा
वेनकार्यमितिकेचित्. कार्यमेवेतिबहवः अतएवसर्वाधानिनोहोमवर्जंमासिश्राद्धमुक्तंसंस्कारदर्शनभाष्ये महालयेत
द्वदित्येके प्रकरणांतरत्वात् कर्मांतरत्वेनस्मार्तपार्वणवत्कार्यमितिसंस्कारत्न आब्दिकादिषुतुस्मार्तपार्वणविधिरे
व एवंमातृवार्षिकादिषु मासिश्राद्धविकृतावष्टकायांमातृश्राद्धेवैकृतहोमेनप्राकृतहोमबाधः अन्वष्टकास्तुमातृ-
श्राद्धंनेतिभाष्ये तत्रापिश्राद्धांतरवत् क्रियमाणेतुयन्मेमातेत्यादौगुणत्वेपिमातृप्राधान्यंविवक्षितम् मासिश्राद्धे-
नकुर्यादाख्यातइतिसूत्रात् आग्नेय्येवमनोताकार्येतिवचनादग्निशब्दस्यवैकृतदेवताभिधायित्वम् ते-
नामुष्याइत्यत्रामुकशर्मभ्यांपितृभ्यामित्यादूहःकार्यः तच्चमासिश्राद्धंजीवत्पित्रादिनाप्यकृतपित्रादिनाचकार्य
मित्युक्तंसंस्कारदर्शनभाष्ये तत्प्रकारस्तुप्रयोगे मातापित्रोर्हुत्वात्रैवूहः तस्माद्यन्नोहेदितिनिषेधात् प्रकृतावूह्य
भावाच्चपत्नीसन्नस्थोनिवत् उपदेशमनेनूहः यथायन्मेमातरोप्रलुलोभचरत्यननुव्रते इत्याद्यन्मासिनूह्व
त्रमासिश्राद्धनिर्णयेज्ञेयमितिदिक् अन्यत्प्राग्वत् अथपरिवेषणम् तच्चोपवीत्येवाज्येनदेवपूर्वमामासकपक्वमितिपा
त्राण्युपस्तीर्यकुर्यादितिहेमाद्रिः भारतेदानधर्मेपि आज्याहुतिंविनानैवयत्किंचित्परिविष्यते दुराचारैश्चयद्भुक्तंतं-
भागंरक्षसोविदुः तत्रैवशौनकः विधिनादेवपूर्वंतुपरिवेषणमाचरेत् तत्रैवधर्मः फलस्थानेततापोक्तास्वयंचपरि
वेषणे तत्रैववायुभविष्ययोः भार्ययाश्राद्धकालेतुप्रशस्तंपरिवेषणम् ब्रह्मांडे नायचित्रेणनैकेनहस्तेननचिनाकुशैः

नायसेनायसेनैवश्राद्धेतुपरिवेषयेत् वसिष्ठः आयसेनतुपात्रेणयदन्नंसंप्रदीयते भोक्ताविष्ठासमंभुंक्तेदाताचनरकं
व्रजेत् पैठीनसिः सीसकायसरीतीपात्राण्ययज्ञियानि तत्रैवहारीतः सौवर्णराजताभ्यांचखड्गेनोदुंबरेणवा द-
मक्षय्यतांयातिफल्गुपात्रेणवापुनः कार्ष्णाजिनिः दर्व्यादेयंघृतंचान्नंसमस्तव्यंजनानिच उदकंनैवपक्वान्नंनोद-
र्व्योत्तुकदाचन यमः पंक्त्यांविषमदानंस्यान्नकृतिर्नैवविद्यते पृथ्वीचंद्रोदयेपराशरः सर्वदाचतिलाग्राह्याः पि-
तृरूप्येविशेषतः भोज्यपात्रेतिलान्दद्यान्निराशाःपितरोगताः चंद्रिकायांवृद्धशातातपः हस्तदत्तास्तुयेस्नेहालव-
णव्यंजनादयः पितृणांनोपतिष्ठंतिभोक्ताभुंजीतकिल्बिषम् घृतपात्रेविशेषोग्रंथांतरे ओदनेपरमान्नेचपात्रभासा
द्यमुग्थथीः घृतेनपूरयेत्साग्नंतद्धृतंरुधिरंभवेत् घृतादिपात्राणिभूमौस्थापयेन्नभोजनपात्रइतिमदनरत्ने संग्रहे
स्तदत्तंतुनाश्नीयाल्लवणंव्यंजनादिकम् अपक्वेतैलपक्वंचहस्तेनैवप्रदीयते पात्रालंभनमुक्तंचतुर्विंशतिमते
नंदक्षिणंसव्यंनान्नंपात्राण्युपस्पृशेत् याज्ञवल्क्यः दत्त्वान्नंपृथिवीपात्रमितिपात्राभिमंत्रणम् कृत्वेदंविष्णुरित्य
न्नेद्विजांगुष्ठंनिवेशयेत् बौधायनः विप्रांगुष्ठेनानखेनानुदिशातिपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽमृते
मृतंजुहोमि ब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमामेषांक्षेष्ठाअमुत्रामुष्मिंल्लोकेइति अ
यजुहोम्यग्नेस्वाहाशब्दःकनीयसूक्तेउक्तः मैत्रैःस्वधाशब्दः अंगुष्ठेविशेषमाह हेमाद्रौधौम्यः परिस्पृशनचां-
गुष्ठंद्विजस्यानेनिवेशयेत् तथा उत्तानेनतुहस्तेनद्विजांगुष्ठनिवेशनम् यःकरोतिद्विजोमोहात्तद्वैरक्षांसिभुंज
ते तत्रैवयमः विष्णोर्हव्यंचकव्यंचब्रूयाद्रक्षस्वचक्रमात् दैवेपित्र्येचेत्सर्वः तत्रैवात्रिः संबंधनामगोत्राणिदद्म

न्तंतः स्वधा पितॄऋमादुदीर्येतिस्वसंत्तांविनिवर्तयेत् हस्तेनामुकमन्नाद्यमिदमन्नमुदीरयेत् अत्रान्नदानेचतुर्थ्यास्था
दित्यादिविशेषाः पूर्वमुक्ताः अत्रपूर्वोक्तमंत्रांतेपुरूरवार्द्रवसंज्ञकाविश्वेदेवादेवताइदमन्नंसपरिकरंहव्यंअयंब्राह्म
णस्त्वाहवनीयार्थेदत्तंदास्यमानंचातृप्तेः गयेयंभूःगदाधरोभोक्ता इदमन्नंब्रह्मसौवर्णपात्रस्थमन्नमक्षय्यवटच्छा
यास्थममुकेभ्योविश्वेभ्योदेवेभ्य इदमन्नममृतरूपंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेः स्वाहानमोनममेति वह्वृचप-
रिशिष्टहेमाद्र्याद्युक्तमतः प्रयोगः एवंपित्र्येअमुकगोत्रवसुरूपादितत्तन्नामज्ञेयम् ततोयेदेवासइतिदेवेयेचेह
पितरइतिपित्र्येकेचिज्जपंति ततोऽच्छिद्रंवाचयेत् तत्रैवप्रचेताः आपोशानकरेविप्रेसंकल्प्याच्छिद्रभाषणात् नि
राशाःपितरोयांतिदेवैःसहनसंशयः पारस्करः संकल्प्यपितृदेवेभ्यः सावित्रीमधुमज्जपः श्राद्धंनिवेद्यापोशानं
जुपभैपोषभोजनम् निवेद्येतिब्रह्मार्पणंकुर्यादित्यर्थः अतएवबृहन्नारदीये अन्नत्यागमुक्त्वोक्तम् दत्तंहविश्वतत्क
र्मविष्णवेवैसमर्पयेदिति यत्तु कात्यरत्नेकार्ष्णाजिनिः अपसव्येनकर्तव्यंपितृकृत्यमशेषतः अन्नदानाद्दतेसर्व
मेवंमातामहेष्वपीति तदप्येतत्परम् तच्चब्रह्मार्पणंब्रह्महविः हरिर्दाता चतुर्भिश्चेतिकेचित्सदंति धर्मप्रदीपे
ततोन्नंपितृदेवेभ्यः संकल्प्यचयथाविधि दत्तंयद्दास्यमानंच आतृप्तेर्नममेतिच तथा श्राद्धीयान्नस्यसंकल्पो-
भूमावेवप्रदीयते हस्तेषुदीयमानंतुपितॄणांनोपतिष्ठते वैश्वदेवस्यवामेतुपितृपात्रस्यदक्षिणे संकल्पोदकदा
नस्यान्नित्यश्राद्धेयथारुचि प्रचेताः आपोशानप्रदायाथसावित्रींनिर्जपेदथ मधुवाताइतितृचंमध्वित्येत
त्त्रिकंतथा मिताक्षरायांपारस्करः संकल्प्यपितृदेवेभ्यः सावित्रीमधुमज्जपः श्राद्धंनिवेद्यापोशानंजुपप्रेषो-

गोथभोजनम् गायत्रींत्रिःसकृद्वापिजपेद्व्याहृतिपूर्विकाम् मधुवाताइतिनृचंमध्वित्येतत्त्रिकंतथा याज्ञवल्क्यः सव्या
हृतिकांगायत्रींमधुवाताइतिनृचम् जप्त्वायथासुखंवाच्यंभुंजीरंस्तेपिवाग्यताः यथासुखंजुषध्वमितिवाच्यम्
अत्रिः असंकल्पितमन्नाद्यंपाणिभ्यांयद्युपस्पृशेत् अभोज्यंतद्भवेदन्नंपितृणांनोपतिष्ठते अन्नंदत्तंनगृण्हीया-
द्यावत्तोयंनसंपिबेत् आपोशानेविशेषमाहस्मृतिसमुच्चये आपोशानंवामभागेसुरापानसमंभवेत् दक्षभागेतु
यः कुर्यात्सोमपानसमंभवेत् तथा पुनरापूर्यापोशानंसुरापानसमंभवेत् हेमाद्रावत्रिः दत्तेवाप्यथवादत्ते-
भूमौयोनिक्षिपेद्बलिम् तदन्नंनिष्फलंयातिनिराशैः पितृभिर्गतैः केचिदाज्येनकुर्वंति तन्न पायसेनतथाज्ये-
नमाषान्नेनतथैवच नकुर्याद्बलिदानंतु ओदनेनप्रकल्पयेदितिस्मृतिसारेनिषेधात् शंखः श्राद्धेनियुक्तान्
भुंजानान्नपृच्छेल्लवणादिषु उच्छिष्टाः पितरोयांति पृच्छतोनात्रसंशयः कात्यायनः अश्नत्सुजपेत्सव्याहृ-
तिकांगायत्रींसकृत्त्रिर्वारक्षोघ्नीः पौरुषंसूक्तमप्रतिरथमिति. हेमाद्रौसौरपुराणे ऐंद्रंचपौरुषंसूक्तंश्रावयेद्ब्राह्मणां
स्तनः मात्स्यपाद्मयोः ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणिविविधानिच इंद्रेशसोमसूक्तानिपावमानीश्चशक्तितः मंड-
लंब्राह्मणंतद्वत्प्रातिकारिंस्तथापुनः अभावेसर्वविद्यानांगायत्रीजपमाचरेत् पृथ्वीचंद्रोदयेब्राह्मे वीणांवंशध्वनिं
चाथविप्रेभ्यःसन्निवेदयेत् जपेच्चपौरुषंसूक्तंनाचिकेतत्रयंतथा त्रिमधुत्रिसुपर्णंचपावमानीर्यजूंषिच हेमाद्रा
वत्रिः हुंकारेणापियोब्रूयाद्धस्ताद्वापियदेद्गुणान् भूतलाच्चोद्धरेत्पात्रंमुंनेद्धस्तेनवापिबेत् प्रौढपादोबहिःकच्छो
बहिर्जानुकरोपिवा अंगुष्ठेनविनाश्नातिमुखशब्देनवापुनः पीतावशिष्टतोयादिपुनरुद्धृत्यवापिबेत्

स्वादिनाथोत्थुनः स्वादेन्योदकानिफलानिच मुखेनवाधमेदन्नानिश्रीवेद्वाजनेपिबा । इत्थमश्नन्द्विजश्राद्धंहत्वागच्छ
त्यधोगतिम् जाबालिः इदमुष्णांहविष्यंच दद्यादन्नंशनैःशनैः तृप्तधातानपः अपेक्षितंयाचितव्यंश्राद्धार्थमुपक-
ल्पितम् नयाचतेद्विजोमूढः सभवत्पितृघातकः यत्तुयमः श्राद्धेद्विजोनैवदद्यान्नयाचेन्नैवदापयेदितितदसंपादनवस्तु
विषयमितिहेमाद्रिः हारीतः ऊर्ध्वपाणिश्चविहसन्सक्रोधोविस्मयान्वितः भग्नपृष्ठश्चयद्भुंक्तेनतस्मात्नानिर्वपितॄन् प्र
चेताः नस्पृशेद्वामहस्तेनभुंजानोन्नंकदाचन नपादौनशिरोवस्तिनपदाभाजनंस्पृशेत् शंखः श्राद्धपंक्तौतुभुंजानोब्रा
ह्मणोब्राह्मणंस्पृशेत् तदन्नमत्यजन्भुक्त्वागायत्र्यष्टशतंजपेत् उशनाः भोजनंतुननिःशेषंकुर्यात्प्राज्ञःकथंचन अन्य
त्रदध्नःक्षीरात्क्षौद्रात्सक्तुभ्यएवच श्राद्धे नचाश्रुपातयेज्जातुनशुष्कांगिरमीरयेत् नचोद्दीक्षेतभुंजानान्नकुर्वीतम
त्सरम् यमः स्वाध्यायंश्रावयेत्सम्यक्धर्मशास्त्राणिचैवहि प्रचेताः भुंजानेषुतुविप्रेषुऋग्यजुःसामलक्षणम् जपे
दभिमुखोभूत्वापित्र्यंचैवविशेषतः यजूंषिचैवरुद्रंचरक्षोघ्नंचैवच राक्षोघ्नाः कृणुष्वरक्षोहणमित्याद्याः न
चैवनिगमः भुंजत्सुजपेत्सोमपानीरुदीरतामध्वन्नवतीश्च अन्नपत्यःपितृसूक्तंपंक्तिमिति एषांचेंद्रोद्ययेभरद्वाजः
भुंजानेषुतुविप्रेषुप्रमादात्तलपतेगुदम् पादकृच्छ्रंततःकृत्वाअन्यंविप्रंनियोजयेत् क्षणपाद्यादिदत्त्वेत्यर्थः विप्रवम-
नेतत्रैवदक्षः निमंत्रितस्तुयःश्राद्धेभोजनेसुखनिःसृते तदैवहोमंकुर्वीतस्नात्वोविप्रःसमाहितः प्राणादिपंचभिर्मं
त्रैर्यावद्द्वात्रिंशसंख्यया ब्राह्मणस्ततःकृत्वाशनमाशनमाचरेत् ऋग्विधानेतु इंद्रायसोमसूक्तेनश्राद्धविप्रोयदाव
मेत् अभ्यादिभिर्भोजनेनश्राद्धंसंपूर्णमेवहीत्युक्तम् अभ्यादिभिरितिलौकिकाग्निस्थापनचरुनिर्वापाज्यभागांतेभा

भोजनेनपुनःश्राद्धेन नेनहोमः
ग्गोनपूर्वमग्नौपितॄनावाह्यसंपूज्यान्नत्यागंकृत्वाप्राणादिभिर्द्वात्रिंशदाहुतीर्हुनेदित्यर्थः
पुनःश्राद्धंचेतिपक्षद्वयमुक्तं सूक्तजपस्तूभयानुगतः स्मृतिसंग्रहे प्राधान्यंपिंडदानस्यभोजनस्यतदंगता अतोस्तु
क्तिक्रियाहानौश्राद्धावृत्तिंनमन्वते पिंडदानोत्तरंवांतौहोमएवनावृत्तिः पिंडदानात्प्राग्वांतौनद्दिनेउपवासंकृत्वापरे
त्तःपुनःश्राद्धंकार्यमित्यर्थः तत्रैव श्राद्धपंक्तौतुभुंजानोब्राह्मणोवमतेयदि लौकिकाग्नौप्रतिष्ठाप्यअर्चयेच्चहुताशन
म् तथा एकएवयदाविप्रोभोजनेछर्दितोयदि तदेवाग्निंसमाधायहोमंकुर्याद्यथाविधि द्वितीयपक्षेकृत्स्नविधाने भो
जनोपक्रमादूर्ध्वंप्रक्रमात्पूर्वंतोयदि श्राद्धविघ्नेपुनःकार्यंजपहोमोनतृप्तिदौ स्मृतिसंग्रहे अकृतेपिंडदानेतुभुंजा
नोब्राह्मणोवमेत् पुनःपाकात्तुकर्तव्यंपिंडदानंयथाविधि पिंडदानंश्राद्धम् अकृतेपिंडदानेतुपितायदिवमेत्तदा पु
नःपाकंप्रकुर्वीतश्राद्धंकुर्याद्यथाविधीतितत्रैवोक्तेः तथा पित्रर्थानांत्रयाणांचपिताचवमनेयदि तद्दिनेचोपवासः
स्यात्पुनःश्राद्धंपरेहनि तथा वमनेवाविरेकेवातद्दिनंपरिवर्जयेत् एषुवचनेषुमूलंचिंत्यम् इदंमासिकाब्दिकविषय
म् दर्शादौतुवांतावामेनतदेवकार्यम् श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितम् अमावास्यादिनियतंमाससंवत्सरा
दृतइतिमरीचिस्मृतेः श्राद्धेपिंडदानमेवप्रधानमितिकर्काचार्याः तन्मतेदक्षोक्तोहोमएवनावृत्तिः विप्रभोजनमिति
मेधातिथिः भोजनपिंडदानाग्नौकरणानीतिकपर्दिधूर्तस्वामिहेमाद्यादयः श्राद्धस्यहोमदानोभयरूपत्वात्संपूर्ण
दानाभावाद्भोजनस्यांगत्वेपिसोमवमतेइतिसुक्तम् तन्मतेपूर्वोक्तोनिर्णयः अन्नत्यागमात्रंप्रधानम् भोजनंतुप्रतिपत्ति
रूपमंगम् अतोवांतौनद्दानेपिनावृत्तिरितिगौडमैथिलादयः नैमित्तिकप्रधानमितियुक्तंप्रतीमः अत्रेदंतत्त्वम् वैश्वदे

त्रिकस्थवपनेहोमएवनाग्निः अंगत्वात् तच्चसार्थत्वादिपिश्राद्धकृत्दक्षाविसादिस्मृतेश्च तच्चजयान्तुहुयादि
तिवत् पितामहादेरपितथा पितेत्युक्तेरितिकेचित् तस्यापिप्रधानत्वात्पितृवदितितुयुक्तम् सपिंडीकरणादौवार्षि
कवत् सपिंडीकरणादीनिथानिश्राद्धानिषोडश तत्रपिंडप्रधानत्वंशेषतत्त्वविनिवर्तकमितिस्मृतेः महैकोद्दिष्टादौतु भ
यप्राधान्यादावृत्तिरेव एकएवद्विजोभोज्यःपिंडोप्येकोविधीयत इतिस्मृतेः वृद्धिसंकल्पनित्यश्राद्धादौतुभोजनप्राधा
न्याद्धोतावावृत्तिरेव वृद्धिश्राद्धेविकल्पेनपिंडदानंबुधैःस्मृतम् नित्यश्राद्धमदैवंस्यात्पिंडदानविवर्जितमितिस्मृतेः भुक्ति
क्रियायाःप्राधान्यंश्राद्धेसंकल्पसंज्ञके तत्रैवपितृविप्रस्यतृप्यातेपुनःक्रियेतिसंग्रहोक्तेश्च मघादावप्येवम् सौधर्मरहाल
यादौदर्शवदित्यावाक्योघालोच्चनेनप्रतीमः आश्वलायनः तृप्तान्ज्ञात्वामधुमतीःश्रावयेदक्षन्नमीमदंतेतिचसंपन्न-
स्वरायपदन्नमुपभुक्तम् ततस्थालीपाकेनसहपिंडार्थमुद्धृत्यशेषंनिवेदयेत् अभिमतेनुमतेचेति अन्नगायत्र्यमधि
तिचिकज्जपोपिज्ञेयः तृप्तान्बुध्वान्नमादायसतिलंपूर्ववज्जपेदितिप्रचेतसोक्तेः व्यासः तृप्ताःस्थेतितुपृष्टास्तेब्रूयुःस्तृ
प्ताःस्मइत्यथ अभिमतेविप्रैःस्वीकर्तुमिष्टे शौनकोपि अन्नशेषैश्चकिंकार्यमितिपृच्छेनतांस्ततः तैरुक्तःसहभोक्तव्य
मितिमत्पृष्टिपूर्वकं मदपः सकलंतस्मैस्वीकुर्युर्वायथारुचि श्राद्धविशेषेप्रश्नभेदमाह हेमाद्रौविष्णुः पित्र्येस्वदित-
मितिगोष्ठ्यांसुश्रुतंसंपन्नमित्यभ्युदयेदैवेरोचतइतिआयुष्यमितिस्वैरिष्ठ सैरभिच्छाभ्याह याज्ञवल्क्यः अन्नमादाय
तृप्ताःस्थशेषंचैवानुमान्यच तदन्नंप्रकिरेद्भूमौदद्याचापःसकृत्सकृत् इदंचात्राविकिरदानमन्यथाप्विनासाश्वला
यनानांतुपिंडांतएवसूत्रकृतोक्तम् कात्यायनस्तुविकिरोत्तरंगायत्र्यादिजपंतत्प्रिप्रश्नंचाह हेमाद्रौदेवलः ततःसर्वे

गोनपूर्वंगनोपितृनामात्यसंपूज्यान्नत्यागंकृत्वा प्राणादिभिर्द्वात्रिंशदाहुतीर्हुनेदित्यर्थः भोजनेनपुनःश्राद्धेन तेनहोमः
पुनःश्राद्धमितिपक्षद्वयमुक्तं सूक्तजपस्तूभयानुगतः स्मृतिसंग्रहे प्राधान्यंपिंडदानस्यभोजनस्यतदंगता अतोमु
क्तिक्रियाहानौ श्राद्धावृत्तिंनमन्वते पिंडदानोत्तरंगतौ होमएवनावृत्तिः पिंडदानात्प्राग्वांतौ नद्दिनेउपवासंकृत्वापरे
द्युःपुनःश्राद्धंकार्यमित्यर्थः तत्रैव श्राद्धपंक्तौतुभुंजानो ब्राह्मणोवमतेयदि लौकिकाग्नौ प्रतिष्ठाप्य अर्चयेच्चहुताशन
म् तथा एकएवयदाविप्रोभोजनेछर्दितोयदि तदेवाग्निंसमाधायहोमंकुर्याद्यथाविधि द्वितीयपक्षेकल्पविधाने भो
जनोपक्रमादूर्ध्वंभुक्तमात्रेवृतोयदि श्राद्धविघ्नःपुनःकार्यंजपहोमौनतृप्तिदौ स्मृतिसंग्रहे अकृतेपिंडदानेतुभुंजा
नोब्राह्मणोवमेत् पुनःपाकात्तुकर्तव्यंपिंडदानंयथाविधि पिंडदानंश्राद्धम् अकृतेपिंडदानेतुपितायदिवमेत्तदा पु
नःपाकंप्रकुर्वीतश्राद्धंकुर्याद्यथाविधीतितत्रैवोक्तेः तथा पित्रर्थानांत्रयाणांचपितान्चवमतेयदि तद्दिनेचोपवासः
स्यात्पुनःश्राद्धंपरेहनि तथा वमनेवाविरेकेवातद्दिनंपरिवर्जयेत् एष्ववचनेषुमूलंचिंत्यम् इदंमासिकाब्दिकविषय
म् दर्शादौतुगतांतावामेनतदेवकार्यम् श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितम् अमावास्यादिनियतंमाससंवत्सरा
दृत इतिमरीचिस्मृतेः श्राद्धेपिंडदानमेवप्रधानमितिकर्काचार्याः तन्मतेदक्षोक्तोहोमएवनावृत्तिः विप्रभोजनमा
मेधातिथिः भोजनपिंडदानाग्नौकरणानीतिकपर्दिधूर्तस्वामिहेमाद्र्यादयः श्राद्धस्यहोमदानोभयरूपत्वात्संपूर्ण
दानाभावाद्भोजनस्यांगत्वेपिसोमयमतेइतियुक्तम् तन्मतेपूर्वोक्तोनिर्णयः अन्नत्यागमात्रंप्रधानम् भोजनंतुप्रतिपत्ति
रूपमंगम् अतोवांतौनद्धानेपिनावृत्तिरितिगौडमैथिलादयः नैमित्तिकविधानमितियुक्तंप्रतीमः अत्रेदंतत्त्वम् वैश्वदे

विकिरस्य वमने होमएवनाग्निः अंगत्वात् तच्च रक्षार्थत्वादिति श्राद्धे कृतेदक्षाविष्यादिस्मृतेश्च तत्र जपान्तु हुयादि
निचत् पितामहादेरपि तथा पितेत्युक्तेरिति केचित् तस्यापि प्रधानत्वात् पित्र्यवदिति तु युक्तम् सपिंडीकरणादौ वार्षि
कवत् सपिंडीकरणादीनि यानि श्राद्धानि षोडश तत्र पिंडप्रधानत्वं येनत्वाभिनिवर्तकामिति स्मृतेः मृतैकोद्दिष्टादौ तु भ
यप्राधान्याद्वा तृप्तिरेव एकएवद्विजोभोज्यः पिंडोप्येको विधीयत इति स्मृतेः वृद्धिसंकल्पनित्यश्राद्धादौ तु भोजनप्राधा
न्याद्भ्रांता वा तृप्तिरेव वृद्धिश्राद्धे विकल्पेन पिंडदानं बुधैः स्मृतम् नित्यश्राद्धमदैवं स्यात्पिंडदानविवर्जितमिति स्मृतेः भुक्ति
क्रियायाः प्राधान्यं श्राद्धे संकल्पसंज्ञके तत्रैव पितृविप्रस्य तृप्या तेषु नः क्रियेति संग्रहोक्तेश्च मघादावप्येवम् तीर्थमहाल
यादौ दर्शवदित्याशार्कोद्योतेनेन प्रतीमः आश्वलायनः तृप्तान्ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदंतेति च संपन्नं-
स्वस्तायध्वदन्नमुपभुक्तम् ततस्थालीपाकेनसह पिंडार्थमुद्धृत्य शेषं निवेदयेत् अभिमतेऽनुमतेचेति अत्र गायत्र्यादि
निधिकजपोपि ज्ञेयः तृप्तान्बुध्वान्नमादाय सतिलं पूर्ववज्जपेदिति मन्त्रे तत्सोक्तेः व्यासः तृप्ताः स्थेति तु पृष्टास्ते ब्रूयुः स्तृ
ताः स्मइत्यथ अभिमतेविप्रैः स्वीकर्तुमिष्टे शौनकोपि अन्नशेषैश्च किं कार्यमिति पृच्छेत्ततस्ततः तैरिष्टैः सह भोक्तव्य
मिति भक्तिपूर्वकं प्रदद्यः सकलं तस्मै स्वीकुर्युर्वा यथारुचि श्राद्धविशेषेप्रश्नभेदमाह हेमाद्रौ विष्णुः पित्र्ये स्वदित-
मिति गोष्ठ्यां सुश्रुतं संपन्नमित्यभ्युदये दैवे रोचत इति आयुष्यमिति स्वैरिषु स्वैरमिच्छाश्राद्धे याज्ञवल्क्यः अन्नमादाय
तृप्ताःस्थ शेषं चैवानुमान्य च तदन्नं विकिरेद्भूमौ दद्यादापः सकृत्सकृत् इदं चाचान्तविकिरदानमन्यशाखिनाम् आश्वला
यनानां तु पिंडांत एवसूत्रकृतोक्तम् कात्यायनस्तु विकिरोत्तरं गायत्र्यादिजपं तृप्तिप्रश्नं चाह हेमाद्रौ देवलः ततः सर्व

शनंपात्रेगृहीत्वाविधिवद्बुधः तेषामुच्छेषणस्थानेविकिरंभुविनिक्षिपेत् माधवीये प्रचेताः सार्ववर्णिकमादाययेअग्नी
न्भुविक्षिपेत् सच्चकुशेकार्यः दर्भेषुविकिरश्चयइत्युक्तेः मंत्रःकातीयः अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेम
म भूमौदत्तेनतृप्यंतुतृप्तायांतुपरांगतिमिति अन्येतु असोमपाश्चयेदेवायज्ञभागविवर्जिताः तेषामन्नंप्रदास्यामि
विकिरंवैश्वदेविकमिति हेमाद्रौगोभिलोक्तेनदेवे असंस्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः दास्यामितेभ्योवि-
किरमन्नंताभ्यश्चपैतृके भित्यग्निपुराणोक्तेनपित्र्येन्नंवि कीर्ययेअग्निदग्धाइत्युच्छिष्टपिंडंकुशोपरिपृथक्दद्या
दित्याहुः पृथ्वीचंद्रोदयेप्येवम् ब्राह्मे ततःप्रक्षाल्यहस्तौचद्विराचम्यहरिंस्मरेत् माधवीयेगौतमः विकिरमुच्छि-
ष्टःप्रतिपादयेत् हेमाद्रौव्यासः उच्छिष्टेरेवविकिरंसदैवंप्रतिपादयेत् भृगुः पिंडवत्प्रतिपत्तिःस्याद्धिकिरस्येतितोल
लः श्राद्धकाशिकायां यजमानस्यदासादीनुद्दिश्यद्विजसत्तम तस्मादन्नंत्यजेद्भूमौवामभागेषुपैतृके मनुः उ-
च्छेषणंभूमिगतमजिह्मस्याशठस्यच दासवर्गस्यतात्पित्र्येभागधेयंप्रचक्षते विष्णुः उदङ्मुखेष्वाचमनमा-
दौदद्याततः प्राङ्मुखेषु पित्र्येदैवेचेत्यर्थः शातातपः विश्वेदेवनिविष्टानांचरमंहस्तधावनम् हेमाद्रौवारा-
हे हस्तंप्रक्षाल्ययश्चापःपिबेद्भुक्त्वाद्विजःसदा तदन्नमसुरैर्भुक्तंनिराशाःपितरोगताः मरीचिः हस्तंप्रक्षाल्यगं
डूषंयःपिबेदविचक्षणः आसुरंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते तत्रैवसंग्रहे पवित्रग्रंथिमुत्सृज्यमंडलेभुवि
निक्षिपेत् हस्तादीन्क्षालयेद्विद्वान्छत्वादौतुकुत्रचित् व्यासः तांबूलोद्गिरणंचैवगंडूषोद्गिरणंतथा कांस्यपा-
त्रेतथाताम्रेनकुर्वीतकदाचन उष्णोदकेधान्यचूर्णैःकरौप्रभूमिशोधयेत् अथपिंडदानम् तच्चार्चनोत्तरंअ-

करणोत्तरं भोजनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरं चेति हेमाद्रौ स्मृतिषु पक्षा उक्ताः तेषां शाखाभेदेन व्यवस्था मे-
तथाद्येषु पूर्वमन्येषु भोजनोत्तरमिति चंद्रिकामाधवौ सर्वत्र भोजनोत्तरमिति बह्वृचः आश्वलायनः भुक्तवत्स्वनाचांतेषु पिंडा
न्निदध्यादाचांतेष्वेके भुक्तवत्स्विति पूर्वनिपेधार्थं साग्निरग्निप्रणीतसमीपेऽनग्निर्द्विजसमीपे हेमाद्रौ जातूकर्ण्यः व्याममात्रं स
मुत्सृज्य पिंडांस्तत्र प्रदापयेत् प्रसारितभुजांतरं व्यामः संकृदेतु व्यासः अरत्निमात्रमुत्सृज्येति यत्तु तत्रैव सिकताभिर्मृदा
वापि वेदीं दक्षिणनिम्नगामिति तदन्यशाखिपरम् देवलः ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य च चंद्रिकायाम् पिंडनिर्वपणं कार्यं कुशाभ्या
वेविचक्षणैः काशेषु राजदूर्वासु पवित्रे परमे हिते आश्वलायनः स्फ्येन रेखामुल्लिखेत् अपहता असुरा रक्षांसि वेदिषद इति तामभ-
भ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य प्राचीनावीती लेखायां त्रिरुदकेनोपनयेच्छुंधंतां पितरः शुंधंतां पितामहाः शुंधंतां प्रपितामहा इति
तस्यां पिंडान्निपृणीयात् प्राचीनपाणिः पित्रे पितामहाय प्रपितामहायेतत्तेऽसौ ये च त्वामत्रान्विति हेमाद्रौ पारस्करः कराभ्यामुल्लि
खेत्स्फ्येन कुशैर्वापि महीं द्विजः बहूनां वा करेणैव लेखा चाग्नेय्यभिमुखेति वृत्तिः दक्षिणा प्राची वोदङ्मुखलेखेत्यापस्तंबोक्तेश्च देवलः
आवाह्य पितॄन्दर्भाग्रैस्तेषां स्थानानि कल्पयेत् तेष्वासीनेषु पात्रेण प्रयच्छेत्सतिलोदकं पराचीनेन निम्नापितृतीर्थेन वापवीये म
धुसर्पिस्तिलयुतांस्त्रीन्पिंडान्निर्वपेद्बुधः त्रिस्थलासेतौ तिलमन्नं च पानीयं धूपं दीपं पयस्तथा मधुसर्पिः खंडयुक्तं पिंडमष्टांग
मुच्यते याज्ञवल्क्यः सर्वमन्नमुपादाय सतिलं दक्षिणामुखः उच्छिष्टसन्निधौ पिंडान्दद्याद्वै पितृयज्ञवत् केचित्पिंडेषु मा-
षान्वर्जयंति माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चैवाग्निपिंडयोः ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिंडयोरिति स्मृतिसारात् माषान्स
र्वत्र वैदर्यात्पिंडेभ्यो न विवर्जयेदिति स्मृतेश्च अत्र मूलं चिंत्यं हेमाद्रावपि सर्वशब्दस्य प्रकृतार्थत्वात् सर्वान्नग्रहणमुक्तम् अ

शनंशात्रेगृहीत्वाविधिवंधुधः तेषामुच्छेषणस्थानेविकिरंभुविनिक्षिपेत् माधवीयेप्रचेताः सार्ववर्णिकमादाययेअग्नी
त्भुविक्षिपेत् सचकुशेकार्यः दर्भेषुविकिरश्चयइत्युक्तेः मंत्रःकातीयः अग्निदग्धाश्चयेजीवा येप्यदग्धाःकुलेम
म भूमौदत्तेनतृप्यंतुतृप्तायांतुपरांगतिमिति अन्येतु असोमपाश्चयेदेवायज्ञभागविवर्जिताः तेषामन्नंप्रदास्यामि
विकिरंवैश्वदेविकमितिहेमाद्रौगोभिलोक्तेनदेवे असंस्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः दास्यामितेभ्योवि-
किरमन्नंताभ्यश्चपैतृकमित्यग्निपुराणोक्तेनपित्र्येन्नंविकीर्य येअग्निदग्धाइत्युच्छिष्टपिंडंकुशोपरिपृथक्दद्या
दित्याहुः पृथ्वीचंद्रोदयेप्येवम् श्राद्धे ततःप्रक्षाल्यहस्तौचद्विराचम्यहरिंस्मरेत् माधवीयेगौतमः विकिरमुच्छि-
ष्टेःप्रतिपादयेत् हेमाद्रौव्यासः उच्छिष्टेरेवविकिरंसदैवंप्रतिपादयेत् भृगुः पिंडवत्प्रतिपत्तिःस्याद्विकिरस्येतितोल्
लः श्राद्धकाशिकायां यजमानस्यदासादीनुद्दिश्यद्विजसत्तम तस्मादन्नंत्यजेद्भूमौवामभागेषुपैतृके मनुः उ-
च्छेषणंभूमिगतमजिह्मस्याशठस्यच दासवर्गस्यतत्पित्र्येभागधेयंप्रचक्षते विष्णुः उदङ्मुखेष्वाचमनंभा-
रोदद्यात्ततःप्राङ्मुखेषु पित्र्येदेवेचेत्यर्थः शातातपः विश्वेदेवनिविष्टानांचरमंहस्तधावनम् हेमाद्रौगारा-
हे हस्तंप्रक्षाल्ययश्चापःपिबेद्भुक्त्वाद्विजःसदा तदन्नमसुरैर्भुक्तंनिराशाःपितरोगताः मरीचिः हस्तंप्रक्षाल्यगं
डूषंयःपिबेदविचक्षणः आसुरंतद्भवेच्छ्राद्धंपितृणांनोपतिष्ठते तत्रैवसंग्रहे पवित्रग्रंथिमुत्सृज्यमंडलेभुवि
निक्षिपेत् हस्तादीन्क्षालयेद्विद्वान् छरावादौनकुत्रचित् व्यासः तांबूलोद्धिरणंचैवगंडूषोद्धिरणंतथा कांस्यपा-
त्रेतथातानिनकुर्वीतकदाचन उष्णोदकेधान्यचूर्णैःकरौभूमिशोधयेत् अथपिंडदानम् तच्चार्चनोत्तरंअ-

करणोत्तरं भोजनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरं चेति हेमाद्रौ स्मृतिषु पक्षा उक्ताः तेषां शाखाभेदेन व्यवस्था मे-
तथा ह्येषु पूर्वमन्येषु भोजनोत्तरमिति चंद्रिकामाधवौ सर्वत्र भोजनोत्तरमिति बह्वृचः आश्वलायनः भुक्तवत्स्वनाचांतेषु पिंडा
न्निदध्यादाचांतेष्वेके भुक्तवत्स्विति पूर्वोनिषेधार्थं साग्निरतिप्रणीतसमीपेनग्निर्द्विजसमीपे हेमाद्रौ जातूकर्ण्यः व्याममात्रं स
मुत्सृज्य पिंडांस्तत्र प्रदापयेत् प्रसारितभुजांतरं व्यामः संकटे तु व्यासः अरत्निमात्रमुत्सृज्येति यत्तु तत्रैव सिकताभिर्मृदा
वापि वेदीं दक्षिणनिम्नगे इति तदन्यशाखिपरम् देवलः ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य च चंद्रिकायाम् पिंडनिर्वपणं कार्यं कुशाभ्या
वेनिनाक्षणैः काष्ठेन राजदूर्वाभिः पवित्रे परमे हिते आश्वलायनः स्फ्येन रेखामुल्लिखेत् अपहता असुरा रक्षांसि वेदिषद इति ताम-
भ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य प्राचीनावीती तिलैरवांनिरुदकेनोपनयेत् शुंधंतां पितरः शुंधंतां पितामहाः शुंधंतां प्रपितामहा इति
तस्यां पिंडान्निपृणीयात्प्राचीनपाणिः पित्रे पितामहाय प्रपितामहायेत्येतेनैषो — ये च त्वामत्रान्विति हेमाद्रौ पारस्करः कराभ्यामुल्लि
खेत्स्फ्येन कुशैर्वापि महीं द्विजः न हस्तानां करेणोपलेखा चाग्नेय्याभिमुखेनेति वृत्तिः दक्षिणाप्राचीं चेद्दिशमुल्लिखेत्स्वापस्तंबोक्तेश्च देवलः
आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पयेत् तेष्वासीनेषु पात्रेण प्रयच्छेत्सलिलोदकं पराचीनेन निम्नापवृत्तार्थेन पाणवीये म
धुसर्पिस्तिलयुतांस्त्रीन्पिंडान्निर्वपेद्बुधः त्रिस्थलीसेतौ तिलमन्नं च पानीयं धूपं दीपं पयस्तथा मधुसर्पिः खंडयुक्तं पिंडसर्वांग
मुच्यते याज्ञवल्क्यः सर्वमन्नमुपादाय सतिलं दक्षिणामुखः उच्छिष्टसंनिधौ पिंडान्दद्याद्वै पितृयज्ञवत् केचित्पिंडेषु मा-
षान्वर्जयंति माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चैवाग्निपिंडयोः ब्राह्मणेषु यथा मध्ये तथा माषोग्निपिंडयोरिति स्मृतिसारात् माषान्स
र्वत्रैव पिंडेष्वेव विवर्जयेदिति स्मृतेश्च अत्र मूलं चिंत्यं हेमाद्रौ चापि सर्वशब्दस्य प्रकृतार्थत्वात् सर्वान्नग्रहणमुक्तम् अ

न्नशेषमन्नमप्सु प्राप्य सर्वमेकधोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिंडान् दद्यादिति गोभिलसूत्रे सर्वस्मात्प्रकृतादन्नात्पिंडान् प्र-
धुनितान्विना निमित्तशेषनियमात्तदभावे पिंडनिवृत्तिः प्राप्नोतीति मेधातिथ्युक्तावाचस्पतिः तन्न तुषोपवापवत्परप्रयुक्तद्रव्यलेप्य
र्थकर्मत्वाद्गुणानुरोधेन प्रधानत्यागाच्छेषलोपे पि द्रव्यांतरेण कार्यम् आतो नेयं प्रतिपत्तिः किंतु प्रधानमित्युक्तम् प्राक् अन्य
था सपिंडीकरणादौ संयोजनादेः प्रधानस्य लोपापत्तेरितिदिक् अथ पिंडप्रमाणम् हेमाद्रौ अंगिराः कपित्थबिल्वमात्रान्वा
पिंडान्दद्याद्विधानतः कुक्कुटांडप्रमाणान्वामलकैर्बदरैः पृथगिति तत्रैव धूम्रः कपित्थस्य प्रमाणेन पिंडान्दद्यात्समाहितः
तत्समीपे कुशान्दद्यात्पिंडांते तु षडंगुले अंत्येष्टिप्रभृतौ प्रवृत्ते एकोद्दिष्टे सपिंडे तु कपित्थं तु विधीयते नारिकेलप्रमाणं तु
प्रत्यब्दे मासिके तथा तीर्थे दर्शे च संप्राप्ते कुक्कुटांडप्रमाणतः महालये गयाश्राद्धे कुर्यादामलकोपमम् इति स्मृतिः कालिका-
पुराणे प्युक्तम् यत्र स्युर्बहवः पिंडास्तत्र बिल्वफलोपमाः यत्र चैको भवेत्पिंडस्तत्र खर्जूरसन्निभः प्रेतपिंडस्तु दैर्घ्येण द्वादशां
गुल उच्यत इति शाखीये पत्नीपिंडास्तु मृद्वीयान्त्रिवर्गस्य सहायिनी हेमाद्रौ लौगाक्षिः महालये गयायां च प्रेतश्रा
द्धे दशाहिके पिंडशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् शाट्यायनिः असावेतत्त इत्युक्त्वा तदंते च स्वधा नमः असाविति
संबंधरूपगोत्रादिविशिष्टपित्रादिनामसंबुद्ध्यंतमुक्त्वा पुनश्चतुर्थ्यंतं तदंते पिंडं इदमन्नं वा स्वधानमो न ममेति वदे
दिति हेमाद्रिः पित्रादीनामज्ञाने त्वापस्तंबः ये पितरः पृथिवीषदस्तेभ्यः स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिंडं दद्यात्
स्वधा पितृभ्यों तरिक्षसद्भ्य इति द्वितीयं स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयं एवं मातामहेषु मातृषु च बहूचानां तु
कर्माक् कलिकायां स्मृतिः यावद्देवो चरेन्मंत्रं तावत्प्राणान्निरोधयेत् येषां तु गृह्ये दर्शे मातुः श्राद्धं पृथगुक्तम् तेषां पितृभ्य

पश्चिमेमातृभ्यस्तसाश्विमेमातामहीभ्यः पिंडादिदेयमितिसांख्यायनः अस्मिन्पक्षेनसाश्विमेमातामहीभ्योपिदद्यादिति
हेमाद्रिः पूर्वास्तुपितृभ्योदद्यादपरास्तुस्त्रीभ्यइतिसूत्राच्च एवंयत्रतीर्थमहालयादौकेचिदिच्छंतिनारीणांपृथक्श्रा-
द्धंमहर्षयइतिचतुर्विंशतिमतात् पित्रादिनवदैवत्यंतथाद्वादशदैवत्यमित्यग्निपुराणाच्चमातृणांपृथगुक्तम् यत्रतु
आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्यएवच तत्पत्नीभ्यश्चसर्वाभ्यस्तथैवचजलांजलीन् पिंडांस्तेभ्यःसदाद्द्या-
त्पृथक्भाद्रपदेनरः तीर्थेष्वेवसर्वेषुमाघमासेमघासुचेतिचतुर्विंशतिमते दौहित्रपुत्रदाराश्चयेकनिष्ठाःसहोदराः
निःसंतानामृतायेचतेभ्योप्यंत्रप्रदीयतइतिभाविष्ये एकोद्दिष्टास्तुक्तानितत्रापितत्साश्विमेपिंडदानंज्ञेयम् येषांनपृ
थक्तेःसपत्नीकाःपित्रादयोवाच्याः अन्वष्टकागयामातृश्राद्धेचैवमृतेहनि एकोद्दिष्टंतथास्त्रीणामन्यस्त्रीषुनान्यत्स्यात्पृथ
ग्भवेत् इतिशंखोक्तेश्च मनुः तेषुदर्भेषुतंहस्तंनिमृज्याल्लेपभागिनाम् हस्तलेपाभावेपिहस्तंनिमृज्यादेवेतिमेधाति
थिः विष्णुः अत्रपितरोमादयध्वमितिदर्भमूलेकरावघर्षणम् कालिकायांस्तु मनुः एकोद्दिष्टेषुवर्षास्तुदर्भलेपो
नविद्यते सपिंडीकरणादौतुलेपःसर्वत्रशस्यते मनुः आचम्योदक्परावृत्यत्रिराचम्यशनैरसून् षड्ऋतूंश्चनम-
स्कुर्यात्पितॄनेवचमंत्रवत् उदकंनिनयेच्छेषंशनैःपिंडांतिकेपुनः त्रिःप्राणायामंकृत्वेतिमेधातिथिः अमंत्रंप्राणानि
रुध्येतिकल्पतरुः मंत्रवत्वसंतायनमः नमोवःपितरइत्याद्यैः शेषंपूर्ववन्नयनशेषम् आश्वलायनः निपृतानन्
मंत्रयेतात्रपितरोमादयध्वंयथाभागमावृषायध्वमितिसव्यावृद्दुदङ्ङावृत्ययथाशक्तिप्राणान्नासित्वाभिपर्यावृत्या
मीमदंतपितरोयथाभागमावृषायीषतेतिचरोःप्राणंभक्षंभक्षयेत् नित्यंनिनयनापिति नियमग्रहणंशेषाभावेपिकुर्या

अमीमदंतेत्याद्येनमंत्रेणाप्यनुमंत्र्यतान् पिंडशिष्टं चरोरन्नं
दित्यर्थः शौनकः अथैषामत्रपितरइत्याद्येनानुमंत्रणम् मंत्रैःपिंडेषुपानीयंनिषिंचेत्पितृतीर्थतः व्याघ्रः
किंचिदाघ्रापयन्त्यजेत् प्रक्षाल्याचम्यशुंधंतामित्याद्येरेवपूर्ववत् एतत्कात्यायनादीनाम् आचार्यः ततः
आद्भिःप्रक्षाल्यतत्पात्रंतत्पिंडपूर्ववत् कृत्वावनेजनंकुर्यात्पिंडपात्रमधोमुखम् असावभ्यंक्ष्वासावभ्यंक्ष्वेति पिंडेष्वभ्यंजनांजनेचासोदद्याद्
सम्यक्द्विराचम्यनीवीविस्रस्यचाग्यतः आश्वलायनः असावभ्यंक्ष्वासावभ्यंक्ष्वेति पिंडेष्वभ्यंजनांजनेचासोदद्याद्
शापूर्णास्त्रवापंचाशद्वर्षतायाऊर्ध्वंस्वंलोमेनद्वःपितरोवासोमानोतोन्यत्पितरोयुंङ्ध्वमिति श्राद्धचिंतामणौ ब्राह्मे
एतद्वःपितरोवासइतिजल्पन्पृथक्पृथक्आमुकामुकगोत्रैतत्तुभ्यंवासःपठेद्बुधः इदंकातीयानांएतद्वइतिसूत्राणि
प्रतिपिंडमितितत्सूत्रात् हेमाद्रौब्राह्मे श्वेषमाहुस्त्रैककुदमंजनंनित्यमेवहि तैलंकृष्णातिलेभ्यश्चदद्यादभ्यंजनंहि
तत् त्रैककुदंस्वरूपोइतिप्रसिद्धम् अंजनप्राथम्यमापस्तंवादिविषयम् तत्रैवव्याघ्रः गंधपुष्पाणिधूपंचदीपंचविनिवे
दयेत् देवलः दक्षिणांसर्वभोगांश्चप्रतिपिंडंप्रदापयेत् भक्ष्याण्यपूपानिक्षूंश्चव्यंजनान्यशनानिच तत्रैवशंखः यत्कि
निसच्यतेगेहेभक्ष्यंभोज्यमगर्हितम् अनिवेद्यनभोक्तव्यंपिंडमूलेकथंचन एतत्सव्येनेतिकेचित् युक्तंत्वपसव्येन
नुः अपजिघ्रेच्चतान्पिंडान्यथा न्युप्तान्समाहितः ततोनमोवःपितरइषइत्यादिनोपस्थानम् मात्स्ये अथाचांतेषुचा
चम्यवारिदद्यात्सकृत्सकृत् तिलपुष्पाक्षतान्पश्चाद्क्षय्योदकमेवच अत्रदैवेसव्यंपित्र्येत्वपसव्यमितिकर्कः परिभा
षोक्तवचनात्सव्यमितियुक्तम् अत्रशिवाआपःसंतुसौमनस्यमस्त्वित्यादिप्रयोगोज्ञेयः मात्स्ये नखाशीःप्रतिगृण्हीया
द्द्विजेभ्यःप्राङ्मुखोबुधः अघोराःपितरःसंतुसंत्वित्युक्तेपुनर्द्विजैः गोत्रंतथावर्धतांनस्तथेत्युक्तःसतैःपुनः दातारोनो

भिवर्धंतामन्नंचेचेत्युदीरयेत् स्वस्तिवाचनकंकुर्यात्पिंडान्उद्धृत्यभक्तितः स्वस्तिवाचनात्प्राक्पात्रचालनंकार्यम् हेमाद्रौ
बृहस्पतिः भोजनेषुचतिष्ठत्सुस्वस्तिकुर्वंतियेद्विजाः तदन्नमसुरैर्भुक्तंनिराशैःपितृभिर्गतैः जातूकर्ण्यः पात्राणिचा
लयेच्छ्राद्धेस्वयंशिष्योथवासुतः नस्त्रीभिर्नचबालेननासजात्याकथंचन याज्ञवल्क्यः स्वस्तिवाच्यंततःकुर्यादक्षय्यो
दकमेवच तत्रैवबृहच्छातातपः पितृणांनामगोत्रेणकरेदेयंतिलोदकं प्रत्येकंपितृतीर्थेनअक्षय्यमिदमस्त्विति अ
त्रषष्ठीप्रयुक्ता तत्रैवनागरखंडे उत्तानमर्घ्यपात्रंतुकृत्वादद्याच्चदक्षिणाम् हिरण्यंदेवतानांचपितृणांरजतंतथा बृ
हस्पतिः तस्मात्सुवर्णंकाकिणींवाफलंपुष्पमथापिवा प्रदद्याद्दक्षिणांयज्ञेतयासस्सफलोभवेत् अत्रपित्रुद्देशेनदक्षिणा
दानेअपसव्यं विप्रोद्देशेनसव्यमितिमाधवः कालिकायामाचार्यः दद्याद्यज्ञोपवीत्येवतांबूलंदक्षिणांतथा अभि
वंदेच्चतांस्ततोविप्रान्पित्रादिभ्यःस्वधोच्यताम् गोभिलः अघोराःपितरःसंत्विद्युक्तेस्वधांवाचयिष्यइतिपृच्छ
तिपितृभ्यःस्वधोच्यतामित्युक्तेस्तुस्वधेत्युच्यमानेधारांदद्यादूर्जंवहंतीतिआपस्तंबेनतुपुत्रान्पौत्रानभितर्पयंतीरित्या
पिपरिषेचनेमंत्रउक्तः आश्वलायनः अथैतान्प्रवाहयेत् परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्व्येणोभिः दत्त्वा-
यास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छतेति मात्स्ये वाजेवाजइतिजपन्कुशाग्रेणविसर्जयेत् प्रचेताः
स्वस्तिवाच्यंततःकृत्वापितृपूर्वंविसर्जयेत् आश्वलायनः अन्नंप्रकीर्यउपवीतीओंस्वधेतिविसृजेदस्तुस्वधेतिवा ब्र
ह्मवैवर्ते आमावाजेतिमंत्रंतुपठित्वाचप्रदक्षिणम् द्वारोपांतेततःकृत्वासंयतःप्रविशेद्गृहम् प्रांजलिश्चततःप्राहदा
तारोनोभिवर्धंतामन्नंचनइतिबहि एवमस्त्वितितेनंचकथयंतिसमाहिताः एतन्मंडलदेशेका-

र्धामितिहेमाद्रिः मनुः दातारोनोभिवर्धंतांवेदाःसंततिरेवच श्रद्धाचनोमाव्यगमद्बहुधेयंचनोस्त्विति बौधायनः अन्नं
चनोबहुभवेदतिथींश्चलभेमहि याचितारश्चनःसंतुमान्नयाचिष्मकंचनेति अत्रदानारोनोभिवर्धंतालभध्वंयाचिद्व
मिस्याद्यूहेनपठित्वाविप्रैःप्रतिवचनंकार्यमितिस्कंददर्शनभाष्ये स्वादुषंसदइति ब्राह्मणासःपितरइतिमंत्रद्वयंचपठंति
शौनकः ब्राह्मणानथनिर्यातान्परीत्यत्रिःप्रदक्षिणम् सस्त्रीकःस्वजनैःसार्धंप्रणमेद्रचितांजलिः कनिष्ठप्रथमाज्येष्ठच
रमाःस्युःप्रदक्षिणे हेमाद्रौबृहस्पतिः अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् अद्यमेवंशजाःसर्वेयातावोनुग्रहाद्दि
वम् पत्रशाकादिदानेनक्लेशितायूयमीदृशाः तत्क्लेशजातंचित्तात्तुविस्मृत्यक्षंतुमर्हथ प्रचेताः विसृजेद्वाक्संयुक्त
सीमांतंचाप्यनुव्रजेत् अथपिंडप्रतिपत्तिः हेमाद्रौब्रह्मांडे पिंडमग्नौसदाद्द्याद्भोगार्थीप्रथमंनरः पत्न्यैप्रजार्थीद
द्याद्देमध्यमंमंत्रपूर्वकम् उत्तमांगतिमन्विच्छन्गोषुनित्यंप्रयच्छति आज्ञांप्रज्ञांयशःकीर्तिमप्सुपिंडंप्रवेशयेत्
यन्दीर्घमायुष्यंवायसेभ्यःप्रयच्छति आकाशंगमयेदप्सुस्थितोवादक्षिणामुखः आश्वलायनः वीरंमेदत्तपितर
तिपिंडानांमध्यमंपत्नींप्राशयेत् आधत्तपितरोगर्भंकुमारंपुष्करस्रजम् यथायमरपाअसदिति भर्त्रादत्तस्यआधेना
दायाद्वितीयेनप्राशनम् आपस्तंबस्तुदानेमंत्रमाह अपांत्वौषधीनांरसंप्राशयामिभूतकृतंगर्भंधत्स्वेतिमध्यमंप-
त्न्यैप्रयच्छतीति प्राशनेपि यथेहपुरुषोऽसदितिद्वितीयःपाठः अन्येषांतत्तच्छाखायांज्ञेयः तत्रैवशंखः पत्नी
वामध्यमंपिंडमश्नीयादार्तवान्विता कलिकायांछागलेयः प्राचीनावीतिनामंत्र्यपत्नीपिंडोविभज्यते प्रतिप. :
मंत्रस्यकर्तव्यावृत्तिरत्र माधवीयेविष्णुधर्मोत्तरे तीर्थश्राद्धेसदापिंडान्क्षिपेत्तीर्थसमाहितः याज्ञवल्क्यः पिंडांस्तु

गोजाविप्रेभ्योदद्याद्ग्नौजलेऽपिवा बृहस्पतिः अन्यदेशगतापत्नीरोगिणीगर्भिणीतथा तदातंजीर्णवृषभश्छागोवाभोक्तु म र्हति अथपिंडोपघाते हेमाद्रौप्रायश्चित्तकांडेदेवलः श्वसृगालखरैःपिंडःस्पृष्टोभिन्नःप्रमादतः कर्तुरायुष्यनाशःस्यात् प्रेतस्तंनोपसर्पति जातूकर्ण्यः पूर्वश्लोकांते तद्दोषपरिहारार्थंप्राजापत्यंप्रकल्पयेत् पुनःस्नात्वातदाकर्तापिंडंकुर्याद्य थाविधि काकस्पर्शेतुनदोषः पिंडोपघातंप्रकृत्य धनस्यचविनाशःस्यात्काकस्पर्शादिकंविनेति तत्रैवश्लोक गौतमो क्तेः स्मृतिदर्पणेत्रिः मार्जारमूषकस्पर्शेपिंडेचाविद्लीकृते पुनःपिंडाःप्रदातव्यास्तेनपाकेनतत्क्षणात् बौधायनः श्वचां डालादिभिःस्पृष्टःपिंडोयद्यपहन्यते प्राजापत्यंचरित्वाथपुनःपिंडंसमाचरेत् बोपदेवोप्येवमाह अथदिनांतरेतुप्राजा पत्यमात्रं शेषप्रतिपत्तित्वेनापिंडावृत्तौमानाभावादितिमैथिलाः तन्न सपिंडीकरणादौशेषनाशेसंयोजनादिलोपापत्तेः नै नवन्ननाद्यमनेद्वात्रापितन्मात्रपिंडदानादिति अतएवनचनक्तंश्राद्धंकुर्वीतारब्धेवाभोजनसमापनादित्यापस्तंबसूत्रम् रात्रौभोजनमात्रंपूर्वेद्युःकार्यम् श्राद्धसमाप्तिस्तुपरदिनेएव समाप्तिपर्यंतंकर्तुरुपवासश्चेतिहरिदत्तेनव्याख्यानम् तस्मा त्याकांतरेणापिंडदानमात्रंकार्यम् अथपिंडनिषिद्धकालः सचप्रायेणमहालयादिनिर्णयेपूर्वमुक्तः हेमाद्रौगृह्यपराशरः युगादिषुमघायांचविषुवत्ययनेतथा भरणीषुचकुर्वीतपिंडनिर्वपणंनहि स्मृतिरत्नावल्याम् पुत्रेजातेव्यतीपातेग्रहणे चंद्रसूर्ययोः श्राद्धंकुर्यात्प्रयत्नेनपिंडनिर्वपणादृते तत्रैवकात्यायनः ऊर्ध्वंसनंतरंचैवयावन्मासःसमाप्यते तावत्पिंडान्नै वदद्यान्नकुर्यात्तिलतर्पणम् बौधायनः संस्कारेषुतथान्येषुमासंमासार्धमेवच तथा भानौभौमेत्रयोदश्यांनंदाभृ गुमघासुच पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणम् त्रिस्थलीसेतौकार्ष्णाजिनिः विवाहव्रतचूडासुवर्षमर्धंतदर्धकम्

उत्तरार्धंमाग्नन् वृद्धिमान्तेतथान्यत्रपिंडदाननिराक्रिया कृतागर्गादिभिर्मुख्यैर्गासमेकंतुकर्मणाम् हेमाद्रौज्योतिःपराशरः
विवाहेनिदिनेमासांस्त्यजेत्पुत्रोदरोपहि सपिंडाःपिंडनिर्वापंभोजीवंपेषडेवहि तत्रैव महालयेगयाश्राद्धेमातापित्रो
क्षयेहनि यस्यकस्यापिमर्त्यस्यसपिंडीकरणेतथा कृतोद्वाहोपिकुर्वीतपिंडनिर्वपणंसदेति मातापित्रोरितिक्षयाह-
विशेषणम् हविरूभयत्वनदाविवक्षितम् तेनभ्रातृपितृव्यादिवार्षिकेपिपिंडदानंकार्यमितिकेचित् सपिंडीकरणेन
वश्राद्धषोडशश्राद्धोपलक्षणार्थमितिनिर्णयामृतेउक्तम् क्षयाहेविशेषःसंग्रहे मातापित्रोराब्दिकेतुविवाहादिषुसर्व
दा तिलैःपिंडाःप्रदातव्याअन्यश्राद्धेविवर्जयेत् अत्रमूलंविंत्यम् रामकौतुके नंदाश्वकामरव्यारभृगवग्निपितृकालै
गंडेवैधृतिपातेचपिंडास्त्याज्याःसकलैस्सुखिभिः विश्वरूपनिबंधे तिथिवारप्रयुक्तोयोदोषोवैससुदाहृतः सश्राद्धेतन्नि-
मित्तेस्यान्नान्यश्राद्धेकदाचन अन्यन्नूक्तंप्राक् उच्छिष्टोद्वासनमाहहेमाद्रौवसिष्ठः श्राद्धेनोद्वासनीयानिउच्छि-
ष्टान्यादिनक्षयात् श्च्योतंतेवैसुधाधारास्ताःपिबंत्यकृतोदकाः व्यासः उच्छिष्टंनप्रमृज्यात्तुयावन्नास्तमितोरविः इ
संग्रहांतरस्तत्वौग्रगृहेतुमनुः उच्छेषणंतुतत्तिष्ठेद्यावद्विप्राविसर्जिताः ततोगृहबलिंकुर्यादितिधर्मोव्यवस्थितः ब्र
लिवैश्वदेवादिनित्यकर्मेतिमेधातिथिः ब्रह्मांडे शूद्रायचानुपेतायश्राद्धोच्छिष्टंनदापयेत् तथा कामंदद्याच्चसर्व
तुशिष्यायचकृतायच भोक्तुरितिशेषः जानूकर्पः द्विजभुक्तावशिष्टंतुशुचिभूमौनिखानयेत् अथवैश्वदेवादि अ
नमामकःश्लोकः श्राद्धेनाग्निककर्तृकेग्निकरणात्पश्चाज्जुहोतिर्बलिस्त्वंतेस्यादथवापार्णोह्निकिरनःपश्चात्स्वथल्केप-
वेः श्राद्धांतेलथयामहालयविधावूर्ध्वंभुजेःस्यात्क्षयेल्वंतेमासकचमध्यताशुभविधावादौतथासाग्निके अस्यार्थः

साग्नेः पृथक्पाकेनसर्वत्रादौवैश्वदेवः पश्चात्तंकर्मनिर्वर्त्यवैश्वदेवंचसाग्निकः पिंडयज्ञंततःकुर्यात्ततोन्वाहार्यकंबुधः
पित्रर्थंनिर्वपेत्पाकंवैश्वदेवार्थमेवच वैश्वदेवंनपित्रर्थंनदार्शंवैश्वदेविकमितिलौगाक्षिस्मृतेः अत्रसाग्निकआहि
ताग्निरितिहेमाद्रिः श्राद्धात्प्रागेवकुर्वीतवैश्वदेवंतुसाग्निकः एकादशाहिकंभुक्त्वानन्तरंतंतोविधीयतइति हेमाद्रौशाटं
कायनोक्तेश्च तत्रैवपरिशिष्टे संप्राप्तेपार्वणश्राद्धेएकोद्दिष्टेतथैवच अग्रतोवैश्वदेवःस्यात्पश्चादेकादशेहनि स्मार्ताग्निमतां
तद्गृहितानांवाग्नौकरणोत्तरंविकिरोत्तरंवाहोममात्रंपृथक्पाकेन भूतयज्ञादितुश्राद्धांतएव अत्रमूलंहेमाद्रिचंद्रिकादौस्पष्टं
सर्वेषांश्राद्धांतेवातत्पाकेनवैश्वदेवनित्यश्राद्धादीतितृतीयः श्राद्धंनिर्वर्त्यविधिवद्वैश्वदेवादिकंततः कुर्याद्भिक्षांततोदद्याद्धं
तकारादिकंतथेतिपैठीनसिस्मृतेः ततः श्राद्धशेषात् श्राद्धान्हिश्राद्धशेषेणवैश्वदेवंसमाचरेदितिचतुर्विंशतिमताच्च एवंवैश्व
देवकालत्रयस्यआश्वलायनशांखायनपरिशिष्टमुदाहृत्यैषव्यवस्थोक्ता आदौवृद्धौक्षयेचांतेदर्शेमध्येमहालये एकोद्दिष्टेनिवृत्ते
तुवैश्वदेवोविधीयतइति बहुस्मृत्युक्तत्वात्सर्वेषांश्राद्धांतएवेति मेधातिथिस्मृतिरत्नावल्यादयोबह्वचः बोपदेवस्तुवृत्तिकारेण
विसर्जनांतंश्राद्धमुक्त्वाउच्छेषणंलिंतिपूर्वोक्तमनुवाक्योदाहरणात्बह्वृचानांश्राद्धांतएव मध्यपक्षस्त्वन्यशाखापरइत्याह
हेमाद्रिस्तुबह्वावप्यंतेएववैश्वदेवमाह कात्यायनानांतुश्रौतस्मार्ताग्निमतामादावेकेनैवपाकेनेतिकर्कः अन्येषांमते तेत्तिरीया
णांतुसाग्निकानांसर्वत्रादौवैश्वदेवः पंचयज्ञांश्चअंतेचेतिसुदर्शनभाष्येउक्तम् अस्यपक्षद्वयस्यपूर्ववद्व्यवस्था हेमाद्रौ
मार्कंडेयः ततोनित्यक्रियांकुर्यात्भोजयेच्चततोतिथीन् ततस्तदन्नंभुंजीतसहभृत्यादिभिर्नरः ततः श्राद्धशेषात् नित्य
क्रियांनित्यश्राद्धमत्रपृथक्पाकेननैत्यकमितिनेनैवोक्तेः पाकैक्येविकल्पः अथनित्यश्राद्धम् हेमाद्रौव्यासः एकमप्या-

शयेद्विप्रंपण्णामप्यन्वहंगृही अपीत्यनुकल्पः प्रचेताः नामंत्रणंनहोमंचनाव्हानंनविसर्जनम् नपिंडदानंचिकिरंनदद्या
त्त्रदक्षिणाम् अत्रानिर्दिश्यभोजयित्वातुकिंचिद्दत्वाविसर्जयेदितिनेनैवोक्तेर्दक्षिणाविकल्पः यत्तु नित्यश्राद्धंदैवहीनं-
नियमादिविवर्जितम् दक्षिणारहितंचैवदातृभोक्तृव्रतोज्झितमितिकाशीखंडे तद्विप्राभावपरमितिपृथ्वीचंद्रः भवि-
ष्ये आवाहनंस्वधाकारंपिंडाग्नौकरणादिकम् ब्रह्मचर्यादिनियमाविश्वेदेवानचैवहि दातृणामथभोक्तृणांनियमो-
नचविद्यते एतद्विप्रासंभवेरात्रावपिकार्यम् दिवोदितानिकर्माणिप्रमादादकृतानिवै यामिन्याःप्रहरंयावत्तावत्कर्माणि
कारयेदितिबृहन्नारदीयोक्तेः रात्रौप्रहरपर्यंतंदिवाकृत्यानिकारयेत् ब्रह्मयज्ञंचसौरंचवर्जयित्वाविशेषतइतिपृथ्वीचंद्र
धृतसंग्रहोक्तेश्च नचदार्शिकाब्दिकाद्यपिरात्रौस्यादितिवाच्यम् इष्टापत्तेः तस्यातिथिसंबंधित्वात् संध्यारात्रौनकर्त
र्व्यंश्राद्धंखलुविचक्षणैरितिविष्णवाद्यैःरात्रौनिषेधात् अतएवास्यद्वादश्यांउषःकाले इदंकुर्यात् प्रातर्माध्यान्हिकंतदे
त्याद्यैर्वाक्यैस्त्रयोदशीश्राद्धंनापकृष्यते भिन्नविषयत्वादित्युक्तंमदनरत्ने नित्यत्वंलपकृष्यते अन्वहमित्युक्तेस्तिथिसं-
र्बधिथाभावात् यथाचस्मृदर्शनभाष्ये परपक्षोपिन्याणीतिनियमोपिनित्यश्राद्धत्वेसंवत्सरमित्यत्यंतसंयोगेद्वितीयाव
लान्कृष्णपक्षेपीत्युक्तंतथारात्रावपि तथाचमाधवेनप्रतिपत्प्रकरणेस्पष्टमुक्तं॰ वयंचाग्रेवक्ष्यामः अस्यादिनेकरणेलोपए
व रात्रौश्राद्धंनकुर्वीतेतिनिषेधादिति पृथ्वीचंद्रः पात्राभावेकौर्मे उद्धृत्यवायथाशक्तिकिंचिदन्नंप्रकल्पयेत् तस्या प
त्तिमाहविष्णुः भिक्षुकाभावेअन्नंगोभ्योदद्यादग्नौवाप्रक्षिपेदिति हेमाद्रौनागरखंडे नित्यश्राद्धंनकुर्वीतप्रसंगा
यत्रसिध्यति श्राद्धांतरेकृतेन्यत्रनित्यत्वात्तन्नहापयेत् षट्दैवतेपृथक्कुर्यादित्यर्थः मात्स्ये ततस्तुवैश्वदेवांतेसभृत्य-

सकलबांधवः भुंजीतातिथिसंयुक्तः सर्वपित्र्यनिषेवितम् सर्वपर्वनिषिद्धंमांसमाषाद्यपीत्यर्थः एवंकृष्णैकादश्यादौगृहिणो
पिभोजनम् अस्यवैधत्वेननिषेधाप्रवृत्तेः एवंग्रहणवेधेपि यत्त्वनाहिताग्नेरयाममभांसंव्रतयेदित्युक्तम् तद्वैधमेव
श्रौतत्वेनतस्यबलवत्त्वात् देवलः श्राद्धंकृत्वातुयोमर्त्योनभुंक्तेथकदाचन देवाहव्यंनगृण्हंतिकव्यानिपितरस्त-
था शिवरात्र्येकादश्यादौत्वघ्राणमेवेत्युक्तंप्राक् यत्रतूपवासोनावश्यकस्तत्रैकभक्तमयाचितंवाकार्यमितिहेमा
द्रिः जातूकर्ण्यः अहन्येवतुभोक्तव्यंकृतेश्राद्धेद्विजन्मभिः अन्यथात्वासुरंश्राद्धंपरपाकेनचसेविते श्राद्धशेषभो
जनस्यक्वचिन्निषेधमाहहेमाद्रौमाघश्विनकांडेमार्कंडेयः पित्रादीनामथान्येषांश्राद्धशेषान्नभोजनम् व्रतीनांवि
धवानांचयतीनांचविगर्हितम् अन्येभिन्नगोत्राः व्रतिनोब्रह्मचारिणः श्राद्धावशिष्टभोक्तारस्तेवैनिरयगामिनः
सगोत्राणांसकुल्यानांज्ञातीनांचनदोषकृदितितत्रैवोक्तेः तत्रैवजाबालिः विप्रस्त्वन्यगृहेश्राद्धशिष्टान्नंभोजनं
चरेत् प्राजापत्यंविशुद्धिःस्यात्ज्ञातिगोत्रेनदोषकृत् यतीनांवपनंलक्षंप्रणवजपश्चेतितत्रैवोक्तम् अस्यापवाद
माहसएव श्वशुरस्यगुरोर्वापिमातुलस्यमहात्मनः ज्येष्ठभ्रातुश्चपुत्रस्यब्रह्मनिष्ठस्ययोगिनः एतेषांश्राद्धशिष्टा
न्नंभुक्त्वादोषोनविद्यते इतिकेचित्प्रशंसंतिमुनयस्तदसांप्रतम् विशेषांतरंतत्रैवज्ञेयम् हेमाद्रौजाबालिः तांबूलंदं
तकाष्ठंचस्नेहस्नानमभोजनम् रत्यौषधपरान्नानिश्राद्धकर्ताविवर्जयेत् पृथ्वीचंद्रोदये आचार्यः नशूद्रंभोज
येत्तस्मिन्गृहेपक्वेनतद्दिने श्राद्धशेषंनशूद्रेभ्यःप्रदद्यादखिलेष्वपि इतिजगद्गुरुनारायणभट्टसूनुरामकृष्णभट्ट
सूनुकमलाकरभट्टकृतेनिर्णयसिंधौपार्वणश्राद्धम् अथानुकल्पः नचविप्रालाभे भोजयेदथवाप्येकं ब्राह्मणंपंक्ति

पावनम् दैवेकृतान्तुनैवेद्यंपश्चात्तस्यतुनिर्वपेदिति शंखोक्तेरेकोविप्रःपूर्वमुक्तः विप्राभावेदर्भबटुः निधायपाद-
र्भवटूनासनेषुसमाहितः प्रेषानुप्रेषसंयुक्तं विधानंप्रतिपादयेदिति देवलोक्तेः अशक्तावामश्राद्धम् आपद्यनग्नौ-
तीर्थेचप्रवासेपुत्रजन्मनि आमश्राद्धंप्रकुर्वीत भार्यारजसिसंक्रमे इति कात्यायनोक्तेः पृथ्वीचंद्रोदयेजमदग्निः
यावत्स्यान्नाग्निसंयुक्त उत्सन्नाग्निरथापिवा आमश्राद्धंतदाकुर्याद्धस्तेग्नौकरणंभवेत् कौर्मे अनग्निरधनोवापि
तथैवव्यसनान्वितः आमश्राद्धंद्विजःकुर्याद्वृषलस्तुसदैवहि आहिताग्नेःप्रवासस्थेतत्पत्नीगृहेदर्शश्राद्धमृत्विगादिना
कारयेत् अमावास्यादिनिपतंप्रोषितेधर्मचारिणी पत्नीतुकारयेन्नित्यमन्येनाप्यृत्विगादिनेति लघुहारीतोक्तेरि-
ति पृथ्वीचंद्रोदयः आदिपदमाह्निकादिसर्वपार्वणपरमिति शूलपाणिः स्मर्तुः पाकाभावेऽधिकारः स्याद्द्विजादी-
नांनराधिप अपत्नीनांमहाबाहो विदेशगमनादिभिः सदाचैवतुशूद्राणामामश्राद्धंविदुर्बुधाः प्रचेताः स्त्रीशू-
द्रःश्वपचश्चैवजातकर्मणिचाप्यथ आमश्राद्धंसदाकुर्याद्विधिनापार्वणेनतु स्वयंपचतीतिश्वपचः विष्णूशनसौ -
आत्मनोदेशकालाभ्यांविप्लवेसमुपस्थिते आपद्यनग्नौतीर्थेचप्रवासेपत्न्यसंभवे चंद्रसूर्यग्रहेचैवदद्यादामंविशे-
षतः नपक्वंभोजयेद्विद्वान्सच्छूद्रोपिकदाचन भोजयन्प्रत्यवायीस्यान्नचतस्यफलंलभेत् अत्रप्रवासतीर्थग्रह-
णादामंहेमश्राद्धमेव पाकश्राद्धंतुनभवत्येवेति हेमाद्रिरत्नाकरादयः अपरार्कविज्ञानेश्वरादयस्तु पाकाभावेद्वि-
जातीनामामश्राद्धंविधीयत इति सुमंतूक्तेः साग्निकैर्निरग्निकैश्चप्रवासादौसर्वंचपाकाभावेआमादिकार्यम् पाकसं-
भवेत्तन्नैवेत्याहुः अतएवपाकश्राद्धमुक्त्वा एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वसु भार्याविरहितोप्येतत्प्रवास-

स्थोपिनिरग्नइतिमास्थे निरग्नेरपिपाकेनोक्तमितिशूलपाणिकल्पतरू एतच्छब्दःश्राद्धमात्रपरइत्यन्ये एकोद्दिष्टंतुक-
र्त्तव्यंपाकेनैवसदास्वयमिति लघुहारीतीयमपिसाग्नेरेव निरग्नेर्महैकोद्दिष्टमप्यामेन शूद्रस्यतुदशाहपिंडाद्यामेनेति
हलायुधः उत्सन्नाग्नीनांत्वामश्राद्धमेव पूर्वोक्तजमदग्निवाक्यात् मरीचिः श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितम्
अमावास्यादिनियतंमाससंवत्सरादृते स्मृतिदर्पणे मृताहंचसपिंडंचगयाश्राद्धंमहालयम् आपन्नोपिनकुर्वीतश्रा-
द्धमामेनकर्हिचित् हेमाद्रौव्यासः आमंदद्यात्तुकौंतेयदद्यादामंचतुर्गुणम् द्विगुणंत्रिगुणंवापिनत्वेकगुणमर्पयेत् सिद्धा-
न्नेतुविधिर्यःस्यादामश्राद्धेप्यसौविधिः आवाहनादिसर्वंस्यात्पिंडदानंचभारत दद्याद्यच्चद्विजातिभ्यः शृतंवाऽशृतमेव
वा तेनाग्नौकरणंकुर्यात्पिंडांस्तेनैवनिर्वपेत् पक्षांतरमाहसएव आमंदद्याद्द्विकौंतेयतदामंद्विगुणंचरेत् त्रिगुणंचतुर्गुणं
वापिनत्वेकगुणमर्पयेत् स्मृत्यर्थसारेसममप्युक्तम् षट्त्रिंशन्मते आमश्राद्धंयदाकुर्यात्पिंडदानंकथंभवेत् गृहपा-
कात्समुद्धृत्यसक्तुभिःपायसेनवा पिंडान्दद्याद्यथालाभंतिलैःसहविमत्सरः पृथ्वीचंद्रोदयेव्यासः आमश्राद्धंयदा
कुर्याद्विधिज्ञःश्राद्धदःसदा हस्तेग्नौकरणंकुर्याद्ब्राह्मणस्यविधानतः एतत्साग्नेर्निरग्नेःसदातत्सत्वात् यत्तु आमेन
पिंडदद्याच्चेद्विप्रान्पक्वेनभोजयेत् पक्वेनकुरुतेपिंडमामान्नंयःप्रयच्छति तावुभौमनुजौप्रोक्तौनरकार्हौनसंशयइति
तद्दर्शादिपरम् देशाचाराद्वाव्यवस्थेत्युक्तम् मरीचिः आवाहनेस्वधाकारेमंत्राऊह्याविसर्जने अन्यकर्मण्यनूह्या
स्युरामश्राद्धविधिःस्मृतः आवाहनेहविषेअत्तवइत्यत्रस्वीकर्तवेइत्यूहः स्वधाकारेनमोवःपितरइषेइत्यत्रइषेपद-
स्थानेआमद्रव्यायेत्यूहः विसर्जनेवाजेवाजेइत्यत्रतृप्ताइतिस्थानेतर्प्यततृप्यतेतिवोहः यद्यपितस्मादृचंनोहेदिति

कच्च्यहोमिपिंडः तथापिन्नचनाद्भवति तृप्तिप्रश्नोवगाहश्चतुपप्रश्नोयथाक्रमम् आमश्राद्धेभवेन्नैतदपोशानंचपंच-
मम् अयंचानुवादः खलेवाल्यांछेदनादीनामिवार्थाभावाल्लोपसिद्धेः धर्मप्रदीपेतुआमंचतुर्गुणंदद्यादथवाद्विगुणंतथा हे
मंनाद्विगुणंतद्दामेहेमेप्ययंविधिः आमेहेमेतथानित्येनांदीश्राद्धेतथैवच व्यतीपातादिकेश्राद्धेनियमान्परिवर्जये
त् गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवा पिंडदानंप्रकुर्वीतआमेहेमेहुतेसति आमश्राद्धेचदर्शेचप्रेतश्राद्धेतथैवच
विकिरंनैवकुर्वीतमुनिःकात्यायनोब्रवीत् आमश्राद्धमनंगुष्ठमग्नौकरणवर्जितम् तृप्तिप्रश्नविहीनंतुकर्तव्यंमानवैर्ध्रुव
म् आवाहनाग्नौकरणंविकिरंपात्रपूरणम् तृप्तिप्रश्नंनकुर्वीतआमेहेमेकदाचनेत्युक्तम् एतच्च आवाहनंभवेत्कार्यमर्घ्य
दानंतथैवचेति हेमाद्रौभविष्यादिविरोधाच्चिंत्यम् शाखांतरविषयंवास्तु विकिरोप्यामेनेतिहेमाद्रिः शूद्रस्यतुतत्रैवोक्तं
अग्नौकरणमंत्रश्चनमस्कारोविधीयते अग्नयेकव्यवाहनायनमः सोमायपितृमतेनमइत्ययंमंत्रः मात्स्ये मंत्रवर्जंहिशूद्रस्य
सर्वमेवविधीयते एवंशूद्रोपिसामान्यंवृद्धिश्राद्धंचसर्वदा नमस्कारेणमंत्रेणकुर्यादामान्नवद्बुधः तच्चपूर्वाह्णेकार्यम् आ
मश्राद्धंतुपूर्वाह्णेएकोद्दिष्टंचमध्यतः पार्वणंचापराह्णेतुप्रातर्वृद्धिनिमित्तकमितिहारीतोक्तेः एतद्द्विजविषयम् शूद्रकर्तृ-
कंत्वपराह्णेएव मध्यान्हात्सरतोयस्तुकुतपःसमुदाहृतः आमश्राद्धंतुतत्रैवपितॄणांदत्तमक्षय्यमिति स्कांदोक्तेरित्यपरार्के हे-
माद्रौचोक्तम् तदभावेहेमश्राद्धमाहहेमाद्रौमरीचिः आमान्नस्याप्यभावेतुश्राद्धंकुर्वीतबुद्धिमान् धान्याच्चतुर्गुणेनैवहिर-
ण्येनसकरोविधा धर्मः आमंतुद्विगुणंप्रोक्तंहेमंतद्वच्चतुर्गुणम् स्मृत्यर्थसारे हिरण्यमष्टगुणंचतुर्गुणंसमंवादद्यात् हेमा
द्रौभविष्ये अन्नाभावेद्विजाभावेप्रवासेपुत्रजन्मनि हेमश्राद्धंसंग्रहेच्चतथास्त्रीशूद्रयोरपि षट्त्रिंशन्मतेतुर्यपदेवर्जा-

लाक्षयेहनीतिपाठः यस्यभार्यारजस्वलेतिव्यासपाठः पुत्रोत्पत्तौतुहेमनियममाहसंवर्तः पुत्रजन्मनिकुर्वीतश्राद्धंहेम्नैव
बुद्धिमान् नपक्वेननचामेनकल्याणान्यभिकामयन् भविष्ये गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवा पिंडदानंप्रकुर्वीतहे
मश्राद्धेकृतेसति शूद्रस्तुगृहपाकेननपिंडान्निर्वपेत्तथा सक्तुमूलंफलंतस्यपायसंवाभवेत्स्मृतम् हेमश्राद्धेपिंडदानंनेति
दिवोदासः स्मृत्यर्थसारेतुविकल्पउक्तःतदाशयंनविद्मः षट्त्रिंशन्मते नामंत्रणाग्नौकरणंविकिरोनैवदीयते तृप्तिप्रश्नोपि
नैवात्रकर्तव्यःकेनचिद्बुधैः अत्रमरीचिना आमाभावेहेमविधानेनस्थानापत्त्याधर्मप्राप्तेः पूर्ववन्मंत्रोहः पूर्वाण्हकालता
चवेत्युक्तेतिदिक् पूर्वोक्तधर्मप्रदीपोक्तेश्च व्यासः हिरण्यमामंश्राद्धीयंलब्धंयत्क्षत्रियादितः यथेष्टंविनियोज्यंस्याद्भुंजी-
याद्ब्राह्मणान्स्वयं विप्राल्लब्धंभुंजीयात् क्षत्रियादिलब्धेतुयथेष्टविनियोगः तेनापिश्राद्धेवैश्वदेवादिनकार्यम् देवोद्दे
शेनसक्तस्यदेवतांतरायत्यागायोगादितिदेवयाज्ञिकः शूद्रलब्धेतूक्तंतत्रैवषट्त्रिंशन्मते आमंशूद्रस्ययत्किंचिच्छ्राद्धिकं
प्रतिगृह्यते तत्सर्वंभोजनायालंनित्यनैमित्तिकेनचेति श्राद्धतत्त्वेंगिराः शूद्रवेश्मनिविप्रेणक्षीरंवायदिवादधि निवृत्तेनन
भोक्तव्यंशूद्रान्नंतदपिस्मृतम् शूद्राद्विप्रगृहेष्वन्नंप्रविष्टंतुसदाशुचि पराशरः तावद्भवतिशूद्रान्नंयावन्नस्पृशतिद्विजः
द्विजातिकरसंस्पृष्टंसर्वंतन्नविरुध्यते विष्णुपुराणे संप्रोक्षयित्वागृण्हीयाच्छूद्रान्नंगृहमागतम् अंगिराः पाथांतरगतं-
ग्रासंदुग्धंस्वगृहमागतम् सपिंडश्राद्धशक्तावाहहेमाद्रौसंवर्तः समर्थंयस्तुशक्नोतिकर्तुंनैवेहपार्वणम् अपिसंकल्पविधि
नाकालेतस्यविधीयते पात्रेभोज्यस्यचान्नस्यत्यागःसंकल्पउच्यते व्यासः सांकल्पंतुयदाकुर्यान्नकुर्यात्पात्रपूरणम्
नावाहनाग्नौकरणेपिंडांश्चैव नदापयेत् पात्रमर्घ्यस्य समंत्रकावाहनस्यननिषेधः तूष्णींतुभवत्येवेतिहेमाद्रिः स्मृ-

त्यर्थसारे विकिरंतुनदातव्यमितितृतीयपादेपाठः स्मृत्यंतरे त्यजेदावाहनंचार्घ्यमग्नौकरणमेवच पिंडांश्चविकिरांश्च
येन्श्राद्धसांकल्पसंज्ञके हेमाद्रौवृद्धशातातपः पिंडनिर्वापरहितं यत्तुश्राद्धंविधीयते स्वधावाचनलोपोत्रविकिरस्तु
नदुष्यतेइत्याह पृथ्वीचंद्रोदयेवसिष्ठः आवाहनंस्वधाशब्दं पिंडाग्नौकरणंतथा विकिरंपिंडदानंचसांकल्पेषड्विवर्ज
येत् विकिरेविकल्पः स्मृत्यंतरे अंगानिपितृयज्ञस्ययदाकर्तुंनशक्नुयात् सतदावाचयेद्विप्रान् संकल्पात्सिद्धिरस्ति
ति .छागलेयः पिंडोयत्रनिवर्तेतमघादिषुकथंचन सांकल्पंतुतदाकार्यंनियमाद्ब्रह्मवादिभिः कार्ष्णाजिनिः मौंजी
बंधाद्वत्सरार्धंवत्सरंपाणिपीडनात् पिंडान्सपिंडानोदद्युःप्रेतपिंडंविनात्रतु अस्यापवादः पित्रोराब्दिकादौपूर्वमु
क्तः त्यक्ताग्नेरपिसांकल्पमुक्तंषट्त्रिंशन्मते अनग्निकोयदाविप्रउत्सन्नाग्निस्तथैवच तथावृद्धिषुसर्वासुसंक
ल्पश्राद्धमाचरेत् अशक्तौपृथ्वीचंद्रोदयेबृहन्नारदीये द्रव्याभावेद्विजाभावेअन्नमात्रंतुपाचयेत् पैतृकेनतुसूक्ते
न होमंकुर्याद्विचक्षणः देवलः पिंडमात्रंप्रदातव्यमभावेद्रव्यविप्रयोः श्राद्धीयाहनिसंप्राप्तेभवेन्निरशनोपि
वा बृहद्वसिष्ठः किंचिद्दद्यादशक्तस्तुउदकुंभादिकंद्विजे तृणानिवागवेदद्यात्पिंडान्वाप्यथनिर्वपेत् तिलदर्भैः
पितॄन्वापितर्पयेत्स्नानपूर्वकम् हेमाद्रौभविष्ये अग्निनावादहेत्कक्षंश्राद्धकालेसमागते तस्मिन्वोपवसेदह्निजप
हा श्राद्धसंहितां श्राद्धसंहितासमंत्रश्राद्धकल्पः विष्णुवराहपुराणयोः असमर्थोन्नदानस्य धान्यंमासंस्वशक्तितः
प्रदास्यतितिलान्वापिस्वल्पांवापिचदक्षिणाम् सर्वाभावेवनंगत्वाकक्षामूलप्रदर्शकः सूर्यादिलोकपालानामिदमुच्चैः
पठिष्यति नमेस्तिवित्तंनधनंनचान्यंश्राद्धोपयोगिस्वपितॄन्नतोस्मि तृप्यंतुभक्त्यापितरोमयैतौभुजौकृतौवर्त्मनि-

मारुतस्य. इत्येनपितृभिर्गीतं भावाभावप्रयोजनम् यःकरोतिकृतंतेनश्राद्धंभवतिभारत प्रभासखंडे गत्वारण्यममा
नुष्यमूर्ध्वबाहुर्विरौत्यदः निरन्नोनिर्धनोदेवाःपितरोमानृणंकृथाः नमेस्तिवित्तंनधनंनभार्याश्राद्धंकथंवःपितरःक
रोमि यनंप्रविश्येहतुनप्रयोच्चैर्भुजोकृतौवर्त्मनिमारुतस्य श्राद्धर्णभेवद्भवतांप्रदत्तंमर्ध्यंदयध्वंपितृदेवताद्याः आस्त्या
यचोक्तिव्यभुजोततोवेदिवाचरात्रिंसमुपोष्यतिष्ठेत् भवेत्सवेतेनकृतेनतेषामृणेनमुक्तःपितृदेवतानाम् इत्यनुकल्पः
अथश्राद्धभोजनेप्रायश्चित्तम् दर्शेषट्प्राणायामाः इत्युक्तेत्रयः संस्कारेषुतुजातकर्मादिचूडांतेषुसांतपनम् आद्येचांद्रंवा
अन्यसंस्कारेषूपवासः सीमंतेचांद्रमितिविज्ञानेश्वरः आपदिनवश्राद्धेकादशाहेषुभोजनेकार्यः द्वादशाहेऊनमासे
चपादोनः द्विमासेत्रिपक्षेऊनषण्मासेनाब्दयोश्चार्द्धकृच्छ्रः त्रिमासाद्याब्दिकांतेषुसपिंडनेचपादकृच्छ्रः उपवासोवा गु
रुद्व्यार्थभोजनेऽर्द्धं जपशीलेनदर्धं अनापदितुऊनमासांतेषुचांद्रंकार्यंवा द्विमासादौपादोनं त्रिमासादावर्धंकार्यः
आब्दिकेपादोनकार्यः पुनराब्दिकेपकाहः क्षत्रियादिश्राद्धेषुद्वित्रिचतुर्गुणानि व्रतयानि चंडालसर्पश्वादिहतपतितक्लीबा
दिनवश्राद्धेचांद्रम् आद्यमासिकांतेचांद्रंपराकश्च द्वादशाहादौपराकः द्विमासादावतिकृच्छ्रः त्रिमासादौकार्यः आ
ब्दिकेपादः अभ्यासेसर्वंद्विगुणं आमहेमसंकल्पश्राद्धेषुतत्तदर्धानि यतिर्ब्रह्मचारीवोक्तंप्रायश्चित्तंकृत्वाचीर्णव्रता
सान् प्राणायामान्घृताशनंचाधिकंकृत्वाव्रतशेषंसमापयेत् अनापदिद्विगुणं दर्शादौदशगायत्रीमंत्रिताआपःपिबेत्
षट्प्राणायामावा संस्कारेषुचौलेकृच्छ्रः सीमंतेचांद्रम् अन्येषुउपवासइतिदिक् अत्रमाधवमिताक्षरादौक्वचिद्विरोधो
विषयभेदात्परिहार्यः एकादशाहेचांद्रम् पुनःसंस्कारश्चेतिप्रायश्चित्तकांडेहेमाद्रिः यत्तूशनाः दशकृत्वःपिबेदापो·

गायत्र्याश्राद्धभुक्द्विजइतितदुक्तप्रायश्चित्तश्राद्धपरमितिविज्ञानेश्वरः अथक्षयाहश्राद्धम् तत्स्वरूपमाहहेमाद्रौव्या
सः मासपक्षतिथिस्पृष्टेयोयस्मिन्म्रियतेहनि प्रत्यब्दंतुतथाभूतंक्षयाहंतस्यतंविदुः नारदीये पारणेमरणेनृणांति
थिस्तात्कालिकीस्मृता अत्रचांद्रंमानंज्ञेयम् आब्दिकेपितृकार्येचचांद्रोमासःप्रशस्यतइतिगर्गोक्तेः मलमासमृतस्य
तुसौरम् मलमासमृतानांतुसौरंमानंसमाश्रयेदितिहेमाद्र्युक्तेः एतन्मृतमासस्यैवआधिक्येज्ञेयम् ब्राह्मे प्रतिसंव
त्सरंकार्यंमातापित्रोर्मृतेहनि पितृव्यस्याप्यपुत्रस्यभ्रातुर्ज्येष्ठस्यचैवहि अपुत्रस्येतिभ्रात्राद्यन्वयः ज्येष्ठस्येतिकनिष्ठ
स्यानावश्यकत्वार्थं मदनरत्नेभविष्ये सर्वेषामेवश्राद्धानांश्रेष्ठंसांवत्सरंमतम् तथा भोजकोयस्तुवैश्राद्धंनकरोति
खगाधिप मातापितृभ्यांसततंवर्षेवर्षेमृतेहनि सयातिनरकंघोरंतामिस्रंनामनामतः तच्च नानास्मृतिष्वेकोद्दिष्टं
पार्वणंचोक्तम् आद्यमाहयमः सपिंडीकरणादूर्ध्वंप्रतिसंवत्सरंसुतैः मातापित्रोःपृथक्कार्यमेकोद्दिष्टंमृतेहनि व्या
सः एकोद्दिष्टंतुकर्तव्यंपित्रोश्चैवमृतेहनि एकोद्दिष्टंपरित्यज्यपार्वणंकुरुतेनरः अकृतंतद्विजानीयाद्भवेच्चपितृघातकः
अंत्यमाहशातातपः सपिंडीकरणंकृत्वाकुर्यात्पार्वणवत्सदा प्रतिसंवत्सरंश्राद्धंछागलेयोदितोविधिः यःसपिंडीकृतं
प्रेतंपृथक्पिंडेनियोजयेत् विधिघ्नस्तेनभवतिपितृहाचोपजायते अत्रौरसक्षेत्रजयोःपार्वणंदत्तकादीनामेकोद्दिष्ट
मित्येकःपक्षः साग्नेःपार्वणंनिरग्नेरेकोद्दिष्टमित्यपरः तद्दूषणंभिताक्षरादौज्ञेयम् कल्पतरुस्तुसाग्न्योरौरसक्षेत्रजयोः
पार्वणम् निरग्निकयोस्त्वेकोद्दिष्टमित्याह अपरार्केप्येवम् दत्तकादयोदशपुत्रास्तुसाग्नयोनिरग्नयश्चैकोद्दिष्टमेवकु
र्युः प्रत्यब्दंपार्वणेनैवविधिनाक्षेत्रजौरसौ कुर्यातामितरेकुर्युरेकोद्दिष्टंसुतादशेतिजातूकर्ण्योक्तेः यदातुदत्तकस्यपिता

दर्शेमहालयेचामृतस्तत्रपार्वणैकोद्दिष्टयोर्विकल्पः वस्तुतस्तुसर्वेषांपार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः सचदेशा-
चाराद्व्यवस्थितइतिसर्वनिबंधसिद्धांतः अतएवपृथ्वीचंद्रोदयेवृद्धपराशरः मातापित्रोः पृथक्कार्यमेकोद्दिष्टंमृतेहनी
त्यस्याह देशधर्मंसमाश्रित्यवंशधर्मंतथापरे सूरयःश्राद्धमिच्छंतिपार्वणंचक्षयाहन्यपीति तच्चकेवलपितॄणांनस
पत्नीकानामितिहेमाद्रिः अत्रमातामहानकार्याः कर्षूसमन्वितंमुक्त्वातथाद्यंश्राद्धषोडशम् प्रत्याब्दिकंचशेषेषुपिंडाःस्युः
षडितिस्थितिरितिकात्यायनोक्तेः कर्षूसमन्वितंसपिंडनयेरेकोद्दिष्टंक्रियतेतेषामपिक्वचित्सार्वणमेव शंखोक्तेः एवंसं
न्यासिनोपि एकोद्दिष्टंयतेर्नास्तित्रिदंडग्रहणादिह सपिंडीकरणाभावात्पार्वणंतस्यसर्वदेतिप्रचेतसोक्तेः धायवीये
सन्यासिनोप्याब्दिकादिपुत्रःकुर्याद्यथाविधि महालयेतुयच्छ्राद्धंद्वादश्यांपार्वणंहितत् पृथ्वीचंद्रोदयेवृद्धपराशरः
संग्रामेसंस्थितानांचप्रेतपक्षेशशिक्षये तेषांपार्वणमेवोक्तंक्षयाहेपिचसत्तमैः चंद्रक्षयानाशकसंयुगेषुयःप्रेतपक्षे
मृतवान्सपिंडः सपिंडितानामपिचाब्दिकानिभवंतितेषामिहपार्वणानि तथा भ्रातुर्ज्येष्ठस्यकुर्वीतज्येष्ठोभ्रातानु
जस्यच दैवहीनंतुतत्कुर्यादितिधर्मविदब्रवीत् दैवहीनमेकोद्दिष्टंज्येष्ठभ्रातानाद्यगर्भजः तथाचतत्रैवशाताત-
पः अनाद्यगर्भज्येष्ठोपिभ्रातासद्भिर्निगद्यते कृतेसपिंडनात्तस्यनैवपार्वणमाचरेत् आद्यगर्भेतुपार्वणमेकोद्दिष्टंवे
त्यर्थः मातुस्तुहेमाद्रौकात्यायनः प्रत्यब्दंयोयथाकुर्यात्पुत्रःपित्रेसदाद्विजः तथैवमातुःकर्तव्यंपार्वणंचान्यदेव
वा यत्तुतेनैवोक्तम् सपिंडीकरणादूर्ध्वंपित्रोरेवहिपार्वणम् पितृव्यभ्रातृमातॄणामेकोद्दिष्टंसदैवात्विति तत्सापत्
न्मातृपरम् यत्तुवृद्धपराशरः अपुत्रस्यपितृव्यस्यतत्पुत्रोभ्रातृजोभवेत् सएवास्यतुकुर्वीतपिंडदानादिकक्रि-

याम् पार्वणंतेनकार्यंस्यात्सुतवत्भ्रातृजेनतु पितृस्थानेतुतंकृत्वा शेषंपूर्ववदुच्चरेदिति तस्मिन्वृद्धेषाचारव्यवस्थितमि
ति पृथ्वीचंद्रः श्राद्धदीपकलिकायांचतुर्विंशतिमतेतु पितृव्यभ्रातृमातॄणांज्येष्ठानांपार्वणंभवेत् एकोद्दिष्टंकनिष्ठा-
नांदंपत्योःपार्वणंमिथः अपुत्रस्यपितृव्यस्यभ्रातुश्चैवाग्रजन्मनः मातामहस्यतत्पत्न्याःश्राद्धंपार्वणवद्भवेदित्युक्तं
तत्पत्न्याःकर्तृत्वेपिपार्वणमेव सर्वाभावेस्वयंपत्न्याःस्वभ्रातॄणाममंत्रकम् सपिंडीकरणंकुर्युस्ततःपार्वणमेवचेति
लौगाक्षिस्मृतेः ततःपत्न्यापिकुर्वीतसापिंड्यंपार्वणंतथेतिसमंतूक्तेश्चेतिनिर्णयामृतेउक्तम् अन्येत्वेतत्पाक्षिकपा
र्वणपरमाहुः अतएव भर्तुःश्राद्धंतुयानारीमोहात्पार्वणमाचरेत् नतेनतृप्यतेभर्तास्वत्रतुनरकंव्रजेदितिवचनं
क्षयाहेपाक्षिकैकोद्दिष्टप्रशंसार्थंनपार्वणनिषेधार्थमित्युक्तं त्रिस्थलीसेतौभट्टचरणैः स्वभर्तृप्रभृतित्रिभ्यइत्यनेन
विरोधाच्च अपुत्राणांत्वाह हेमाद्रावापस्तंबः अपुत्रायेमृताःकेचित्स्त्रियोवापुरुषाश्चये तेषामपिचदेयंस्यादेकोद्दि
ष्टंनपार्वणम् मित्रबंधुसपिंडेभ्यःस्त्रीकुमारिभ्यएवच दद्याद्वैमासिकंश्राद्धंसांवत्सरमतोन्यथा पारिजातेतु अ
न्यथापार्वणमित्यस्यस्थानेसर्वत्रपार्वणमित्युक्तम् एकोद्दिष्टवाक्यानितुतीर्थमहालयपराणीत्युक्तम् पृथ्वीचंद्रोदये
दुर्गार्य्यः मातुःसहोदरायाश्चपितुःसहभवाचया तयोश्चैवचकुर्वीतपार्वणंपिंडनादृते प्रचेताः सपिंडीकरणादूर्ध्वं
मेकोद्दिष्टंविधीयते अपुत्राणांचसर्वेषामपत्नीनांतथैवच अपत्नीनांब्रह्मचार्यादीनाम् मार्कंडेयपुराणे प्रतिसंव-
त्सरंकार्यमेकोद्दिष्टंनरैःस्त्रियाः मृताहनियथान्यायंनृणांयद्वदिहोदितम् नृणामितिदृष्टांतात् गौडनिबंधेतुपार्व-
ण्यादीनांसपिंडनाभावेपिसांवत्सरमेकोद्दिष्टंकार्यमेवेतिशूलपाणिः अत्रवृद्धवसिष्ठो सपिंडीकरणादूर्ध्वंयत्रयत्रप्रदी-

यते भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च पितृव्य गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् मस्तु आनुकूल्यं पितृव्य भ्रातृ मातृणाम-
पुत्राणां तथैव च मातामहस्यासक्तस्य श्राद्धोद्दिष्टं पितृवद्भवेत् इति तदावश्यकत्वार्थं न तु पार्वणार्थमिति हेमाद्रिः युक्तं चैवम् मातुः
पितरमारभ्य त्रयो मातामहाः स्मृताः तेषां तु पितृवत् श्राद्धं कुर्युर्दुहितृसूनव इति पुलस्त्योक्तेर्मातामहस्य पार्वणमेव तत्साहचर्या
त्पितृव्यादौ तथापि पितृव्य भ्रातृ मातुलानामेकोद्दिष्टं च पार्वणमिति क्षयाहोपक्रमे पुलस्त्योक्तेश्च विकल्पः केचित्तापस्तंबादिवाक्या
नि श्रुक्रमाच्च प्रमीतानां नैव कार्यं सपिंडनं तस्य पितृव्यादिपरत्वाद् कृतसपिंडन पितृव्यादिपराणीत्याहुः माता सपत्नमाता
एकोद्दिष्टं तु कनिष्ठपरमिति पृथ्वीचंद्रोदयेप्येवं विशेषस्त्वधिकारिनिर्णये प्रागुक्तः केचित्पुत्रान्तराभावेपि पितामहवार्षिक
मप्यावश्यकं पुत्राभावे न तत्सुतः पत्नी माता तथा पिता वित्ताभावेपि सच्छिष्यः कुर्यात्तस्यौर्ध्वदैहिकमिति मार्कंडेयपुराणा
दित्याहुस्तन्न पौत्रेणैकादशाहादिकर्तव्यं श्राद्धषोडशमिति कातीये विशेषोक्तेः अथ क्षयाहद्वैधे निर्णयः तत्रैकोद्दिष्टं मध्या
न्हे कार्यम् मध्यान्हश्च पंचधा विभक्त दिन तृतीय भाग इति माधवः आमश्राद्धं तु पूर्वाण्हे एकोद्दिष्टं तु मध्यमः पार्वणं चापरा·
ण्हे तु प्रातर्वृद्धिनिमित्तकं इति हारीतोक्तो प्रातः शब्दसाहचर्यात् तत्रापि कुतुपादिषु मुहूर्तेष्विति तत्र यं प्रारभ्य कुर्वीत श्राद्धं
कुर्यादारोहिणं बुधः विधिज्ञो विधिमास्थाय रोहिणं तु न लंघयेत् इति गोलमोक्तेरेतत्परत्वात् रौहिणो नवमो मुहूर्तः मैथिलाः
श्राद्धकौमुदी चैवम् अन्यथा ऊर्ध्वं मुहूर्तात्कुतुपाद्यन्मुहूर्तचतुष्टयम् मुहूर्तपंचकं ह्येतत्स्वधाभवनमिष्यत इत्यादि विरो-
धात् दीपिकापि एकोद्दिष्टमुपक्रमेत कुतप इति माधवीये व्यासोपि कुतुप प्रथमे भागे एकोद्दिष्टमुपक्रमेत् आवर्तन समी
पे वा तत्रैव नियतास्मनान् पृथ्वीचंद्रोदयेप्येवम् तेन कुतुपादि रौहिणान्तो मुख्यः कालः दिनद्वये तद्व्याप्तौ समव्याप्तौ च पूर्वा

निषमव्याप्तावाधिक्येननिर्णयः अव्याप्तौपूर्वैव परविद्धायानिषेधात् सा च पूर्वदिनेरोहिणलंघनापन्नेः परेवेतिगौडाः श्रुङ्क
कृष्णवशात्सर्वदर्पाधैर्वाव्यवस्थेत्यन्ये तन्न परविद्धानिषेधप्राबल्यात् अत्रमूलंकालमाधवीयेज्ञेयम् पार्वणंत्वपराण्हेक
र्यंपूर्वोक्तवचनात् मध्यान्हव्यापिनीयास्यात्सैकोद्दिष्टेतिथिर्भवेत् अपराण्हव्यापिनीयापार्वणेसातिथिर्भवे दिनद्वये
वंद्रोदयेहइगौतमोक्तेश्च पूर्वेद्युरेवपरेद्युरेवबाऽपराण्हव्याप्तौसैवग्राह्या दिनद्वयेतव्याप्तौनदस्पर्शेशतः समव्याप्तौवापू
र्वेव विषमव्याप्तौत्वधिकाग्राह्या व्यपराण्हव्यापिनीस्यादाब्दिकस्ययदातिथिः महतीयत्रतद्वृद्धौप्रशंसंतिमहर्षय
इति मरीचिस्मृतेः दर्शंचपूर्णमासंचपितुःसांवत्सरंदिनम् पूर्वविद्धामकुर्वाणोनरकंप्राप्नुयात्पराकैनारदोक्तेः व्यहे
व्यव्यापिनीचेत्स्यान्मृताहस्ययदातिथिः पूर्वविद्धामकर्तव्यात्रिमुहूर्ताभवेद्यदीतिस्कंदोक्तेः पूर्वस्यांनिर्वपेत्पिंडानिसां
गिरसभाषितमितिहेमाद्रौपाठः तत्रैवषड्मनुः नव्यहव्यापिनीचेत्स्यान्मृताहस्यचयातिथिः पूर्वविद्धैवकर्तव्यात्रि
मुहूर्ताचयाभवेत् मदनरत्नेप्येवम् यत्तुकार्ष्णाजिनव्यासो अन्होस्तमयवेलायांकलामात्रायदातिथिः सैवप्रत्याब्दि
केज्ञेयानापराप्रुत्रहानिदेतित्रिमुहूर्तस्मृतिः पूर्वेद्युःसायंत्रिमुहूर्ताभावेतुपरैव त्रिमुहूर्तानचेद्ग्राह्यापरैवकुतपेहिसे
तिकालादर्शेगोभिलोक्तेः कालादर्शेपि प्रत्याब्दिकेप्येवमेवातिथिर्ग्राह्यापराण्हिकी उभयत्रतथात्वेतुमहत्त्वेनविनि·
र्णयः समत्वेपूर्वविद्धैवस्यात्तथात्वेपिसायदि त्रिमुहूर्ताभवेत्सायंसर्वश्रेयोविनिर्णयः अन्यत्रापि सायंतन्यपरत्र
चेन्मृततिथिःसैवाब्दिकेमासिकेग्राह्यासान्धपराण्हयोर्यदिनदायत्राधिकासामता तुल्याचेदुभयापराण्हसमयेपू
र्वानन्वेत्तद्वयेपूर्वैवत्रिमुहूर्तगास्तसमयेनोचेत्परैवोचिता माधवपथ्वी चंद्रोतु दिनद्वयेपराण्हव्याप्तौअंशतःसम·

व्याप्तौ च क्षये पूर्वा वृद्धौ परा सर्वदैवापरैवेत्युक्तेः अपराह्णद्वयव्यापिन्यनीनस्य च या तिथिः क्षये पूर्वा च कर्तव्या
वृद्धौ कार्या तथोत्तरेति बोधायनोक्तेः क्षयाहस्य तिथिर्या तु अपराह्णद्वये यदि पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तथोत्तरेति
बृहन्नारदीयाच्चेत्याहुः वृद्धिक्षयौ चात्र परतिथेर्न तु प्रात्यतिथेः तस्याः क्षये पराह्णद्वयव्याप्तेरसंभवात् तदाह मा-
धवः नयात्यतिथिगौ वृद्धिक्षयौ पूर्वतिथेस्तु ताविति यत्तु पृथ्वीचंद्रः पूर्वोक्तवचनेषु यत्र सायाह्नास्तमययोगि
नी तिथिरुक्ता तत्रापराह्णव्यापिनी ज्ञेया सायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेदिति मात्स्यादौ सायाह्ननिषेधात्
यच्च त्रिमुहूर्तादिग्रहणं तच्छ्राद्धापराह्णरूपत्रिमुहूर्तपरमित्याह तद्धेमाद्रिमदनरत्नकालादर्शादिग्रंथविरोधाल्लक्षणा-
पत्तेश्चाचिंत्यम् तस्मात्पूर्वोक्तमेव साधु यदा विघ्नवशाद्दिने सांवत्सरं श्राद्धं न कृतं तदा रात्रावपि कार्यम् मृताहं सम
तिक्रम्य चंडालेष्वभिजायत इति मरीचिना मृताहातिक्रमे दोषोक्तेः न च नक्तं श्राद्धं कुर्वीतारब्धे चाभोजनसमापनमित्या
पस्तंबेन गौणकालोक्तेश्चेति माधवः आरब्धे श्राद्धे विघ्नवशाद्रात्रिभागे पाते भोजनसमाप्त्यनंतरं शेषं कार्यं शेषसमा-
प्तिः परदिन एवेति हरदत्तः ग्रहणदिने वार्षिकप्राप्तौ तद्दिन एवान्नेनामेन हेम्ना वा कुर्यात् नोत्तरदिने इत्युक्तं प्राग्ग्रह-
णनिर्णये तच्च प्रथमाब्दिकं त्रयोदशे मलमासे कार्यमन्यथा न प्रत्यब्दं द्वादशे मासि कार्या पिंडक्रिया सुतैः क्वचित्त्र-
योदशेपि स्यादाद्यं मुक्त्वा तु वत्सरमिति लघुहारीतोक्तेः इदमंत्याधिकमासपरं द्वादशे त्रयोदशे चानीत इत्यर्थः तेन य
त्र द्वादशमासिकं शुद्धमासे भवति तत्र त्रयोदशेऽधिक एवाब्दिकं कार्यम् यत्राधिकमध्ये द्वादशमासिकं तत्र तस्य द्विरा
वृत्तिं कृत्वा चतुर्दशे शुद्ध एव प्रथमाब्दिकमिति माधवीये हेमाद्रौ चैवम् द्वितीयाब्दिकं तु शुद्धमास एव नाधिके-

दर्शेवार्षिकंचेत्तदाप्र-
नाप्युभयोः मलमासमृतानांतुयदासएवाधिकःस्यात्तदातत्रैवकार्यमन्यथाशाद्धएवेतिप्रागुक्तम् दर्शेक्षयाहेसंप्राप्तेकथंकुर्वंतिया
र्षेवार्षिकंकृत्वा ततःपिंडपितृयज्ञोदर्शश्राद्धंचेतिनिर्णयदीपेक्रमउक्तः स्मृतिसारेपि दर्शेक्षयाहेसंप्राप्तेकथंकुर्वंतिया
ज्ञिकाः आदौक्षयाहंनिर्वर्त्यपश्चाद्दर्शोविधीयतइति युक्तंत्वेवम् तद्वचनेमूलाभावात् पिंडयज्ञंततःकुर्यात्ततोन्वाहा
र्यकंबुधइतिदर्शश्राद्धेपिंडपितृयज्ञानंतर्यात्तस्याब्दिकेप्यतिदेशात्प्राप्तेः पितृयज्ञानंतरंवार्षिकंततोदर्शश्राद्धमिति व्य
निपंगस्तनभवत्येव तस्यार्थिकत्वात् कालादर्शेपि निमित्तानियतश्चात्र पूर्वानुष्ठानकारणमिति सर्वान्प्रत्येकरूप्या
भावात् क्षयाहनिमित्तस्यानियतत्वं देवजानीयेप्येवम् एवंमासिकादिष्वपि ज्ञेयम् मत्स्यब्दंयोयथाकुर्यात्सनान्यपीति
सर्वातिदेशात् मृताहेवृषोत्सर्गउक्तो हेमाद्रौविष्णुधर्मे अयनद्वितयेचैव मृताहेबांधवस्यच उत्सृजेन्नीलवृषभंकौमु-
द्याःसमुपागमे कौमुदीकार्तिकी अथशाद्धश्राद्धम् दिवोदासीये सपिंडीकरणादूर्ध्वंयावदब्दत्रयंभवेत् तावदेवनभो
क्तव्यंक्षयेहनिकदाचन वर्षांतसपिंडनेप्येतत्तुल्यम् मृताहनितुसंप्राप्तेयावदब्दचतुष्टयम् वहिःश्राद्धंप्रकुर्वीत-
नकुर्याच्छ्राद्धभोजनम् प्रथमेस्थीनिमज्जाचद्वितीयेमांसभक्षणम् तृतीयेरुधिरंप्रोक्तंश्राद्धंशाद्धंचतुर्थकमितिश्रा
द्धकाशिकोक्तेः शाद्धंकिंचिदितिज्ञेयम् स्मृत्यंतरे सप्तत्रिंशच्चयोमासान्श्राद्धेभुंक्तेतमोहतः सपंक्तिदूषितःपापःप्रे
ताशीचभवेत्तुसः तत्रप्रथमेब्देवर्षांतसपिंडनपक्षेमृताहात्पूर्वेन्हि सपिंडनमब्दपूर्तिश्राद्धंचकृत्वापरेद्युर्वार्षिकंकु-
र्यादिति स्मृत्यर्थसारेउक्तम् हेमाद्रिस्तु मृताहेसपिंडीकरणेनैववार्षिकसिद्धिः पूर्णेसंवत्सरेपिंडःषोडशःपरिकी-
र्तितः तेनैवचसपिंडत्वं तेनैवाब्दिकमिष्यतइतिवचनादित्याह इदमेवचयुक्तं अथक्षयाहाज्ञानेमरीचिः श्राद्धवि-

घेसमुपसन्नेअविज्ञानेमृतेहनि एकादश्यांतुकर्तव्यं कृष्णपक्षेविशेषतः विशेषतइत्युक्तेः शुक्लैकादश्यामपि बृहस्पतिः न-
ज्ञायतेमृताहश्चेत्प्रमीतेप्रोषितेसति मासश्चेत्प्रतिविज्ञातस्तद्दर्शेस्यात्तथाब्दिकम् दिनमासौनविज्ञातौमरणस्ययदापु-
नः प्रस्थानमासदिवसौग्राह्यौपूर्वोक्तयादिशा मदनरत्नेभविष्ये मृताहंयोनजानातिमासंवापिनतात्मज तेनका-
र्यममावास्यांश्राद्धंसांवत्सरंसदा दिनमेवतुजानातिमासंनैवतुयोनरः मार्गशीर्षेतथामाघेमाघेवातद्दिनंभवेत् निर्ण-
यामृतेतु यदामासोनविज्ञातोविज्ञातंदिनमेवतु तदाचाषाढकेमासिमाघेवातद्दिनंभवेत् इतिबृहस्पतिस्मृतेराषाढोप्यु
क्तः कालादर्शेपि मासाज्ञानेदिनज्ञानेकार्यमाषाढमाघयोरित्युक्तम् हेमाद्रौप्रभासखंडे मृताहंयोनजानातिमासंवा
पिकथंचन तेनकार्यममावास्यांश्राद्धंमाघेथमार्गके भविष्ये मृतवार्ताश्रुतेर्ग्राह्योतौपूर्वोक्तक्रमेणतु पूर्वोक्तेतिमस्था
नदिनाज्ञानेमासज्ञानेचतद्दर्शेमासाज्ञानेदिनज्ञानेचमार्गादावितिचच्छ्रवणदिनेपिज्ञेयमित्यर्थः श्रवणदिनेमासा
ज्ञानेमाघमार्गदर्शेकार्यम् पूर्वोक्तप्रभासखंडात् अतोत्रलोपइतिशूलपाण्युक्तंहेयम् तिथितत्त्वेयमः गतस्यनभ-
वेद्वार्तायावद्द्वादशवार्षिकी प्रेतावधारणंतस्यकर्तव्यंसतबांधवैः यन्मासियदहर्यातस्तन्मासितदहःक्रिया दिनाज्ञा
नेकुहूस्तस्यआषाढस्याथवाकुहूः अथश्राद्धविघ्ननिर्णयः तत्रविप्रस्यनिमंत्रणोत्तरंसूतकेमृतकेवाशौचाभावः नि
मंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणि निमंत्रणाद्धिविप्रस्यस्वाध्यायाद्विरतस्यच देहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्व
चिदितिब्राह्मोक्तेः कर्तुस्तुविष्णुराह व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे आरब्धेसूतकंनस्यादनारब्धेतुसूतकम्
श्राद्धेप्रारंभस्तेनैवोक्तः प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः नांदीमुखंविवाहादौश्राद्धेपाकपरिक्रियेति माध

शीयेब्राह्मोपि श्राद्धादौपितृयज्ञेचकन्यादानेचनोभवेत् मिताक्षरायांस्मृत्यंतरे सद्यःशौचंप्रकृत्य यज्ञेसंभृतसंभारेवि
वाहेश्राद्धकर्मणीति निधनत्वादिगौडग्रंथास्तुनिमंत्रणोत्तरंकर्तुर्भोक्तुश्चनाशौचं निमंत्रणोत्तरंश्राद्धेप्रारंभःस्यादि-
तिस्मृतिरितिविष्णूक्तेः यत्तुश्राद्धेपाकपरिक्रियेतितद्दर्शश्राद्धविषयमित्याहुः दातृगृहेमरणादौब्राह्मोक्तम् भोजनार्द्धे
तुसंभुक्तेविप्रैर्दातुर्विपद्यते गृहे इतिशेषः यदाकश्चित्तदोच्छिष्टंशेषंस्य त्वासमाहिताः आचम्यपरकीयेनजलेनशु
चयोद्विजाइति अस्यश्राद्धविषयत्वंहेमाद्रिणोक्तम् पृथ्वीचंद्रोदयेप्येवम् ममतुप्रतिभाति इदंविवाहादिविषयम् न
तुश्राद्धविषयं नसदाभावात् विवाहोत्सवयज्ञेष्विति उपक्रम्य भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके अन्यगेहोदकाचां
ताःसर्वेतेशुचयःस्मृताः इतिषट्त्रिंशन्मतेकवाक्यात् निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणीतिपूर्वोक्तविरोधाच्च श्रा
द्धेतुयद्यपिविष्णुनापाकोत्तरमाशौचाभावउक्तस्तथापिकर्तुरेवसः भोक्तुर्दोषोस्त्येव अपिदातृगृहीत्रोश्च सूतकेमृतके
तथा अविज्ञानेनदोषःस्यात्श्राद्धादिषुकथंचन विज्ञानेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमात् इतिमाधवीये ब्राह्मो
क्तेः आदिशब्देनाशौचमुच्यते तच्चाहविष्णुः ब्राह्मणादीनामाशौचेयःसकृदेवान्नमश्नाति तस्यतावदाशौचंयाव
त्तेषामाशौचव्यपगमे प्रायश्चित्तंकुर्यादिति यत्तुदेहेपितृषुतिष्ठत्सुनाशौचंविद्यतेक्वचित् इतिब्राह्मंतत्श्राद्धकाली
नस्यनिषेधकंनतदुत्तरकालीनस्य शुद्धिदीपस्तु निमंत्रितेष्वित्यामश्राद्धपरम् भोजनार्द्धेष्वित्यादित्वन्नश्राद्धपर
मित्याह प्रायश्चित्तंत्वाहमार्कंडेयः भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः एतत्कामतः अभ्यासेशंखः ब्राह्म
णस्यतथाभुक्त्वामासमेकंव्रतीभवेदिति अज्ञानात्तुछागलेयः एकाहंत्र्यहंपंचसप्तरात्रमभोजनम् ततःशुचि-

भवेद्विप्रः पंचगव्यंपिबेन्नरइतिवर्णक्रमेणेदं अभ्यासेतु द्वैगुण्यमित्यादिमिताक्षरामाधवीयादौ ज्ञेयम् मिताक्षरामाध
वादौतुश्राद्धकर्तुर्भोक्तुश्च सर्वथादोषाभावउक्तः आशौचमध्येश्राद्धदिनप्राप्तौतुमाधवीयेकालादर्शेचऋष्यशृंगः देयंपि
तृणांश्राद्धंतुआशौचंजायतेयदा आशौचेतुव्यतिक्रांतेतेभ्यःश्राद्धंप्रदीयते श्राद्धचिंतामणौज्योतिषे प्रतिसांवत्सरंश्रा-
द्धंआशौचात्परतस्तुयत् मलमासेपितत्कार्यमितिभागुरिभाषितम् आशौचांत्यदिनत्वेननिमित्तत्वादित्यर्थः एतन्मा
सिकादिपरंनदार्शिकादौ अतएवसद्दर्शनभाष्ये अपरपक्षेपिन्याणीतिनियमात् कृष्णपक्षश्राद्धलोपेप्रायश्चित्तमेव
नतुगौणकालेकरणं नचोपवासः येरोदितानांनित्यानांकर्मणांसमतिक्रमे स्नानकृच्चतलोपेच प्रायश्चित्तमभोजनमि
तिमनूक्तेरित्युक्तम् आशौचेतुप्रायश्चित्तमपिन मुख्यकालेअनधिकारात् आशौचांतेसंभवेतुव्यासः श्राद्धविघ्नेसमु
त्पन्नेत्वंतरामृतसूतके अमावास्यांप्रकुर्वीतशुद्धावेकेमनीषिणः हेमाद्रौषट्त्रिंशन्मतेपि मासिकेचाब्दिकेसन्निहसंप्राप्तेमृ
तसूतके वदंतिशुद्धौतत्कार्यंदर्शेचापिविचक्षणाः गोभिलः देयेप्रत्याब्दिकेश्राद्धेअंतरामृतसूतके आशौचानंतरंकुर्या
त्तन्मासेदुक्षयेतथा मरीचिः श्राद्धविघ्नेसमुत्पन्नेप्यविज्ञातेमृतेहनि एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः विशेषत
इत्युक्तेः शुक्लैकादश्यामपि आशौचेनरविघ्नेएतदितिमाधवपृथ्वीचंद्रौ अत्रिः नदहन्श्वेत्सदुष्येतकेनचित्सूतकादि-
ना सूतकानंतरंकुर्यात्पुनस्तदहरेवचेतितत्पूर्वकालाभावेज्ञेयम् एतदाब्दिकेतरश्राद्धपरम् यच्चदेवलः एकोद्दिष्टेतुसं
प्राप्तेयदिविघ्नःप्रजायते मासेन्यस्मिंस्तिथौतस्मिन्श्राद्धंकुर्यात्प्रयत्नतः इतितदपिमासिकपरमितिमदनरत्नेहेमाद्रौच
इदमपिपूर्वकालासंभवे व्याध्यादौविस्मरणेचेवंज्ञेयम् अथभार्यारजोदर्शने तत्रदार्शिकमामेनकार्यम् श्राद्धविघ्ने

द्विजातीनामामश्राद्धंप्रकीर्तितम् अमावास्यादिनियतंमाससंवत्सरादृतेइतिहेमाद्रौहारीतोक्तेः व्याघ्रपादोपि आर्तवेदेश
कालानांविप्लवेसमुपस्थिते आमश्राद्धंद्विजैःकार्यंशूद्रःकुर्यात्सदैवहीति दीपिकापि दर्शेतुभार्यार्त्तवेत्यामश्राद्धविधि
प्रवासिविधुराद्याश्चान्वरेयुर्द्विजाः यत्तुनरस्क पाकाभावेद्विजातीनामामश्राद्धंविधीयतइतिसुमंतूक्तेः पाककर्त्रंतरसत्वे
न्नेनान्यथामेनेत्युक्तम् मासिकानिसपिंडानिअमावास्यातथाब्दिकम् अन्नेनैवतुकर्तव्यंयस्यभार्यारजस्वलेतिकालि
कायांवचनाच्च कालादर्शेतुस्त्रियारजोदर्शनेदर्शश्राद्धंपंचमेहनीतिपक्षांतरमुक्तम् पारिजातेप्येवम् एवंमहालययुगा
दावपि आब्दिकंतुरजोदर्शनेपिताद्दिनएवकार्यम् पुष्पवत्स्वपिदारेषुविदेशस्थोप्यनग्निकः अन्नेनैवाब्दिकंकुर्याद्धेम्ना
वामेननकर्हिचिदितिमाधवीयेलौगाक्षिस्मृतेः मरीचिरपि अनग्निकःप्रवासीचयस्यभार्यारजस्वला आमश्राद्धंप्रकुर्वी
तनतत्कुर्यान्मृतेहनि कार्ष्णाजिनिः आपन्नोप्याब्दिकंनैवकुर्यादामेनकुत्रचित् अन्नेनतदमायांवाकुर्याद्वाहरिवासः
रे प्रयोगपारिजाते रजस्वलायांभार्यायांक्षयाहंयःपरित्यजेत् सयेनरकमाप्नोतियावदाभूतसंप्लवम् मासिकानिसपिं
डनंअमावास्यातथाब्दिकम् अन्नेनैवतुकर्तव्यंयस्यभार्यारजस्वला देवयाज्ञिकनिबंधेपि भर्तुःश्राद्धंपंचमेन्हिकुर्या
द्भार्यारजस्वला पुत्रःपित्रोःप्रकुर्वीतमृताहनिशुचिर्यतः कालादर्शेपि रजस्वलांगनोनग्निर्विदेशस्थोथवाब्दिके दर्शा
दाविवनामेनत्वन्नेनश्राद्धमाचरेत् अन्यत्रापि विदेशकोवाविगताग्निकोवारजस्वलायामपिधर्मपत्न्यां श्राद्धंमृता
हेविदधीतपाकेनामेनहेम्नानतुपंचमेन्हि. एवंमासिकेपि यत्तुमरीचिः आब्दिकेसमनुप्राप्तेयस्यभार्यारजस्वला पंचमेह
नितच्छ्राद्धंनतत्कुर्यान्मृतेहनि माधवीये श्राद्धंतदानकर्तव्यंकर्तव्यंपंचमेहनीत्युत्तरार्धंतदपुत्रस्त्रीकर्तृकश्राद्धविष

यम् अपुत्रात्तु यदा भार्या संप्राप्ते भर्तुराब्दिके रजस्वला भवेत्सा तु कुर्यात्तत्पंचमेहनीति श्लोकगौतमोक्तेः देवे कर्मणि पित्र्ये
च पंचमेहनि शुध्यतीति प्रभासखंडाच्च अन्यशक्तिस्तादेव तत्र पंचमेहन्यर्थात् श्राद्धं प्राप्तमिति वचनं व्यर्थं स्यात् एवं गर्भि
णीसूतिकादिश्च कुमारी चाप्यरोगिणी यदाशक्तास्तदान्येन कारयेत्प्रयतात्स्वयमिति हेमाद्रौ भविष्योक्तेः अनुपनीतस्त्री
शूद्राश्च श्राद्धं मूलिज्ञाकारयेयुः स्वयं चामंत्रकं कुर्युरिति स्मृत्यर्थसाराच्चान्यद्वाराकरणनिवृत्त्यर्थत्वात्तस्य त्वदुक्तदिशा
आशौचानंतरं श्राद्धकर्तव्यता वेदकवाक्यवैयर्थ्याच्च अतः प्रागुक्तमरीच्युक्तेः पत्नी पंचमेहनीति युक्तम् यत्तु समाहाल
पितृदेवानां भवेद्योग्या व्रतार्चनेइति तद्भोगनिवृत्तिपरमिति हेमाद्रिभिन्नसर्वनिबंधसिद्धांतः हेमाद्रिस्तु श्राद्धादौ स्त्रिया
स्तु हेत्वधिकारात्तस्यां रजोदुष्टायां तन्निवृत्तेरेकभार्येण पंचमेहनि कार्यं प्रागुक्तमरीच्युक्तेः भार्यांतरसत्त्वे तु पुष्पवत्स्वपी
ति वचनात्तद्दिन एवेत्याह दीपिकापि भार्यैर्नौसति पंचमे चादिवसे स्याद्वार्षिकं मासिकं पक्वान्नैर्बहुभार्यकस्त्वधिकृते पत्न्यं
तरेति ष्ठति कुर्यान्न द्वितयस्त्वमुख्यदिवसे इतितच्चिंत्यम् सहाधिकारः सहत्वश्रुत्याचाएकफलभाक्त्वेन चापाककर्तृत्वे
नवा नाद्यः तदभावात् पाणिग्रहणाद्धि सहत्वं कर्मस्विति स्यस्याग्निसाध्यकर्मविषयत्वात् आन्हिकस्य च निरग्नेरपि पा
केनैवोक्तेः स्मार्ताग्निसाध्यत्वानियमाच्चामपरुध्येति पूर्वोक्तवचनसत्त्वाच्च कथं च भार्यांतरसत्त्वेधिकारः ज्येष्ठायानन्निने
तरेतिनियमात् ज्येष्ठापरत्वे च तेनैव सिद्धेर्वचनवैयर्थ्यात् न द्वितीयः अविभक्तभ्रातृष्वेकस्याशक्तिस्त्वेन्यस्याधिका
रापत्तेः न तृतीयः प्रथासानिर्देशसूतिकारोगिण्यादिष्वप्यकरणापत्तेः आरभेतनवैः पात्रैरन्नारंभं च बांधवैरिति देवलो
क्तात्मनेपदात्स्वस्य बांधवानां च पाककर्तृत्वोक्त्याविरोधाच्च न तस्मान्निपपाचाशक्तौ नाजनकनोदनीतिपाद्यादिलिंगा

पतिव्रता तांमृताहनिसंप्रासेपृथक्पिंडोनियोजयेत् प्रत्यब्दंचनवश्राद्धंयुगपत्तुसमाचरेत् तद्येषांवार्षिकमेकोद्दिष्टमुक्तम्
तद्विषयम् प्रत्यब्दंचमृताहनीत्यन्वयः नवश्राद्धंयुगपदिति दर्शेवर्गद्वयवदेकतंत्रेण पृथगित्यर्थमाह हेमाद्रिः एतन्मृत-
तिथेर्भेदविषयमिति पृथ्वीचंद्रनिर्णयामृतादयः देवयाज्ञिकोप्येवम् पराशरमाधवस्तु गार्ग्यभृग्वादिवचनात् लौगाक्षिवा
क्येसमासेनपाकादितंत्रैक्येनदर्शेवर्गद्वयवत्पृथक्श्राद्धंकुर्यात् नवश्राद्धंचतथेत्याह पृथ्वीचंद्रचंद्रिकादयस्तु द्वयोरेकपिं
डदानंलौगाक्षिवचनंचापद्विषयम् पृथक्पिंडदानंतुमुख्यःकल्पः तदाहवृद्धपराशरः आरुह्यभर्तुश्चितिमंगनायाभावो
तिमृत्संखलुसत्ययुक्ता एकादशाहेतुतयोर्विधेयंश्राद्धंपृथक्स्वर्गमपेक्ष्यसद्भिः एकत्वमिच्छंतिमतिप्रहीणाएकादशाहा
दिष्वपेनृनार्योः तेस्वर्गमार्गंविनिहत्यकुर्युः स्त्रीसत्वघातान्नरकाधिवासं भर्त्रासहमृतायातुनाकलोकमभीप्सती साहिश्रा
द्धंपृथक्पिंडान्नैकत्वंतुमृतत्वयोः पृथगेवाहिकर्तव्यंश्राद्धमेकादशाहिकम् यानिश्राद्धानिसर्वाणितान्युक्तानिपृथक्
पृथगिति विश्वादर्शेपि मातुर्गयापृकारवृद्धिमृताहेषुमहालये श्राद्धंकुर्यात्पृथक्देवंतंत्रंवानुगतावपि एकचित्यांसमारू
ढयमृतयोरेकवह्निषि पित्रोःपिंडान्पृथक्दद्यात्पिंडंत्वापरतस्ततः त्यग्निस्मृतेरित्याहुः यत्तुषट्त्रिंशन्मते एकत्वंसाग
ताभर्तुःपिंडेगोत्रेचसूतके नपृथक्पिंडदानंतुतस्मात्पत्नीषुविद्यते इतितद्दर्शादिपरम् चंद्रप्रकाशेपि एकचित्यांसमा
रूढौदंपतीप्रमृतौयदि पृथक्श्राद्धंप्रकुर्वीतपत्युरेवक्षयेहनि मृतानामपिभृत्यानांभार्याणांपतिनासह पूर्वकस्यमृत
स्यादौद्वितीयस्यततःपुनः तंत्रेणश्रपणंकृत्वाश्राद्धंस्वस्वक्षयेहनि तृतीयस्यततःकुर्यात्सन्निपातेष्वयंक्रमः इति सह
गमनेसर्वत्रश्राद्धार्थमेकपाकइत्याह मदनरत्नेप्रचेताः एकचित्यांसमारूढौम्रियेतेदंपतीयदि तंत्रेणश्रपणंकुर्यात्पृथ-

अन्यादिने स्त्रीमरणे पतिमरणादिनगणनयाशौचपिंडदानैकाद
कृपिंडंसमापयेत् पृथ्वीचंद्रोदयेप्येवम् अत्रभर्तुराशौचमध्ये न्यादिनेस्त्रीमरणेपतिमरणादिनगणनयाशौचपिंडदानैकाद
शाहादिकार्यम् मात्रपक्षिणीवृद्धिः मृतंपतिमनुव्रज्यपत्नीचेदनलंगता नतत्रपक्षिणीकार्यापितृकादेवशस्यति पु
त्रोन्योवाग्निदस्तस्यास्तावदेवाशुचिस्तयोः नवश्राद्धंसपिंडंचयुगपत्तुसमापयेत् इतिषडशीतिमतात् यदानारीविशे
दग्निंप्रियस्यप्रियवांछया तदाशौचंविधातव्यंभर्त्राशौचक्रमेणहीनिलघुहारीतोक्तेश्च भर्त्राशौचोत्तरमन्वारोहणेतु
त्र्यहमाशौचं ऋग्वेदवादात्साध्वीस्यान्नभवेदात्मघातिनी त्र्यहाशौचेतुनिर्वृत्ते श्राद्धंप्राप्नोति शास्त्रतइति ब्राह्मोक्तेरिति
पृथ्वीचंद्रापरार्कौ एतदन्वारोहणएवनत्वेकचितौ ऋग्वेदवादः इमानारीरविधवेत्यादि एतदसवर्णापराभत्स्यन्ये स्मार्त·
गौडास्तु देशांतरमृतेपत्यौसाध्वीतत्पादुकाद्वयमित्युपक्रम्यब्राह्मे त्र्यहाशौचेतुनिर्वृत्ते इत्युक्ते भर्त्राशौचोत्तरमन्वारोह·
णेत्र्यहः सहगमनेतुपूर्णदशाहादि पिंडास्तुदशापिसहैव तथाचजनकशूलपाणिशङ्खलिखितधृतव्यासः संस्थितंप·
तिमालिंग्यप्रविशेद्याहुताशनं तस्याःपिंडादिकंज्ञेयंक्रमशःपतिपिंडवत् अन्विनापिंडदानंतुयथाभर्तुर्दिनेदिने तदर्थी
रोहिणीयस्मात्तस्मात्सानात्मघातिनीतिविष्णूक्तेश्च पृथक्चितौतुभर्त्राशौचमध्येतदूर्ध्वंवासत्यांत्र्यहेणदशापिंडाः अन्वि
तायाःप्रदातव्यादशपिंडास्त्र्यहेणतु स्वाम्यशौचेव्यतीतेतुतस्याःश्राद्धंप्रदीयतइतितत्रैवपैठीनसिस्मृतेः भर्त्राशौचोत्तरं·
मृतेतुचतुर्थेह्निश्राद्धम् शूलपाणिनात्विदमग्निपुराणीयत्वेनोक्तम् युद्धहतस्यसद्यःशौचेत्वन्वारोहणेत्रिरात्रम् एकचि-
तौतुसंस्थितंपतिमितिप्रागुक्तव्यासोक्तेः सद्यःशौचमित्याहुः अन्यसपिंडाशौचमध्येविदेशमृतान्वारोहणंत्वनाशक्यमेव
शुचिनायाअंगत्वात् अन्येतुरजोवत्याःसूतिकायाश्चगमननिषेधादितराशौचस्यानिषेधअन्यथाप्रत्यक्षभर्तृमरणेकागति

रित्याहुः तन्मूलवचनंविनानिंद्यमेव स्मृत्यर्थसारे-सहगमनेसर्वत्रश्राद्धपिंडादौपाकैक्यंकालैक्यंकर्त्रैक्यंनेति शूलपाणिमुदि-
श्चान्यकालेन्यतिथौचान्वारूढानस्याःश्राद्धंतस्यतिथौकार्यम् नभर्तृतिथौ पारणेमरणेनृणांतिथिस्तात्कालिकीस्मृतेति स्कांदा-
त् तिथिरेकैवजायतइत्यादिवचनाच्चेतिमदनरत्नपारिजातपृथ्वीचंद्रादयः अन्येतुतस्याःपतिमरणेनमृतप्रायत्वात् सहाग्र-
तःप्रवतोवातद्वत्स्याम्रियतेयदि तस्याःश्राद्धंप्रदातव्यंपृथक्पत्न्यःक्षयेहनीतिस्मृत्यंतरात् अग्रतःप्रवतोवापितद्वत्स्याम्रि-
यतेयदि तस्याःश्राद्धंकर्तेन कार्यंपत्न्यःक्षयेहनीतिपुराणसमुच्चयाच्चभर्तृतिथावेवेत्याहुः अत्रमूलंचिंत्यम् अत्रविशेषोहे-
माद्रौस्मृत्यंतरे मातामंगलसूत्रेणम्रियतेयादृशेदिने उद्दिश्यविप्रपंक्तौतांभोजयेच्चसुवासिनीम् अथश्राद्धसंपातेनिर्णयः
अत्रपित्रोर्मृततिथ्यैक्येक्रमेणदर्शेवर्गद्वयंतंत्रेणश्राद्धंकुर्यात् पौर्वापर्याज्ञानेतुपितृपूर्वकंकुर्यादितिहेमाद्रिःमा-
धवादयस्तु पित्रोःश्राद्धेसमंप्राप्तेनचेपर्युषितेपिवा पितृपूर्वंसुतःकुर्यादन्यत्रासतियोगतइतिकार्ष्णाजिनिस्मृतेः स-
र्वत्रापितृपूर्वंभिन्नप्रयोगमाहुः पार्वणैकोद्दिष्टयोःसंपातेमाधवीयेजाबालिः यद्येकत्रभवेयातामेकोद्दिष्टंचपार्वणम् पा-
र्वणंत्वभिनिर्वर्त्यएकोद्दिष्टंसमाचरेत् ग्रहदाहादिनायुगपन्मरणेभृगुः एककालेगतासूनांबहूनामथवाद्वयोः तंत्रेणश्र-
पणंकृत्वाकुर्याच्छ्राद्धंपृथक्पृथक् पूर्वस्यमृतस्यादौद्वितीयस्यततःपुनः तृतीयस्यततःकुर्यात्सन्निपातेत्वयंक्रमः ऋ-
ष्यशृंगः भवेद्यदिसपिंडानांयुगपन्मरणंतदा संबंधासत्तिमालोच्यतत्क्रमाच्छ्राद्धमाचरेत् गारुडे एकेनैवतुपाकेन-
श्राद्धानिकुरुतेनहि विकिरंत्वेकतःकुर्यात्पिंडान्दद्यात्पृथक्पृथक् अत्रानुगमनेचदाहसपिंडनादौविशेषंवक्ष्यामः अ-
त्रेः बहूनामथवाद्वाभ्यांश्राद्धंचेत्स्यात्समेहनि तंत्रेणश्रपणंकृत्वापृथक्श्राद्धानिकारयेत् पुलस्त्यः महारुग्योगयाश्रा-

क्षपिंडंसमापयेत् पृथ्वीचंद्रोदयेप्येवम् अत्रभर्तुराशौचमध्येन्यादिनेस्त्रीमरणेपतिमरणादिनगणनयाशौचपिंडदानेकाद
शाहादिकार्यम् नात्रपक्षिणीवृद्धिः मृतंपतिमनुव्रज्यपत्नीचेद्दिनलंघिता नतत्रपक्षिणीकार्यापितृकादेवशक्स्यति पु
त्रोन्योवाग्निदस्तस्यास्तावदेवाशुचिस्तयोः नवश्राद्धंसपिंडंचयुगपत्तुसमापयेत् इतिषडशीतिमतात् यदानारीविशो
द्ग्निंप्रियस्यप्रियवांछया तदाशौचंविधातव्यंभर्त्राशौचक्रमेणहीतिलघुहारीतोक्तेश्च भर्त्राशौचोत्तरमन्वारोहणेतु
त्र्यहमाशौचं ऋग्वेदवादात्साध्वीस्त्रीनभवेदात्मघातिनी त्र्यहाशौचेतुनिर्वृत्तेश्राद्धंप्राप्नोतिशाश्वतइति ब्राह्मोक्तेरिति
पृथ्वीचंद्रापरार्कौ एतदन्वारोहणएवनत्वेकचितौ ऋग्वेदवादः इमानारीरविधवेत्यादि एतदसवर्णापराभिस्त्वन्ये स्मार्त-
गौडास्तु देशांतरमृतेपत्यौसाध्वीतत्पादुकाद्वयमित्युपक्रम्यब्राह्मे त्र्यहाशौचेतुनिर्वृत्तेइत्युक्तेर्भर्त्राशौचोत्तरमन्वारोह-
णेत्र्यहः सहगमनेतुपूर्णंदशाहादि पिंडास्तुदशापिसहैवतथान्वजनकशूलपाणिशङ्खिलत्वधृतव्यासः संस्थितंप-
तिमालिंग्यप्रविशेद्याहुताशनं तस्याःपिंडादिकंज्ञेयंक्रमशःपतिपिंडवत् अन्वितापिंडदानंतुयथाभर्तुर्दिनेदिने तदर्था
रोहिणीयस्मात्तस्मात्सानात्मघातिनीतिविष्णूक्तेश्च पृथक्चितौतुभर्त्राशौचमध्येतदूर्ध्वंवासस्यांत्र्यहेणदशपिंडाः अन्वि
तायाःप्रदातव्यादशपिंडास्त्र्यहेणतु स्वाम्यशौचेव्यतीतेतुतस्याःश्राद्धंप्रदीयतइतितत्रैवपैठीनसिस्मृतेः भर्त्राशौचोत्तरं-
मृतेतुचतुर्थेन्हिश्राद्धम् शूलपाणिनात्विदमग्निपुराणीयत्वेनोक्तम् युद्धहतस्यसद्यःशौचेत्वन्वारोहणेत्रिरात्रम् एकचि-
तौतुसंस्थितंपतिमितिप्रागुक्तव्यासोक्तेः सद्यःशौचमित्याहुः अन्यसपिंडाशौचमध्येविदेशमृतान्वारोहणेत्वनाशौच्यमेव
शुचिंतायाअंगत्वात् अन्येतुरजोवत्याःसूतिकायाश्चगमननिषेधादितराशौचस्यानिषेधअन्यथाप्रत्यक्षभर्तृमरणेकागति

द्वगतासूनांक्षयेऽहनि तंत्रेणश्रपणंकृत्वाश्राद्धंकुर्यात्पृथक्पृथक् इदंचपृथक्पाकेनाभिन्नश्राद्धशक्तौपृथक्पाकेनसंबंधास
स्याश्राद्धभेदस्तुमुख्यःपक्षः एकत्रैवदिनेश्राद्धद्वयंप्राप्तंयदातदा चरेद्देवपुरावर्षात्पितुर्मातुश्चयत्कृतः एकस्मिन्यःक
रोत्यन्हि द्वयोःश्राद्धंयदाद्विजः तदापूर्वमृतस्यादौकृत्वास्नात्वायथाविधि पश्चात्पश्चान्मृतस्यैवपृथक्पाकैःसमाचरेत्
नैकस्मिन्दिवसेश्राद्धंत्रयाणांकुत्रचिद्द्विजः एकःकुर्यात्तथाप्राप्तेऽन्योभ्रातासमाचरेत् भ्रातर्यविद्यमानेतुतत्परेऽन्हिस-
माचरेत् अन्यथाश्राद्धहंतास्याच्छ्राद्धसंकरकृद्भवेत् इत्याश्वलायनोक्तेरितिपृथ्वीचंद्रः कात्यायनः द्वेबहूनिनिमित्ता
निजायेरन्नेकवासरे नैमित्तिकानिकार्याणिनिमित्तोत्पत्त्यनुक्रमात् जाबालिः श्राद्धंकृत्वातुतस्यैवपुनःश्राद्धंनतद्दिने नै
मित्तिकंतुकर्तव्यंनिमित्तानुक्रमोदयम् कालादर्शे नित्यदार्शिकयोश्चोदकुंभमासिकयोरपि दार्शिकस्ययुगादेश्चदार्शिका
लभ्ययोगयोः दार्शिकस्यचमन्वादेःसंपातेश्राद्धकर्मणः प्रसंगादितरस्यापिसिद्धेरुत्तरमाचरेत् अस्यदेवताभेदेपवादमा-
हसएव नित्यस्यचोदकुंभस्यनित्यमासिकयोरपि दर्शस्यचोदकुंभस्यदर्शमासिकयोरपि नित्यस्यचाब्दिकस्यापिदार्शिका
ब्दिकयोरपि युगाद्याब्दिकयोश्चैवमन्वाद्याब्दिकयोस्तथा प्रत्याब्दिकस्यचालभ्ययोगेषुविहितस्यच संपातेदेवताभेदात्
श्राद्धयुग्मंसमाचरेत् निमित्तानियतत्वात्तुपूर्वानुष्ठानकारणम् पित्रोस्तुपितृपूर्वत्वंसर्वत्रश्राद्धकर्मणि माधवीयेस्मृतिसंग्र-
हे काम्यतंत्रेणनित्यस्यतंत्रंश्राद्धस्यसिध्यति अथश्राद्धांगतर्पणम् पारिजातेपृथ्वीचंद्रोदयेचगर्गः पूर्वेद्युस्तिलोदकंदत्वाअ-
माश्राद्धंतुकारयेत् प्रत्यब्देनभवेत्पूर्वंपरेऽहनितिलोदकम् पक्षश्राद्धेहिरण्येचअनुव्रज्यतिलोदकम् नचानित्यतर्पणस्यायं
परेऽन्हःकल्पः ननुश्राद्धांगतर्पणमस्तीतिवाच्यम् यस्तर्पयतितान्विप्रःश्राद्धंकृत्वापरेऽहनि पितरस्तेनतृप्यंतिनचेत्कुप्यंति-

परेद्युःश्राद्धकृत्
वैभृशमितिगर्गेणफलनिंदार्थवादाभ्यांअंगत्वेनोक्तेः श्राद्धप्रक्रमाद्वार्षिकं बृहन्नारदीयेप्याब्दिकंप्रक्रम्य
मर्त्योयोनतर्पयतेपितॄन् तस्यतेपितरःक्रुद्धाः शापंदत्वाव्रजंतिहि पितृशब्दश्चश्राद्धेज्यवर्गपरः तेनतर्पणस्यपरेद्युरोर्डी
शयागवत्प्रस्तरप्रहरणवच्चेष्टदेवतासंस्कारकत्वानेनाब्दिकोदनेनित्यस्यापिश्राद्धतर्पणंकार्यमेव श्राद्धांगभूतस्यैवपरेद्युरु
क्तेः तदुक्तं प्रत्यब्दांगेतिलंदद्यात् निषिद्धेपिपरेहनि वर्गैकस्यवचोयेषा मन्येपांतुविवर्जयेत् कश्चिद्विशेषमाहगर्गः कृष्णे
भाद्रपदेमासिश्राद्धंप्रतिदिनंभवेत् पितॄणांप्रत्यहंकार्यंनिषिद्धाहेपितर्पणम् तर्पणंतिलतर्पणंनिषिद्धाहेपीत्युक्तेः सकृन्मह
लयेश्च स्यात् अष्टकास्वंतएवहि अत्रसप्तमीनिर्देशात् अंगतास्फुटैव तत्रजयानुजुहुयात् मंद्रंप्रायणीयायांमंद्रंभातः
सवनेइत्यादिवत् अस्यापवादोबृहन्नारदीये वृद्धिश्राद्धेसपिंड्यांचप्रेतश्राद्धेनुमासिके संवत्सरविमोकेचनकुर्यात्तिल
तर्पणम् तदयमर्थः दर्शेविप्रनिमंत्रणोत्तरंपाकारंभोत्तरंवाश्राद्धप्रयोगस्यारब्धत्वात् ब्रह्मयज्ञोत्तरंनित्यतर्पणंनैव
श्राद्धांगतर्पणस्यतंत्रेणप्रसंगेनवासिद्धिः ततःपूर्वंवैश्वदेवोत्तरंवाब्रह्मयज्ञकरणेश्राद्धांगतर्पणंपृथक्कार्यम् पित्रोर्वार्षि
केतुनित्यतर्पणंतिलवर्ज्यंकार्यम् नैवश्राद्धदिनेकुर्यात्तिलैस्तुपितृतर्पणम् श्राद्धंकृत्वापराण्हेचतर्पणंतुतिलैः सहेतिव
चनात् सप्तम्यांभानुवारेचमातापित्रोर्मृतेहनि तिलैर्यस्तर्पणंकुर्यात्सभवेत्पितृघातकइतिस्मृतिरत्नावल्यांवृद्धमनूक्ते
श्चअत्रनित्यतिलतर्पणेतिलमात्रनिषेधोनतुतर्पणस्यतिलैरित्यस्यवैयर्थ्यापत्तेः यत्तुकात्तीयं उपरागेपितुःश्राद्धेपाते
मायांचसंक्रमे निषिद्धेपिहिसर्वत्रतिलैस्तर्पणमाचरेदिति तत्परेद्युःश्राद्धांगतर्पणविषयमितिकेचित् श्राद्धाशक्तस्य
तत्स्थानापन्नतर्पणविषयमितियुक्तम् सकृन्महालयेपरेद्युस्तर्पणम् अष्टकासुतुसप्तम्यष्टमीश्राद्धयोरंतेतद्देवतर्ग

रूपस्य अन्नदक्षेतुगानृवर्गस्यापितीर्थश्राद्धेदर्शयेत् माघाघादिषष्टकाघदंते अनेकश्राद्धसंपातेतु यदितत्प्रसंगासिद्धिः तदान
दीपमेवतर्पणम् तंत्रत्वेतुश्राद्धसमसंख्यत्वेआदावंतेवा विषमसंख्यायांबक्रत्तुरोधइति तस्मात्श्राद्धांगतर्पणंसिद्धम् तद्वि
धिःसंग्रहे स्नात्वातीरंसमागत्यउपविश्यकुशासने संतर्पयेत्पितॄन्सर्वान्स्नात्वावस्त्रंचधारयेत् तर्पणोत्तरंनित्यस्नानं कृत्वे
त्यर्थः अपसव्यंततः कृत्वासव्यंजान्वाच्यभूतले नामगोत्रस्वधाकारैर्द्वितीयांतेनतर्पयेत् अत्रवस्त्रादिस्वरूपतोक्तास्मृत्य
र्थसारे वक्तरुद्रादितिस्कतान्श्राद्धार्थेतर्पयेत्पितॄन् तत्रचकुशानांदक्षिणेनैव अनादेशेदक्षिणंप्रतीयादितिसूत्रात् अत्र
प्रसंजलिमंत्राद्यवृत्तिः निर्वापवत्तत्संध्यार्घ्यदानवच्चद्रव्यभेदात् अवघातवेदिप्रोक्षणादौतुद्रव्यैकत्वान्नमंत्रावृत्तिः केचि
त्तुपरिव्याणमंत्रवत्क्रियमाणानुवादित्वेनकरणत्वाभावात्सकृदिच्छंति तन्न तत्रयूपद्रव्येस्यात्सरवीरसीतिकरणीभूतमं
त्रांतरसत्वादन्यतरेणव्यवधानापत्त्योभयोःकारणत्वायोगात् कर्तृभेदेनविकल्पायोगाच्चाक्रियमाणानुवादित्वंनत्वत्रत-
थेतिबौधायनादिवचनात्करणत्वमेव तेनावृत्तिरेवयुक्ता एवंनित्येपि यत्तुसंग्रहेनाम्नापठंति पित्रोःक्षयाहेसंप्राप्तेयःकु
र्यान्नित्यतर्पणम् आकरंतद्भवेत्श्राद्धंतत्तोयंरुधिरंभवेत् सर्वदातर्पणंकुर्याद्ब्रह्मयज्ञपुरःसरं मृताहेनैवकर्तव्यंकृतंचे
न्निष्फलंभवेत् तत्समूलत्वेसातिफलविषयम् यच्चपठंति कपिलः मन्वादिषुयुगाद्यासुदर्शसंक्रमणेषुच पौर्णमास्यांव्य
तीपातेदद्यात्पूर्वंतिलोदकम् अर्धोदयेगजच्छायेपर्वसुचमहालये भरण्यांचमघाश्राद्धेतदंतेतर्पणंविदुः शौनकः मा
तापित्रोर्मृताहेचपरेहनितिलोदकं कारुण्यश्राद्धविषयेसद्योदद्यात्तिलोदकम् एतन्निर्मूलम् अथतिलतर्पणनिषेधः गा
र्ग्यः भानौभौमेत्रयोदश्यांनंदाभृगुमघासुच पिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणम् स्मृत्यर्थसारे विवाहव्रतचूडा

सर्षपमर्धतदर्धकम् अर्थतदेव स्मृत्यर्थसारे तन्मासिनेत्याह तिलतर्पणम् हेमाद्रौ मरीचिः सप्तम्यां रविवारे च गृहे जन्मदिने तथा निशासंध्य
सुतार्थी न कुर्यात्तिलतर्पणम् यत्तु संग्रहे नंदायां भार्गवदिने कृत्तिकासु मघासु च भरण्यां भानुवारे च गजच्छायाकृयेतथा अयनद्वितये चैव म
न्वादिषु युगादिषु पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणमिति तच्चिंत्यम् पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः स्मृत्यादिविरोधा
त् अत्रापवादः पृथ्वीचंद्रोदये तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके निषिद्धेपि दिने कुर्यात्तर्पणं तिलमिश्रितं स्मृत्यर्थसारेपि तिथितीर्थविशेषे
षु कार्यं प्रेते च सर्वदेति गोभिलः तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम् तदभावे निषिंचेत्तु दर्भैर्मंत्रेण वा पुनः पतितस्यापि स्नोदकं च
श्यामः अथ वृद्धिश्राद्धम् तन्निमित्तं पृथ्वीचंद्रोदये ब्राह्मे जन्मन्यथोपनयने विवाहे पुत्रकस्य च पितॄन्नांदीमुखान्नाम तर्पयेद्विधिपूर्वकं
म् देवव्रते गर्भाधाने यज्ञे पुंसवने पुन नवान्नभोजने स्नाने ऊढायाः प्रथमार्तवे देवारामतडागादिप्रतिष्ठासूत्सवेषु च राज्याभिषेके
बालान्नभोजने वृद्धिसंज्ञकान् वनस्थाश्रम्यसंगच्छन्पूर्वेद्युः सद्य एव वा पितॄन्पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धये विष्णुपु
राणे यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् तत्रैव नामकर्मणि बालानां चूडा
कर्मादिके तथैव च निष्क्रमान्नप्राशनयोर्न श्राद्धमिति मैथिलाः पूर्वोक्तविरोधात् नानिष्टेति विरोधात् कल्पतरौ तथा
श्राद्धं अन्नप्राशनिकेतथेति राजमार्तंडाच्च मनुच्छंदोगपरिशिष्टम् सूर्येंद्वोः कर्मणी चेन्न तयोः श्राद्धं न विद्यते इति तत्तेषामेवे
ति कल्पतरुः बह्वृचकारिकायाम् स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु पुंसः सवनसीमंतचौलोपनयनेषु च विवाहे च
नामधेयप्रभृतिश्रौतकर्मणि इदं श्राद्धं प्रकुर्वीत द्विजातिर्वृद्धिनिमित्तकम् अन्येः षोडशसंस्कारश्रावण्यादिष्वपीष्यते वाप्या
द्युद्यापनादौ तु कुर्युः पूर्तनिमित्तकम् बोपदेवकालादर्शौ सीमंतव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाह

पञ्जननयोरुत्पत्तिप्रतिष्ठासूच पुंसूत्यावसथप्रवेशनसत्ताद्यास्यावलोकाश्च मलीमर्क्षिति पाभिषेकदयिताधनौचनांदीमुखम्
यत्तुकामधेनौ जलाशयप्रतिष्ठायांवृषोत्सर्गादिकर्मसु वत्सराभ्यंतरापिनोर्वृषस्योत्सर्गकर्मणि वृद्धश्राद्धंनकुर्वीतनतदन्यत्रसमाच
रेदिति तत्रजलाशयेवृद्धिश्राद्धस्यनिषेधोनतुकर्मांगस्येतिकेचित् अन्येत्वस्यानिर्मूलतामाहुः श्राद्धकौमुद्यांनिर्णयामृतेचमात्
स्ये अन्नप्राशेचसीमंतेपुत्रोत्पत्तिनिमित्तके पुंसवेचनिषेकेचनववेश्मप्रवेशने देववृक्षजलादीनांप्रतिष्ठायांविशेषतः तीर्थ-
यात्रावृषोत्सर्गेवृद्धिश्राद्धंप्रकीर्तितम् इदंचावश्यकं वृद्धौनलार्पितायेवैपितरोगृहमेधिभिः तद्धीनमफलंज्ञेयमासुरोविधि
रेवसइतिशातातपोक्तेः अत्रश्राद्धत्रयंसएवाह मातृश्राद्धंतुपूर्वंस्यात्पितॄणांतदनंतरम् ततोमातामहानांचवृद्धौश्राद्धत्र
यंस्मृतम् तत्कालमाहपृथ्वीचंद्रोदयेगार्ग्यः मातृश्राद्धंतुपूर्वेद्युःकर्माहनितुपैतृकम् मातामहंचोत्तरेद्युर्वृद्धौश्राद्धत्रयंस्मृ
तम् अशक्तौछन्दःशातातपः पूर्वाण्हेमातृकंश्राद्धंमध्यान्हेपैतृकंतथा ततोमातामहानांचवृद्धौश्राद्धत्रयंस्मृतम् अत्राप्यश
क्तौसएव पृथक्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे श्राद्धत्रयंप्रकुर्वीतवैश्वदेवंतुतांत्रिकमिति छन्दमनुरपि अलाभेभिन्नका-
लानांनांदीश्राद्धत्रयंबुधः पूर्वेद्युर्वैप्रकुर्वीतपूर्वाण्हेमातृपूर्वकम् अत्रमहत्सुपूर्वेद्युःस्वदहरल्पेषितिगृह्यपरिशिष्टाद्व्यवस्था
ज्ञेया तच्चप्रातरेव पार्वणंचापराण्हेतुप्रातर्वृद्धिनिमित्तकमितिशातातपोक्तेः अत्रप्रातःशब्दःसार्धप्रहरपरः प्रहरोप्यर्धसं-
युक्तःप्रातरित्यभिधीयतइतिगार्ग्योक्तेरितिपृथ्वीचंद्रः इदंचपुत्रजन्मातिरिक्तविषयम् तदाहात्रिः पूर्वाण्हेवैभवेद्वृद्धिर्वि-
नाजन्मनिमित्तकम् पुत्रजन्मनिकुर्वीतश्राद्धंतात्कालिकंबुधइति एतदनियतनिमित्तपरम् नियतेषुनिमित्तेषुप्रातर्वृद्धिनि
मित्तकं तेषामनियतत्वेतुतदानंतर्यमिष्यतइतिलौगाक्षिस्मृतेः आधानांगंनांदीश्राद्धंत्वपराण्हएव आमश्राद्धंतुपूर्वाण्हे

नादीमुखाह्वयं प्रातराब्दिकं स्यपराण्हत
सिद्धान्नेन तु मध्यतः पार्वणं चापराण्हे तु वृद्धिश्राद्धं तथाग्निकमिति निर्णयामृते गालवोक्तेः नादीमुखाह्वयं प्रातराब्दिकं स्यपराण्हत
विष्णूक्तेश्च इदं च मातृपितृमातामहादिक्रमेण न वदेवस्वं कार्यम् तत्र मातामहाः सपत्नीकाः वृद्धप्रमातामहप्रमातामहमातामहानां
सपत्नीकानां इति पृथ्वीचंद्रोदये गारुडे गद्यरूपेण पाठात् हेमाद्रौ शंखः नांदीमुखे सत्यवसू संकीर्त्यौ विश्वदेवके वृद्धपराशरः
नांदीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः यत्तु वृद्धवसिष्ठः नांदीमुखे विधा
हेन प्रपितामहपूर्वकम् नाम संकीर्तये द्विद्वानन्यत्र पितृपूर्वकम् यच्च स्मृत्यर्थसारे वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धे तु भुंज
तइति यच्च गारुडे व्युत्क्रमप्रतिपादनं तच्च शाखांतरविषयम् पितृभ्यः पितामहेभ्यः प्रपितामहेभ्य इति बह्वृचपरिशिष्टे का
स्यापनेन चानुलोम्याम्नानात् पृथ्वीचंद्रोदयेप्येवम् यत्तु केचिद्वृद्धिपदं पित्रादिषु प्रयुंजते तन्न अनस्म वृद्धशब्दानामरूपा
णामगोत्रिणाम् अनाम्नामतिलाद्यैश्च नांदीश्राद्धं तु सव्यवदिति पृथ्वीचंद्रोदये संग्रहोक्तेः नचानिषेधादेवाविधिः कल्प्यत इति
वाच्यम् गोत्रपदी श्राद्धे प्रपितामहात्परेषां वृद्धपित्रादीनां देवतात्वान्नांदीश्राद्धत्वसाम्येनेहापि तत्प्राप्तौ निषेधात् गोत्रनामा
दिनिषेधस्य शक्यार्थाप्रथमानेन वृद्धौ संकल्पमात्रोदित्यप क्रम्यानस्म वृद्धशब्दानामित्युक्तेः संकल्पश्राद्धपरः सपिंड
केतु सर्वं भवतीति प्रयोगपारिजातः गोत्रनामभिरामंत्र्य पितृभ्योर्घ्यं प्रदापयेदिति छंदोगपरिशिष्टेन द्विधाना
त् यत्तु ब्राह्मे पिता पितामहश्चैव तथैव प्रपितामहः त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः तेभ्यः पूर्वतरा ये च प्रजावं
तः सुखैधिताः ते तु नांदीमुखा नांदीसमृद्धिरिति कथ्यत इति यच्च मार्कंडेयपुराणे येस्युः पितामहादूर्ध्वं ते तु नांदीमुखाः स्मृता
इति तज्जीवत्पित्रादिनिककर्तृक वृद्धश्राद्धविषयम् नेन तस्येदमावश्यकम् यत्तु विष्णुः पितरि पितामहे प्रपितामहे च जी

प्रजनने योऽपत्ति प्रतिग्रहस्तत्र पुंसूत्यावसथप्रवेशनसुतास्यावलोकाश्मखीकरक्षिति पाभिषेकदयिताद्यनौ च नांदीमुखम्
यत्तु कामधेनौ जलाशयप्रतिष्ठायां वृषोत्सर्गादिकर्मसु वत्सराभ्यंतरेऽपत्नीकोर्ध्ववृषस्योत्सर्गकर्मणि वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाच
रेदिति तत्र जलाशये वृद्धिश्राद्धस्य निषेधो न तु कर्मांगस्येति केचित् अन्ये त्वस्याभिर्मूलतामाहुः श्राद्धकौमुद्यां निर्णयामृते च मात्
स्ये अन्नप्राशे च सीमंते पुत्रोत्पत्तिनिमित्तके पुंसवे च निषेके च नववेश्मप्रवेशने देववृक्षजलादीनां प्रतिष्ठायां विशेषतः तीर्थ-
यात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् इदं चावश्यकं वृद्धौ नतर्पिता येऽपि पितरो गृहमेधिभिः तद्धीनमफलं ज्ञेयमासुरो विधि
रेव स इति शातातपोक्तेः अत्र श्राद्धत्रयं स एवाह मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनंतरम् ततो मातामहानां च वृद्धौ श्राद्धत्र
यं स्मृतम् तत्कालमाह पृथ्वीचंद्रोदये गार्ग्यः मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् मातामहं चोत्तरेद्युः वृद्धौ श्राद्धत्रयं स्मृ
तम् अशक्तौ तु शातातपः पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् अत्राप्यश
क्तौ स एव पृथक्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तांत्रिकमिति वृद्धमनुरपि अलाभे भिन्नका-
लानां नांदीश्राद्धत्रयं बुधः पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् अत्र महत्सु पूर्वेद्युः स्वल्पेषु तदहरित्येव गृह्यपरिशिष्टाद्व्यवस्था
ज्ञेया तच्च प्रातरेव पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति शातातपोक्तेः अत्र प्रातःशब्दः सार्धप्रहरपरः प्रहरोऽप्यर्धसं-
युक्तः प्रातरित्यभिधीयत इति गार्ग्योक्तेरिति पृथ्वीचंद्रः इदं च पुत्रजन्मातिरिक्तविषयम् तदाहात्रिः पूर्वाह्णे वै भवेद्वृद्धिर्वि-
ना जन्मनिमित्तकम् पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुध इति एतदनियतनिमित्तपरम् नियतेषु निमित्तेषु प्रातर्वृद्धिनि
मित्तकं तेषामनियतत्वेऽपि तु तदानंतर्यमिष्यत इति लौगाक्षिस्मृतेः आधानांगं नांदीश्राद्धं त्वपराह्ण एव आमश्राद्धं तु पूर्वाह्णे

सिद्धान्तेनतुमध्यंतः पार्वणंचापराण्हेतुवृद्धिश्राद्धंतथाग्निकमितिनिर्णयामृतेगालवोक्तेः नांदीमुखाह्वयंप्रातराब्दिकंस्मर
विष्णूक्तेश्च इदंचमातृपितृमातामहादिक्रमेणनवदेवत्यंकार्यम् तत्रमातामहाःसपत्नीकाः वृद्धप्रमातामहप्रमातामहमातामहानां
सपत्नीकानांइति पृथ्वीचंद्रोदयेगारुडेगद्यरूपेणपाठात् हेमाद्रौशंखः नांदीमुखेसत्यवसूसंकीर्त्यौवैश्वदेविके वृद्धपराशरः
नांदीमुखेभ्योदेवेभ्यःप्रदक्षिणकुशासनम् पितृभ्यस्तन्मुखेभ्यश्चप्रदक्षिणमितिस्मृतिः यत्तुवृद्धवसिष्ठः नांदीमुखेविवा-
हेचप्रपितामहपूर्वकम् नामसंकीर्तयेद्विद्वानन्यत्रपितृपूर्वकम् यच्चस्मृत्यर्थसारे वृद्धमुख्याःस्मृताःपितरोवृद्धिश्राद्धेषुभुंज
तइति यच्चगारुडे व्युत्क्रमप्रतिपादनंतच्चशाखांतरविषयम् पितृभ्यःपितामहेभ्यःप्रपितामहेभ्य इतिबह्वृचपरिशिष्टेका
स्थापनेनचानुलोम्याम्नानात् पृथ्वीचंद्रोदयेप्येवम् यत्तुकेचिद्वृद्धिपदंपित्रादिषुप्रयुंजते तन्न अनस्मद्वृद्धशब्दानामरूप
णामगोत्रिणाम् अनाम्नामतिलार्घेश्च नांदीश्राद्धंतुसव्यवदितिपृथ्वीचंद्रोदयेसंग्रहोक्तेः नचानिषेधादेवाविधिःकल्प्यतइति
वाच्यम् मोक्षपदीश्राद्धेप्रपितामहासरेषांवृद्धपित्रादीनांदेवतात्वान्नांदीश्राद्धत्वसाम्येनेहापितत्प्रसंगोनिषेधात् गोत्रना
दिनिषेधस्तुश्राद्धार्थप्रथमांतेनवृद्धोसंकल्पमाचरेदित्युपक्रम्यानस्मद्वृद्धशब्दानामित्युक्तेः संकल्पश्राद्धपरः सपिंड-
केतुसर्वंभवतीतिप्रयोगपारिजातः गोत्रनामभिरामंत्र्यपितृभ्योर्घ्यंप्रदापयेदिति छंदोगपरिशिष्टेतद्वि-
त् यत्तुब्राह्मे पितापितामहश्चैवतथैवप्रपितामहः त्रयोह्यश्रुमुखाह्येतेपितरःपरिकीर्तिताः तेभ्यःपूर्वतरायेचप्रजावं
तःसुखैधिताः तेतुनांदीमुखानांदीसमृद्धिरितिकथ्यतइति यच्चमार्कंडेयपुराणे येस्युःपितामहादूर्ध्वंतेतुनांदीमुखाःस्मृता
इतितज्जीवत्पित्रादिकर्तृकवृद्धिश्राद्धविषयम् तेनतस्येदमावश्यकम् यत्तुविष्णुः पितरिपितामहेप्रपितामहेचजीव

तिनैवकुर्यादितितद्दर्शादिविषयमितिकल्पतरुः मदनपारिजातेप्येवम् हेमाद्रिस्तु नांदीमुखानां श्राद्धं तु कन्याराशिगते रवौ पौर्णमास्यां तु कर्तव्यं वराहवचनं यथेति शेषपदी श्राद्धैकवाक्यत्वात् तत्रैव पूर्वेषां देवतात्वमित्याह अत्र सत्यवसू विश्वेदेवाविस्रुक्तमाग्वत् यत्तु शातातपः मातुः श्राद्धं तु युग्मैः स्याद्देवं प्राङ्मुखैः पृथगिति तद्भिन्नप्रयोगमातृश्राद्धपरम् यच्च मार्कंडेयपुराणे विश्वेदेवविहीनं तु केचिदिच्छंति मानवा इति तन्न भिन्नप्रयोगमातृश्राद्धभिन्नश्राद्धद्वयेपि विश्वेदेवविकल्पार्थं प्रयोगैक्ये तु देवनियम इति हेमाद्रिः एतच्च मातृपूजापूर्वकं कार्यम् अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् तस्य क्रोधसमाविष्टा हिंसामिच्छंति मातर इति शातातपोक्तेः कौर्मेपि पुष्पैर्धूपैः सनैवेद्यैर्गंधाद्यैर्भूषणैरपि पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुध इति छंदोगपरिशिष्टे कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु अपि वाक्षतपुंजेषु नैवेद्यैश्च पृथग्विधैः कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु कारयेत्पंचधारां वा नातिनीचां न चोच्छ्रितां आयुष्याणि च शांत्यर्थं जप्त्वा तत्र समाहितः षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥ अत्र सर्वेष्विति ग्रहणात् ग्रहयज्ञादिकारेष्वपि नित्यं श्राद्धम् नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किंचित्समाचरेदिति शातातपोक्तेश्च इयं च वसोर्धारा नच्छाखीयानां नियता अन्येषां त्वनियता बह्वृच्यं वाथ स्वगृह्योक्तमित्युक्तेः करणे त्वभ्युदयः यन्नाम्नातं स्वशाखायामित्युक्तेः आयुष्याणि आ नो भद्रा इत्यादीनि षड्भ्य इति मात्रादित्रिकोपलक्षणमिति पृथ्वीचंद्रोदयः छंदोगानां षड्दैवत्यमन्येषां नवदैवत्यमित्याशार्कः प्रमत्तु मतं कौकिलमतानुसारिणां मातृमातामहप्रमातामहा इति मातामहश्च प्रातामहश्राद्धकरणात् तद्विषयमिदं षड्भ्य इति मातरस्तत्रैवोक्ताः गौरी पद्मा शची मेधा सावित्री

जयाजया देवसेनास्वधास्वाहामातरोलोकमातर इतिसर्वविशेषणम् तेनचतुर्दशत्वं यदाषोडशेतिपाठस्तदादेवतांतरं चांद्रि
कायांचतुर्विंशतिमतेत्वन्याउक्ताः तिस्रःपूज्याःपितुःपक्षेतिस्रः मातामहेतथा इत्येतामातरःप्रोक्ताःपितुर्मातुःस्वसा च
मी आसांजीवनेप्रत्यक्षपूजनम् मृतानांतक्षत्पुंजोधिनिहेमाद्रिः ब्राह्मण्याद्यास्तथासप्तदुर्गाक्षेत्रगणाधिपान् वृद्ध्यादौ
पूजयित्वातुपश्चान्नांदीमुखान्पितॄन् मातृपूर्वान्पितॄन्पूज्यततोमातामहानपि मातामहीस्ततःकेचित्युग्माभोज्याद्वि-
जातयइति अत्रद्वादशदैवतस्यदेशाचाराद्व्यवस्था ब्राह्मण्याद्याः ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराही-
चतथैंद्रीचामुंडाःसप्तमातरइत्यपरार्केउक्ताः अत्रचौलादीनांयौगपद्येतत्रतोक्ताछंदोगपरिशिष्टे गणशःक्रियमा
णानांमातृभ्यःपूजनंसकृत् सकृदेवभवेच्छ्राद्धमादौनपृथगादिषु मातृभ्यइतिषष्ठ्यर्थेचतुर्थी गणशःएकानेकपुत्रा
णांसंस्कारेष्वेकदिनेएकदेशकालकर्तृक्यादित्यर्थः तथा असकृद्यानिकर्माणिक्रियेरन्कर्मकारिभिः प्रतिप्रयोगंनैवस्यु
र्मातरःसगणाधिपाः कर्मवृत्तावपिकुत्रश्राद्धंकार्यंकचनेत्युक्तंतत्रैव आधानेहोमयोश्चैववैश्वदेवेतथैवच बलिकर्मणि
दर्शेचपूर्णमासेतथैवच नवयज्ञेचयज्ञावदित्येवंमनीषिणः एकमेवभवेच्छ्राद्धमेतेषुनपृथक्पृथक् एतेषुप्रतिप्रयो
गंनावर्ततेकिंत्वादौ एतद्भिन्नेसोमयागादौतुप्रतिप्रयोगमावर्ततएवश्राद्धमित्यर्थः क्वचिदादावपिनिषेधमाहसएव ना
ष्टकासुभवेच्छ्राद्धंनश्राद्धेश्राद्धमिष्यते नसोष्यंतीजातकर्मप्रोषितागतकर्मसु विवाहादिःकर्मगणोयउक्तोगर्भाधा
नंश्मश्रुमोयस्यचांते विवाहादावेकमेवात्रकुर्याच्छ्राद्धंनादौकर्मणःकर्मणःस्यात् सोष्यंत्याआसन्नप्रसवायाः सोष्यं
तीमप्युद्दिश्येत्युक्तम् कर्मकात्यायनोक्तस्य श्राद्धस्यपाकप्राधान्यात्तस्यच जातश्राद्धेनदद्यात्पक्वान्नंब्राह्मणेष्वपीतिनिषे

धानजातकर्मणिनांदीश्राद्धमित्याशार्कः आधानेनवाकार्यमित्यपितेनैवोक्तम् गौडास्तु जातकर्मण्येवनिषेधः पुत्रजन्मनि-
मित्तकंतुकार्यमेव जन्मन्यथोपनयनेइत्युक्तेः नैमित्तिकमथोवक्ष्ये श्राद्धमभ्युदयात्मकम् पुत्रजन्मनितत्कार्यंजातकर्मसमं
नरैरितिमार्कंडेयपुराणाच्चेत्याहुः हारलतायांश्राद्धविवेकेचैवम् एतेनजातकर्मणिकालांतरेश्राद्धनिषेधोनजन्मदिनेइति-
वाचस्पतिमतंपरास्तम् अत्रनिषेककालेइतिवचनात् गर्भाधानेननिषेधः निषेककालेसोमेचसीमंतोन्नयनेतथा ज्ञेयंपुं
सवनेश्राद्धंकर्मांगंविधिवत्कृतमितिपारस्करः सोपिनेति ग्रोष्येत्यगृहाद्युपतिष्ठने पुत्रंहस्ताजपतीतिविहितंकर्म विवाहादि
गर्भाधानांतोयोगृहप्रवेशचतुर्थीकर्मादिकर्मसमूहउक्तः सूत्रकारेण तत्रापिप्रतिकर्मनेत्यर्थः अन्येपिहलाभियोगाद्यो-
पवादविषयास्तत्रैवज्ञेयाः अप्रचारान्नोच्यंते अत्राधिकारिणःविष्णुपुराणे जातस्यजातकर्मादिक्रियाकांडमशेषतः पिता
पुत्रस्यकुर्वीतश्राद्धंचाभ्युदयात्मकं अत्रकेचित् जीवत्पितुःसाग्नेरेव वृद्धिश्राद्धेधिकारः नतुनिरग्नेः नजीवत्पितृकःकुर्या-
च्छ्राद्धमग्निमृतेद्विजः येभ्यएवपितादद्यात्तेभ्यःकुर्वीतसाग्निकः पितामहेप्येवमेवकुर्याज्जीवतिसाग्निकः साग्निकोपि-
नकुर्वीतजीवतिप्रपितामहेइतिनांदीश्राद्धमंत्रोक्तेरित्याहुः मदनपारिजातेप्यनाहिताग्निर्नकुर्यादितीदंव्याख्यातम्
तन्न अनग्निकोपिकुर्वीतजन्मादौवृद्धिकर्मणि येभ्यएवपितादद्यात्तानेवोद्दिश्यतर्पयेदितिहारीतोक्तेः सीमंतवत्तु वृद्धिश्राद्ध-
भिन्नश्राद्धपरमित्युक्तंमदनरत्ने श्राद्धपदंपिंडपितृयज्ञपरमितिशूलपाणिरुक्तः निर्णयामृतेतु हारीतीयेनाग्निकोनाहिताग्नि
रभिप्रेतःपूर्ववचनेतुसाग्निःश्रौताग्निःस्मार्ताग्निश्चोच्यते तेनोभयाग्निहीनस्यनेत्युक्तम् तन्न पूर्वोक्तादिशागनिसंभवेन
ग्निपदस्यस्मार्ताग्निपरत्वेमानाभावात् वक्ष्यमाणनित्यानित्यसंयोगविरोधात् पितरोजनकस्येत्यायाच द्वतमनाहितम् समा

हितव्रतः पश्चात्स्वान्यजेतपितामहानृइति पृथ्वीचंद्रोदयेयमवचोविरोधाच्च अपरार्केपिसमावर्तनेनब्रह्मचारीस्वयमेवनांदीश्राद्धंकु
र्यादित्याहः अतःपूर्वमेवसाधुवोपदेवोप्येवमाह यत्तुमतंजीवपितुःपुत्रनामकर्मादौनवृद्धिश्राद्धम् हारीतोयेजन्मादौइत्यादि
शब्देनतत्राप्याप्युद्वाहेपुत्रजननेपित्र्येष्ट्यांसौमिकेमखे तीर्थेब्राह्मणआयाते षडेतेजीवतःपितुरितिमेत्रपरिशिष्टेउ
हेएवतस्योपसंहारात् एवंयत्रतुसंस्कारादिपदंतदप्युद्वाहादिपरमेवेति तन्न उद्वाहपदस्यस्वविवाहपरत्वस्यापिसंभ
त् पुत्रविवाहपरत्वेमानाभावात् नामकर्मणिबालानांचूडाकर्मादिकेतथे त्यादिभिर्नित्यश्राद्धस्यचौलाद्यंगत्वावगतेर्नि
त्यसंयोगविरोधाच्च अतोजन्मादावितिसर्वसंस्कारसंग्रहः तथाकात्यायनः स्वपितृभ्यःपितादद्यात्सुतसंस्कारकर्मसु
पिंडानोद्वहनात्तेषांतस्याभावेतुतत्क्रमात् सुतानांचौलादिसंस्कारेषुपितास्वपितृभ्यःपिंडान्श्राद्धं पिंडदोंशहरश्चैषामितिद
र्शनात्ओद्वहनाद्विवाहपर्यंतंदद्यात् विवाहस्त्वप्रथमः नांदीश्राद्धंपिताकुर्याद्द्वितीयेपाणिग्रहेस्वयं अतऊर्ध्वंप्रकुर्वीतस्वयं
मेवतुनांदिकमितिस्मृतेः तस्यपितुरभावेतत्क्रमात् असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैरितिपितृःकर्तृक्रमःतेनक्र
मेणज्येष्ठभ्रात्रादिर्दद्यादितिचंद्रिकादयः हेमाद्रिस्तुतस्यपितुरभावेयःपितृव्यमातुलादिःसंस्कुर्यात्सतत्क्रमात्संस्कार्यपि
तृक्रमाद्दद्यात्नतुस्वपितृभ्यइतिव्याचख्यौ समावर्तनस्यापिविवाहप्राचीनकृतसंस्कारत्वात्तत्रैवनांदीश्राद्धंकुर्यात् तदभ
वेज्येष्ठभ्रात्रादिभिःतदभावेस्वयमेवकुर्यात् उपनयनेनकर्माधिकारस्यजातत्वात् एवमाद्यविवाहेपीतिपृथ्वीचंद्रोदय
चंद्रिकादयः मदनरत्नेप्येवम् यदातुपितरिसन्न्यस्तेप्रोषितेपतितेवाधर्मार्थंतत्पुत्रमन्यःसंस्कुर्यात्तदासंस्कार्यपितुःपि
त्रादिभ्योदद्यात् पितरोजनकस्येज्यायायाचकृतमनाहितं समाहितव्रतः पश्चात्स्वान्यजेतपितामहानितिपृथ्वीचंद्रोद

यमोक्तेः। जीवत्पितृकस्यविशेषमाहकात्यायनः वृद्धेतीर्थेचसंन्यस्तेतातेचपतितेसति येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसु-
तइति यच्चबह्वृचपरिशिष्टे जीवत्पितासकृतसंस्कारेषुमातृमातामहयोःकुर्यात् तस्यांजीवंत्यांमातामहस्यैवेतितत्तच्छा-
स्त्रीयानामेवेतिदिक् स्मृतितत्त्वादिगौडग्रंथेषुतुजीवन्मातृकःपितामहादिभ्योवृद्धोदद्यात् जीवंतमपिदद्याद्धिप्रेतायान्नोदके
द्विजइतिकात्यायनोक्तेः जीवेतस्मिन्कृताःकुर्युःपितामह्यासहैवतु तस्यांचैवतुजीवंत्यांतस्याःश्वश्र्वेतिनिश्चयइतिहारी-
तोक्तेश्चेत्युक्तम् तस्मिन्भर्तरिदाक्षिणात्यास्तुपूर्वोक्तसापिंडीकरणादिविषयत्वात् जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुरित्यजेदि-
तिवचनात्तद्वर्गस्यलोपएवेत्याहुः यत्तुचंद्रिकायांपारस्करः निषेककालेसोमेचसीमंतोन्नयनेतथा ज्ञेयंपुंसवनेश्राद्धं
कर्मांगंवृद्धिवत्तदिति तत्रगर्भाधानादौकर्मांगं जातकर्मादावुक्तंतुवृद्धिश्राद्धंपृथगेवाविधिवादित्युक्तं। गौडनिबंधेमा-
त्स्ये अन्नप्राशनेसीमंतेपुत्रोत्पत्तिनिमित्तके पुंसवनेनिषेकेचनववेश्मप्रवेशने देवव्रततडागादीनांप्रतिष्ठायांतथैवचती-
र्थयात्रावृषोत्सर्गेवृद्धिश्राद्धंप्रकीर्तितम् अत्रभूतनिमित्तानांवृद्धित्वम् भाविनिमित्तानामंगत्वम् वृद्धिशब्दस्तूक्ष्मादिदेशा-
र्थइतिगौडाः अन्येतुनिषेकादौकर्मांगवृद्धिश्राद्धयोःसमुच्चयमाहुः नांदीश्राद्धसंज्ञातूभयानुगता अथेतिकर्तव्यता पृ-
थ्वीचंद्रोदयेवृद्धपराशरः मालत्याःशतपत्राणांमल्लिकाकुब्जयोरपि केतक्याःपाटलायाश्चादेयामालानलोहिताः श्राद्धेमा-
लानिषेधस्यायमपवादः तथा कृचेषभूषणैस्तत्रसालंकारैस्तथानरैः कुंकुमाद्यनुलिप्तांगैर्भाव्यंतुब्राह्मणैःसह स्त्रियो-
पिस्तुस्तथाभूताःगीतनृत्यादिहर्षिताः हेमाद्रौब्राह्मे कुशस्थानेचदूर्वाःस्युर्मंगलस्याभिवृद्धये कुशाअपिचक्ष्यंतेछंदो-
गपरिशिष्टे मातरामंत्रितान्विप्रान्यथाऽभ्यर्चयत्तथा उभौयतःदेवेपित्र्येच वैश्वदेवेद्वौविप्रौपित्रादीनामेकैकस्यद्वौद्वा

तितिविंशतिः त्रिकेणा द्वादिनित्येके विप्राः अत्र विप्रालाभे स्त्रियोपि भोज्या इत्याह शाकें वसिष्ठः मातृश्राद्धे तु विप्राणामलाभे
पूजयेदपि पतिपुत्रान्विता भव्या योषितोष्टौ कुलोद्भवाः मातृत्रिके च तत्स्थः मातामहीत्रिके चेत्यर्थ इति हेमाद्रिः अत्रापि श्ये
प्राङ्मुखा विप्राः पार्श्वे पित्र्ये चतुरस्रं मंडलमिति जयंतः हेमाद्रौ ब्राह्मेपि विप्रान्प्रदक्षिणावर्तं प्राङ्मुखानुपवेशयेत् छंदो
गपरिशिष्टे गोत्रनामभिरामंत्र्य पितृभ्योर्घ्यं प्रदापयेत् नात्रापसव्यकरणं नापि त्र्यं तीर्थमिष्यते ज्येष्ठोत्तरकरान्युग्मान् कराग्रा
ग्रपवित्रकान् कृत्वार्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते पित्रादेर्द्वौ द्वौ विप्रौ तयोर्दक्षिणहस्तौ संयोज्य प्रथमोपवेशितविप्रकरोप
रितनेणहस्तयोरर्घ्यं दद्यादित्यर्थः बह्वृचकारिकायां तु दत्तार्घ्यादिकदेशः स्यादर्घ्यदानं प्रतिद्विजम् आवृत्तिरपि मंत्रस्य प्रतिब्राह्म
णमिष्यते प्रतिद्विजं पृथक्कुर्यान्निवीत्यर्घ्यानुमंत्रणमित्युक्तम् मधुमध्विति पत्तव निजपाशितुमिच्छताम् गायत्र्यानंतरं स्तो
त्रं मधुमंत्रविवर्जितम् नचाश्नं स्तुजपेदत्र कदाचिदसितृसूक्तकम् तथा संपन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते स्व
संपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् अक्षय्योदकदानं च अर्घ्यदानवदिष्यते षष्ठ्यैव नियतं कुर्यान्न चतुर्थ्या कदाचन चंद्रोदये
ब्राह्मे पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तकमं तथा नांदीमुखान्पितॄन्भक्त्या सांजलिश्च समाकयेत् तथा शाल्यन्नं दधिमधु
फलबदराणि यवांस्तथा मिश्रीकृत्य तु चतुरः पिंडान् श्रीफलसन्निभान् दद्यान्नांदीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ब्रा
लकमूलानि यवांश्च विनियोजयेत् नान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा तत्रैव चतुर्विंशतिमते द्वौ द्वौ चाभ्युदये पिंडौ वैके
कस्मै विनिक्षिपेत् एकं नाम्ना परं तूष्णीं दद्यात्पिंडान्पृथक्पृथक् वसिष्ठः प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च दत्वापि
डान्प्रकुर्वीत पिंडपात्रमधोमुखम् नांदीमुखेभ्यः पितृभ्यः स्वाहेति चापिंडदानमंत्र इति वृत्तिः अत्रापिंडाः कृताकृता इत्युक्तम्

तत्रैवभाविष्ये पिंडनिर्वपणंकुर्यात्नवाकुर्याद्विचक्षणः वृद्धिश्राद्धेमहाबाहोकुलधर्मानवेक्ष्यतु छागलेयः अग्नौकरणमर्घ्यंचा
वाहनंचावनेजनम् पिंडश्राद्धेप्रकुर्वीतपिंडहीनेनिवर्तते तेनात्रभोजनस्यैवप्रधानत्वाद्यदिविप्रस्यवमनंतदातस्यैवपार्वणस्य
पुनरावृत्तिरितिसिद्धम् अत्रसांकल्पेविशेषः प्रयोगपारिजातेसंग्रहे श्राद्धार्थीप्रथमंतेनवृद्धौसांकल्पमाचरेत् नषष्ठ्यायदि
वाकुर्यान्मतान्दोषोभिजायते नामगोत्रादिनिषेधोप्यत्रैवनतुसापिंडकश्राद्धइतिसएव अत्रायंक्रमः नांदीश्राद्धेदैवेक्षणःक्रियता
मितिद्वौयुगपन्निमंत्र्यऋतयोतिविप्राभ्यांयुगपदुक्तेप्राप्नुतांभवंतौप्राप्नुवावइतिवैश्वदेववत्पित्र्येचाह्वनंनांतेनाविप्रहूयेप्रयोगंकु
र्यात् आहिताग्निस्तुहेमाद्रौब्राह्मे योग्नौतुविद्यमानेपिवृद्धौपिंडान्नानिर्वपेत् पतंतिपितरस्तस्यनरकेसचपच्यते बह्वृचपरिशि
ष्टे द्वौदर्भौपवित्रेपवित्राणिचत्वारिशन्नोदेवीत्यनुमंत्रितास्वपवानावपति यवोसिसोमदेवत्योगोसवेदेवनिर्मितः प्रत्नवद्भिःप्र
त्तःपुष्ट्यानांदीमुखान्पितॄनिमान्लोकान्प्रीणयाहिनःस्वाहेतिस्वाहार्घ्याइतिपृच्छति विश्वेदेवाइदंवोर्घ्यंनांदीमुखाःपितरइ
तियथालिंगमर्घ्यदानंगंधादिदानांतेद्विर्द्विःपाणौहोमोग्नयेकव्यवाहनायस्वाहासोमायपितृमतेस्वाहेत्यतोदेवाअवंतुनइत्यंगु
ष्ठग्रहणंपालमानीःशंवतीरेरमतिरथंचश्रावयेन्मधुवाताऋतइत्यस्थानेउपास्मैगायतेतिपंचमधुमतीःश्रावयेदक्षन्नमीमदंत
तिचपठीभुक्तशेषेणैकैकस्यद्वौद्वौपिंडौदद्यादिति चंद्रिकायांवृद्धवसिष्ठः तृप्तिप्रश्नेतुसंपन्नंदैवेरुचितमित्यपि दधिकर्क
धुमिश्रास्त्वपिंडाःकार्यायथाक्रमम् कात्यायनः स्वमूत्पुष्याजिनमितिविप्रांश्चविसर्जयेत् नांदीमुखाःपितरःप्रीयंतामि
त्यक्षय्यस्थाने सधांवाचयिष्यइत्यस्यस्थानेनांदीमुखान्पितॄन्वाचयिष्यइति नस्वधांप्रयुंजीतेति अत्रसाग्निरनग्नि
र्वादौवैश्वदेवंकुर्यात् आदौवृद्धौक्षयेचांतेमध्येश्राद्धेतुपार्वणे एकोद्दिष्टेनिवृत्तेतुवैश्वदेवोविधीयतइत्याश्वलायनकैशांरव्याय

नपरिशिष्टात् हेमाद्रौतुशेषमन्नमनुज्ञाप्यवैश्वदेवक्रियांततः श्राद्धान्हि श्राद्धशेषेणवैश्वदेवंसमाचरेदिति चतुर्विंशतिमता
न्नांदीश्राद्धेप्यंतेवैश्वदेवउक्तः बह्वृचानामपिसूत्रालोचनात्तथैवपूर्वोक्तंतुयेषांपरिशिष्टंतद्विषयमन्यविषयंवाज्ञेयम् अ-
त्रश्राद्धांगतर्पणंनेच्छंतिप्राञ्चः इतिश्रीजगद्गुरुनारायणभट्टात्मजरामकृष्णभट्टसूनुकमलाकरभट्टकृतेनिर्णयसिंधौ
वृद्धिश्राद्धम् अथजीवत्पितृकश्राद्धं तत्रानेकपक्षादृश्यंते जीवंतंपितरंभोजयित्वापरयोःश्राद्धंकुर्यादित्येकः होमांतमे
वकुर्यादित्यन्यः होमांतःपितृयज्ञःस्याज्जीवेपितरिजानतः पितरंभोजयित्वावापिंडान्निपृणुयात्परावितियज्ञपार्श्वो-
क्तेः यद्वाजीवत्पितानदद्यादाहोमात्कृत्वाविरमेदित्यापस्तंबोक्तेश्च जीवतांपिंडानग्नौहुत्वापरेभ्योदेयमित्यपरः जुहुया
ज्जीवेभ्यइत्याश्वलायनोक्तेः जीवतामजीवतांचपिंडदानमितीतरः जीवतामजीवतांचादेयमेवेतिहिरण्यकेतुरितिनि
गमात् तस्माज्जीवत्पिताकुर्याद्वाभ्यामेवनसंशयइतिभविष्योक्तेर्द्वाभ्यामेवेत्यन्यः एतेपक्षाःकलौनिषिद्धाः प्रत्यक्षमर्च
नंश्राद्धेनिषिद्धंमनुरब्रवीत् पिंडनिर्वपणंचापिमहापातकसंमितमिति पृथ्वीचंद्रोदयेभविष्योक्तेः चंद्रिकाप्येवम् तस्मा
त्पितरिजीवतिश्राद्धानारंभएवेत्येकःपक्षः सपितुःपितृकृत्येषुअधिकारोनविद्यतइतिकात्यायनोक्तेः जीवेपितरिचेत्पु-
त्रः श्राद्धकालंविवर्जयेदिति हारीतोक्तेश्च पितुःपित्रादिभ्योदद्यादितिसिद्धांतः ध्रियमाणेतुपितरिपूर्वेषामेवनिर्वपे-
दितिमनूक्तेः पितुःपितृभ्योवादद्यात्सपितेत्यपराश्रुतिरितिकात्यायनोक्तेश्च अयंबहुसंमतःपक्षः अन्येशाखाभेदेन
ज्ञेयाः एवंजीवन्मातामहेनाप्यूहेनकार्यं मातामहानामप्येवंश्राद्धंकुर्याद्विचक्षणः मंत्रोहेनयथान्यायंशेषाणांमंत्रव
र्जितमितिविष्णूक्तेः एवंमात्रादिकस्यापितथामातामहादिकेइतिपृथ्वीचंद्रोदयेग्निपुराणाच्च पितरिजीवतितुस्वमात

रिमृतायामपि पितुरेवमातृमातामहयोः कुर्यात् येभ्यएवपितादद्यादितिवक्ष्यमाणवचनादितिपितामहचरणाः मदनरत्नेतु
जीवसितास्वमातामहयोर्दद्यादित्युक्तम् कालादर्शेप्येवम् मृतेतुपितरिजीवन्मातृकः पितामह्यादिभ्योदद्यादितिस्मृ
तिनत्वादिगौडग्रंथाः दाक्षिणात्यास्तुपितृवर्गेमातृवर्गेतथामातामहस्यच जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुपरित्यजेदितिवच
नात्तद्वर्गत्यागएवेत्याहुः एवंपतितसन्यस्तपितृकादेरपिज्ञेयम् कृत्योतीर्थेनसन्यस्तेतातेचपतितेसति येभ्यएवपितादद्या
त्तेभ्योदद्यात्स्वयंकृतइतिषड्त्रिंशन्मतात् सन्यस्तेजीवतीत्यर्थः मृतेतुसन्यस्तेतदादेवदेयम् मृतेपिपरेभ्यएवेतिगौडाः
कात्यायनोपि ब्राह्मणादिहतेताते पतितेसंगवर्जिते व्युत्क्रमाच्चमृतेदेयंयेभ्यएवददात्यसौ अयंचसन्यस्तपित्रादेर
पिशेषात्तत्रश्राद्धेधिकारः एतच्चत्रिदंडिपरं एकादशाहपार्वणवार्षिकाद्यपितस्यैव अहन्येकादशेप्राप्तेपार्वणंतुविधीयते
इत्युक्त्वा त्रिदंडग्रहणादेवप्रेतत्वंनैवजायतेइत्युशनसाविशेषोक्तेः ब्राह्मणादिहतेइत्यादिनिषेधस्त्वेकदंडादिपरः अतः
परमहंसानांवार्षिकादिकमपिनकार्यमितिशूलपाणिश्राद्धतत्वादयोगौडग्रंथाः इदमेवतुयुक्तम् यत्तुहेमाद्रौकौडिन्यः
दर्शश्राद्धंगयाश्राद्धंश्राद्धंचापरपक्षिकम् नजीवत्पितृकः कुर्यात्तिलैस्तर्पणमेवचेति तत्सन्यस्तपित्राद्यतिरिक्तविषयम्
मैत्रायणीयपरिशिष्टे उद्वाहेपुत्रजनने पित्र्येष्ट्यांसोमिकेमखे तीर्थेब्राह्मणआयातेषडेतेजीवतःपितुः तत्रैव महान·
दीषुसर्वासुतीर्थेषुच गयामृते जीवसितापिकुर्वीतश्राद्धंपार्वणधर्मवत् गयामृतेइतिमातृव्यतिरिक्तविषयम् अन्वष्ट
क्ष्येगयाप्राप्तोसत्यांयच्चमृतेहनि मातुःश्राद्धंसुतःकुर्यात्पितर्यपिचजीवतीति तत्रैवोक्तेः गयाप्राप्तोप्रासंगिक्यां गयां·
प्रसंगतोगत्वामातुःश्राद्धंसमाचरेदितिवचनात् तेनमृतमातृकोगयायांतत्पार्वणमात्रंकुर्यात् तज्जीवनेतुतीर्थश्राद्धम·

पिनेति कालादर्शस्मृतिदर्पणादयः अन्ये तु गत्वा श्राद्धं नेति निषेधार्थः सामान्यतः प्राप्तं तीर्थश्राद्धं भवत्येव गयायामित्याहुः
दातुपितुः प्रतिनिधित्वेन गयां यातिं तदा यजमानस्य पितृपितामहप्रपितामहा इत्येवं श्राद्धं तत्र स्वमातुः पितृपत्नीत्वेनैकोद्दिष्ट-
कृत्वा मातृत्वेन पुनः पार्वणं कुर्यादिति त्रिस्थलीसेतौ तच्च फल्गुविष्णुपदा क्षय्यवटेष्वेवेति केचित् आद्यांतेष्वेवेत्यन्ये मध्य
मांतेष्वित्यपरे संकोचे हेत्वभावात्तत्रत्यसर्वश्राद्धानि मातुः कार्याणीति युक्तं प्रतिभाति यत्तु मदनपारिजाते न जीवत्पितृकः कु
र्यात् श्राद्धमग्निमृते द्विजः येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निक इति स्मृत्युक्तेः साग्नेरेव जीवत्पितृकस्य तीर्थादिश्राद्ध
मुक्तम् साग्नेरपि मैत्रायणीयशाखीयस्यैव नान्येषां षडेते जीवतः पितुरिति तत्सारिशिष्टे पर्योक्तेरिति रत्नावलीदिवोदासा
द्याः तदयुक्तं सोमंतर्पं पिंडपितृयज्ञविषयम् सन्यस्तापिवा द्यतिरिक्तविषयं वेति पृथ्वीचंद्रोदयोक्तेः हृष्टोतीर्थेनैत्यादेः
धारण्येनास्यापि तथात्वाच्च तथा निरग्नेरपि नांदीश्राद्धमुक्तं प्राक् एवं पितामहजीवनेपि ज्ञेयम् विशेषः पितृकृतजीवत्पि
तृकनिर्णये ज्ञेयः अथ पितामहे जीवति मृते च पितरि यद्यपि पितामहो वा तच्छ्राद्धं भुंजीतेत्यब्रवीन्मनुरिति मनुना जीवतः पि
तामहस्य भोजनमुक्तम् तथापि प्रत्यक्षार्चनस्य पूर्वं निषिद्धत्वात्पितामहं विहाय पितृप्रपितामहवृद्धप्रपितामहेभ्यो देयं पिता-
मह्यस्तु वृत्तः स्याज्जीवेच्चापि पितामहः पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहमिति मनूक्तेः अयमेव सर्वसंमतः पक्षः यत्तु
छंदोगपरिशिष्टे पितामहे ध्रियमाणे पितुः प्रेतस्य निर्वपेत् पितुस्तस्य च वृत्तस्य जीवेच्चेत्प्रपितामह इति एकपुरुषं द्विपुरुषं वा पा
र्वणमाह तत्तीर्थपितृयज्ञपरं वृद्धौ पूर्वोक्तमेव एवं पूर्वयोर्मृतयोः प्रपितामहे जीवति पितृमात्रे मृते परयोर्जीवतोश्च वृद्धप्रपि
तामहादिभ्यो ज्ञेयम् जीवंतमतिदद्याद्वा प्रेतायान्नोदके द्विज इति कात्यायनोक्तेश्च एतत्सर्वं मनसि कृत्वाह हेमाद्रौ विष्णुः पित

रिं जीवति यः श्राद्धं कुर्याद्येषां पिता कुर्यात्तेषां कुर्यात् पितरि पितामहे च जीवति येषां पितामहः पितरि पितामहे प्रपितामहे च जीव
तिनैव कुर्यात् यस्य पिता प्रेतः स्यात् स पित्रे पिंडं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्यात् यस्य पिता प्रपितामहश्च प्रेतौ स्या
तां स पित्रे पिंडं निधाय पितामहात्परं द्वाभ्यां दद्यात् यस्य पितामहः प्रेतः स्यात्स तस्मै पिंडं निधाय प्रपितामहात्परं द्वाभ्यां दद्या
यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिंडौ दत्त्वा पितामहप्रपितामहाय दद्यात् मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः
मंत्रोहेन यथान्यायं शेषाणां मंत्रवर्जितमिति अत्रापि पूर्ववत् मातामहे जीवति तत्पित्रादिभ्यः यथा तत्र त्रिषु जीवत्सु नैव कुर्यात्त
थात्रापीत्यादि सर्वमतिदेश्यम् एवं मातृजीवनेऽपीति शूलपाणिकालादर्शौ तन्न येभ्य एवेत्यादौ यच्छब्दादेर्व्यक्तिविशेष-
वान्वितेन तदपि प्रसंगादिति दिक् उत्तरार्धं व्याख्यातं प्राक् यत्तु विज्ञानेश्वरेणोक्तम् पित्रे पिंडं निधायेति पितुरेकोद्दि
विधिना श्राद्धं कृत्वा प्रपितामहादिभ्यः पार्वणं कुर्यात् तदुक्तममृतसापिंडीकरणाभावपक्षे सापिंडीकरणस्थानापन्नं ज्ञेय-
म् उक्तमातृप्रमीतानां नैव कार्या सपिंडतेति वचनात् दर्शादौ तु पितुरेकोद्दिष्टमेव कार्यम् न जीवंतमतिददातीति श्रुतेः
जीवेत्पितामहो यस्य पिता चांतरितो भवेत् पितुरेकस्य दानं स्यादेवमाहुर्मनीषिण इति यज्ञपार्श्वोक्तेः पितामहे जीवति येऽपि
तर्चैव समापयेदिति हारीतोक्तेश्च शिष्टास्तु उक्तमातृप्रमीतानां नैव कार्या सपिंडता यदि माता यदि पिता भर्तुर्निषेधविधिः
स्मृत इति माधवीये स्कांदोक्तेः उक्तममृतसापिंडीकरणाभावः पितृव्यादिविषय इत्याहुः एषा विधिर्निषेधरूपः त्रिषु जीव
त्सु विष्णुराह त्रिषु जीवत्सु नैव कुर्यादिति तद्दर्शादिविषयम् नांदीश्राद्धं तु परेभ्यस्त्रिभ्यो भवत्येवेति कल्पतरुः पृथ्वीचंद्रो
दयस्तु दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदीति मनूक्तेः सर्वत्र विकल्पः। स देशाचाराद्व्यवस्थित इत्याहुः सुदर्शन-

भाष्येतुमासिकस्थानेजीवत्पित्रादिनाक्रमेणमृतपित्रादिनान्वकार्यमेवेत्युक्तम् मदनरत्नेऽनुः अष्टकादिषुसंक्रांतौमन्वादिषुयुगादि-
षु चंद्रसूर्यग्रहेपाते स्वेच्छयापूज्ययोगतः जीवत्पितानैवकुर्याच्छ्राद्धंकाम्यंतथाखिलम् अन्योविशेषाः श्रीपतिकृतजीवत्पितृकनि-
र्णये भट्टकृतत्रिस्थलीसेतौचज्ञेयाः इतिश्रीभट्टकमलाकरकृतेनिर्णयसिंधौजीवत्पितृकादिश्राद्धम् अथविभक्ताविभक्तनिर्ण-
यः पृथ्वीचंद्रोदये मरीचिः बहवः स्युर्यदापुत्राःपितुरेकत्रवासिनः सर्वेषांतुमतंकृत्वाज्येष्ठेनैवतुयत्कृतम् द्रव्येणचाविभक्ते-
नसर्वैरेवकृतंभवेत् ज्येष्ठस्यकर्तृत्वेपिसर्वेफलभागिनइत्यर्थः तेनयेब्रह्मचर्यादिनियमास्तेफलि संस्कारत्वात्सर्वैःकार्याः
एवंसंसृष्टिनामपितुल्यत्वात् मिताक्षरायांनारदः भ्रातॄणामविभक्तानामेकोधर्मःप्रवर्तते विभागेसतिधर्मोपिभवेत्तेषांपृ-
थक्पृथक् बृहस्पतिरपि एकपाकेनवसतांपितृदेवद्विजार्चनम् एकंभवेद्विभक्तानांतदेवस्याद्गृहेगृहे अत्रयद्यप्यवि-
षश्रवणात् ब्रह्मयज्ञसंध्यादिष्वप्यविभक्तानांपृथक्निषेधः प्राप्नोतितथापिद्रव्यसाध्यश्राद्धवैश्वदेवादिष्वेवसः द्रव्य-
स्यानेकस्वामिकत्वेनैकस्यव्ययेनधिकारात् यानितुद्रव्यासाध्यानिमंत्रजपोपवाससंध्याब्रह्मयज्ञपारायणादीनिनित्यनैमित्ति-
ककाम्यानितेषुपृथगेवाधिकारः द्रव्यव्ययाभावेतुमत्यनपेक्षणात् द्रव्येणचाविभक्तेनेत्यस्याविषयत्वात् पृथगप्येकपाकानां
ब्राह्मणोद्विजातिनाम् अग्निहोत्रंस्मार्तंचसंध्यानित्यंभवेत्तथेतिप्रयोगपारिजाते आश्वलायनस्मृतेश्च अग्निहोत्रश
साध्यश्रौतस्मार्तेनित्यकर्मपरः तेषुष्वन्यानुमत्येवाधिकारेणान्यायसाम्यात् पितृश्राद्धादिषुतुल्यफलेषुनित्येष्वनुमतिंविना-
प्येकस्याधिकारः एकोपिस्थावरेकुर्याद्दानाध्ययनविक्रयम् आपत्कालेकुटुंबार्थेधर्मार्थेचविशेषतइतिवचनात् धर्मार्थेच
श्यकर्तव्येपितृश्राद्धादावितिविज्ञानेश्वरः केचित्त्वविभक्तानामपिपृथक्पाकत्वेदेशांतरेचदार्शिकाब्दिकयोः पृथक्त्वमाहुः

भ्रातॄणामविभक्तानां पृथक्पाको भवेद्यदि वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक्पृथगिति हारीतोक्तेः अविभक्तेन पुत्रेण पितृमेधो-
मूलाहरेत् देशांतरे पृथक्कार्यो दर्शश्राद्धं तथैव चेति यमोक्तेश्चेति तन्मूलं चिंत्यं तदयमर्थः पंचमहायज्ञमध्ये देवभूतपितृमनु
यज्ञानन्यानुमत्या ज्येष्ठ एव कुर्यात् होमाद्यदानरहितं न भोक्तव्यं कदाचन अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतमिति व्यासो
क्तेश्च यस्य तु ज्येष्ठेनाकृते वैश्वदेवेन्नं सिद्ध्येत्तेन तूष्णीमग्नौ किंचित्क्षिप्त्वा भोक्तव्यम् यस्य त्वेषामग्रतोन्नं सिद्ध्येत्स निरुक्त
मग्नौ कृत्वाग्रं ब्राह्मणाय दत्त्वा भुंजीतेत्यविभक्ताधिकारे पृथ्वीचंद्रोदये गोभिलोक्तेः आश्वलायनस्तु पाकपार्थक्ये पृथक्
देकत्वे पृथक्त्वमाह वसतामेकपाकेन विभक्तानामपि प्रभुः एकस्तु चतुरो यज्ञान्कुर्याद्ब्रह्मयज्ञपूर्वकान् अविभक्ता विभक्ता
वा पृथक्पाका ह्यज्ञातयः कुर्युः पृथक्पृथक् यज्ञान् भोजनात्प्राग्दिने दिन इति ब्रह्मयज्ञसंध्यास्नानतर्पणादि तूक्तहेतोः पृथ
गेव देवपूजा तूक्तवचनद्वयादेकत्र पृथग्वा दर्शग्रहणश्राद्धादि त्वेकस्यैव तीर्थश्राद्धमपि युगपत्सर्वेषामविभक्तानां भ्रात्रा
कस्यैव भेदेन भ्रात्रोभिन्ने गयाश्राद्धेप्येवम् एष्टव्या बहवः पुत्राः शीलवंतो गुणान्विताः तेषां तु समवेतानां यद्येकोपि ग-
यां व्रजेत् तारितास्मो वयं तेन स याति परमां गतिमिति हेमाद्रौ कौर्मोक्तेः काम्येपि दानहोमादावन्यानुमत्यैवाधिकारः द्रव्य
साध्यजपादौ तां विनापि अपरार्के पैठीनसिः विभक्तैस्तु पृथक्कार्यं प्रतिसंवत्सरादिकम् एकेनैवाविभक्तेषु कृतं सर्वैस्तु तत्कृतम्
सांवत्सरात्पूर्वाणि मासिकान्येकेनैव तदाह लघुहारीतः सपिंडीकरणांतानि यानि श्राद्धानि षोडश पृथङ्नैव सुताः कुर्युः पृथ
क्द्रव्या अपि क्वचित् सपिंडनं मासिकोपलक्षणम् अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु ऊर्ध्वं सपिंडीकरणात्सर्वे कु
र्युः पृथक्पृथगिति व्यासोक्तेः उशनाः नवश्राद्धं सपिंडत्वं श्राद्धान्यपि च षोडश एकेनैव तु कार्याणि संविभक्तधनेष्वपि म-

यान्ययोद्दशीश्राद्धेनाविभक्तानामपिपृथगित्युक्तंप्राक् यत्तुवृद्धवसिष्ठः मासिकंचवृषोत्सर्गंसपिंडीकरणंतथा ज्येष्ठेनैवप्र
कर्तव्यमाब्दिकंप्रथमंतथेतितन्निर्मूलम् बह्वृचपरिशिष्टेनवश्राद्धंसहदद्युः अथतीर्थश्राद्धं तत्रयद्यप्यस्मत्पितामहकृ-
तत्रिस्थलीसेतुरेवजागर्तितथापिदिङ्मात्रमुच्यते तत्रयात्रायांसहाग्निर्वासपत्नीकोगच्छेत्तीर्थानिसंयतः मायाभिन्नोव्रजे-
त्तीर्थंपत्नीविरहितोपिवा यज्ञेष्वनधिकारीवाप्यभ्ववामंत्रसाधकइतिकौर्मादिवचनात्साग्नेःसपत्नीकस्यैवाधिकारः
भारते ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवाराजसत्तम नवियोनिंव्रजंत्येतेस्नातास्तीर्थेमहात्मनः स्कांदेविधवाधर्मेषु स्नानं
दानंतीर्थयात्रांविष्णुनामग्रहंमुहुः एतत्पुत्राद्यनुमत्यैव सधवायाःपत्यासहैवेतिभावउक्तं काशीखंडे मातुःपितुःक्षेमु-
मनाःकथास्थिसंततस्तुकुर्यात्खलुतीर्थयात्रां तद्विधिःस्कांदे तीर्थयात्रांचिकीर्षुःप्राग्विधायोपोषणंगृहेगणेशंचपितॄन्
विप्रान्साधून्शक्त्याप्रपूज्यच कृतपारणकोहृष्टोगच्छेन्नियमधृक्पुनः आगत्याभ्यर्च्यचपितॄन्यथोक्तफलभाग्भवेत्
उपवासःश्राद्धंमुंडनंचकार्यं प्रयागेतीर्थयात्रायांपितृमातृवियोगतः कचानांवपनंकुर्याद्वृथानविकचोभवेदितिविष्
णुः प्रायश्चित्तार्थयात्रायांगंगाप्रयांचेत्यादित्येके केचित्तुहेमाद्रौभारते केशश्मश्रुनखादीनांवपनंनचशस्यते अतोनकार्यंवपनंगया
श्राद्धार्थिनासदा येभारतेस्मिन्पितृकर्मतत्पराःसंधार्यकेशान्नतिभक्तिभाविताः ऋणत्रयार्थेपितृतीर्थमागतास्तेषामृणंसंस्त
यमेष्यतिक्रमामतिनिषेधात् गयायात्रांगंवपनंनकार्यमित्याहुः वस्तुतस्तुगयाधिकरणकस्यैवायंनिषेधः नतुयात्रांगस्यश्रा
द्धार्थिनेत्युक्तेः विशालविरजंगयामित्यनेनैकवाक्यत्वाच्च श्राद्धंचषड्नवद्वादशांदैवतंवाघृतेनकार्यं गच्छेद्देशांतरंयस्तुश्राद्धं
कुर्यात्ससर्पिषेतिविष्णुपुराणात् यात्रांगश्राद्धेश्राद्धेतिश्च श्राद्धंचपारणादिनएव उपोष्यरजनीमेकांप्रातःश्राद्धंविधायच ग-

णेशंब्राह्मणान्नत्वा पृष्ट्वा प्रस्थितवान्स्वग्रामितिस्कांदलिंगात् गौडनिबंधेगौतमः तीर्थयात्रासमारंभेतीर्थास्वागमेपि
च वृद्धिश्राद्धंप्रकुर्वीत बहुसर्पिःसमन्वितम् वृद्धिपदंतद्धर्मार्थंश्राद्धोत्तरंयात्रासंकल्पइतिभट्टाः वायवीये उद्यतस्तु
गयांगंतुंश्राद्धंकृत्वाविधानतः विधायकार्पटीवेषंग्रामंकृत्वाप्रदक्षिणम् ततोग्रामांतरंगत्वाश्राद्धशेषस्यभोजनम् घृत
स्याभोजनंतच्चक्रोशामध्येश्राद्धोत्तरंक्रोशगमननिषेधात् ततःप्रतिदिनंगच्छेत्प्रतिग्रहविवर्जितः गयायामेवैतन्नान्य
त्रेतिकेचित् हेमाद्रिस्तु गयायांश्राद्धदिन एवमस्थाने तीर्थांतरेतुश्राद्धोत्तरादिनइत्याह प्रभासखंडे यच्चान्यकारये
च्छक्त्यातीर्थयात्रांनरेश्वरः स्वकीयद्रव्ययानाभ्यांतस्यपुण्यंचतुर्गुणम् यात्रामध्येआशौचेरजसिवाश्राद्धपर्यंतंस्थि
त्वातदनेगच्छेत् मार्गवैषम्येत्वदोषः यात्रामध्येतीर्थांतरप्राप्तौश्राद्धादिकार्यमेव वाणिज्याद्यर्थंगतेनतुमुंडनोपवा-
सादिनकार्यमितिमयूखेसेतौभट्टाः वस्तुतस्तु तत्रापिमुंडनोपवासश्राद्धादिकार्यम् अर्धंतीर्थफलंतस्ययःप्रसंगेनगच्छ
तीतिब्राह्मोक्तेः स्कांदेहिभोजनंतृतीयांशंहरेत्तीर्थफलस्यच वाणिज्यंस्त्रीस्तथाभागान्हंतिसर्वंप्रतिग्रहः यानंधर्मंच-
तुर्थांशं छत्रोपानहसेवने स्वत्तरार्धपाठांतरम् अत्रनदीषुविशेषः मार्गेतरानदीप्राप्तौस्नानादिपरपारतः अयोगेवसर
स्वत्याएषमार्गगतोविधिः यत्तु पितॄनतर्पयित्वातुनदीस्तरतियोनरः तस्यास्तृष्णानकामास्तेभवंतिभृशदुःखिताइतित
त्सरस्वतीपरम् शंखः तीर्थप्राप्यानुषंगेणस्नानंतीर्थेसमाचरेत् स्नानजंफलमाप्नोतितीर्थयात्राकृतंनतु सएव नस्वर्ध
नीमतिक्रामेदनर्चयित्वातीर्थप्राप्तौतुप्रभासखंडे यानानितुपरित्यज्यभाव्यंपादचरैर्नरैः लुब्धलोकोठनीतत्रकृत्वाकार्प
टिकाकृतिम् कुर्वीतगृहान्निर्गमसमयेकरणेइदमथमंत्रालयेत्तीर्थप्रणवेनजलंशक्तानि अवगाह्यततःस्नायाद्यथावन्म-

त्रयोगतः मंत्रश्च प्रभासखंडे नमोस्तु देवदेवाय शितिकंठाय दंडिने रुद्राय चापहस्ताय चक्रिणे वेधसे नमः सरस्वती च सा
वित्री च वेदमाता गरीयसी सन्निधात्री भवस्वत्र तीर्थे पापप्रणाशिनी इति मंत्रवत् स्नानं च वपनोत्तरं कार्यम् पूर्वमावाहनं तीर्थे मुंडनं तद
नंतरम् ततः स्नानादिकं कुर्यात् सश्राद्धं समाचरेदिति स्मृतेः गत्वा तु स्नानं प्रकुर्वीत वपनं तदनंतरमिति तत्सुशलस्नानपर
म् काशीखंडे तीर्थोपवासः कर्तव्यः शिरसो मुंडनं तथा उपवासेन नैवोक्तम् यदन्हि तीर्थप्राप्तिः स्यात्तदन्हः पूर्ववासरे उप
वासः प्रकर्तव्यः प्राप्तेन्हि श्राद्धदो भवेत् अत्र उपवासं ततः कुर्यात्तस्मिन्नहनि स्कंदतः इति प्राप्तिदिने तूपवासो केचिद्विकल्पः मुं
डने तु स्कांददेवलौ मुंडनं चोपवासश्च सर्वतीर्थेष्वयं विधिः वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयां विरजं लोणार प्रसिद्ध महाती
र्थपरः सर्वतीर्थशब्दः अत्राविशेषः स्मृत्यंतरे ऊर्ध्वं मध्याद्द्विमासोनात् पुनस्तीर्थं व्रजेद्यदि मुंडनं चोपवासं च ततो यत्नेन कार-
येत् तदात इत्यलं शास्त्रं मा प्रायश्चित्तमृते हि त्रिनिवापात् प्रयागे प्रतिपात्तंतु योजनत्रय इष्यते क्षौरं कृत्वा तु विधिवत्ततः स्नायात्
सितासिते तथा च वृहस्पतिः क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके अपरार्के
स्कांदे उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् इदं प्रयागे सधवानामपि
समूलं भवतीति भट्टाः युक्तं तु सर्वान्केशान्समुद्धृत्य छेदयेदंगुलद्वयम् एवमेव हि नारीणां शस्यते वपनक्रिया इति तच्चाकृतचूडा
नां कार्यमिति केचित् तत्त्वं तु नैमित्तिकत्वात्पित्रादिमृतिवत्कार्यमेवेति तदपि प्रयागे नित्यं नान्यत्र न च यातिभिस्तीर्थे पिकृत्
संधिषेव कार्यं नान्यदा कक्षोपस्थशिखावर्जं भ्रुसंधिश्रु वापयेदिति स्मृतेः इदं जीवत्पितृकेणापि तीर्थे कार्यम् न च मुंडनं
पिंडदानं चेति दक्षवचनेन निषेधः विनातीर्थं विना यज्ञं मातापित्रोर्मृतिं विना यो वापयति लोमानि स पुत्रः पितृघातक इति स्मृ

स्यातत्संकोचात् तदापिप्रयागेभर्तियात्रमन्यतीर्थेआद्ययात्रायामेवेतिशिष्टाः ततःस्नानम् परार्थंतुमार्कंडेयपुराणे मातरंपित-
रंजायांभ्रातरंसुहृद्‌गुरुं यमुद्दिश्यनिमज्जेतअष्टमांशंलभेत्ततः पैठीनसिः प्रतिकृतिंकुशमयींतीर्थवारिणिमज्जयेत् म-
ज्जयेच्चयमुद्दिश्यसोष्टभागफलंलभेत् ततस्तर्पणश्राद्धे पृथ्वीचंद्रोदयेब्रह्मदेवीपुराणकाशीखंडादिषु अकालेप्यथवाका-
लेतीर्थेश्राद्धंचतर्पणम् अविलंबेनकर्तव्यंनैवविघ्नंसमाचरेत् मात्स्ये पितॄणांचैवतर्पणमितितुर्यपादः तत्रदेवताः महा-
लयनिर्णयेप्रागुक्ताः शंखदेवलौ तीर्थद्रव्योपपत्तौचनकालमवधारयेत् पात्रंचब्राह्मणंप्राप्यसद्यःश्राद्धंसमाचरेत् हारी-
तः दिवावायदिवारात्रौभुक्तोवोपोषितोपिवा नकालनियमस्तत्रगंगांप्राप्यसरिद्वराम् भारते भुक्तोवाप्यथवाभुक्तोरा-
त्रौवायदिवादिवा पर्वकालेथवाकालेशंकानिर्णीव्यथवाशुचिः यदेवदृश्यतेतत्रनदीचत्रिपथाप्रिय प्रमाणंदर्शनंतस्मा-
न्नकालस्तत्रकारणं आशौचेपिकार्यम् विवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्मणि नतत्रसूतकंतद्वत्कर्मयज्ञादिकारयेदिति
पैठीनसिस्मृतेः तदानीमकरणेत्वाशौचांतेएवकुर्यात् प्रभासखंडे नवारंनचनक्षत्रंनकालस्तत्रकारणम् यदेवदृश्य-
नेतीर्थंतदापर्वसहस्रकम् मलमासेपिकार्यं नित्यनैमित्तिकेकुर्यादयतःसन्मुखिमुने तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धं
तथैवचेतिबृहस्पतिस्मृतेः एतच्चाशौचेकृतभोजनस्यरात्रौवास्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तौवामहेमश्राद्धवि-
षयंग्रहणादिवत् नतुबुद्धिपूर्वमाशौचादौतीर्थप्राप्तिःकार्या मलमासेतुमासद्वयेतीर्थश्राद्धंकार्यमितिचंद्रिकायाम् ५
वीपुराणे श्राद्धंचतत्रकर्तव्यमर्घ्यावाहनवर्जितम् हेमाद्रौ अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनम् तृप्तिप्रश्नंचवि-
किरंतीर्थश्राद्धेविवर्जयेत् भविष्ये आवाहनंविसृष्टिश्चतत्रतेषांनविद्यते आवाहनंनतीर्थेस्यान्नार्घ्यदानंतथाभवे-

त् आहूताःपितरस्तीर्थेकृतार्घ्याःसंतिवैयतः अग्नौकरणंचनेतिरत्नावल्याम् अत्रषट्दैवतेश्राद्धेपिमात्रादीनांपिंडमात्रं
देयम् हविःशेषंततोमुष्टिमादायैकैकमादृतः क्रमशःपितृपत्नीनांपिंडनिर्वपणंचरेदितितीर्थोपक्रमेदेवलोक्तेरितिपृथ्वीचं
द्रः ततःसामान्यपिंडंदद्यात् ततःपिंडमुपादायहविषःसंस्कृतस्यच ज्ञातिवर्गस्यसर्वस्यसामान्यंपिंडमुत्सृजेदितितेनैवो
क्तेः पाद्मे तीर्थश्राद्धंप्रकुर्वीतपक्वान्नेनविशेषतः आमान्नेनहिरण्येनकंदमूलफलैरपि पिंडद्रव्याणिदेवीपुराणे हेमाद्रौ
ब्राह्मेच सक्तुभिःपिंडदानंचरुसंयावैःपायसेनवा कर्तव्यमृषिभिःप्रोक्तंपिण्याकेनगुडेनवा पिंडानांतीर्थप्रक्षेपएवभा
न्यात्प्रतिपत्तिरित्युक्तंप्राक् एतच्चविधवयापुत्रयाकार्यंनसपुत्रयेत्युक्तंप्राक् सपुत्रयानकर्तव्यंभर्तुःश्राद्धंकदाचनेतिस्मृ
तेश्च अनुपनीतेनापिकार्यम् एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वसुइतिपाद्मेतीर्थश्राद्धमुपक्रम्योक्तेः एतज्जीवत्पितृकेणा
पिकार्यमित्युक्तंप्राक् यतिनातुनकार्यम् नकुर्यात्सूतकंभिक्षुः श्राद्धंपिंडोदकक्रियाम् त्यक्तंसन्यासयोगेनगृहधर्मादिकं
व्रतं गोत्रादिचरणंसर्वंपितृमातृकुलंधनमितिस्मृतेः गयायांतूक्तंवायवीये दंडंप्रदर्शयेद्भिक्षुर्गयांगत्वानपिंडदः दं
डंसंस्थाप्यविष्णुपदेपितृभिःसहमुच्यते गयायांमुंडपृष्ठेचकूपेयूपेचदैतथा दंडंप्रदर्शयन्भिक्षुःपितृभिःसहमुच्यते कृत्य
रत्नेप्रभासखंडे तीर्थेनिस्पातिगृण्हातिब्राह्मणोवृत्तिदुर्लभः दशांशमार्जितंदद्यादेवंकुर्वन्नहीयतइति विशेषांतराणिभ
ट्टकृतत्रिस्थलीसेतोर्ज्ञेयानीतिदिक् इतिकमलाकरभट्टकृतेनिर्णयसिंधौतीर्थश्राद्धविधिः समाप्तः ७

इतिनिर्णयसिंधौतृतीयपरिच्छेदेश्राद्धप्रकरणंसमाप्तम् ॥

श्रोग्रामूलतीक्ष्णांविवरमनरूणात्माधिकास्तंगराष्टोसानः पापस्यलग्नंनसदरुणजरन्नीलरक्तांबरंच आद्यर्तौदुर्भगानारी
स्कंभेचेद्रजस्वला वंध्याचैवातिगंडेचशूलेशूलवतीभवेत् गंडेतुपुंश्चलीनारीव्याघातेचात्मघातिनी वज्रेचस्वैरि-
णीप्रोक्तापातेचपतिघातिनी परिघेमृतवंध्याचवैधृतोपतिमारिणी शेषाःशुभावहायोगायथानामफलप्रदाः शां
तिमाहभयोगपारिजातेशौनकः सार्तवानांतुनारीणांशांतिंवक्ष्यामिशौनकः पंचमेन्हिचतुर्थेवाग्रहयज्ञपुरःसरम्
णप्रमाण धान्येनव्रीहिराशित्रयंभवेत् कुंभत्रयंन्यसेद्राशौतंतुवस्त्रादिवेष्टितम् सूक्तेनाथनवर्चेन मस्कृथआपइ-
थ ऋचायाः प्रयतस्तद्वदायत्याचततःक्रमात् मध्यकुंभेक्षिपेद्धान्यमोषधानितुहेमच उदुंबरःकुशोदूर्वाराजीव-
वटबिल्वकाः विष्णुकांताथतुलसीबर्हिषंशंखपुष्पिका शतावर्यश्वगंधाचनिर्गुंडीसर्षपद्वयम् अपामार्गपलाशाम्ब
रनसोजीवकस्तथा प्रियंगवश्चगोधूमाव्रीहयोश्वत्थएवच सीरंदधिचसर्पिश्चपद्मपत्रंतथोत्पलम् कुरंटकंचपंगुं
धत्ताभद्रकमुस्तकाः द्वात्रिंशदोषधानीहयथासंभवमाहरेत् मृत्तिकाश्चौषधादीनितन्मंत्रेणाक्षिपेत्क्रमात् कुं
भोपरिन्यसेत्पात्रंकांस्यंमृद्वेणुताम्रजम् भुवनेश्वरींन्यसेत्तत्रइंद्राणींचपुरंदरम् जपेद्गायत्रिमाहोमाच्छ्रीसूक्तंचजपे
तः स्पृशन्वैदक्षिणंकुंभंऋत्विगेकोजपेदथ चत्वारिरुद्रसूक्तानिचतुर्मंत्रोत्तराणिच संस्पृशस्तूत्तरंकुंभंश्रीरुद्रंरु-
संख्यया शन्नइंद्राग्नीसूक्तंचतत्रैवसंस्पृशन्जपेत् कुंभस्यपश्चिमेदेशेशांतिहोमंसमाचरेत् दूर्वाभिस्तिलगोधू
ःपायसेनघृतेनच तिसृभिश्चैवदूर्वाभिरेकैकाचाहुतिर्भवेत् अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा गायत्र्यैवतुहो-
व्यंहविरन्नचतुष्टयम् ततःस्विष्टकृतंहुत्वासमुद्रादूर्मिसूक्ततः संततामाज्यधारांतांपूर्णाहुतिमथाचरेत् अथा

भिषेकंकुर्वीतप्रतिकुंभस्थितोदकैः आपोहिष्ठेतिनवभिः सूक्तेनचततःपरम् इंद्रोअंगतृचेनैवपावमानैःक्रमेणतु
उभयंशृणुवच्चन स्वस्तिदाविशएकया त्रैयंबकेनमंत्रेणजातवेदसएकया समुद्रज्येष्ठाइत्यादित्रायंताचत्रिभिः
क्रमात् इमाआपस्तृचेनैवदेवस्यत्वेतिमंत्रतः मंत्रेणाथतमीशानंत्वमग्नेरुद्रइत्यथ तमुष्टुहीतिमंत्रेणभुवनस्यपि
तरंतथा यातेरुद्रेतिमंत्रेणशिवसंकल्पमंत्रतः इंद्रंवोवृषभंपंचमंत्रैश्चैवाभिषेचयेत् धेनुंपयस्विनींदद्यादाचार्यो
यत्नभूषणैः सदक्षिणमनड्वाहंप्रदद्यादुद्रजापिने महाशांतिंप्रजप्याथब्राह्मणान्भोजयेत्ततइति नारदः तत्रशांतिं
प्रकुर्वीतघृतदूर्वातिलाक्षतैः प्रत्येकाष्टशतंचैवगायत्र्याजुहुयात्ततः स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये प्रका
रांतरंमदनरत्नेज्ञेयम् विस्तरभयान्नोच्यते ग्रहणेरजोदर्शनेतुजातकर्मप्रस्तावेशांतिंवक्ष्यामः। प्रथमर्तौविशे-
षःस्मृतिचंद्रिकायाम् प्रथमर्तौतुपुष्पिण्याःपतिपुत्रवतीःस्त्रियः अक्षतैरासनंकृत्वातस्मिंस्तामुपवेशयेत् हरि-
द्रागंधपुष्पादिदद्युस्तांबूलकंस्रजम् दीपैर्नीराजनंकुर्युःसदीपेवासयेद्गृहे लवणापूपमुद्गादिदद्यात्ताभ्यःस्वशक्तितइ
ति द्वितीयादृतुषुतन्नियमानाहपारिजातेदक्षः अंजनाभ्यंजनेस्नानंप्रवासंदंतधावनम् नकुर्यात्सार्तवानारीग्र
हाणामीक्षणंतथा अत्रिरपि वर्जयेन्मधुमांसंचपात्रेखर्वेचभोजनम् गंधमाल्यंदिवास्वापंतांबूलंचास्यशोधनम्
दग्धेशरावेभुंजीतपेयंचांजलिनापिबेत् मदनरत्नेहारीतः रजःप्राप्ताचाधःशयीतभूमौकार्ष्णायसेपाणौमृन्मयेवा
श्नीयादिति विष्णुधर्मे आहारंगोरसानांचपुष्पालंकारधारणम् अंजनंकंकतंगंधान्पीठशय्याधिरोहणम् अ
ग्निसंस्पर्शनंचैववर्जयेत्सादिनत्रयमिति तथाचप्रथमर्तौःपूर्वंस्त्रीसंगमनंनकार्यम् प्राग्रजोदर्शनात्पत्नींनेयात्

गत्वापतत्यधः व्यर्थीकारेणशुक्रस्यब्रह्महत्यामवाप्नुयादिति तत्रैवाश्वलायनोक्तेः एतत्तुदशवर्षोत्तरंज्ञेयम् प्रथमर्तौग
मनेगौतमेनविशेषोदर्शितः गौरींमपिन्चरत्यर्थंगच्छेत्पुरुषआकुलः अन्यथावीर्यपातोहिसहस्रकुलपातकः अन्यथा
पितर्द्विष्ठयाभवतीतिविज्ञानेश्वरः तत्रऋतौगमनमाहयाज्ञवल्क्यः षोडशर्तुर्निशास्त्रीणांतस्मिन्युग्मासुसंविशेदिति
अनृतावप्याहगौतमः ऋतावुपेयात्सर्वत्रवाप्रतिषिद्धवर्जमितिमनुः ऋतुःस्वाभाविकःस्त्रीणांरात्रयःषोडशस्मृताः
तासामाद्याश्चतस्रस्तुनिंदितैकादशीतथा त्रयोदशीचशेषाःस्युःप्रशस्तादशरात्रयः मदनरत्नेदेवलः तस्मान्निरावे-
क्ष्यउत्सृष्टांपितांपरिवर्जयेदिति तत्रतिथ्यादीनाहश्रीधरः षष्ठ्यष्टमीपंचदशींचतुर्थींचतुर्दशीमप्युभयत्रहित्वा शे
षाःशुभाःस्युस्तिथयोनिषेकेवाराःशशांकार्यसितेंदुजानाम् उभयत्रपक्षद्वये आर्योगुरुः सितःशुक्रः इंदुजोबुधः
विष्णुप्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानिनिषेककार्ये पूज्यानिपुष्यवसुशीतकराश्विचित्रादित्याश्चमध्य
मफलाविफलाःस्युरन्ये विष्णवादिदैवत्यनक्षत्राण्युक्तानिरत्नमालायाम् मेषादिपयमाग्निधातृशशिनःशर्वोदिति-
र्वाक्पतिः कद्रुजाःपितरोभगोर्यमरवीत्वष्टाचयोमारुतः शक्राग्नीत्वथमित्रइंद्रनिर्ऋतीतोयंचविश्वेविधिर्गोविंदोव-
सवोंबुपाजचरणाहिर्बुध्न्यपूषाभिधाः उत्तराशब्देनोत्तरात्रयम् अत्रमूलस्यपूज्यत्वमुक्तम् याज्ञवल्क्येनतु एवंग-
च्छन्स्त्रियंक्षामांमघांमूलंचवर्जयेदित्युक्तम् तेनपूर्वंचमूलंचिंत्यम् अत्रसमासुपुत्राःविषमासुकन्यकेतिज्ञेयम् यु
ग्मासुपुत्राजायंतेस्त्रियोयुग्मासुरात्रिषिति हेमाद्रौशंखोक्तेः तत्राप्युत्तरोत्तराःप्रशस्ताः तदाहापस्तंबः तत्राप्युत्त-
रोत्तराप्रशस्तेति तत्रैवव्यासः रात्रौचतुर्थ्यांपुत्रःस्यादल्पायुर्धनवर्जितः पंचम्यांपुत्रिणीनारीषष्ठ्यांपुत्रस्तुमध्यमः

क्त्वंयोनिंस्पृष्ट्वात्रिभिर्व्रती गर्भाधानंततःकुर्यात्सपुत्रोजायतेध्रुवम् अगमनेदोषमाहपराशरः ऋतुस्नातांतुयोभार्यांसं
न्निधौनोपगच्छति घोरायांभ्रूणहत्यायांपच्यतेनात्रसंशयः अस्यापवादमाहमदनरत्नेव्यासः व्याधितोबंधनस्थोवाप्रवा
सेप्वथपर्वसु ऋतुकालेपिनारीणांभ्रूणहत्याप्रमुच्यते वृद्धांवंध्यामसद्वृत्तांमृतापत्यामपुष्पिणीम् कन्यांचबहुपुत्रांच
वर्जयन्मुच्यतेभयात् वृद्धांगतरजस्काम् गर्भाधानांगहोमाकरणेप्रायश्चित्तमाहपारिजाते आश्वलायनः गर्भा-
स्याकरणात्तस्यांजातस्कंदुष्यति अकृत्वाग्निंद्विजेदत्वाकुर्यात्पुंसवनंपतिः गर्भाधानंगलमासगुरुशुक्रास्तादाव
पिकार्यम् उत्सवेषुचसर्वेषुसीमंतेऋतुजन्मसु गुरुशुक्रयोश्चैवमौढ्यदोषोनविद्यतइतिज्योतिर्निबंधेभृगूक्तेः ऋ
तुगमनेपराशरः ऋतौतुगर्भशंकित्वात्स्नानंमैथुनिनःस्मृतम् अनृतौतुयदागच्छेच्छौचंमूत्रपुरीषवत् स्त्रीणांतुनस्ना
नम् उभावप्यशुचीस्यातांदंपतीशयनंगतौ शयनादुत्थितानारीशुचिःस्यादशुचिःपुमानितिवृद्धशातातपोक्तेः अत्र
कश्चिद्विशेषउच्यते तत्ररात्रौरजसिजननादौचरात्रिंत्रिभागांकृत्वा आद्यभागद्वयेपूर्वदिनंग्राह्यम् परतस्तूत्तर
दिनमितिमिताक्षरायाम् यत्तुभागर्धरात्रात्प्रागर्वाक्सूर्योदयात्पूर्वदिनंग्राह्यमित्युक्तम् तद्देशाचाराद्व्यवस्थेयम् तथास
प्तदशदिनपर्यंतंपुनारजोदर्शनेस्नानमात्रम् अष्टादशेएकरात्रम् एकोनविंशेद्व्यहः विंशतिप्रभृतित्रिरात्रमिति त
त्रएवज्ञेयम् यत्तु चतुर्दशदिनादर्वागशुचित्वंनविद्यतइतितत्रस्नानप्रभृतित्वमभिप्रेतम् एतच्चयस्याविंशतिदि
नोत्तरंप्रायशोरजस्तत्रैव यस्यास्त्वर्वाक्प्रायशोरजस्तत्रोक्तंस्मृत्यर्थसारे त्रयोदशदिनादूर्ध्वंप्रायोरजोवतीनामेका
दशादिनात्प्रागशुचित्वंनास्ति एकादशदिनेएकरात्रम् द्वादशेद्विरात्रम् ऊर्ध्वंत्रिरात्रमिति प्रयोगपारिजातेप्येवं

रोगजेन्तुतन्नैवनियमः संग्रहे रोगेणयद्रजः स्त्रीणामन्वहंहिप्रवर्तते नाशुचिस्तुभवेत्तेनयस्माद्वैकालिकंमतमिति क
र्माधिकारस्तुरजोनिवृत्तावेव साध्वाचारानतावत्स्यात्स्नातापिस्त्रीरजस्वला यावत्प्रवर्तमानंहिरजोनैवनिवर्तत इ
तिश्राद्धहेमाद्रौशंखोक्तेः तत्रापिस्वकालेऽशुचिरेवेत्याहऋष्यशृंगः रोगजेवर्तमानेपिकालेनिर्यातिकालजम्
तस्मात्कालेप्रमत्तास्यादन्यथासंकरोभवेत् तथारजस्वलायाः रजस्वलांतरस्पर्शेअकामतःस्नानंकामतःउपवासःपं
चगव्याशनंच असवर्णानांतुब्राह्मण्याः क्षत्रियादिस्पर्शेक्रमेणकृच्छ्रार्धपादोनकृच्छ्रकृच्छ्राः क्षत्रियादीनांतुकृच्छ्रपाद
एव क्षत्रियादीनांहीनवर्णास्पर्शेत्रिरात्रमुपवासः वैश्याशूद्रयोः पूर्वयास्पर्शेहोरात्रंद्विरात्रंच एतच्चकामतःअका
मतस्तुप्राकृच्छ्रेरनशनम् अकामतश्चांडालादिस्पर्शेप्यनशनमेवप्राकृच्छ्रेः कामतस्तुप्रथमेन्हित्र्यहः द्वितीये
द्व्यहः तृतीयएकाहः श्वस्पर्शेतुत्र्यहएकाहोवा भुंजानायाश्चांडालादिस्पर्शेषड्रात्रम् उच्छिष्टयोःस्पर्शेतुकृच्छ्रइत्यादि
मिताक्षरायांज्ञेयम् स्मृत्यर्थसारेतु सर्वत्रबालापत्यायाःस्पर्शेस्नानेकृतेभुक्तिःपश्चादशनमसाम्नायइति स्ना
ननिर्णयेचाहपराशरः स्नानेनैमित्तिकेप्राप्तेनारीयदिरजस्वला पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेत् सिक्तगा
त्राभवेदद्भिःसांगोपांगाकथंचन नवस्त्रपीडनंकुर्यान्नान्यद्वासश्चधारयेत् अथरजस्वलास्नानम् दैवज्ञवल्ल
भः अश्व्यानुराधाश्विनसोमभेषुहस्तानिलाखंडलवासवेषु विश्वार्यमर्क्षोत्तरसाद्रभेषुप्ररांगनास्नानविधिःप्रदि
ष्टः ज्वरेतूशनाः ज्वराभिभूतायानारीरजसाचपरिप्लुता कथंतस्याभवेच्छौचंशुद्धिःस्यात्केनकर्मणा चतुर्थेहनि
संप्राप्तेस्पृशेदन्यानुतांस्त्रियम् सासचैलावगाह्यापःस्नात्वास्नात्वापुनःस्पृशेत् दशद्वादशकृत्वोवाआचामेच्च

पुनःपुनः अंतेन्चवासःसांस्यागस्ततःशुद्धाभवेत्तुसेति इदंचातुरमात्रेज्ञेयं आतुरेस्नानउत्पन्नेदशकृत्वोत्यनातुरइति पराशरोक्तेः रजसोज्ञानेतुपराशरमाधवीयेप्रजापतिः अविज्ञातेमलेसानमलवहूसनायदि कृतंगृहेषुदुसंस्याच्छुद्धिस्त स्याख्रिरात्रतः देवजानीयेकारिकायाम् गंछेत्तुद्विजातीनांरजःस्त्रीयादिपश्यति उपवासमथोच्छिष्टेऽधोच्छिष्टेत्य हंक्षिपेत्इति अथपुंसवनम् प्रयोगपारिजातेजातूकर्ण्यः द्वितीयेवातृतीयेवामासिपुंसवनंभवेत् व्यक्तेगर्भेभवे त्कार्यंसीमंतेनसहाथवा बृहस्पतिः तृतीयेमासिकर्तव्यंगृष्टेरन्यत्रशोभनम् गृष्टेश्चतुर्थेमासेतुषष्ठेमास्यथवाष्टमे सकृत्प्रसूतागृष्टिः एतेनप्रतिगर्भमपिभवतीतिविज्ञायते बह्वृचकारिकापि कर्तास्याद्देवरस्तस्यायस्याःपत्युरसं भवः आवर्ततइदंकर्मप्रतिगर्भमितिस्थितिः शाते गर्भाधानादिसंस्कर्तापिताश्रेष्ठतमःस्मृतः अभावेस्वकुलीनः स्याद्बांधवोवान्यगोत्रजः मदनरत्नेसंग्रहे मृतोदेशांतरगतोभर्तास्त्रीयधसंस्कृता देवरोवागुरुर्वापिवंश्योवापि समाचरेत् हेमाद्रौयमः प्रथमेमासिद्वितीयेवायदापुंनक्षत्रेणचंद्रमायुक्तःस्यादिति वराहः हस्तोमूलंश्रवणःपुन र्वसुर्मृगशिरस्तथापुष्यः पुंसंज्ञकेषुकार्येष्वेतानिशुभानिधिष्ण्यानि अनूराधापिपुंनक्षत्रम् अनूराधान्हविषाव र्धयंतइतिश्रुतेः गर्गोपि पुन्नामाश्रवणस्तिष्योहस्तश्चैवपुनर्वसुः अभिजित्सोमपाच्चैवअनूराधातथाश्वयुक् नृसिंहः रिक्तांपर्वचनवमींत्यक्त्वापुंसवनेशुभाः ज्योतिर्निबंधेवसिष्ठः मृत्युश्चसौरेःस्तनहानिरिंदोर्मृतप्रजापुंसव नेबुधस्य शुक्रेचवंध्याभवतीहशुक्रेस्त्रीपुत्रलाभोरविभौमजीवैः अनवलोभनस्याप्ययमेवकालः दीपिकायांतु चतुर्थेऽनवलोभनमित्युक्तम् अथसीमंतः हेमाद्रौबैजवापः अथसीमंतोन्नयनंचतुर्थेपंचमेषष्ठेचेति वसिष्ठः

चतुर्थेसप्तमेमासिषष्ठेवाप्यथवाष्टमे हेमाद्रौशंखः गर्भस्पंदनेसीमंतोन्नयनंयावद्वानप्रसवः कात्यायनिः गर्भलंभ
नमारभ्ययावन्नप्रसवस्तदा सीमंतोन्नयनंकुर्यात्छंदस्यवचनंयथा मासश्चात्रसौरःसावनोवाकालविधाने चतुर्थेष
ष्ठाष्टमगासभाजिसौरेणगर्भेप्रथमंविधेयम् सीमंतकर्मद्विजभामिनीनांमासेष्टमेविष्णुबलिंचकुर्यात् वसिष्ठः च
तुर्थेसावनेमासिषष्ठेवाप्यथवाष्टमे ज्योतिर्निबंधेनारदः अरिक्तापर्वदिवसेकुजजीवार्कवासरे कालविधाने सीमं
तेतिष्यहस्तादितिहरिशशभृत्पौष्णाविधुत्तराख्याः पक्षछिद्रंचरिक्तांपितृतिथिमपहायापरास्तुःप्रशस्ताः अदितिः
पुनर्वसुःपक्षछिद्रंचाहवसिष्ठः चतुर्दशीचतुर्थीचअष्टमीनवमीतथा षष्ठीचद्वादशीचैवपक्षछिद्राःप्रकीर्तिताः क्र
मादेतासुतिथिषुवर्जनीयाश्चनाडिकाः स्मृता ५ ८ ८ मनु १४ तत्वां २५ क ९ दश १० शेषास्तुशोभनाः कालनिर्णये शु
भसंस्थेनिशानाथेचतुर्थींचचतुर्दशीम् पौर्णमासींप्रशंसंतिकेचित्सीमंतकर्मणि बृहस्पतिः पूर्वपक्षःशुभःप्रोक्तःकृ
ष्णश्चांत्यत्रिकंविना चतुर्दशीचतुर्थीचशुक्लपक्षेशुभप्रदे नारदः विप्रक्षत्रिययोःकुर्याद्दिवासीमंतकर्मतत् वैश्य
शूद्रकयोरेतत्दिवानिश्यपिकेचन वाराःपूर्वोक्ता एव एतच्चसकृत्कार्यमितिविज्ञानेश्वरः सकृच्चसंस्कृतानारीसर्व
गर्भेषुसंस्कृतेतिदेवलोक्तेः सकृत्प्रतिगर्भंवाकार्यमितिहेमाद्रिः सकृच्चकृतसंस्काराःसीमंतेनद्विजस्त्रियः यंयंग
र्भंप्रसूयंतेससर्वःसंस्कृतोभवेदितिहारीतोक्तेः सीमंतोन्नयनंकर्मनस्त्रीसंस्कारइष्यते केचिद्गर्भस्यसंस्काराल्प्र
तिगर्भंप्रयुंजतइतिहेमाद्रौविष्णुवचनाच्च सएव स्त्रीयद्यकृतसीमंताप्रसवेत्तुकथंचन गृहीतपुत्राविधिवत्पु
नःसंस्कारमर्हति सीमंतेभोजनेप्रायश्चित्तमुक्तंपराशरमाधवीयेधौम्येन ब्रह्मोदनेचसोमेचसीमंतोन्नयनेतथा

जातकर्मनवश्राद्धेभुक्त्वाचांद्रायणंचरेत् अग्निधानेतु आद्येकेजपेन्मंत्रशतत्रयंनसंशयः सीमंतेचयदाभुंक्तेमुच्य
तेकिल्बिषात्तदेति अथगर्भिणीतत्पतिधर्माः वराहः आमिषमशनंयत्नात्प्रमदापरिवर्जयेत्ततःप्रभृति गृह्यकारि
का अंगारभस्मास्थिकपालचुल्लीशूर्पादिकेषूपविशेन्ननारी सोलूखलाद्येदृषदादिकेवाप्यंभेतुषाद्येनतथोपविश्य
नोमार्जनीगोमयपिंडकादौकुर्यान्नवारिण्यवगाहनंसा अंगारभूत्यानखैर्लिखेत्क्ष्मांकलिंविप्रभंगमथोनकुर्यात्
नोमुक्तकेशीविचरेच्चचास्याङ्केनसंध्यावसरेनशेते नामंगलंवाक्यमुदीरयेत्सारस्थालयत्नतलंनयायात्
विष्णुधर्मोत्तरे कटुतीक्ष्णकषायाणिअम्लक्षारलवणानिच आयासंचव्यवायंचगर्भिणीवर्जयेत्सदेति हेमाद्रौ-
कौंडिन्यः मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवच मिताक्षरायाम् उद्वतोंभ
सिस्नानंनखकेशादिकर्तनम् अंतर्वत्न्याःपतिःकुर्वन्नप्रजाजायतेध्रुवम् पृथ्वीचंद्रोदयेगारुडे गयायांपिंडदा
नस्यनकदाचिन्निराक्रिया अत्रकालेदामत्ययस्मृतौनिषिद्धकालस्यैवापवादोनतुजीवत्पितृकगर्भिणीपत्याशौचादि
निमित्तस्य निमित्तसंयोगस्यकालसंयोगाद्भेदेनापवादाभावात् अग्निहोत्रवत्यावज्जीवपरत्वाभावात् अन्य-
थाऽशौचेपिगयायांश्राद्धंनस्यात् यत्रनिमित्तसंयोगस्यापवादोयथाऽशौचेऽग्निहोत्रादेर्यथावाजीवत्पितृकस्या
पवादोमातुर्गयान्वष्टकादौनदेवमत्रेतिनान्यदितिसंक्षेपः प्रयोगपारिजातेकश्यपः गर्भिणीकुंजराश्वादिशैलहर्म्या
दिरोहणम् व्यायामंशीघ्रगमनंशकटारोहणंत्यजेत् शोकंरक्तविमोक्षंचसाध्वसंकुक्कुटासनम् व्यवसायंदिवास्वापं
रात्रौजागरणंत्यजेत् मदनरत्नेस्कांदे हरिद्रांकुंकुमंचैवसिंदूरंकज्जलंतथा कूर्पासकंचतांबूलंमांगल्याभरणंशु

भग् केशसंस्कारकवरीकरकर्णविभूषणम् भर्तुरायुष्यमिच्छंतीवर्जयेद्गर्भिणीनहि बृहस्पतिः चतुर्थेमासिषष्ठेव
टमेगर्भिणीयदा यात्रानिसंधिकर्ज्यास्यादाषाढेतुविशेषतः याज्ञवल्क्यः दौर्हृदस्याप्रदानेनगर्भोदोषमवाप्नुयात्
वैरूप्यंमरणंवापितस्मात्कार्यंप्रियंस्त्रियाः दौर्हृदंगर्भिणीप्रियम् तत्रैवाश्वलायनः वपनंमैथुनंतीर्थंवर्जयेद्ग
र्भिणीपतिः श्राद्धंचसप्तमान्मासादूर्ध्वंचान्यत्रवेदवित् श्राद्धंतद्भोजनमितिप्रयोगपारिजातः कालविधानेमुहूर्ते
दीपिकायांच क्षौरंशवानुगमनंनखकृंतनंचयुद्धादिवास्तुकरणंत्वतिदूरयानम् उद्वाहमौपनयनंजलधेश्चगा
हमायुः क्षयार्थमितिगर्भिणिकापतीनां रत्नसंग्रहेगालवः दहनंवपनंचैवचौलंवैगिरिरोहणम् नावआरोहणंचै
ववर्जयेद्गर्भिणीपतिः अन्यत्रापि प्रव्यक्तगर्भापतिरब्धियानंमृतस्यवाहंस्फुरकर्मसंगम् तस्यानुयत्नेनगयादितीर्थ
गागादिकंवास्तुविधिंनकुर्यात् प्रव्यक्तगर्भावनिताभवेन्मासत्रयात्परम् षण्मासात्परतःसूतिर्नवमेशिष्टवासिनी
अथसूतिकागृहप्रवेशः गर्गः रोहिण्यैंदवपौष्णेषुस्वातीवरुणयोरपि पुनर्वसौपुष्यहस्तधनिष्ठास्वुत्तरासुच
मैत्रेत्वाष्ट्रेतथाश्विन्यांसूतिकागारवेशनम् एतच्चसंभवे प्रसूतिसमयेकालेसद्यएवप्रवेशयेदितिवसिष्ठोक्तेः तत्र
नैर्ऋत्यांकार्यम् वारुण्यांभोजनगृहंनैर्ऋत्यांसूतिकागृहमि तिवसिष्ठोक्तेः विष्णुधर्मे दशाहंसूतिकागारमायुधैश्चवि
शोधतः वह्निनातिंदुकालातैःपूर्णकुंभैःप्रदीपकैः मुसलेनतथावारिवर्णकैश्चित्रितेनचेति अथजातकर्म
पारिजातेवसिष्ठः श्रुत्वाजातंपितापुत्रंसचैलंस्नानमाचरेत् मनुः प्राङ्नाभिवर्धनात्पुंसोजातकर्मविधीयते व
र्धनंछेदनम् हेमाद्रौवैजवापः जन्मनोनंतरंकार्यंजातकर्मयथाविधि दैवादतीतकालंचेदतीतेसूतकेभवेत्

पृथ्वीचंद्रोदये विष्णुधर्मे अछिन्ननाभिकर्तव्यं श्राद्धं वै पुत्रजन्मनि पुत्रपदेन कन्यापि गृह्यते तदाह तत्रैव कार्ष्णाजिनिः प्रा
दुर्भावे सुतपुत्र्योर्ग्रहणे चंद्रसूर्ययोः स्नात्वानंतरमात्मीयान्पितॄन्श्राद्धेन तर्पयेत् एतद्रात्रावपि कार्यम् पुत्रजन्मनि या
त्रायां शर्वर्यां दत्तमक्षय्यमिति तत्रैव व्यासोक्तेः बैजवापः जातमात्रकुमारस्य जातकर्म विधीयते स्तनप्राशनतः पूर्वं नाभिकर्त
नतोपि वा एतेन नैमित्तिकमपीदं जातेष्टिवदाशौचांते कार्यमिति शंका परास्ता जाते कुमारे पितॄणामामोदात्पुण्यं तदहरिति
हारीतोक्तेश्च अत्र श्राद्धमामेन हेम्ना वा कार्यमित्युक्तं पृथ्वीचंद्रोदये आदित्यपुराणे जातश्राद्धे तु पक्वान्नं न दद्याद्ब्राह्मणेष्व-
पीति हेमाद्रिस्तु पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् न पक्वेन न चामेन कल्याणान्यभिकामयन्निति संवर्तोक्तेर्हेम्ने
वेत्याह एतच्च जननाशौचे मरणाशौचे च कार्यमित्याह मिताक्षरायां प्रजापतिः आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति केचित्तु मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् आशौचापगमे कार्यं जात
कर्म यथाविधीति स्मृतिसंग्रहोक्तेराशौचांते कार्यमित्याहुः स्मृत्यर्थसारेपि विकल्प उक्तः मृदुध्रुवचरक्षिप्रभेष्वेषामुदयेषु च
गुरौ शुक्रे च वा केंद्रे जातकर्म च नाम च मुहूर्तादिलक्षणमाह श्रीधरः रोहिण्युत्तरभं स्थिरं गिरिशमूलेंद्रोरगाद्दारुणं क्षिप्रं ना
सत्यदिनेशपुष्यमनलेंद्राग्नी तु साधारणम् उग्रं पूर्वमघांतकं मृदु गतित्वाष्ट्रांत्यमैत्रं चरं विष्णुस्वातिशतोडुवस्वदितयः कु
र्युः स्वसंज्ञाफलम् अत्र सर्वत्र जातकर्मनामकर्मादावुक्तकालातिक्रमे नक्षत्रादिकं ज्ञेयम् देशकालोपघाताद्यैः काला
तिक्रमणं यदि अनस्तगे ज्येंदुसिते तत्कार्यं चोत्तरायण इति मदनरत्ने नारदोक्तेः बृहस्पतिरपि मुख्यकालाभे विधि
हीना विधिश्चेत्प्रमादतः नक्षत्रतिथिलग्नानां विचार्यैवं पुनः पुनः सूतके संध्यादौ विशेषं वक्ष्यामः अथ जन्म

निदुष्टकालाः तत्रगंडांतः ज्योतिर्निबंधेनारदः पूर्णानंदाख्ययोस्तिथ्योःसंधिर्नाडीद्वयंतथा गंडांतंमृत्युदंजन्मयात्रो
द्वाहव्रतादिषु कुलीरसिंहयोःकीटचापयोर्मीननिमेषयोः गंडांतमंतरालंस्यात् घटिकार्धंमृतिप्रदम् सार्पेंद्रपौष्णभेष्वंत्य
षोडशांशाभसंधयः तदग्रभेष्वाद्यपादभांशागंडांतसंज्ञकाः रत्नमालायाम् पौष्णाश्विन्योःसार्पपित्र्यर्क्षयोश्चयच्चज्येष्ठा
मूलयोरंतरालम् स्याद्गंडांतंस्याच्चतुर्नाडिकंहि यात्राजन्मोद्वाहकालेष्वनिष्टम् रत्नसंग्रहेनवनीतारिष्टे सर्वेषांगंडजाता
नांपरित्यागोविधीयते वर्जयेद्दर्शनंयावत्तच्चषाण्मासिकंभवेत् तिथ्यर्क्षगंडेपितृमातृनाशोलग्नेतुसंधौतनयस्यनाशः
सर्वेषुनोजीवतिहंतिबंधून्जीवन्पुनःस्याद्बहुवारणाढ्यः अथैषांदानमुक्तंगार्ग्ये तिथिगंडेत्वनड्वाहंनक्षत्रेधेनुरु
च्यते कांचनंलग्नगंडेतुगंडदोषोविनश्यति उत्तरेतिलपात्रंस्यात्पुष्येगोदानमुच्यते अजाप्रदानंत्वाष्ट्रेस्यात्पूर्वापादेच
कांचनम् उत्तरापुष्यचित्रासुपूर्वाषाढोद्भवस्यच कुर्याच्छांतिंप्रयत्नेननक्षत्राकरजांबुधः अथाश्लेषाफलम् मूर्धा
स्यनेत्रगलकांसयुगंचबाहुहृज्जानुगुह्यपदमित्यहिदेहभागाः बाणाद्रिनेत्रहुतभुक्श्रुतिनागरुद्रषण्णंदपंचघटिकाःक्र
मशःफलाढ्यः राज्यंपितृक्षयोमातृनाशःकामक्रियारतिः पितृभक्तोबलीस्वघ्नस्त्यागीभोगीधनीक्रमात् अथज्येष्ठा
फलंब्रह्मयामले ज्येष्ठादौजननीमाताद्वितीयेजननीपिता तृतीयेजननीभ्रातास्वयंमाताचतुर्थके आत्मानंपंचमेहं
तिषष्ठेगोत्रक्षयोभवेत् सप्तमेचोभयकुलंज्येष्ठभ्रातरमष्टमे नवमेश्वशुरंहंतिसर्वंहंतिदशांशकइति अथमूलफ
लम् भल्लाटः अभुक्तमूलसंभवंपरित्यजेत्तुबालकम् समाष्टकंपिताथवाननत्सुखंविलोकयेत् तदाद्यपादकेपिता
द्वितीयकेजनन्यथ धनक्षयस्तृतीयकेचतुर्थकःशुभावहः प्रतीपमंत्यपादतःफलंतदेवसार्पभे अभुक्तमूलंत्वाहद्य

दूर्वासिष्ठः ज्येष्ठांतेघटिकाचैकामूलादौघटिकाद्वयम् अभुक्तमूलमित्याहुस्तत्रजातंशिशुंत्यजेत् केचिज्ज्येष्ठांत्यमूलाद्यंनपा
दमभुक्तमूलमाहुः कश्यपसंहितायांतन्ययोक्तम् मूलाद्यपादजोहंतिपितरंतुद्वितीयजः मातरंस्वंतृतीयोर्थान्सुहृदंत
तुरीयजः फलंतदेवसार्पर्क्षेप्रतीपंतत्पादतः अथमूलवृक्षः जयार्णवे मूलंस्तंभस्त्वचाशाखापत्रंपुष्पंफलंशिखा
वेदाश्वसुनयश्चैवदिशश्चवसवस्तथा नंदाबाणारसारुद्रामूलभेदःप्रकीर्तितः मूलेमूलविनाशायस्तंभेहानिर्धनक्षयः त्व
चिभ्रातृविनाशायशाखामातृविनाशकृत् पत्रेसपरिवारःस्यात्पुष्पेषुनृपवल्लभः फलेपुत्रमतेराज्यंशिखायामल्पजी
वितम् अन्यत्रतन्ययोक्तम् मूलेसप्तघटीषुमूलहननंस्तंभेष्टसुस्वक्षयंत्वग्दिग्बंधुविनाशनंचविटपेरुद्रैर्हतोमातुलः
पत्रेकैःसुकृतीतुबाणकुसुमेमंत्रीफलेसागरैराजावन्हिशिखाल्पमायुरितिसन्मूलांघ्रिपेस्यात्फलं भूपालवल्लभः
इषालिसिंहेषुघटेचमूलंदिविस्थितंसुप्रतुलांगनांते पातालगंमेषधनुःकुलीरनक्रेषुमर्त्येविनिसंस्मरंति स्वर्गेमूले-
भवेद्राज्यंपातालेचेद्धनागमः मर्त्यलोकेयदामूलंतदाशून्यंसमादिशेत् वसिष्ठः नैर्ऋत्यभोद्भूतसुतःसुतावाक्षिप्रात्पश्वश्व
शुरंनिहंति तदंत्यपादेजनितोनिहंतितस्योत्क्रमेणाहिभवेकलत्रम् सुरेशताराजनिताधवाग्रजंद्विदैवताराजनितातु
देवरम् पुरंदरर्क्षेजनितःसुतस्तथास्वस्याग्रजंहंतिनपुत्रिकायदि प्रयोगपारिजाते मूलजाश्वशुरंहंतिव्यालजाचतदं
गनाम् माहेंद्रजाग्रजंहंतिदेवरंतुद्विदैवजा नृसिंहप्रसादे धवाग्रजंहंतिसुरेंद्रजातातथैवपत्न्याभगिनींपुमांश्च द्वि
दैवजादेवरमाशुहन्याद्भार्यानुजामाशुनिहंतिसूनुः पत्न्यग्रजामग्रजंवाहंतिज्येष्ठर्क्षजःपुमान् तथाभार्यास्वसारंवा
शालकंवाद्विदैवजः कन्यकादेवरंहंतिविशाखांत्यसमुद्भवा आद्यपादत्रयेनैवआद्यमेतुपुमान्भवेत् नहन्याद्देवरं

कन्यातुनामिश्राहिदेवजा तदृक्षांतोद्भवावर्ज्यादुराशिश्विकपुच्छवत् चित्राद्यर्धेपुष्यमध्येद्विपादेपूर्वाषाढाधिष्ण्यपादेतृतीये
जातःप्रथमश्चोत्तरार्धेविधत्तेमातापित्रोर्भ्रातरंबालनाशम् द्विमासंचोत्तराद्दोषःपुष्येनैवत्रिमासकः पूर्वाषाढाष्टमेमासिनि
त्रापाणमासिकंफलम् नवमासंतथाश्लेषामूलेचाष्टकवर्षकम् ज्येष्ठापंचदशेमासिपुत्रदर्शनवर्जिता गंभिष्ठः व्यतीपा
तेगतानिःश्यात्सरियेमृत्युमादिशेत् वैधृतौपितृहानिःस्यात्तद्दंदावंधतांव्रजेत् मूलेसमूलनाशःस्यात्कुलनाशोधृतौभवेत्
विकृतांगश्चहीनश्चसंध्ययोरुभयोरपि पर्वण्यपिप्रसूतौचसर्वारिष्टभयप्रदः नष्टलग्नदंतजातश्चपादजातस्तथैवच वि
पर्वणिप्रसूतौतुनाभिनालेनवेष्टितः राष्ट्रस्यनृपतेश्चैववत्सरस्यापिचविनाशकः तस्माच्छांतिंप्रकुर्वीतग्रहाणांक्रूरचेतसां
गर्गः कृष्णांचतुर्दशींषोढाकुर्याद्यदोषक्रमस्मृतम् द्वितीयेपितरंहंतितृतीयेहंतिमातरम् चतुर्थेमातुलंहंतिपंचमेवंश
नाशनम् षष्ठेतुधननाशःस्यादात्मनोवंशनाशनम् तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्विधानतः अथपित्रोर्नक्षत्रेजन्मदो
ष· तत्रदेवकीर्तिः यद्येकस्मिन्धिष्ण्येजायंतेदुहितरोथवापुत्राः पितुरंतकरास्तेतेयद्यपरेभीतिरतुलास्यात् गर्गः
एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः प्रसूतिश्चतयोर्मृत्युर्भवेदेकस्यनिश्चितम् शौनकः ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदि
जायते व्याधिपीडातदास्त्रीणामादौतुनतुदर्शनात् इत्थंसंजायतेयस्यतस्यमृत्युर्नसंशयः शांतिस्तु तदृक्षाधिपते
रूपंसुवर्णेनप्रकल्पयेत् सूर्यग्रहेसूर्यरूपंहेमचंद्रंतुराजतम् राहुरूपंप्रकुर्वीतनागेनैवविचक्षणः नागःसीसम् भ
याणांचैवरूपाणांस्थापनंतत्रकारयेत् आकृष्णेनाप्यायस्वस्वर्भानोरितिपूजामंत्राः नक्षत्रदेवतायास्तन्मंत्रेण सं
पूज्यतुयजेत्सूर्यंसमिद्भिश्चार्कसंभवैः चंद्रग्रहेचपालाशैर्दूर्वाभीराहुमेवच समिद्भिर्ब्रह्मवृक्षस्यप्रेशाप्यजुहुयाद्बुधः

आज्येनचरुणानैवतिलैश्चजुहुयात्ततः पंचगव्यैःपंचरत्नैःपंचत्वक्पंचपल्लवैः जलैरोषधिकल्कैश्च अभिषेकंसमाचरे
त् मंत्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः इमंमेगंगेपरस्तत्त्वायामीतिमंत्रकैः यजमानस्ततोदद्याद्दत्त्याप्रतिकृ
तिंत्रयमिति मात्स्ये अकालप्रसवानार्यःकालातीतप्रजास्तथा विकृतप्रसवाश्चैवयुग्मप्रसवकास्तथा अमानुषाअ
मुंडाश्चअजातव्यंजनास्तथा हीनांगाअधिकांगाश्चजायंतेयदिवास्त्रियः पशवःपक्षिणश्चैवतथैवचसरीसृपाः विना
शंतस्यदेशस्यकुलस्यचविनिर्दिशेत् निर्वासयेत्तांनगरात्ततःशांतिंसमाचरेत् पाद्मे उपरिप्रथमंयस्यजायंतेचशि
शोर्द्विजाः दंतैर्वासहयस्यस्याज्जन्मभार्गवसत्तम द्वितीयेचतृतीयेचचतुर्थेपंचमेतथा यदादंताश्चजायंतेमासेनैव
महद्भयम् मातरंपितरंवाथखादेदात्मानमेवच गजपृष्ठगतंबालंनौस्थंवास्थापयेद्द्विज तदभावेतुधर्मज्ञकांचने-
वावरासने सर्वौषधैःसर्वगंधैर्बीजैःपुष्पैःफलैस्तथा पंचगव्येनरत्नैश्चपताकाभिश्चभार्गव स्थालीपाकेनधातारंपूज
येत्तदनंतरम् सप्ताहंचात्रकर्तव्यंतथाब्राह्मणभोजनम् भद्रासनेनिवेश्यैनंशृङ्गैर्मूलैःफलैस्तथा सर्वौषधैःसर्वगंधैः
सर्वबीजैस्तथैवच स्नापयेत्पूजयेच्चात्रवन्हिंसोमंसमीरणम् पर्वतांश्चतथाख्यातान्देवदेवंचकेशवम् एतेषामेवजुहुया
द्घृतमग्नौयथाविधि ब्राह्मणानांतुदातव्याततःसंपूज्यदक्षिणा ब्रह्मयामले प्रथमंदंतनिर्मुक्तिरूर्ध्वंबालस्यचेद्भवेत्
क्लेशायमातुलस्येहतदाप्रोक्तामनीषिभिः सौवर्णंराजतंवापिताम्रंकांस्यमथापिवा दध्योदनेनसंपूर्णंपात्रंदद्याच्छिशोः
करे समंत्रंभाजनंदत्त्वासपश्येन्मातुलःशिशुम् सालंकारंसवस्त्रंचशिशुमालिंग्यसादरम् तत्रमंत्रः रक्षमांभागिनेयत्वं
रक्षमेसकलंकुलम् गृहीत्वाभाजनंसान्नंप्रसन्नोभवसर्वदा निर्विघ्नंकुरुकल्याणंनिर्विघ्नांचस्वमातरम् मय्यात्मा-

नमधिधाय्यचिरंजीवभयासह एवंकृतेविधानेतुविघ्नःकोपिनजायतइति अथत्रिकशांतिःशांतिसर्वस्वे सुतत्रयेसुतां
नत्रयेवासुतोयदि मातापित्रोःकुलस्यापितदानिष्टंमहद्भवेत् ज्येष्ठनाशोधनेहानिर्दुःखंवासुमहद्भवेत् तत्र
चेत्स्यात्तत्रयेवासुतोयदि मातापित्रोःकुलस्यापितदानिष्टंमहद्भवेत् ज्येष्ठनाशोधनेहानिर्दुःखंवासुमहद्भवेत् तत्र-
शांतिंप्रकुर्वीतवित्तशाठ्यविवर्जितः जातस्यैकादशाहेवाद्वादशाहेशुभेदिने आचार्यमृत्विजोवृत्वाग्रहयज्ञपुरःसरम्
ब्रह्मविष्णुमहेशेंद्रप्रतिमाःस्वर्णतःकृताः पूजयेद्धान्यराशिस्थकलशोपरिशक्तितः पंचमेकलशेरुद्रंपूजयेदैंद्रसंस्थ
या रुद्रसूक्तानिचत्वारिशांतिसूक्तानिसर्वशः द्विजएकोजपेद्धोमकालेशुचिसमाहितः आचार्योजुहुयात्तत्रसमिदाज्य
तिलांश्चरुम् अष्टोत्तरसहस्रंवाशतंवाविंशतंतुवा देवताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरःसरम् ब्रह्मादिमंत्रैरिंद्रस्यचतइंद्र
भयामहे ततःस्विष्टकृतंहुत्वाबलिंपूर्णाहुतिंततः अभिषेकंकुटुंबस्यकृत्वाचार्यंप्रपूजयेत् हिरण्यंधेनुरेकान्वत्विजांद
क्षिणाततः आज्यस्यवीक्षणंकृत्वाशांतिपाठंतुकारयेत् प्रतिमागुरवेदत्वाउपस्कारसमन्विताः ब्राह्मणान्भोजयेच्छक्त्यादी
नानाथांश्चतर्पयेत् एवंशांतिविधानेनसर्वारिष्टंप्रलीयतइति अन्येषुमूलाद्यृक्षेषुशांत्यादिप्रयोगपारिजातेमत्कृतेज्ञे
यः तिरलेनज्ञेयम् मिताक्षरायांमार्कंडेयः रक्षणीयातथाषष्ठीनिशातत्रविशेषतः रात्रौजागरणंकार्यंजन्मदानांतथाबलिः
पुरुषाःशस्त्रहस्ताश्चनृत्यगीतैश्चयोषितः रात्रौजागरणंकुर्युर्दशम्यांचैवसूतके व्यासः सूतिकावासनिलयाजन्मदाना
मदेवताः तासांयागनिमित्तंतुशुद्धिर्जन्मनिकीर्तिता प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रज
नानि अपरार्केब्राह्मे कन्याश्चतस्त्रोराकाद्यावातघ्नीचैवपंचमी क्रीडनार्थाचबालानांपष्ठीचशिशुरक्षिणी स्कंदतु
पूज्यनीयावेवेरयेत्रासोईजातिभिः राकानुमतिः सिनीवालीकुहूरितिचतस्रःकन्याइत्यर्थः अथदत्तपुत्रपरिग्रहविधिः

पारिजातेशौनकः अपुत्रोमृतपुत्रोवापुत्रार्थंसमुपोष्यच वाससीकुंडलेदत्त्वाउष्णीषंचांगुलीयकम् बंधूनन्नेनसंभोज्य
ब्राह्मणांश्चविशेषतः अन्वाधानादियत्तंत्रंकृत्वाज्योत्पवनांतकम् दातुःसमक्षंगत्वातुपुत्रंदेहीतियाचयेत् दानेसमर्थोदाता
स्मैयेयज्ञेनेतिपंचभिः देवस्यत्वेतिमंत्रेणहस्ताभ्यांपरिगृह्यच अंगादंगेत्यृचंजप्त्वाआघ्रायशिशुमूर्धनि गृहमध्येतमाधाय
चरुंहुत्वाविधानतः यस्त्वाहृदाकीरिणेत्यृचाचतसृभिस्तथा सोमोददद्दित्येताभिःप्रत्यृचंपंचभिस्तथा स्विष्टकृदादिहोमंच
कृत्वाशेषंसमापयेत् सच ब्राह्मणानांसपिंडेषुकर्तव्यःपुत्रसंग्रहः तदभावेसपिंडोवाअन्यत्रतुनकारयेत् मिताक्षरा
दौतुव्याहृतिभिराज्येनहोमउक्तः सचहोमोत्तरंजलपूर्वकंदेयः नवाज्ञात्रेण व्याहृतिभिर्हुत्वाप्रतिगृह्णीयादितिवसि
ष्ठोक्तेः मातापितावादद्यातांयमद्भिःपुत्रमापदि सदृशंप्रीतिसंयुक्तंसज्ञेयोदत्रिमःसुतइतिमनूक्तेः तत्रैववसिष्ठः न
त्वेवैकंपुत्रंदद्यात्प्रतिगृण्हीयाद्वानस्त्रीपुत्रंदद्यात्प्रतिगृण्हीयाद्वाअन्यत्रानुज्ञानाद्भर्तुरिति इदंचभर्तृसत्वे अन्यथा
दद्यान्मातापितावायंसपुत्रोदत्रिमःस्मृतइतिवत्सव्यासवचोविरोधःस्यात् दानंप्रतिग्रहोपलक्षणम् यत्तु समंत्रकहो
मस्यपुत्रप्रतिग्रहांगत्वात्व्याहृत्यादिमंत्रपाठेचस्त्रीशूद्रयोरनधिकारात् तयोर्दत्तकः पुत्रोनभवत्येवेतिशुद्धिविवेकेरु
द्रधरेणोक्तम् वाचस्पतिश्चैवमेवाह तन्न भर्तुरनुज्ञयास्त्रिया अपिप्रतिग्रहोक्तेः यद्यपिमेधातिथिनाभार्यात्ववदद्द
एरूपंदत्तकत्वंहोमसाध्यमुक्तम् स्त्रियाश्चहोमासंभवस्तथापिव्रतादिवाद्विप्रद्वाराहोमादिकारयेदितिहरिनाथादयः
संबंधतत्वेप्येवम् एवंशूद्रस्यापि स्त्रीशूद्राश्चसधर्माणइतिस्मृतेः अतएवशूद्रकर्तृकहोमोविप्रद्वारेणपराशरेणो
क्तः दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः ब्राह्मणस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेत् अत्रमाधवाचार्यः

योविप्रःशूद्रदक्षिणामादायतदीयंहविः शांतिपुष्ट्यादिसिद्ध्यैवैदिकैर्मंत्रैर्जुहोतितस्यविप्रस्यैवदोषः शूद्रस्तुहोमफलंल
भतेयेनिष्याचसते दत्तकेविशेषःकालिकापुराणे पितुर्गोत्रेणयःपुत्रःसंस्कृतःपृथिवीपते आचूडांतंनपुत्रःसपुत्रतांया
तिचान्यतः चूडोपायनसंस्कारानिजगोत्रेणवैकृताः दत्ताद्यास्तनयास्तेस्युरन्यथादासउच्यते ऊर्ध्वंतुपंचमाद्वर्षान्नदत्ता
द्याःसुतानृप गृहीत्वापंचवर्षीयंपुत्रेष्टिंप्रथमंचरेत् पंचमोर्ध्वंतुस्वदानेछोरेवदानंनान्यथा विक्रयंचैवदानंचन
नेयास्युरनिच्छवः दाराःपुत्राश्चसर्वस्वमात्मनैवतुयोजयेदितिहेमाद्रिमाधवधृतव्यासदक्षादिवचनात् यच्चयाज्ञवल्क्यः
स्वकुटुंबाविरोधेनदेयंदारसुतादृतइतितदूर्ध्वंस्वदानानिच्छुपुत्रपरम् तेनसर्वस्वदानेस्वदानेच्छुदारपुत्रदानंसिद्धम् यत्तु-
विश्वजिदधिकरणंषष्ठे तत्रपुत्रादीनांज्ञातित्वेनस्वशब्दवाच्यत्वात्तुभत्वेनदानमाशंक्यनिराकृतम् जन्यपुंस्त्वस्यदानेनानि
ष्पत्तेः दासत्वेनदानंभवत्येव तस्माद्यथेष्टविनियोगार्हत्वंस्वत्वंभवत्येव पुत्रेस्वत्वाभावंवदन्पुत्रक्रयविक्रयादिशुनःशे
पविक्रयादिश्रौतलिंगाद्यासक्रयविक्रयादिव्यवहारायोगात् मूर्खएव नह्ययमायारणःसुशेवोन्योदर्योमनसामंतवाउद
तिश्रुतोरक्तकानिषेधः सोप्यौरसातिशयार्थः अन्यथाशुनःशेपादिमतिग्रहश्रौतलिंगाविरोधापत्तेःउपेयांतवपुत्रतामि
त्युक्तेः इदंचश्रौतलिंगंस्वयंदत्तक्रीतपरम् नदत्तकपरम् द्वादशविधपुत्रमध्येदत्तात्मातुस्वयंदत्तः क्रीतश्चताभ्यांविक्री
तइतियाज्ञवल्क्येनतयोर्दत्तकाद्भेदोक्तेःतयोश्चदत्तौरसेतरेषांतुपुत्रत्वेनपरिग्रहइतिकलौनिषेधात्तेनसंस्कारोत्तरंस्वयं
क्रीतौनभवतःनदुनरं दत्तकोनभवत्येवेतिसिद्धम् अथयमलयोःसंस्कारक्रमार्थंज्येष्ठकनिष्ठभावउच्यते मनुः
पुत्रःकनिष्ठोज्येष्ठायांकनिष्ठायांचपूर्वजः कथंतयोर्विभागःस्यादितिचेत्संशयोभवेत् सदृशस्त्रीप्रजातानांपुत्राणामविशे

षतः नमावृतोज्यैष्ठमस्तिजन्मतोज्यैष्ठमुच्यते नेनकनिष्ठायांपूर्वजातएवज्येष्ठोनज्येष्ठायांपश्चाज्जातइत्यर्थः सएवश्रा-
द्धाधिकारी जन्मज्येष्ठेनचाह्वानंसुब्रह्मण्यास्वपिस्मृतम् यमयोश्चैवगर्भेषुजन्मतोज्येष्ठतामता देवलः यस्यजातस्ययमयोः
पश्यंतिप्रथमंमुखम् संतानःपितरश्चैवतस्मिन्ज्येष्ठ्यंप्रतिष्ठितम् भागवतेतु द्वौतदाभवतोगर्भौसूतिर्वंशविपर्ययादित्यु
क्तेः पश्चादुत्पन्नस्यज्येष्ठ्यमुक्तम् अत्रदेशाचारतोव्यवस्था पूर्वमेवतुयुक्तम् गर्भाष्टमइत्यादौविशेषनिर्देशेएवगर्भग्रह
णंनान्यत्र अन्यथालङ्घेयथ्यात् अथसूतिकास्नानम् ज्योतिषे करेंद्रभाग्यानिलवासवांत्यमैत्रेंदवाश्विधभेष्विपुंसां
तिथावरिक्तेशुभगामनंतिप्रसूतिकास्नानविधिंमुनींद्राः अथनामकर्म मदनरत्नेबृहस्पतिः द्वादशेदशमेवापिजन्मतो
पित्रयोदशे षोडशेविंशतौचैवद्वात्रिंशेवर्णतःक्रमात् याज्ञवल्क्यः अहन्येकादशेनाम हेमाद्रौभविष्ये नामधेयंदशा
म्यांतुद्वादश्यांमासिकेन्वन अष्टादशेहनितथावदंत्यन्येमनीषिणः दशम्यामतीतायामितिज्ञेयम् आशौचापगमेनामधेय
मितिविष्णूक्तेः गृह्यपरिशिष्टेपि जननाद्दशरात्रेव्युष्टेशतरात्रेसंवत्सरेवानामकरणम् व्युष्टेतीते ज्योतिर्निबंधेगर्गः
अमासंक्रांतिविष्ट्यादौप्राप्तकालेपिनाचरेत् श्रीधरः मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युतभाजेशाश्विशशां
कपौष्णादिनकृत्सुपुष्यगुरौस्थिरे छिद्रांपंचदशींविहायनवमींशुक्लेष्टमेभार्गवज्ञाचार्यास्तपादभागादिवसेनामानिकु
र्याच्छिशोः मनुः शर्मांतंब्राह्मणस्यस्याद्वर्मांतंक्षत्रियस्यतु वैश्यस्यधनसंयुक्तंशूद्रस्यप्रेष्यसंयुतम् मदनरत्नेनारदीये
सूतकांतेनामकर्मविधेयंस्वकुलोचितम् नामपूर्वंतुमासस्यमंगलंसुसमाक्षरैः तत्रैवगार्ग्यः पासनामगुरोर्नामदद्या
द्बालस्यवैपिता स्मृतिसंग्रहे कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः योगीशःपुंडरी

तन्मासनामप्रथमं दद्यात्संबुध्यन्तैर्यथा देवा
कृष्णोमासनामान्यनुक्रमात् अत्र मार्गशीर्षादिश्चैत्रादिर्वा क्रम इति मदनरत्ने
स्यगजाश्वानां वृक्षाणां चापिकूपयोः सर्वापणानां पण्यानां निक्षार्थं योषितां नृणाम् काव्यानां च कवीनां च पश्वादीनां च स
र्वेषां राजप्रासादवास्तूनां नामकर्म विशिष्यते नाक्षत्रमपि नाम कार्यम् अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्या
तामोपनयनादित्याश्वलायनोक्तेः कुलदेवतानक्षत्रसंबद्धं पिता नाम कुर्यादिति मदनरत्ने शंखोक्तेः तच्च नक्षत्रपादाक्षराद्यास
रं कुर्यादित्युक्तं परिशिष्टे तदक्षरादिकं नाम यस्मिन्धिष्ण्ये यदाक्षरमिति स्वदर्शनभाष्येतु गोरे मघूज्येष्ठपु दादिरादौ तत्ले
र्वातश्च वशा श्वयुक् शेषेषु नाम्नोः कपरः स्वरांतः स्यावारदीर्घः सविसर्ग इष्टः इत्युक्तं ठांतस्यैति श्रोष्ठ पदे
त्यत्रादौ गत्यरेचवृद्धिः श्रौष्ठपादइति अंतगमपभरणीशब्दः श्रुतावुक्तः तत्र श्रवणादौ नवादिवृद्धिः अपभरणआपभ
रणइत्यादि मदनरत्ने वसिष्ठः जन्माहे द्वादशाहे वा दशाहे वा विशेषतः उत्तराः रेवती हस्तमूलपुष्याः सवारुणाः श्रवणादि
तिमैत्रं च स्वाती मृगशिरस्तथा प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि अथ दोलारोहः पारिजाते बृहस्पतिः दोला
रोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा षोडशे दिवसे वापि द्वाविंशे दिवसेऽपि वा ज्योतिर्निबंधे करत्रयेवैष्णवरेवतीश्रुदितिद्व
येवाश्विनकभ्रुवेषु कुर्याच्छिशूनां नृपतेश्च तद्वदांदोलनं वैस्वरिपनोभवंति तत्रैव आंदोलाशयने पुंसो द्वादशो दिव
सः शुभः त्रयोदशस्तु कन्यायां न नक्षत्रविचारणा अन्यस्मिन्दिवसे चेत्स्यात्तिर्यगास्ये प्रशस्यते अथ दुग्धपानम् नृसिं
हः एकत्रिंशाह्नि चैव पयः शंखेन पाययेत् अन्नप्राशननक्षत्रे दिवसोदयराशिषु अथ कर्णवेधः मदनरत्ने वसिष्ठ
श्रीधरौ मासे षष्ठे सप्तमे वाष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि मध्ये नाह्नः पूर्वभागेन रात्रौ नक्षत्रे द्वे द्वे तिथीवर्जयित्वा

अत्रजन्ममासोवर्ज्यः ज्योतिर्निबंधेगर्गः मासेषष्ठेसप्तमेवाप्यष्टमेमासिवत्सरे कर्णवेधंप्रशंसंतिपुष्ट्यायुःश्रीविवृद्धये म
दनरत्ने प्रथमेसप्तमेमासिअष्टमेदशमेथवा द्वादशेचतथाकुर्यात्कर्णवेधंशुभावहम् हेमाद्रौव्यासः कार्तिकेपौषमासेवा
चैत्रेवाफाल्गुनेपिवा कर्णवेधंप्रशंसंतिशुक्लपक्षेशुभेदिने श्रीधरः हरिहयकरचित्रासौम्यपौष्णोत्तरादितिवसुषु
घटालीसिंहवर्ज्येसल्लग्ने शशिगुरुबुधकाव्यानांदिनेपर्वरिक्तारहिततिथिषुशस्तेवेधनेकर्णवेधः मदनरत्नेबृहस्पतिः
द्वितीयादशमीषष्ठीसप्तमीचत्रयोदशी द्वादशीपंचमीशस्तातृतीयाकर्णवेधने सौवर्णीराजपुत्रस्यराजतीविप्रवैश्ययोः
शूद्रस्यचायसीसूचीमध्यमाष्टांगुलात्मिका हेमाद्रौदेवलः कर्णरंध्रेरवेश्छायानविशेदग्रजन्मनः तंदृष्ट्वाविलयंयांतिपु
ण्यौघाश्चपुरातनाः शंखः अंगुष्ठमात्रसुषिरौकर्णौनभवतोयदि तस्मैश्राद्धंनदातव्यंदत्तंचेदासुरंभवेत् अथतांबूल
भक्षणम् चंडेश्वरः सार्धमासद्वयेदद्यात्तांबूलंप्रथमंशिशोः कर्पूरादिकसंमिश्रंविलासायहितायच मूलार्कचित्रकर
तिष्यहरींद्रभेषुपौष्णेतथामृगशिरोदितिवासवेषु अर्केंदुजीवभृगुबोधनवासरेषुतांबूलभक्षणविधिर्मुनिभिःप्रदिष्टः
अथनिष्क्रमणम् ज्योतिर्निबंधेयमः तृतीयेवाचतुर्थेवामासिनिष्क्रमणंभवेत् यमः ततस्तृतीयेकर्तव्यंमासिसू
र्यस्यदर्शनम् चतुर्थेमासिकर्तव्यंशिशोश्चंद्रस्यदर्शनम् अत्रसूर्येंद्वोःकर्मणायेनतयोःश्राद्धंनापेक्ष्यतइतिछंदोगपरि
शिष्टात् छंदोगानांनिष्क्रमणेवृद्धिश्राद्धंनास्तीतिकल्पतरुः व्यासः मैत्रेपुष्यपुनर्वसुप्रथमभेपौष्णेनुकूलेविधौहस्तेचै
वसुरेश्वरेचमृगभेताराशुभेशस्तासुच कुर्यान्निष्क्रमणंशिशोर्बुधगुरोशुक्रेनिरिक्तेतिथौकन्याकुंभतुलामृगारिभवनेसौम्य
ग्रहालोकिते मदनरत्ने अन्नप्राशनकालेवाकुर्यान्निष्क्रमणक्रियाम् विष्णुधर्मे दिगीशानांदिनेतत्रतथाचंद्रार्कयोर्द्विजः

दशमेविशक्रदेछिद्रानिस्नयनवमीतिथयःशुभाःस्मृः वसिष्ठः बालान्नप्राशनेव्रतबंधनेनराजाभिषेकेखलुजन्मधिष्ण्यम् श्र
मंत्वभिषेकसतनंविवाहेसीमंतयात्रादिषुमंगलेषु मार्कंडेयविष्णुधर्मयोः ब्रह्माणंशंकरंविष्णुंचंद्रार्कौचदिगीश्वरान् भुवंदि
शश्वसंपूज्यहुत्वाचन्होतथाचरुम् देवतापुरतस्तस्यधात्युत्संगगतस्यच अलंकृतस्यदातव्यमन्नंपात्रेसकांचनम् गव्याज्यद
धिसंयुक्तंप्राशयेत्पायसंतुवेति अथाब्दपूर्तिः व्यवहारनिर्णये नवांबरधरोभूत्वापूजयेच्चचिरायुषम् मार्कंडेयंनरोभक्त्या
पूजयेत्प्रयतस्तथा ततोदीर्घायुषंव्यासंरामंद्रौणिंकृपंबलिम् प्रह्रादंचहनूमंतंविभीषणमथार्चयेत् स्वनक्षत्रंजन्मति-
थिंप्राप्यसंपूजयेन्नरः षष्ठींचदधिभक्तेनवर्षेवर्षेपुनःपुनः तिथितत्त्वेएतन्नामभिस्तिलहोमोप्युक्तः आदित्यपुराणे स
र्वैश्वजन्मदिवसेस्नातेर्मंगलवारिभिः गुरुदेवाग्निविप्राश्चपूजनीयाःप्रयत्नतः स्वनक्षत्रंचपितरोतथादेवःप्रजापतिः
प्रतिसंवत्सरंयत्नात्कर्तव्यश्चमहोत्सवः कृत्यचिंतामणौ गुडदुग्धतिलान्दत्वाहस्तेग्रंथींचबंधयेत् गुग्गुलुंनिंबसिद्धा
र्थदूर्वागोरोचनादिकम् संपूज्यभानुविप्रेशौगर्हार्थप्रार्थयेदिदम् चिरंजीवीयथात्वंभोभविष्यामितथामुने रूपवान्वित्त
वांश्चैवश्रियायुक्तश्चसर्वदा मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन आयुरारोग्यसिद्ध्यर्थंप्रसादभगवन्मुने चिरंजीवीय
थात्वंतुमुनीनांप्रवरद्विज कुरुष्वमुनिशार्दूलतथामांचिरजीविनम् मार्कंडेयमहाभागसप्तकल्पांतजीवन आयुरारोग्य
सिद्ध्यर्थमस्माकंवरदोभव सतिलंगुडसंमिश्रमंजल्यर्धमितंपयः मार्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धयइतिपयःपि
बेत् तिथितत्त्वेस्कांदे खंडनंनखकेशानांमैथुनाध्वगमौतथा आमिषंकलहंहिंसांवर्षवृद्धौविवर्जयेत् तत्रैवदीपिकायां
कृतांतकुजयोर्वारेयस्यजन्मतिथिर्भवेत् अनृक्षयोगसप्राप्तौविघ्नस्तस्यपदेपदे कृतांतशांतिः तस्यसर्वौषधिस्नानंगुरुदेवा

दशमेविशकेद्वादशेवाविहायनवमींतिथयःशुभास्कः वसिष्ठः बालानामुक्तोमतबंधनेचराजाभिषेकेखलुजन्मधिष्ण्यम् श्रु
भंतनिषेकंसततंविवाहेसीमंतयात्रादिषुमंगलेषु मार्कंडेयविष्णुधर्मयोः ब्रह्माणंशंकरंविष्णुंचंद्रार्कौचदिगीश्वरान् मुनींद्
राश्चसंपूज्यहुत्वाचवह्नौतथाचरुम् देवतापुरतस्तस्यधान्युत्संगगतस्यच अलंकृतस्यदातव्यमन्नंपात्रेसकांचनम् मध्वाज्यद
धिसंयुक्तंप्राशयेत्पायसंतुवेति अथाब्दपूर्तिः व्यवहारनिर्णये नवांबरधरोभूत्वापूजयेच्चचिरायुषम् मार्कंडेयंनरोभक्त्या
पूजयेत्प्रयतस्तथा ततोदीर्घायुषंव्यासंरामंद्रौणिंकृपंबलिम् प्रह्लादंचहनूमंतंविभीषणमथार्चयेत् स्वनक्षत्रंजन्मति-
थिंप्राप्यसंपूजयेन्नरः षष्ठींचदधिभक्तेनवर्षेवर्षेपुनःपुनः तिथितत्त्वेएतन्नामभिस्तिलहोमोप्युक्तः आदित्यपुराणे स
र्वेष्वजन्मदिवसेस्नातोमंगलवारिभिः गुरुदेवाग्निविप्रांश्चपूजनीयाःप्रयत्नतः स्वनक्षत्रंचपितरौतथादेवःप्रजापतिः
प्रतिसंवत्सरंयत्नात्कर्तव्यश्चमहोत्सवः कृत्यचिंतामणौ गुडदुग्धतिलान्दद्याद्धस्तेग्रंथींचबंधयेत् गुग्गुलुंनिंबसिद्धा
र्थदूर्वागोरोचनादिकम् संपूज्यभानुविघ्नेशौगृहार्घंप्रार्थयेदिदम् चिरंजीवीयथात्वंभोभविष्यामितथामुने रूपवान्वित्त
वांश्चैवश्रियायुक्तश्चसर्वदा मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन आयुरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने चिरंजीवीय
थात्वंतुमुनीनांप्रवरद्विज कुरुष्वमुनिशार्दूलतथामांचिरजीविनम् मार्कंडेयमहाभागसप्तकल्पांतजीवन आयुरारोग्य
सिद्ध्यर्थमस्माकंवरदोभव सतिलंगुडसंमिश्रमंजल्यर्धमितंपयः मार्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धयइतिपयःपि
बेत् तिथितत्त्वेस्कांदे खंडनंनखकेशानांमैथुनाध्वगमौतथा आमिषंकलहंहिंसांवर्षवृद्धौविवर्जयेत् तत्रैवदीपिकायां
कृतांतकुजयोर्वारेयस्यजन्मतिथिर्भवेत् अनृतयोगसंभासौविघ्नस्तस्यपदेपदे कृतांतःशनिः तस्यसर्वौषधिस्नानंगुरुदेवा

मिश्रूजनम् हृद्मनुः मृतेजन्मनिसंक्रांतौश्राद्धेजन्मदिनेतथा अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणा अत्रजन्मतिथिरौ
दयिकीग्राह्या युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया रवेरुदयमीक्षंतेनतत्रतिथियुग्मतेतिक्रसत ल्पार्णवेवचनात् विशेषो
मत्कृतश्राद्धधर्मत्रयः अथकटिसूत्रम् प्रयोगपारिजातेब्राह्मे प्रतिसंवत्सरांतसेंवक्ष्येनृणांविधिंपरम् दत्वागोध्यूहिर
ण्यादितथास्वर्णादिनिर्मितम् यथाध्यात्कटिसूत्रंनवासःसंगृह्यनूतनम् दूर्वांकुरैरथाज्येनचरुणावापिनाकिनम् आयुष्य
होमंकृत्वान्ततर्पयेत्पितृदेवताः अथचौलम् प्रयोगपारिजातेषड्गुरुशिष्यः जाताधिकाराज्जन्मादितृतीयेब्देतुचौलकं
आधेब्देकुर्वतेकेचित्संवत्सरेद्वितीयके उपनीत्यासहैवेतिविकल्पाःकुलधर्मतः बृहस्पतिः तृतीयेब्देशिशोर्गर्भाज्जन्म-
तोवाविशेषतः पंचमेसप्तमेवापिस्त्रियाःपुंसोपिवासमम् तत्रैवनारदः जन्मतस्तुतृतीयेब्देश्रेष्ठमिच्छंतिपंडिताः पंच
मेसप्तमेवापिजन्मतोमध्यमंभवेत् अधमंगर्भतःस्यात्तुनवमेकादशेपिवेति पारिजातेबृहस्पतिः उत्तरायणगेसूर्येवि
शेषात्सौम्यगोलके शुक्लपक्षेशुभंप्रोक्तंकृष्णपक्षेशुभेतरत् अशक्तौस्यात्त्रिभागःस्यात्कृष्णपक्षेत्रिधाकृते तत्रैवच-
शिष्टः द्वित्रिपंचमसप्तम्यामेकादश्यांतथैवच दशम्यांचत्रयोदश्यांकार्यंक्षौरंविजानता नृसिंहीये षष्ठ्यष्टमीचतुर्थीचन
वमीचचतुर्दशी द्वादशीदर्शपूर्णेद्वेप्रतिपच्चैवनिंदिताः वसिष्ठः रवेरंगारकस्यैवसूर्यपुत्रस्यचैवहि निंदितादिवसाःक्षौरे
शेषाःकार्यकराःस्मृताः ज्योतिर्निबंधेबृहस्पतिः पापग्रहाणांवारादौविप्राणांशुभदंरवौ क्षत्रियाणांक्षमासूनोर्विट्शूद्रा
णांशनेःशुभम् हस्तादित्रिविष्णुपौष्णाश्वश्रविष्ठादित्यपुष्यभम् सौम्यचित्रेनवक्षौरेउत्तमानवतारकाः त्रीण्युत्तराणिवाय
व्यंरोहिणीवारुणंतथा क्षौरेपण्यमध्यमाःप्रोक्ताःशेषाद्वादशगर्हिताः निधनेजन्मनक्षत्रेचैवनाशोनंद्रमेष्टमे विपत्करेव

धेक्षौरंमत्थरेचविवर्जयेत् अत्रलग्नशुद्धिरन्येचयोगाज्योतिर्विद्भ्योज्ञेयाः अन्येचविशेषाःश्मश्रुकर्मनिर्णयेवक्ष्यंते एतच्च
शिशोर्मातरिगर्भिण्यांनकार्यम् तदाहज्योतिर्निबंधेमदनरत्नेचवृद्धगार्ग्यः कुंभचूडाकृतौमातायदिसागर्भिणीभवेत् शस्त्रे
णमृत्युमाप्नोतितस्मात्क्षौरंविवर्जयेत् अस्यापवादमाहतत्रैवनारदः सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् पंचा-
ब्दात्प्रागथोर्ध्वंतुगर्भिण्यामपिकारयेत् यदिगर्भविपत्तिःस्याच्छिशोर्वामरणंयदि सहोपनीत्याकुर्याच्चेत्तदादोषोनविद्यते
बृहस्पतिः गर्भिण्यांमातरिशिशोःक्षौरकर्मनकारयेत् व्रताभिषेकेप्येवंस्यात्कालोवेदव्रतेष्वपि अभिषेकःसमावर्तनम्
गर्भिण्यामपिपंचमासपर्यंतंनदोषइत्युक्तंमुहूर्तदीपिकायांगर्गेण पंचममासादूर्ध्वंमातुर्गर्भस्यजायतेमृत्युरिति मदनरत्ने
बृहस्पतिः पुत्रचूडाकृतौमातागर्भिणीयदिवाभवेत् विपद्यतेगुरुस्तत्रदंपतीशिशुकस्तथा गर्भेमातुःकुमारस्यनकुर्याच्चौल
कर्मतु पंचमासादधःकुर्यादतऊर्ध्वंनकारयेत् गर्गः ज्वरस्योत्पादनंयस्यलग्नंतस्यनकारयेत् दोषनिर्गमनात्पश्चात्तस्योध
र्मसमाचरेत् लग्नमितिमंगलोपलक्षणम् ज्योतिर्गर्गः विवाहोत्सवयज्ञेषुमातायदिरजस्वला तदासमृत्युमाप्नोतिय
चर्मादिवसंविना वसिष्ठः यस्यमांगलिकंकार्यंतस्यमातारजस्वला अर्धतदेवं तत्रैवबृहस्पतिः प्राप्तेभ्युदयश्राद्धेपुत्र
संस्कारकर्मणि पत्नीरजस्वलाचेत्स्यान्नकुर्यात्तत्सितातदा पित्रेतिकर्तृमात्रोपलक्षणम् संकटेतुवाक्यसारेउक्तम् अला
भेसुमुहूर्तस्यरजोदोषेह्युपस्थिते श्रियंसंपूज्यविधिवत्ततोमंगलमाचरेत् एतच्चमंडनोत्तरंनकार्यम् नमंडनान्नापिहि
मुंडनंचगोत्रेकुलायांयदिनाब्दभेदइतिमदनरत्नेवसिष्ठोक्तेः तत्रैवकात्यायनः कुलेऋतुत्रयादर्वाङ्मंडनान्नतुमुंडनम्
प्रवेशान्निर्गमोनेष्टोनकुर्यान्मंगलत्रयम् तथाचमनुः एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः नसमानक्रियांकुर्यान्मा

नृमेदोषपायते आशौचेतु संग्रहे संकटेसगनुप्राप्तेसूतकेसमुपागते कूष्मांडीभिर्घृतंहुत्वागांचदद्यात्पयस्विनीम् चूडोपनय
नोद्वाहमतिष्ठादिकमाचरेदिति ज्योतिर्निबंधे घष्ठेदेषोडशेवर्षेविवाहान्तेतथैवच अंतर्वत्न्यांचजायायांनेष्यतेमुंडनंक्वचित्
अन्योपिविशेषोविवाहप्रकरणेवक्ष्यते दीपिकायाम् नचूडाजन्मभाग्नेयदारुणेपुशनौकुजे प्रतिपद्भद्रारिक्तासुविद्यारंभस्तु
पंचमे प्रयोगरत्ने मध्येशिरसिचूडास्याद्वासिष्ठानांतुदक्षिणे उभयोःपार्श्वयोरत्रिकश्यपानांशिखामता माधवीयेप्येवं
आपस्तंबस्त्वाह तूष्णींकेशान्विनीययथर्षिशिखानिदधाति यथर्षिप्रवरसंख्यया तासांमध्यशिखावर्जमुपनयनेवपनंका
र्यम् प्रतिदिशंप्रवपतीत्युपनयनेतेनैवोक्तेः रिक्तोवाएषोनपिहितोयन्मुंडस्तस्मैतदपिधानंयच्छिखेतिश्रुतेः विशिखो
व्युपवीतश्चयत्करोतिनतत्कृतमितिनिषेधाच्च सत्रेतुवचनात्साशिखंवपनमितिसुदर्शनभाष्येउक्तम् यत्तु कुमाराविशि
खाइवेतिलिंगंतच्छंदोगपरम् अपरार्केमदनरत्नेचलौगाक्षिः दक्षिणतःकपुंजावासिष्ठानामुभयतोत्रिकश्यपानांमुंडाभृ
गवः पंचचूडाअंगिरसोवाजिमेके मंगलार्थेशिखिनोन्येयथाकुलधर्मवेति कपुंजाशिखा वाजिःकेशपंक्तिः स्मृतिदर्पणे
एकशिखादक्षिणतोवासिष्ठगोत्रस्यपंचांगिरसोभृगोस्तु नैकाशिखाकश्यपगोत्रजानांशिखोभयत्रापियथाकुलंच एत
च्छूद्रातिरिक्तविषयम् शूद्रस्यानियताःकेशाश्चेपाइतिवसिष्ठोक्तेः यत्तुपाद्मे नशिखानोपवीतीस्यान्नोच्चरेत्संस्कृतांगिरम्
इतिशूद्रमुपक्रम्योक्तम् तदसच्छूद्रस्येतिकेचित् विकल्पइतितुयुक्तम् अतएवहारीतः स्त्रीशूद्रौतुशिखांछित्वाक्रोधाद्वै
राग्यतोपिवा प्राजापत्यंप्रकुर्वीतांनिष्कृतिर्नान्यथाभवेत् एतत्सार्थग्रहपक्षे अत्रदेशभेदाद्व्यवस्थेतिदिक् ज्योतिर्निबंधे
नर्मदोत्तरदेशेतुसिंहस्थेदेवमंत्रिणि शुभकर्मनकुर्वीतनिषेधोनास्तिदक्षिणे अत्रभोजनेप्रायश्चित्तमुक्तंपराशरमाधवी

ये निवृत्तेचूडहोमेतुभाज्ञागकरणात्तथा चरेत्सांतपनंशुल्काजातकर्मणिनैवहि अतोन्येष्वतुसंस्कारेषूपवासेनशुध्यति
एतेसंस्काराःस्त्रीणाममंत्रकाःकार्याः होमस्तुसमंत्रकइतिप्रयोगपारिजाते आश्वलायनोपि होमंकुर्यात्तुपुंवत्तस्यास्त्रीणांचू
डाकृतावपीति मनुरपि अमंत्रकातुकार्येयंस्त्रीणामावृदशेषतइति होमेपिमंत्रइत्येके संस्काराःस्त्रीणामहोम
कास्तूष्णींस्कारितिस्मृत्यर्थसारे होमोनेतिवृत्तिकृत् अथविद्यारंभः मदनरत्नेनृसिंहः अक्षरस्वीकृतिं
कुर्यात्प्राप्तेपंचमहायने उत्तरायणगेसूर्येकुंभमासंविवर्जयेत् दीपिकायाम् घर्मेपर्जन्यकेकालेषष्ठींरिक्तांशनिकुजम्
अनध्यायान्विनानत्वादेवंग्रंथकृतंशुभम् श्रीधरः हस्तादित्यसमीरमित्रपुरुजित्पौष्णाश्विचित्राश्रुतेधाराकर्यैशादितोदया
दिरहितेराशौस्थिरेचोभये पक्षेपूर्णनिशाकरेप्रतिपदंरिक्तांविहायाष्टमींषष्ठीमष्टमशुद्धभाजिभवनेप्रोक्तास्वरस्वीकृतिः
विष्णुधर्मोत्तरे पूजयित्वाहरिंलक्ष्मींतथादेवींसरस्वतीम् स्वविद्यासूत्रकारांश्चस्वांविद्यांचविशेषतः एतेषामेवदेवा
नांनाम्नातुजुहुयाद्धृतम् दक्षिणाभिर्द्विजेंद्राणांकर्तव्यंचात्रपूजनमिति अथधनुर्विद्यादीपिकायाम् आदिति
गुरुयमार्कस्वातिचित्राग्निपित्र्यध्रुवहरिवसुमूलेष्विंदुभागांत्यभेषु शनिशशिबुधवारेविष्णुबोधेविपौषेष्वसमयानि
धियोगेचापविद्याप्रदानम् अथानुपनीतस्यविशेषः गौतमः प्रागुपनयनात्कामचारवादभक्षाइति भक्षणंलशु
नादेरपीतिहरदत्तः अपरार्केशंखशातातपः शिशोरभ्युक्षणंप्रोक्तंबालस्याचमनंस्मृतम् रजस्वलादिसंस्पर्शेस्नानमे
वकुमारके प्राक्चूडाकरणाद्बालःप्रागन्नप्राशनाच्छिशुः कुमारकस्तुविज्ञेयोयावन्मौंजीनिबंधनम् आपस्तंबोपि
अन्नप्राशनात्प्रभृत्याब्दात्संवत्सरादित्येकेइति गौतमोपि नतदुपस्पर्शनादाशौचम् तस्यानुपनीतस्यचंडालादि

सृष्टस्यापिस्पर्शान्निस्नानम् इदंचपंचवर्षात्प्राक् ऊर्ध्वंतुस्नानंभवत्येव बालस्यपंचमाद्वर्षाद्धक्ष्यार्थंशौचमाचरेदितिस्मृ
तेः कामचारादिकंप्येवम् ऊनैकादशवर्षस्यपंचवर्षात्परस्यच चरेद्गुरुःसुहृद्वैवप्रायश्चित्तंविशुद्धये अतोबालतरस्या
स्यनापराधोनपातकमितिस्मृतेरितिहरदत्तः स्मृत्यर्थसारेप्येवम् अथोपनयनम् आश्वलायनः गर्भाष्टमेष्टमे
वाब्देपंचमेसप्तमेपिवा द्विजत्वंप्राप्नुयाद्विप्रोवर्षेत्वेकादशेनृपः मनुः ब्रह्मवर्चसकामस्यकार्योविप्रस्यपंचमे राज्ञोब
लार्थिनःषष्ठेवैश्यस्यार्थार्थिनोष्टमे विष्णुः षष्ठेतुधनकामस्यविद्याकामस्यसप्तमे अष्टमेसर्वकामस्यनवमेकांतिमि
च्छतः आपस्तंबः गर्भाष्टमेषुब्राह्मणमुपनयीत बहुवचनंगर्भषष्ठगर्भसप्तमयोःप्राप्त्यर्थमितिसुदर्शनभाष्ये के
चित्तुविप्रस्यपठंनमन्यंते आपस्तंबः अथकाम्यानि सप्तमेब्रह्मवर्चसकाममष्टमआयुष्कामंनवमेतेजस्कामंदशमे
न्नाद्यकाममेकादशइंद्रियकामंद्वादशेपशुकाममुपनयेत् गौणकालमाहमनुः आषोडशाद्ब्राह्मणस्यसावित्रीना
तिवर्तते आद्वाविंशात्क्षत्रबंधोराचतुर्विंशतेर्विशः ज्योतिर्निबंधे अग्रजावाहुजावैश्याःस्वावधेरूर्ध्वमब्दतः अकृ
तोपनयाःसर्वेवृषलाएवतेस्मृताः गर्गः विप्रंवसंतेक्षितिपंनिदाघेवैश्यंघनांतेव्रतिनंविदध्यात् माघादिशुक्ला
न्तिकपंचमासाःसाधारणावासकलद्विजानाम् हेमाद्रौज्योतिषे माघादिषुचमासेषुमौंजीपंचसुशस्यते कालाद
र्शेवृद्धगार्ग्यः माघादिमासषट्केतुमेखलाबंधनंमतम् चूडाकरणमप्येवंचश्रावणादौविवर्जयेत् मैत्रेयसूत्रेपि
वसंतोग्रीष्मःशरदित्यृतवोवर्णानुपूर्व्येणमाघादिषण्मासावासर्ववर्णानामेतदुदगयनमनयोर्विकल्पइति अत्रैदंतत्वं
नात्रवसंतेनोत्तरायणस्यसंकोचः श्राद्धदर्शस्यापराण्हविधिनेवाधानेवसंतादेःकृत्तिकादिनेवसायंप्रातर्विधिनायाव

जीवविधेरिवयुक्तः आद्ययोःपरस्परव्यभिचारान्नियमः अंत्येनिमित्तेसांगकर्मोक्तेःकालापेक्षा इहतूत्तरायणंविना
संतस्याभावान्ननियमः नवानिमित्तत्वं नचैकंप्रणीतइतिवदयस्तुत्यानुवादः नद्वाक्यभेदापरिहारात् उत्तरायणवि
धिवैयर्थ्यात्सुकल्पोयमिति माघआदियेषांपंचानांएवंषट् पारिजातेबृहस्पतिः झषचापकुलीरस्थोजीवोप्यशुभगो
चरः अतिशोभनतांदद्याद्विवाहोपनयादिषु रत्नमाले नजन्मधिष्ण्येनचजन्ममासेनजन्मकालीयदिनेविदध्यात् ज्येष्ठे
चमासिप्रथमस्यसूनोस्तथासुतायाअपिमंगलानि राजमार्तंडः आनंदिनंदूषयतेवसिष्ठोत्यत्रिगर्गोनियतंदशास्त्रिः
जातस्यपक्षंकिलभागुरिश्चशेषाःप्रशस्ताःखलुजन्ममासि जन्ममासेतिथौभेचविपरीतदलेसति कार्यंमंगलमित्या
हुर्गर्गभार्गवशौनकाः जन्ममासनिषेधेपिदिनानिदशवर्जयेत् आरभ्यजन्मदिवसाच्छुभाःस्युस्तिथयोपरे ग्रंथांतरे
व्रतेजन्मत्रिरवारिस्थोजीवोपीष्टोर्चनात्सकृत् शुभोतिकालेतुर्याष्टव्ययस्थोद्विगुणार्चनात् शुद्धैर्नैवगुरोर्यस्यवर्षेमासेष्ट
मेपादि चैत्रेमीनगतेभानौतस्योपनयनंशुभम् जन्मभादष्टमेसिंहेनीचेवाशत्रुभेगुरौ मौंजीबंधःशुभःप्रोक्तश्चैत्रेमीनग
तेरवौ नारदः बालस्यबलहीनोपिशांत्याजीवोबलप्रदः यथोक्तवत्सरेकार्यमनुक्तेचोपनायनम् शांतिश्चाग्रेवक्ष्यते
ज्योतिर्निबंधेनृसिंहः तृतीयापंचमीषष्ठीद्वितीयाचापिसप्तमी पक्षयोरुभयोश्चैवविशेषेणसुपूजिताः धर्मकामोसिते
पक्षेकृष्णेचप्रथमातथा शुक्लेचयोदशीकेचिदिच्छंतिमुनयस्तथा टोडरानंदेवसिष्ठः नैमित्तिकमनध्यायंकृष्णेचप्रतिपद्दि
नम् मेखलाबंधनेशस्तंचोलेवेदव्रतेष्वपि प्रशस्ताप्रतिपत्कृष्णेनपूर्वापरसंयुता एतदतीतकालस्यार्तस्यबटोरुपनयनवि
षयम् प्रशस्ताप्रतिपत्कृष्णेकदाचिच्छुभगोविभो चंद्रेबलयुतेलग्नेवर्षाणामपिलंघनइतिव्यासोक्तेरित्याहुः एवंसप्तम्यपि

त्तानियमइतिहयुक्तम् गर्गः ग्रहेणचंद्रेरवनिप्रकंपेकेतूद्गमोल्कापतनादिदोषे अनेदशाहानिवदंतितज्ज्ञास्त्रयोदशा
हानिवदंतिकेचित् संकटेतुकंडेश्वरः दाहेदिशांचैवधराप्रकंपेवज्रप्रपातेथविदारणेच केतोस्तथोल्कांशकणप्रपाते-
त्र्यहंनकुर्याद्व्रतमंगलानि नचैव वेदव्रतोपनयनेस्वाध्यायाध्ययनेतथा नदोषोयजुषांसोपपदास्वध्ययनेपिच हेमाद्रौ
ज्योतिषे हस्तत्रयेपुष्यधनिष्ठयोश्चपौष्णाश्विसौम्यादितिविष्णुभेषु शस्तेतिथौचंद्रबलेनयुक्तेकार्योद्विजानांव्रतबंधमो
क्षौ ज्योतिर्निबंधेनारदः श्रेष्ठान्यर्कत्रयांत्येज्यचंद्रादित्युत्तराणिच विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने बृह-
स्पतिः त्रिषूत्तरेषुरोहिण्यांहस्तेमैत्रेचवासवे त्वाष्ट्रेसौम्यपुनर्वस्वोरुत्तमंत्वपनायनम् ज्योतिर्निबंधे पूर्वाहस्तत्रयेसा
र्पेश्रुतिमूलेषुबह्वृचाम् यजुषांपौष्णमैत्रार्कादित्यपुष्यमृदुध्रुवैः सामगानांहरीशार्कवसुपुष्योत्तराश्विभैः धनिष्ठादिति
मैत्रार्केविष्णुपौष्णेष्वथर्वणाम् राजमार्तंडरत्नं ब्राह्मणस्यपुनर्वस्ंनिषेधति तारार्चंद्रानुकूलेषुग्रहाद्येषुशुभेष्वपि पुन
र्वसौकृतोविप्रःपुनःसंस्कारमर्हति ज्योतिर्निबंधेनारदः सर्वेषांजीवशुक्रज्ञवाराःप्रोक्ताव्रतेशुभाः चंद्रार्कौमध्यमौज्ञे
योसामबाहुजयोःकुजः शाखाधिपतिवारश्चशाखाधिपबलंतथा शाखाधिपतिलग्नंचदुर्लभंत्रितयंव्रते शाखाधि
पाश्चरत्नसंग्रहे ऋग्यथर्वसामयजुषामधिपागुरुसौम्यभौमसिताः जीवसितौविप्राणांक्षत्रस्यारोष्णगूविशांचंद्रइति
पारिजाते बृहस्पतिः बह्वृचानांगुरोर्वारेयजुर्वेदजुषांबुधे सामगानांधरासूनोरथर्वविदुषांरवेः अत्रलग्नशुद्ध्यादिदैवज्ञे
भ्योज्ञेयंविस्तरभयान्नोच्यते लल्लः प्रतोद्धपूर्वसंध्यायांवायदीयदिगर्जति तद्दिनेस्यादनध्यायोव्रतंतत्रविवर्जयेत्
ज्योतिर्निबंधे नांदीश्राद्धंकृतंचेत्स्यादनध्यायस्त्वकालिकः तदोपनयनंकार्यंवेदारंभंनकारयेत् एतद्कृत्वातिरिक्ता

नाम् तेषांतहिनेवेदारंभाभावात् अतस्तेषामुपनयनंनभवत्येव ऐतरेयोपनिषदि मृगादिज्येष्ठांतंवर्षर्तुः नविनावर्षादि
रात्रमनध्यायइतिवेदभाष्येउक्तम् एतच्चप्रातस्तनिते सायंस्तनितेतुदिवैवचरूंश्रपयित्वा सायंसंध्योत्तरंहोमंकुर्यात्
नसंध्यागर्जितेकालेनवृष्ट्युत्पातदूषिते ब्रह्मौदनंपचेदग्नौपक्वंचेन्ननिवर्त्तते ब्रह्मौदनंपचेदग्नौपक्वमन्नंनदुष्यतीतिसंग्रहोक्ते
रितिप्रयोगरत्नेभट्टचरणाः अत्रशांतिरप्युक्तानृसिंहप्रसादे ब्रह्मौदनविधेःपूर्वंप्रदोषेगर्जितंयदि तदाविघ्नकरंज्ञेयंबटो
रध्ययनस्यतत् तस्य शांतिप्रकारंतुवक्ष्येशास्त्रानुसारतः प्रधानंपायसंसाज्यंद्रव्यंशांतियजोभवेत् सूक्तंबृहस्पतेर्विद्वा
न्मठेत्सद्गाविह्वये गायत्रीचैवमंत्रःस्यात्मायश्चित्तंतुसर्पिषा धेनुंसवत्सकांदद्यादाचार्यायपयस्विनीम् ब्राह्मणान्भोज
येत्पश्चात्ततोब्रह्मौदनंचरेत् उपनयनेचाधिकारिणः माधवीयेवृद्धमनुनोक्ताः पितापितामहोभ्राताज्ञातयोगोत्रजाग्र
जाः उपायनेधिकारीस्यात्पूर्वाभावेपरःपरः प्रयोगरत्ने पितैवोपनयेत्पुत्रंतदभावेपितुःपिता तदभावेपितुर्भ्राता
तदभावेतुसोदरः पित्रेतिविप्रपरंनक्षत्रियादेःतेषांपुरोहितएव उपनयनस्यदृष्टार्थत्वात् तेषांचाध्यापनेनधिकारात्
अत्रपितृव्यस्यज्येष्ठभ्रात्रभावेधिकारः असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैरितियाज्ञवल्क्योक्तेः तेनेदमवि
भक्तपरम् पूर्वंतुविभक्तपरम् मातृरजोदोषेतुप्रागुक्तम् अथषंढमूकादीनांविशेषः प्रयोगपारिजातेब्राह्मे ब्रा
ह्मण्यांब्राह्मणाज्जातोब्राह्मणःसइतिश्रुतिः तस्माच्चषंढबधिरकुब्जवामनपंगुषु जडगद्गदरोगार्त्तशुष्कांगविकलां
गिषु मत्तोन्मत्तेषुमूकेषुशयनस्थेनिरिंद्रिये ध्वस्तपुंस्त्वेषुचैतेषुसंस्काराःस्युर्यथोचितम् मत्तोन्मत्तौनसंस्कार्याविति
केचित्पतनसने कर्मस्वनधिकाराच्चपातित्यंनास्तिचैतयोः तदपत्यंचसंस्कार्यमपरेत्वाहुरन्यथा संस्कारमंत्रहोमादीन्

करोत्साचार्यएवतु उपनेयांश्चविधिवदाचार्यस्यसमीपतः आनीयाग्निसमीपंचासावित्रींस्पृश्यवाजपेत् कन्यास्वीकर
णादन्यत्सर्वंविप्रेणकारयेत् एवमेवाहूर्जेर्जातौसंस्कार्यौकुंडगोलकौइति स्मृत्यर्थसारेप्येवम् कुंडगोलकयोःसंस्कार्य-
त्वंश्राद्धेनिषेधश्चक्षेत्रजपुत्रविषयः अन्यस्यविन्नास्त्येवविधिः स्मृतइतिवचनाद्ब्राह्मण्येनोपनयनाद्यप्राप्तेरित्यपरा
र्कः उपनयनंचकुमारंभोजयित्वाकार्यम् प्रागेवैनंसहभोजयंतीतिमदनपारिजातेगोभिलोक्तेः गायत्र्युपदेश
श्चोत्तरतोग्नेःकार्यः उत्तरेणाग्निमुपविशतः प्राङ्मुखआचार्यः प्रत्यङ्मुखइतरोधीहिभोइतिशांखायनसूत्रोक्तेः
यद्यपिकात्यायनेनाथास्मैसावित्रीमन्वाहोत्तरतोग्नेःप्रत्यङ्मुखायोपविष्टायदक्षिणतस्तिष्ठतआसीनायवैकेइतिविकल्प
उक्तस्तथापिकातीयानामेवसः बहूनामनुत्तरएववैदैन्यात् भिक्षायांविशेषमाहकात्यायनः मातरमेवाग्रेभिक्षेत
पराशरमाधवीये मातरंवास्वसारंवामातुर्वाभगिनींनिजाम् भिक्षेतभिक्षांप्रथमंयाचैनंनविमानयेत् अथ
संस्कारलोपेशौनकः आरभ्याधानमाचौलात्कालेतीतेतुकर्मणाम् व्याहृत्याग्निंसुसंस्कृत्यहुत्वाकर्मयथाक्रमम् ए
तेष्वेकैकलोपेतुपादकृच्छ्रंसमाचरेत् चूडायाअर्धकृच्छ्रंस्यादापदित्येवमीरितम् अनापदितुसर्वत्रद्विगुणंद्विगुणंचरेत्
पारिजातेकात्यायनः लुप्तेकर्मणिसर्वत्रप्रायश्चित्तंविधीयते प्रायश्चित्तेकृतेपश्चाल्लुप्तकर्मसमाचरेत् स्मृत्यर्थ
सारेचैवम् कारिकायांतुप्रायश्चित्तेकृतेतीतंकर्मकृताकृतमित्युक्तम् प्रायश्चित्तेकृतेपश्चात्तत्तमपिकर्मचेत्कार्य
मित्येकेआचार्यानेत्यन्येतुविपश्चितइति त्रिकांडमंडनेनतु कालातीतेषुकार्येषुप्राप्तवत्स्वपरेषुच कालातीतानि
कृत्वैवविदध्यादुत्तराणितुइत्युक्तम् तत्रसर्वेषांतंत्रेणनांदीश्राद्धंकुर्यात् देशकालैकनैक्यात् गणशःक्रियमाणा

नांमातृणांपूजनंसकृत् सकृदेवमनेच्छाद्धमादीनपृथगादिश्यतिछंदोगपरिशिष्टात् एतद्बहूनामपत्यानांयुगपत्संस्का
रकरणविषयमितिबोपदेवः अनेकसंस्काराणांयुगपत्करणइत्यन्ये तत्रापिचौलस्योपनात्यासहेतिपक्षेउपनीतिदिनं
एवानुष्ठानंनपूर्वदिने सकृतस्यदिवसेक्येसन्निकृष्टतरत्वात् ब्रह्मचारोप्येवम् उपनीतिदिनेमध्याह्नसंध्यामाहपारिजा
तेजैमिनिः यावद्ब्रह्मोपदेशस्तुतावन्नसंध्यादिकंचन ततोमध्यान्हसंध्यादिसर्वकर्मसमाचरेदिति ब्रह्मगायत्री मन्त्रव
चनम् उपायनेतुकर्तव्यंसायंसंध्येउपासनम् आरभेद्ब्रह्मयज्ञंतुमध्यान्हेतुपरेहनीतितत्छाखान्तरविषयमितिपारिजातः
निकस्पर्द्धतिपुत्रंपश्यामः उपनयनाग्निस्थिरात्रंधार्यः अहमेतमग्निंधारयंतीत्यापस्तंबोक्तेः बौधायनसूत्रेतुसदाधारण
मप्युक्तम् उपनयनादिरग्निस्तमौपासनमित्याचक्षतेपाणिग्रहणादिरसेकोनित्योधार्योनुगतोनिर्मथ्यइति इदंजातार
णिगसे अन्यथामंथनासंभवात् ब्रह्मयज्ञेविशेषमाहतत्रैवजैमिनिः अनुपाकृतवेदस्यकर्तव्योब्रह्मयज्ञकः वेद-
स्थानेतुसावित्रीगृह्यतेतत्समायतइतियेषांतद्दिनएववेदारंभस्तेषांनेदमितिदिक् अथब्रह्मचारिधर्माः याज्ञवल्क्यः
मधुमांसांजनोच्छिष्टंशुक्तस्त्रीप्राणिहिंसनं भास्करालोकनाश्लीलपरिवादादिवर्जयेत् मनुः अभ्यंगमंजनंचाक्ष्णो
रुपानच्छत्रधारणं वर्जयेदिति मदनपारिजातेकौर्मे नादर्शंचैवबीक्षेतनाचरेद्दंतधावनम् गुरूच्छिष्टंभेषजार्थंप्र
युंजीतनकामतः एतन्निषिद्धमध्वादिविषयम् अन्यस्यगुरूच्छिष्टस्यसर्वदाप्राप्तेः सचेद्व्याधीयीतकामंगुरोरुच्छिष्टं
भेषजार्थम् सर्वंप्राश्नीयादितिवसिष्ठोक्तेः ज्येष्ठभ्रातुरित्यपिज्ञेयम् पितुर्ज्येष्ठस्यचभ्रातुरुच्छिष्टंभोज्यमित्यापस्तं
बोक्तेः गुरुपुत्रेतुस्मृत्यंतरेउक्तम् गुरुवद्गुरुपुत्रस्यादन्यत्रोच्छिष्टभोजनात् प्रचेताः तांबूलाभ्यंजनंचैवकांस्यपा

चभोजनम् यतिश्चब्रह्मचारीचविधवाचविवर्जयेत् यमः मेखलामजिनंदंडमुपवीतंचनित्यशः कौपीनंकटिसूत्रंचब्रह्म
चारीतुधारयेत् अग्नींधनंभैक्षचर्यामधःशय्यांगुरोर्हितम् कुर्यादितिशेषः मेखलामाहाश्वलायनः तेषांमेखलामौं-
जीब्राह्मणस्यधनुर्ज्याक्षत्रियस्यावीवैश्यस्येति आचार्यः त्रिवृत्तामेखलाकार्यात्रिवारंस्यात्समावृता तद्ग्रंथयस्तथा
कार्याःपंचवासप्तवापुनः मनुः मौंजीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला त्रिवृत्ताग्रंथिनैकेनात्रिभिःपंचभिरेववा
मौंज्यभावेतुकर्तव्याकुशाश्मंतकबल्वजैः अथप्रवरसंख्ययानियमइतिवृद्धाः अथदंडाः मनुः ब्राह्मणोबैल्वपा
लाशौक्षत्रियोवाटखादिरौ पैप्पलौदुंबरौवैश्योदंडानर्हतिधर्मतः एषामभावेगौतमः यज्ञियोवासर्वेषांमूर्धललाट
नासाप्रमाणाइति अजिनमाहाश्वलायनः अहतेनवाससासंवीतमैणेयेनवाजिनेनब्राह्मणंरौरवेणक्षत्रियमाजे
नवैश्यमिति यद्यप्यैणेयशब्देनमृगीचर्मैवोच्यते एण्याढञितिपाणिनिस्मृतेः ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे
त्रिष्वितिअमरकोशाच्च तथापिकृष्णरुरुबस्तान्यजिनानीतिशंखोक्तेः सर्वेषांवारौरवमितियमोक्तेश्चमृगचर्मणा
सहविकल्पोज्ञेयः वस्त्राजिनयोस्तुविकल्पः कार्पासंवाविकृतमितिगौतमोक्तेः अथयज्ञोपवीतम् मनुः
कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतंत्रिवृत् पारिजातेदेवलः कार्पासक्षौमगोवालशणवल्कतृणादिकम् यथासं
भवतोधार्यमुपवीतंद्विजातिभिः शुचौदेशेशुचिःसूत्रंसंहतांगुलिमूलके आवर्त्यषण्णवत्यातत्त्रिगुणंकृत्ययत्
नः अब्लिंगकैस्त्रिभिःसम्यक्प्रक्षाल्योर्ध्ववृतंतुतत् अप्रदक्षिणमावृत्यसावित्र्यात्रिगुणीकृतम् ततःप्रदक्षिणाव
र्तंसमंस्यान्नवसूत्रकम् त्रिरावेष्ट्यदृढंबध्वाब्रह्मविष्णीश्वरान्नमेत् तन्नवतंतुकार्यम् सावित्र्यात्रिगुणंकुर्यान्नव-

सूत्रंतुतद्भवेत् इतितेनैवोक्तेः छंदोगपरिशिष्टे त्रिवृदूर्ध्ववृतंकार्यंतंतुत्रयमधोवृतम् त्रिवृतंचोपवीतंस्यात्त-
स्यैकोग्रंथिरिष्यते ऊर्ध्ववृतंदक्षिणकरमूर्ध्वंकृत्वावलितं भूयःवामावर्तंवलितंत्रिगुणंकृत्वादक्षिणावर्तवलितंत्रिगुणंकार्यं सः
एकसंतुरेवंत्रितंतुकमित्यर्थः कात्यायनः पृष्ठदेशेचनाभ्यांचधृतंयद्विंदतेकटिम् तद्धार्यमुपवीतंस्यान्नातिलंबंनचो
च्छ्रितम् वसिष्ठः नाभेरूर्ध्वमनायुष्यमधोनाभेस्तपःक्षयः तस्मान्नाभिसमंकुर्यादुपवीतंविचक्षणः पारिजाते
देवलः उपवीतंवटोरेकंद्वेतथेतरयोःस्मृते एकमेवयतीनांस्यादितिशास्त्रस्यनिश्चयः सएव बहूनिवायुष्कामस्य
तत्रमंत्रमाहसएव यज्ञोपवीतमितिवाव्याहृत्यावापिधारयेत् हेमाद्रौ यज्ञोपवीतेद्वेधार्येश्रौतेस्मार्तेचकर्म
तृतीयमुत्तरीयार्थेवस्त्राभावेतदिष्यते देवलः सावित्र्यादशकृत्वोद्भिः मंत्रिताभिस्तदुक्षयेत् विछिन्नंचाप्य
यातंभुक्त्वानिर्मितमुत्सृजेत् मनुः मेखलामजिनंदंडमुपवीतंकमंडलुम् अप्सुप्रास्यविनष्टानिगृह्णीतान्या
निमंत्रतः अथैतल्लोपेप्रायश्चित्तंमनुः अकृत्वाभैक्षचरणमसमिध्यचपावकम् अनातुरःसप्तरात्रमवकीर्णिव्रतं
चरेत् अमत्या आपदित्यागेतुयाज्ञवल्क्यः भैक्ष्याग्निकार्येत्यक्त्वातुसप्तरात्रमनातुरः कामावकीर्णइत्याभ्यांजु
हुयादाहुतिद्वयम् उपस्थानंततःकुर्यात्संमासिंचंत्वनेनतु मंत्रास्तुमिताक्षरायांज्ञेयाः सकृल्लोपेतुकौर्मविधाने
मानस्तोकेजपेन्मंत्रंशतसंख्यंशिवालये अग्निकार्यंविनाभुक्त्वोनपापंब्रह्मचारिणः स्मृत्यर्थसारेतु संध्याग्निका
र्यलोपेस्नात्वाष्टसहस्रंजपः भिक्षालोपेष्टशतम् अभ्यासेद्विगुणम् पुनःसंस्कारश्चेत्युक्तम् अपरार्केसंवर्तः
यःसंध्यांनैवनोपास्तेअग्निकार्यंयथाविधि गायत्र्यष्टसहस्रंतुजपेत्स्नात्वासमाहितः अग्निकार्यसंध्याद्वयेकार्ये

अग्निकार्यंततःकुर्यात्संध्ययोरुभयोरपीतियाज्ञवल्क्योक्तेः सायमेववा सायमेववापिमिंधानित्येकइतिऔगाक्षिणोक्तेः

पारिजातेषट्त्रिंशच्छातातपः ब्रह्मचारीतुयोश्नीयान्मधुमांसंतथैवच प्राजापत्यंचरेत्कृच्छ्रंव्रतशेषंसमापयेत् ऋग्विधाने तंवोधियज्जपेन्मंत्रंलक्षंचैवशिवालये ब्रह्मचारीस्वधर्मेषुन्यूनंचेत्पूर्णमेतितत् स्त्रीसंगेतुमनुः अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे स्थालीपाकविधानेनयजेद्दैनिर्ऋतिंनिशि विस्तरस्तुभिताक्षरादौज्ञेयः उपवीतनाशेतुहारीतः मनोव्रतपतीभिश्चतस्रआज्याहुतीर्हुत्वापुनःप्रतीयात् तत्रैवमरीचिः ब्रह्मसूत्रंविनाभुंक्तेविण्मूत्रंकुरुतेथवा गायत्र्यष्टसहस्रेणप्राणायामेनशुध्यति मनुः भोशब्दंकीर्तयेदंतेस्वस्यनाम्नोभिवादने आयुष्मान्भवसौम्येतिवाच्योविप्रोभिवादने आकारश्चास्यनाम्नोतेवाच्यःपूर्वाक्षरःप्लुतः शर्मन्नितिनकारात्पूर्वइत्यर्थः अभिवादनप्रत्यभिवादनादौविशेषः स्मृत्यर्थसारेपारिजातादौज्ञेयः यमः ज्यायानपिकनीयांसंसंध्यायामभिवादयेत् विनाशिष्यंचपुत्रंचदौहित्रंदुहितुःपतिम्

अथपुनरुपनयनम् पारिजातेशातातपः लशुनंगृंजनंजग्ध्वापलांडुंचतथाशुनम् उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् उपायनंपुनःकुर्यात्तप्तकृच्छ्रंचरेन्मुहुरिति हेमाद्रौषट्त्रिंशन्मनुः जीवन्यादिसमागच्छेद्घृतकुंभे निमज्यच उद्धृत्यस्नापयित्वास्यजातकर्मादिकारयेत् तत्रैवपाद्मे प्रेतशय्याप्रतिग्राहीपुनःसंस्कारमर्हति चंद्रिकायांबौधायनः सिंधुसौवीरसौराष्ट्रान्तथाप्रत्यंतवासिनः अंगवंगकलिंगांश्चगत्वासंस्कारमर्हति हेमाद्रौप्रायश्चित्तकांडेषट्त्रिंशद्गौतमः खरमुष्ट्रंचमाहिषंमनुष्याद्यंगमजंतथा वस्त्रमारुह्यमुस्वजःकोशोचांद्रंविनिर्दिशेत् मार्कंडेयः खरमारुह्यविप्रस्तुयोजनंयदिगच्छति सप्तकृच्छ्रत्रयंप्रोक्तंशरीरस्यविशोधनम् पुनर्जन्मप्रकुर्वीतघृतगर्भविधानतः

मदनरत्नेमिताक्षरायांचस्नानमात्रमुक्तम् मनुः अज्ञानात्प्राश्यविण्मूत्रंसुरासंसृष्टमेवच पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजा
तयः मिताक्षरायांपराशरः यःप्रत्यवसितोविप्रःप्रव्रज्यातोविनिर्गतः अनाशकनिवृत्तश्चगार्हस्थ्यंचेच्चिकीर्षति सचरे
त्त्रीणिकृच्छ्राणित्रीणिचांद्रायणानिच जातकर्मादिभिःसर्वैःसंस्कृतःशुद्धिमाप्नुयात् बौधायनसूत्रे अथोपनीतस्यव्रात्यानिभवंति
नान्यस्योच्छिष्टंभुंजीतान्यत्रपितृज्येष्ठाभ्यांनस्त्रियासहभुंजीत मधुमांसश्राद्धसूतकान्नानिदशाहसंधिनीक्षीरंछत्राकानि
धौसौविलापनंगणान्नंगणिकान्नमित्येतेषुपुनःसंस्कारः प्रतिषिद्धदेशगमनमित्येके अथाप्युदाहरंति आरट्टसिंधुसौवी
रमवंतींदक्षिणापथम् एतानिब्राह्मणोगत्वापुनःसंस्कारमर्हति अथपुनःसंस्कारंव्याख्यास्यामोदेवयजनमभ्युक्ष्याग्नि
मुपसमाधायपलाशींसमिधमाज्येनाक्त्वाभ्याधायवाचयति पुनस्त्वादित्यारुद्रावसवः समिन्धतांस्वाहेत्यथात्रप्रायश्चित्तेजुहोतियन्मआ
त्मनोमिंदाभूत्पुनरग्निश्चक्षुरदादित्यद्वाभ्यामथपक्वाज्जुहोतिसप्ततेअग्ने० वृतेनस्वाहेत्यथाज्याहुतीरुपजुहोति येनदेवाःपवित्रे
णेतिनिस्वभिरनुच्छंदसंस्विष्टकृत्प्रभृतिसिद्धमाधेनुवरदानात्तथापरमापरिधानात्कृत्वापालाशींसमिधमाधायाथात्रप्रायश्चि
त्तेजुहोत्यथव्याहृतीर्जुहोति अथापरोब्राह्मणवचनादेव सावित्र्याशनकृतोघृतमभिमंत्र्यप्राश्यकृतप्रायश्चित्तोभवति गुरोर्वा
सुच्छिष्टंभुंजीताथाप्युदाहरंतिवपनंदक्षिणादानंमेखलादंडमजिनंभैक्ष्यचर्याव्रतानिचानिवर्तंतेपुनःसंस्कारकर्मणीति आश्वल
यनगृह्येपि अथोपेतपूर्वस्येत्यादिनापुनःसंस्कारउक्तः तथापित्रादिव्यतिरेकेणब्रह्मचारिणःप्रेतकर्मकरणेपुनरुपनयनमित्य
पराकादयः त्रिस्थलीसेतौ कर्मनाशाजलस्पर्शात्करतोयाविलंघनात् गंडकीबाहुतरणात्पुनःसंस्कारमर्हति गौडास्तु
करतोयाजलस्पर्शात्कर्मनाशाविलंघनादितिपठंति तन्न दानधर्मेषुकरतोयास्नानेमाहात्म्योक्तेः करतोयेसदानीरेसरि

ङ्क्षेतिविश्रुते आप्लावयसिपौराणांपापंहरकोद्भवेइतिस्मृतिदर्पणचंद्रिकालिखितस्नानमंत्रात्र पराशरः अ
जिनंमेखलादंडोभैक्षचर्याव्रतानिच निवर्त्तंतेद्विजातीनांपुनःसंस्कारकर्मणि हरदत्तस्तु यः एकंवेदमधीत्यान्यंवे
दमध्येतुमिच्छति तस्यपुनरुपनयनंतेनश्रुतिवेदमुपनयनंकर्तव्यमित्याह अन्येनेत्तमन्यंते सर्वेभ्योवेदेभ्यःसा
वित्र्यनूच्यतइत्यापस्तंबोक्तेः तद्विधिःकारिकायाम् वेदांतरमधीत्यैवऋग्वेदंयेत्वधीयते उपनीतिरियंतेषामलंक
रणवर्जिता यद्वैतदुपनीतस्यप्रायश्चित्तंयदाभवेत् कृताकृतंचपवनंमेधाजननमेवच मेधाजननसद्भावेव्रतच
र्याभवेदिह अनुप्रवचनीयश्चतदभावेद्वयंनहि परिदानंनकार्यंस्यान्निमित्तानंतरंत्विदम् पूर्वस्यावाचयेत्स्थानेत
त्सवितुर्वृणीमहइति यत्तुहारीतः द्विविधाःस्त्रियः ब्रह्मवादिन्यःसद्योवध्वश्च तत्रब्रह्मवादिनीनांउपनयनमग्नींध
नंवेदाध्ययनंस्वगृहेचभैक्षचर्येति सद्योवधूनामुपनयनंकृत्वाविवाहःकार्यइति तद्युगांतरविषयम् पुराकल्पे
कुमारीणांमौंजीबंधनमिष्यते अध्यापनंचवेदानांसावित्रीवाचनंतथेतियमोक्तेः अथानध्यायाः पारिजा
ते हारीतः प्रतिपत्सुचतुर्दश्यामष्टम्यांपर्वणोर्द्वयोः श्वोनध्यायेद्यशर्वर्यांनाधीयीतकदाचन नारदः अयनेवि
षुवेचैवशयनेबोधनेहरेः अनध्यायस्तुकर्तव्योमन्वादिषुयुगादिषु निर्णयामृते चातुर्मास्यद्वितीयासुमन्वादि
षुयुगादिषु अनध्यायस्तुकर्तव्योयाश्चसोपपदातिथिः गर्गः फाल्गुनेतपस्येचयाद्वितीयाविधुक्षये चातुर्मास्य
द्वितीयास्ताःप्रवदंतिमनीषिणः स्मृत्यर्थसारेपि आषाढीकार्तिकीफाल्गुनीसमीपस्थद्वितीयासुचेति मनुः उ
पाकर्मणिचोत्सर्गेत्रिरात्रंक्षपणंस्मृतम् अष्टकासुत्वहोरात्रमृत्वंतासुचरात्रिषुइति उत्सर्गेतुमनूकपक्षिण्य

होरानाप्यांन्यहस्यविकल्पइतिविज्ञानेश्वरः अष्टाकाशब्देनसप्तम्यादित्रयंद्वं ।म् तिस्रोष्टकास्त्रिरात्रमंस्यामेकेद्
तिगौतमोक्तेः ऋत्वंतास्वितिसौरऋत्वंतास्कचांद्रांतस्यपर्वत्वेनैवनिषेधसिद्धेरितिसर्वज्ञनारायणः एतेनित्याः नैमि
त्तिकानप्याहयाज्ञवल्क्यः अहंमेतेषनध्यायःशिष्यर्त्विग्गुरुबंधुषु उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेतथा सं
ध्यागर्जितनिर्घातभूकंपोल्कानिपातने समाप्यवेदंद्युनिशमारण्यकमधीत्यच पंचदश्यांचतुर्दश्यामष्टम्यांराहु
सूतके ऋतुसंधिषुभुक्त्वाश्राद्धिकंप्रतिगृह्यच पशुमंडूकनकुलश्वाहिमार्जारमूषकैः कृतेंतरेत्वहोरात्रंशक्र
पातेतथोच्छ्रये ग्रहणेतुनिशोक्तावपिग्रस्तास्तेत्र्यहमित्युक्तंप्राक् स्मृत्यर्थसारेतुरात्रौग्रहेतिस्रोरात्रीः दिवात्र्य
हमित्युक्तम् ऋतुःसौरःभुक्त्वेत्युक्तविषयम् ऊर्ध्वंभोजनादुत्सवेइतिगौतमोक्तेः श्राद्धिकंमहैकोद्दिष्टभिन्नम्
तत्रतुत्र्यहमितिमनुः स्मृत्यर्थसारेप्येवम् यत्तुपश्वाद्यंतरायेत्र्यहमुपवासोविप्रवासश्चेतिगौतमोक्तंतत्प्रथमा
ध्ययने याज्ञवल्क्यः श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिःस्वने अमेध्यशवशूद्रांत्यश्मशानपतितांतिके दे
शेशुचावात्मनिचविद्युत्स्तनितसंप्लवे भुक्त्वार्द्रपाणिरंभोंतरर्धरात्रेतिमारुते पांसुप्रवर्षेदिग्दाहेसंध्यानीहा
रभीतिषु धावतःपूतिगंधेचशिष्टेचगृहमागते खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे सप्तत्रिंशदनध्या
यानेतांस्तात्कालिकान्विदुः बाणोवंशःशततंतुर्वीणेतिहरदत्तः अमेध्याःसूतिकादयः स्तनितंगर्जः वर्षान्नो
न्यत्रगर्जवृष्टिविद्युतांयोगपद्येआकालिकः वर्षास्तुतात्कालिकाइतिनारायणः संध्यागर्जेतुहारीतः सायंसं
ध्यास्तनितेरात्रिःप्रातःसंध्यास्तनितेहोरात्रंरात्रौविद्युत्यपररात्र्यवधिः विद्युतिनक्तंचापररात्रादितिगौतमोक्तेः

द्वितीयांशोत्तरंतुनिद्युतिसर्वरात्रमित्याहसएव त्रिभागादिप्रहरौसर्वमिति अर्धरात्रेमध्ययामद्वयइतिविज्ञानेश्वरः म
ध्यदंडचतुष्टयइतिनिर्णयामृते मनुः नविवादेनकलहेनसेनायांनसंगरे नभुक्तमात्रेनाजीर्णेनवमित्वानसूतके रुधिरे
चस्रुतेगात्राच्छस्त्रेणचपरिक्षते कौर्मे श्लेष्मातकस्यछायायांशाल्मलेर्मधुकस्यच कदाचिदपिनाध्येयंकोविदारकपित्थयोः
मनुः शयानःप्रौढपादश्चकृत्वानैवावसक्थिकाम् नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवच प्रौढपादःपादोपरिपाद
दाता आसनारूढपादोवेतिहरदत्तः सोपपदास्वपिप्रागुक्तम् स्मृत्यर्थसारेश्रवणद्वादशीमहाभरण्योःप्रेतद्वितीयायां
रथसप्तम्यामाकाशेशवदर्शनेचाहोरात्रम् असपिंडेगुरौमृतेत्रिरात्रम् आचार्येउपाध्यायेचपक्षिणी आचार्यभार्यापुत्र
शिष्येष्वहोरात्रम् अभ्युत्पातेगोविप्रमृतौत्रिरात्रम् अयनेविषुवेचपक्षिणी अकालवृष्टौच आरण्यमार्जारसर्पनकुलमं
डूकादेरंतरागमनेत्रिरात्रम् आरण्यश्वसृगालादिवानरस्त्रजकादौद्वादशरात्रं खरवराहोष्ट्रचांडालसूतिकोदक्याशवादौमासं
गोगवयाजानास्तिकादौत्रिमासम् श्वश्वेषश्वपाकादौषण्मासम् गजगंडसारससिंहव्याघ्रमहापापिकृतघ्नादावब्दमन
ध्यायः शोभनदिनेचानध्यायः विवाहप्रतिष्ठोद्यापनादिषुसप्तमासेःसगोत्राणामनध्यायः उदयेस्तमयेचापिमुहूर्तत्रय
गामियत् तद्दिनंतदहोरात्रंचानध्यायविदोविदुः केचिदाहुःकश्चिद्देशेयावत्तद्दिननाडिकाः तावदेवत्वनध्यायोनतान्नि
श्रीदिनांतरे प्रदोषंत्वाहप्रजापतिः षष्ठीचद्वादशीचैवअर्धरात्रोननाडिका प्रदोषेनत्वधीयीततृतीयानवनाडिका नि
र्णयामृतेगर्गः रात्रौयामद्वयादर्वाक्सप्तमीचात्रयोदशी प्रदोषःसतुविज्ञेयःसर्वविद्याविगर्हितः रात्रौनवसुनाडीषुचतु
र्थीयदिदृश्यते प्रदोषःसतुविज्ञेयःसर्वविद्याविगर्हितः कौर्मे अनध्यायस्तुनांगेषुनेतिहासपुराणयोः नधर्मशास्त्रेष्व-

नानध्यायोस्तिवेदानांग्रहणेग्राहणेस्मृतः
न्येषुपर्वण्येतानिवर्जयेत् शौनकः नित्यजपेचकाम्येचक्रतौपारायणेपिच
चौलवत्सर्वमाख्यातंस-
रस्यनध्यायाः अथगृहानाम्न्याद्रिव्रतम् श्रीधरः तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम्
अकृत्वाध्यस्यतेयेनसपापीविधिघात
कोदानव्रतेषुच एतेषांलोपेशौनकः व्रतानिविधिनाकृत्वास्वशाखाध्ययनंचरेत्
स्मृत्यर्थसारेतु व्रतेष्वकृतेषु
कः प्रत्येकंकृच्छ्रमेकैकंचरित्वाज्याहुतीःशतम् हुत्वाचैवतुगायत्र्यास्वाध्यायादिस्याहशौनकः
तारचंद्रवि
वाकृच्छ्रान्कृत्वापुनर्व्रतंचरेदित्युक्तम् अथसमावर्तनम् सुरेश्वरः भौमभानुजयोर्वारेनक्षत्रेचव्रतोदिते
गुरुबलेनस्यात्समावर्तनक्रिया बौधायनसूत्रेतु रोहिण्यांतिष्येउत्तरयोःफाल्गुन्योर्हस्तेचित्रायामैंद्रेविशाखयोर्वास्नायादित्युक्त
सर्वकृतवोविवाह
म् वसिष्ठः स्नानंमाध्यान्हकालेतुहोरायांकारयेच्छुभम् पूर्वाण्हेतदभावेतुकुर्यात्स्नानंयथाविधि
अन्यथोदगयनेसमावर्तनेअनाश्रमीनतिष्ठेतेतिविरोधः
स्येतिसूत्राद्यदादक्षिणायनेविवाहस्तदासमावर्तनमपितत्रैव
दित्युक्तंसुदर्शनभाष्ये एतच्चब्रह्मचारिव्रतलोपप्रायश्चित्तंकृत्वाकार्यम् तदाहबौधायनः शौचसंध्यादर्भभिक्षाग्निकार्यरा
हित्यकौपीनोपवीतमेखलादंडाजिनाधारणदिवास्वापछत्रपादुकास्त्रग्धारणांगोद्वर्तनानुलेपनांजनद्यूतनृत्यगीतवाद्य
भिरतोब्रह्मचारीकृच्छ्रत्रयंचरेत् महाव्याहृतिहोमंपाहित्रयोदशहोमंचकुर्यात् समावर्तनोत्तरंपूर्वमृतानांत्रिरात्रमाशौ
चंकार्यम् आदिष्टिनोदकंकुर्यादाव्रतस्यसमापनात् समाप्तेतूदकंदत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः आदिष्टीब्रह्म
चारीतिविज्ञानेश्वरः ब्रह्मचर्येयदिकश्चिन्मृतस्तदात्रिरात्रमध्येविवाहःकार्योन्यथानेतिसिन्धौ जननेतुसत्यपिनत्रि
रात्रम् तत्रातिक्रान्ताशौचाभावादुदकंदत्वेतिवचनाच्चेतिदिक् तत्रापिविकल्पः पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित्

आशौचंकर्मणोनैस्यादन्यहंवाब्रह्मचारिणामितिछंदोगपरिशिष्टात् स्नानकर्मतान्याहव्यासः यज्ञोपवीतद्वितयंसोदकंचक-
मंडलुम् छत्रंचोष्णीषममलंपादुकेचाप्युपानहौ रौक्मेचकुंडलेवेदःकृतकेशनखःशुचिः वेदोदर्शबटुः मनुः उपानहौ
चवासश्चधृतमन्यैर्नधारयेत् उपवीतमलंकारंस्रजंकरकमेवच अन्यान्यपिकृच्छ्रगृह्यस्मृत्यादिभ्योज्ञेयानि अथछुरि-
काबंधः ज्योतिर्निबंधेनारदः छुरिकाबंधनंवक्ष्येनृपाणांप्राक्करग्रहात् विवाहोक्तेशुभमासेशुक्लपक्षेप्यनस्तगेजीवे
शुक्रेचभूपुत्रेचंद्रताराबलान्विते मौंजीबंधर्क्षतिथिषुकुजवर्जितवासरे संग्रहे शूद्राणांराजपुत्राणांमौंज्यभावेकृतबंधनं
मौंजीबंधोक्ततिथ्यादौकार्यंभौमदिनंविना अथविवाहः याज्ञवल्क्यः अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत् अ-
नन्यपूर्विकांकांतामसपिंडांयवीयसीम् अरोगिणींभ्रातृमतीमसमानार्षगोत्रजाम् लक्षण्यांबाह्याभ्यंतरलक्षणैर्युक्तां
बाह्यानिकाशीखंडादौप्रसिद्धानि आंतराण्याश्वलायनोक्तान्यष्टौपिंडान्कृत्वेत्यादीनि मनुः असपिंडाचयामातुरसगोत्रा
चयापितुः साप्रशस्ताद्विजातीनांदारकर्मणिमैथुने दत्रिमगातुर्गृहीताअसपिंडापिसगोत्रा तत्कुलनिवृत्तयेचकारा
मातुरसगोत्रादत्तकस्यपितुर्जनककुलेपितुरसगोत्रापिसापिंड्यान्निषिद्धेत्यन्यश्चकारः असपिंडांसापिंड्यरहितांतच्चै-
कशरीरावयवान्वयेनभवति एकस्यांहिपितुर्मातुर्वाशरीरस्यावयवाः पुत्रपौत्रादिषुसाक्षात्परंपरयावाशुक्रशोणिता-
दिरूपेणानुस्यूताः यद्यपिपत्न्याःपत्यासहभ्रातृपत्नीनांचपरस्परंनैनत्तांभवति तथापिआधारत्वेनैकशरीरावयवा-
न्वयोस्त्येव अस्थिभिःअस्थीनीतिमंत्रलिंगात् एकस्यांहिपितृशरीरस्यावयवाःपुत्रद्वारातास्वाहिताइतिमदनरत्नपारिजा-
तविज्ञानेश्वरादयः वाचस्पतिश्राद्धविवेककृच्छूलपाण्यादिगौडमैथिलादयोप्येवम् श्रुतावपि एतत्षाट्कौशिकंशरीरम्

त्रीणिपितृतस्त्रीणिमातृतोस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसरुधिराणिमातृतइति प्रजामनुप्रजायसइतिच चंद्रिकापरार्के
मेधातिथिगाथनादयस्तु एकपिंडदानक्रियान्वयित्वंसापिंड्यम् लेपभाजश्चतुर्थाद्याःपित्राद्याःपिंडभागिनः पिंडदःसप्तमस्ते
षांसापिंड्यंसाप्तपौरुषमितिमात्स्योक्तेः नचपितृव्यादिष्वेतन्नास्तीतिवाच्यम् तत्कर्तृकश्राद्धेदैवतैक्येनतत्सत्वात् देवदत्तक
र्तृकश्राद्धेहियेदेवताभूतास्तेषांमध्येयःकश्चिदन्यकर्तृकश्राद्धेनुप्रविशति तेषांसापिंड्यम् नह्यार्याणामपिभर्तृकर्तृकश्रा
द्धेसहाधिकारित्वेनतदन्वयात् एकत्वंसागतानाभर्तुःपिंडेगोत्रेचसूतकेइतिस्मृतेश्च श्रुतीनांचवैराग्यार्थत्वात्तस्यसापिंड्यनि
मित्तत्वेमानाभावात् नचमातुलादिष्वेतन्नास्तीतिवाच्यम् मातामहरूपदेवतैक्यात् ननुगुरुशिष्यादेरपिश्राद्धदेवतात्वात्स
पिंडत्वंस्यात् किंबहुनासर्वाभावेतुनृपतिः कारयेत्तस्यरिक्थतइति मार्कंडेयपुराणाद्राज्ञोपिश्राद्धकर्तृत्वात्सापिंड्यप्रसंगः
सत्यम् पंचमात्सप्तमादूर्ध्वंमातृतःपितृतस्तथेतियाज्ञवल्क्यवचनेनमातापितृसंबंधएवतत्सत्वात् ऊर्ध्वंसापिंड्यंनिव
र्ततइतिशेषः ननुपंचमत्वाद्यन्ननियम्यतेनमातृतइत्यादिवाक्यभेदात् मैवम् मातृकुलेपंचमत्वस्यपितृकुलेसप्तमत्व
स्यचबोधनेतुल्यत्वात् पौरुषेयत्वाददोषइतिचेत् तुल्यमन्यत्रापि अन्यकर्तृकेराज्ञस्त्वात्पितॄणांवादेवतात्वाभावाच्च
किंच अवयवान्वयपक्षेयथायोगरूढ्यापरिहारस्तथेहापितेनमातृकुलेपितृकुलेचैकपिंडदानक्रियान्वयित्वंसापिंड्य
मित्याहुः तेनैकस्यपित्रादयः षट्पुत्रादयश्चषट्सापिंडाभवंति अत्रकेचिदुभयतः सापिंड्यनिवृत्तावेवोद्वाहोनान्यथे
त्याहुः श्राद्धचिंतामणिवाचस्पतिहरिदत्तादयस्तु सगोत्रत्ववत्सापिंड्यस्यसप्रतियोगिकत्वेनसंयोगवदुभयनिरूप्यत्वा
त् एकतोनिवृत्तावन्यतोनिवृत्तेरावश्यकत्वान्मूलपुरुषमारभ्याष्टमोवरोमूलपुरुषमारभ्यद्वितीयात्तृतीयादिकांकन्या

मुद्वहेदित्याहुः शिष्टास्तु नवधूवरयोःस्वतःसापिंड्यंकिंतुकूटस्थसंततित्वात्तत्सापिंड्येनैवअतोष्टमवरंप्रतिकन्यायाअसा

पिंड्येपिकन्यायाःकूटस्थेनसापिंड्यात्तत्संततिस्थत्वाद्वरस्तांप्रतिसपिंड एवेत्यविवाहः सापिंड्यासापिंड्ययोः प्रतियोगि

भेदेनाविरोधादित्याहुः इदमेवचयुक्तम् आशौचेप्येवंसापिंड्यंज्ञेयम् यत्रतुमध्येविछिन्नमपिसापिंड्यंमंडूकप्लुतिव

त्पुनरनुवर्तते यथा कूटस्थात्पंचम्योःकन्ययोःपुत्रौ तत्रनिवृत्तिः तदपत्ययोस्त्वनुवृत्तिस्तत्रापिनसापिंड्यासापिंड्ययो

र्दोषः संबंधिभेदात् तेनतत्रनविवाहः अत्रकूटस्थमारभ्यगणनाकार्या तदुक्तम् वध्वावरस्यचातातःकूटस्थाद्य

दिसप्तमः पंचमीचेत्तयोर्मातातत्सापिंड्यंनिवर्ततइति कूटस्थोमूलपुरुषः विश्वरूपनिबंधे एवमुक्तप्रकारेणापि

तृबंधुभ्यःसप्तमात् ऊर्ध्वमेवविवाह्यतंपंचमान्मातृबंधुनः संतानोभिद्यतेयस्मात्पूर्वजादुभयत्रन तमादायगणेद्धीमा

न्वरंयावच्चकन्यकाम् स्मृतितत्वेनारदः आसप्तमात्पंचमाच्चबंधुभ्यःपितृमातृतः अविवाह्यासगोत्राचसमानप्रवरात

था अत्रबंधुभ्यइतिपंचमीनिर्देशात् पितुःपितृष्वसृपुत्रात्सप्तमींमातुःपितृष्वसृपुत्राच्चपंचमीमपित्यजेत् एवम

न्यबंधुज्ञेयम् तत्रापि त्रिगोत्रात्सयेर्वागपिविवाहंकुर्यात् वक्ष्यमाणवचनात् त्रिगोत्रगणनाचमातामहगोत्रापेक्ष

या नतुस्वापेक्षया अन्यथापितुःपितामहदुहितुर्दौहित्रीपुत्रीपरिणेयास्यात् वध्वाःमातामहगोत्रापेक्षयातुत्रि

गोत्रांतर्गतेनेनविवाहप्रसंगइतिसंबंधतत्वादयोगौडग्रंथाः संबंधविवेकेशूलपाणिरप्याह पंचमात्सप्तमाच्चावीग

पित्रिगोत्रांतरिताविवाह्या असंबद्धाभवेन्मातुःपिंडेनैवोदकेनवा साविवाह्याद्विजातीनांत्रिगोत्रांतरितावये

तिहृदनमूक्तेः सन्निकर्षेपिकर्तव्यंत्रिगोत्रात्परतोयदीतिदेवलोक्तेश्चेति एतच्चदाक्षिणात्यानमन्यंते यत्तुवसिष्ठः

पंचमींसप्तमींचैवमातृतःपितृतस्तथेति यच्चविष्णुपुराणम् पंचमींमातृपक्षाच्चपितृपक्षाच्चसप्तमीम् गृहस्थउद्वहे
कन्यांन्याय्येनविधिनानृपेतितत्पंचमीसप्तमीमतीत्येतिव्याख्येयम् पंचमेसप्तमेचैवयेषांवैवाहिकीक्रिया क्रियाप
राअपिहितेपतिताः शूद्रतांगताइत्यपरार्केमरीचिवचनात् हारलतायांशंखलिखितौ सपिंडतातुसर्वेषांगोत्रतःसा
प्तपौरुषी पिंडश्चोदकदानंचआशौचंचतदानुगम् गोत्रंसंतानम् आशौचंतानभिवाप्यगच्छतीत्यर्थः शुद्धिविवेके
शुद्धिचिंतामणौचब्राह्मे सर्वेषामेववर्णानांविज्ञेयासाप्तपौरुषी सपिंडताततःपश्चात्समानोदकधर्मता ततःकाल
वशात्तत्रविस्मृतौनामगोत्रतः समानोदकसंज्ञातुतावन्मात्रापिनश्यति सप्तोर्ध्वंत्रयःसोदकास्ततोगोत्रजाः तत्रै
वब्राह्मे अविभक्तधनास्त्वेतेसपिंडाःपरिकीर्तिताः तेनाविभक्तधनाभावेविभक्तः सपिंडोधनहारीनान्यथेत्यर्थः
तेनविवाहे आशौचेधनग्रहणेचत्रिधासापिंड्यंसिद्धम् यत्तु पंचमीमातृतः परिहरेत्सप्तमींपितृतस्त्रीन्मातृतः पंचपि
तृतोवेतिपैठीनसिस्मृतौत्रीनित्यनुकल्पइतिमाधवोक्तेः पंचमींसप्तमींचैवमातृतःपितृतस्तथा दशभिःपुरुषैःख्याता-
च्छ्रोत्रियाणांमहाकुलात् उद्वहेत्सप्तमादूर्ध्वंतदभावेतुसप्तमीम् पंचमींतदभावेतुपितृपक्षेप्ययंविधिः सप्तमींचतथा
षष्ठींपंचमींचतथैवच एवमुद्वाहयेत्कन्यांनदोषःशाकटायनः तृतीयांवाचतुर्थींवापक्षयोरुभयोरपि विवाहयेन्मनुः
प्राहपाराशर्योगिरायमः यस्तुदेशानुरूपेणकुलमार्गेणचोद्वहेत् नित्यंसव्यवहार्यःस्याद्देशाच्चैतत्स्वदृश्यतइति चतुर्विं-
शतिमतात् चतुर्थीमुद्वहेत्कन्यांचतुर्थःपंचमोपिवा पराशरमतेषष्ठींपंचमोनतुपंचमीमितिपराशरोक्तेश्चानुकल्पते
नापिद्पंचम्यादिपरिणयनंकार्यमितिप्रतीयते अत्रहितदभावे इतिस्पष्टमेवानुकल्पत्वमुक्तम् तत्रयथाश्रुतंज्ञेयं

पूर्वोक्तमरीचिवचोविरोधात् वस्तुनिविकल्पासंभवात् पंचमात्सप्तमाद्धीनांयःकन्यामुद्वहेद्द्विजः गुरुतल्पीसविज्ञेयःस
गोत्रांचैवमुद्वहन्नितिविष्णूक्तेः पराशरस्यमूलाभावाच्च तस्मान्मदनपारिजातादुक्तादिशादत्तकसापत्न्यसंबंधाद्यनु
प्रवेशोब्राह्मणादीनांक्षत्रियादिसपिंडविषयेचापूर्वोक्तानिनेयानि नत्वनुकल्पइतिज्ञातव्यम् यत्तुस्मृतिचंद्रिकामाध
वादयआहुः तृतीयेसंगच्छावहैचतुर्थेसंगच्छावहाइतिशतपथश्रुतेः तृसांजहुर्मातुलस्येवयोषाभागस्तेपैतृष्वसेयीव
पामिवेति गर्भेनुनौजनितादंपतीकरितिचमंत्रवर्णात् मातृष्वसृसुतांकेचित्पितृष्वसृसुतांतथा विवहंतिक्वचिद्देशे
संकोचापिसपिंडतामितिशातातपोक्तेश्चमातुलकन्योद्वाहःकार्यः यद्यपिपितृष्वसृकन्योद्वाहोपिप्राप्तस्तथाप्यस्वर्ग्यं
लोकविद्विष्टंधर्ममप्याचरेन्नत्विनिनिषेधाद्वचनांतरेणतदुद्वाहस्याविधानाच्चनकार्यः अयंतुदाक्षिणात्यशिष्टाचारान्
कार्यइति नचपूर्वोक्तश्रुतीनामर्थवादमात्रता मानांतरेणासिद्धेउपरिहिदेवेभ्योधारयतीतिवदनुवादानुपपत्त्यावि
धिकल्पनात् यत्तुशातातपः मातुलस्यसुतामूढ्वामातृगोत्रांतथैवच समानप्रवरांचैवत्यक्त्वाचांद्रायणंचरेत् यच्च
मनुः पैतृष्वसेयींभगिनींस्वस्रीयांमातुरेवच मातुश्चभ्रातुराप्तस्यगत्वाचांद्रायणंचरेत् एतास्तिस्रस्तुभार्यार्थेनोपय
च्छेत्तुबुद्धिमान् यच्चव्यासः मातुःसपिंडायत्नेनवर्जनीयाद्विजातिभिरितितद्गांधर्वादिविवाहोढमातृविषयम् तत्रपि-
तृगोत्रानिवृत्तेः अतएवमार्कंडेयपुराणम् गांधर्वादिविवाहेषुपितृगोत्रेणधर्मवित् ब्राह्मादिविवाहेतुपारिणे
येवेति भट्टसोमेश्वरोपितृतीयेध्यायेचाक्यपादेमातुलकन्योद्वाहगुदाहृत्यस्मृतिविरोधेनाचारप्रामाण्यस्यवार्तिके
बाधोक्तावपिपूर्वोक्तश्रौतलिंगबलीयस्त्वादस्यकर्तव्यतामाह तदेतद्दत्तकस्यपालकदृष्टमातृसोदरकन्या-

विषयत्वेनासवर्णमातुलकन्याविषयत्वेनयुगांतरपरत्वेनचोपपन्नमपिअविचारितरमणीयंयथातथास्तु तथापिक
लौगाक्षिनिषिद्धमेव गोत्रान्मातुःसपिंडाच्चविवाहोगोवधस्तथेत्यादिपुराणात् माधवीयेबौधायनोप्यस्यनिंदामाह
न्धाविप्रति पत्तिर्दक्षिणतस्तथोत्तरतऊर्णाविक्रयोनुपेतेनस्त्रियासहभोजनंपर्युषितभोजनंमातुलपितृष्वसृदु
हितृपरिणयनमिति अथोत्तरतःसीधुपानादिकंशुल्कादइतरइतरस्मिन्कुर्वन् दुष्यतिइतरइतरस्मिन्निति भ
ट्टसोमेश्वरेणापिस्मृतिविरुद्धानांमातुलकन्योद्वाहादीनामस्माद्वचनादप्रामाण्यमित्युक्तम् बृहस्पतिरपि उद्वह्य-
ते दाक्षिणात्यैर्मातुलस्यसुताद्विजैः मत्स्यादाश्चनराःपूर्वेव्यभिचाररताःस्त्रियः उत्तरेमद्यपाश्चैवस्पृश्यानृणांरजस्व
लाइत्यनाचारत्वमाह अतएवहेमाद्रौमात्स्ये कर्नाटकादीनांतत्कारिणांश्राद्धेनिषेधः बोपदेवेनापिलिखितंब्राह्मे
यनमातुलजोद्वाहोयत्रवैवृषलीपतिः श्राद्धंनगच्छेत्तद्विप्राःकृतंयच्चनिरामिषमिति तस्मान्मातृतःपंचपितृतःसप्त
मात्कोद्वहेदितिसिद्धम् संबंधविवेकेसुमंतुः ब्राह्मणानामेकपिंडस्वधानामादशमाद्धर्मोविच्छित्तिर्भवति आसप्त
मादित्यविच्छित्तिर्भवति आवृत्तीयात्पिंडविच्छित्तिरन्यथापिंडशौचक्रियाविच्छेदाद्ब्रह्मतुल्योभवति अस्यार्थ
माहशूलपाणिः जीवत्पित्रादिकस्यवृद्धप्रपितामहादयस्त्रयःश्राद्धदेवतात्वात्पिंडभाजोभवंति तदूर्ध्वंत्रयोन
त्पुरुषपर्यंतालेपभाजःश्राद्धकर्ताचदशमइतिदशमादूर्ध्वंसापिंड्यनिवृत्तिः दशमादित्यस्यफलकथनम् तेनपितृ
पितामहजीवनेनवपुरुषपर्यंतंपितृजीवनेचाष्टपुरुषपर्यंतंसापिंड्यमितिज्ञेयम् अपुत्रधनग्रहणेसन्निहिता-
भावेसप्तपुरुषपर्यंतमधिकार धनग्राहिणमारभ्यतृतीयपौत्र-तदूर्ध्वंश्राद्धविच्छेदः अन्यथाधनहारित्वेऽपुत्रश्रा

न्द्रायकरणेत्रसहेत्यर्थः आतृतीयादित्यनूढकन्याविषयम् अभक्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायत इतिवसिष्ठोक्तेः

एतच्चाशौचविषयंसापिंड्यनतुविवाहादौ तत्रपूर्वोक्तवचनैःपंचमसप्तमनियमादितिमेधातिथिमुखवादाक्षिणात्याः वाग्दानोत्तरमेतदितिश्राद्धविवेकः मातृकुलविषयंकानीनकन्याविषयंचैतत् अन्यथाप्रत्तानांतथास्त्रीणांसापिंड्यंतासयोरूर्ध्वम् भक्तानांभर्तृसापिंड्यमाहदेवःप्रजापतिरितिकौर्मेण विरोधःस्यादितिरत्नाकरस्मृतितत्त्वादिगौडग्रंथाः युक्तंचैतत् अन्यथाकन्योत्पत्तौपुरुषत्रयपर्यंतमेवसूतकंस्यान्नोर्ध्वम् सापत्नमातामहकुलेत्वाहमिताक्षरायांशंखः यद्येकजाताबहवःपृथक्क्षेत्राःपृथक्जनाः एकपिंडाःपृथक्शौचाःपिंडस्त्वावर्तनेत्रिषु पृथक्क्षेत्राःभिन्नजातीयस्त्रीषु जाताः पृथक्जनाः सजातीयभिन्नमातृषुजाताः अत्रत्रिपुरुषंसापिंड्यमितिविज्ञानेश्वरोव्याचख्यौ पृथ्वीचंद्रोदये सापिंड्यदीपिकायांचैवम् मदनपारिजातेतु पृथक्क्षेत्राःभिन्नमातृजाःपृथक्जनाःभिन्नजातीयाः एतद्विजातीयसापत्नमातृकुलविषयम् सवर्णसापत्नमातृकुलेत्वतुःपुरुषंसापिंड्यं पंचमीसप्तमींचैव मातृतःपितृतस्तथेतिवसिष्ठोक्तेः सप्तमीमितिब्राह्मणादीनांक्षत्रियादिदारोत्पन्नापितृकुलविषयंचेत्युक्तम् तत्स्वकपोलकल्पितत्वान्ग्रंथांतरविरोधाच्चनिर्मूलम् पितृपत्न्यःसर्वामातरइत्युक्तासमंतुनातदपत्यानिभागिनेयानीतिपृथ्वीचंद्रेषेधाच्च अन्यथासापिंड्यत्वेननिषेधात्सपत्नमातुलत्वादिनिर्देशोव्यर्थः अतएवतेनस्मृतिकौमुद्यांसवर्णसापत्नमातामहकुलपरत्वेनतथैवशंखवचनंव्याख्यातम् तेनवासिष्ठंपंचमीसप्तमीमतीतेतिव्याख्येयम् तस्मात्प्राच्यैवव्याख्यायुक्ता प्रयोगरत्नेभट्टैः स्मृतितत्त्वादिगौडग्रंथेपुनःसपत्नमातामहकुलेयावदुक्तंवाचनिकमेवसापिंड्यमुक्तम् यथा

हरदत्तः मातृपितृसंबंधा आसप्तमाद्विवाह्या भवंति आपंचमादन्येषां पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भ
गिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि अन्यथा संकरकारिणः स्युस्तथाध्यापयितुरेतदेवेति
आपंचमादिति मातृकुले त्रिगोत्रांतरितविषयं चेति प्राच्याः मात्स्ये समानप्रवरान्नैव शिष्यसंततिरेव च ब्रह्मदातुर्गुरो
श्चैव संततिः प्रतिषिध्यते तद्भगिन्यो मातृष्वसार इति तु आकरेन पठितं कश्चिद्वचनादविवाह्यः यथा गृह्यपरिशिष्टे अवि
रुद्धसंबंधामुपयच्छेत् नेत्येतत् विरुद्धसंबंधः स्वयमेवोक्तः यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति बौधायनः मा
तुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत् पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत् अतो मातृष्वसुः सापत्नपुत्रकन्याप्य
विवाह्या सापत्नमातृकुलजामिति मदनपारिजातोक्तेरिति केचित् केचित्तु ज्येष्ठो भ्राता पितुः सम इति मनूक्तेस्तत्प
त्न्याः मातृत्वात्तत्पितुर्मातामहत्वात् ज्येष्ठभ्रातृपत्नीभगिनी न विवाह्या तथा उत्पादकब्रह्मदात्रोर्गरीयान्ब्रह्मदः
पितेति मनूक्तेर्गुरुणा त्रिपुरुषं सापिंड्यं स्वापि निर्वाप्यः अतस्तेषां कन्या नोद्वाह्याः गायत्र्याउपदेष्टुश्च कन्यां नैवोद्वहे
द्द्विजः गुरोश्च कन्यां शिष्यो वा तत्संतत्यापि नेष्यते पुरुषत्रयपर्यंतं भ्रात्रादेर्नैनदिष्यते वाक्संबंधकृतानां तु स्नेहसंबं
धभागिनाम् विवाहो न न कर्तव्यो लोकगर्हाप्रसज्यत इति वचनाच्चेत्याहुः तन्मूलं चिंत्यम् दत्तकविषये तूच्यते
तत्र गौतमः ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृबंधुभ्यः पंचमादिति बंधुग्रहणाद्दत्तकमात्रपरमिदं किंतु
संतानेपि एतत् क्षेत्रजादिसर्वद्व्यामुष्यायणपरमिति हरदत्तः अत्र स्मृतिचंद्रिकानियोगाद्य उत्पादयति तस्माद्बीजि
नोप्यूर्ध्वं सप्तमादिति सपर्यंत इति दत्तकस्य जनकविषयमेतदिति सापिंड्यमीमांसायाम् तेनदत्तकस्य जनककुले सा

पौरुषंजननीकुलेपांचपौरुषंसापिंड्यम् दत्तक्रीतादिपुत्राणांबीजवप्तुःसपिंडता सप्तमीपंचमीन्नैवगोत्रित्वंपालक
स्यैवेतिहृहन्मनूक्तेः बीजिनश्चेतिगौतमोक्तेश्च पालकपितृकुलेतुपंचपुरुषम् पालकमातृकुलेत्रिपुरुषम् तथा
चापरार्केपैठीनसिः त्रीन्मातृतःपंचपितृतःपुरुषानतीत्योद्वहेदिति एतत्सएवव्याचख्यौ दत्तकादीन्पुत्रान्पितृप-
क्षतोनिवृत्तपिंडगोत्रार्षेयान्प्रत्येतदुच्यतेपंचपितृनइतिनान्यान्प्रतीति यत्तुवृद्धगौतमः स्वगोत्रेषुकृतायेस्युर्द
त्तक्रीतादयःसुताः विधिनागोत्रमायांतिनसापिंड्यंविधीयते यच्चवसिष्ठः अन्यशाखोद्भवोदत्तःपुत्रश्चैवोप
नायितः स्वगोत्रेणस्वशाखोक्तविधिनास्यात्स्वशाखभागिति यच्चनारदः धर्मार्थंवर्द्धिताःपुत्रास्तत्तद्गोत्रेणपुत्र
वत् अंशपिंडविभागित्वंतेषुकेवलमीरितमिति तत्पालककुलेसाप्तपौरुषंसापिंड्यंनेत्येवंपरंनतुसर्वथासापिंड्य-
निषेधपरमितिसापिंड्यमीमांसायाम् 'मदनपारिजातादपिदत्तकानुप्रवेशेऽल्पंसापिंड्यंप्रतिभाति तथाहि तेन
नीनतीत्येत्कृत्यत्स्यस्यमातादत्तपुत्रीप्रतिगृहीतापुत्रीकृतातस्याःप्रतिगृहीतुःकुलेत्रीनतीत्येति पंचपितृतइ
तियस्यदत्तपुत्रः पितातस्यदत्तस्ययज्जनककुलंतद्विषयमित्युक्तम् वस्तुतस्तुपूर्ववचसांमहानिबंधेष्वक्काप्यनुपलं
भादपरार्कादिलिखनाभावात्पूर्वोक्तव्यवस्थायाश्चप्रतिभाज्ञानतुल्यत्वाद्धीरेस्तल्लिखितंतेषामेवशोभते ममतु
पालककुलेएकपिंडदानक्रियान्वयित्वरूपंसाप्तपौरुषमेवसापिंड्यं बीजिनश्चेतिगौतमोक्तेर्जनककुलेपिताव
देवत्रीन्मातृतइत्यादितुसवर्णसापत्नमातृकुलपरंयद्येकजातावहवइतिशांखेकवाक्यत्वादितियुक्तंप्रतिभाति अ
तएवास्यद्व्यामुष्यायणत्वंहेमाद्रिप्रवरमंजरीवृत्तिकृन्नारायणादिभिरुक्तम् भट्टसोमेश्वरेणापिपृथायाःकुंति-

भोजस्यपालककन्यात्वेपिऊर्ध्वसप्तमात्पितृबंधुभ्योबीजिनश्चेतिगौतमोक्तेर्दत्रिगायाःपृथायाःजनकस्यशूरसेनस्यकुले
पिसप्तपौरुषंपालककुलेपितावदेवसापिंड्यंउक्तमपिवाकारणाग्रहणेऽत्र सापिंड्यदीपिकायांतुदत्तक्रीतादीनांज
नकगोत्रेणोपनयनेकृतेजनककुलेसप्तपौरुषंसापिंड्यम् पालकमातापितृकुलेत्रिपुरुषम् पिंडनिर्वापान्निर्वाप्यल
क्षणंत्रिपुरुषंसापिंड्यम् पालकगोत्रेणोपनयनेतत्कुलेसप्तपौरुषमित्युक्तम् तन्न चूडोपायनसंस्कारानिजगोत्रेण
वैकृताः दत्ताद्याःसुतनयास्तेस्युरन्यथादासउच्यतइतिकालिकापुराणादुपनयनोत्तरंदत्तकनिषेधात् त्रिपुरुषमि
त्यत्रापिमूलंमृग्यमित्यलंबहुना मातापितृद्वारकसापिंड्यवतीनांकन्यानामियंसंख्यारामवाजपेयिनोक्ता उद्वोढुः
पितरोपितुश्चपितरौतज्जन्मकद्वंपतिद्वंद्वंतस्यचतुष्कमष्टचततोप्यस्यक्रमात्षोडश वंशारंभकदंपतीप्रमितिरित्या
सप्तकक्षंरदाएकैकान्वयकन्यकाःपितृकुलेतांसप्तकक्षांब्रुवे यद्यप्येकस्यबहवःसुताःस्युस्तदपीहतु संबंधसाम्या
देकैवगणितेत्यवधार्यताम् एकस्मान्मिथुनात्सुतौथदुहिताद्वंद्वद्वयंतद्द्वयात्तस्माद्वंद्वचतुष्कमष्टचततोतःषोडशा
तोरदाः यावत्सप्तमकक्षमग्निऋतवःकन्याद्द्वैकान्वयेतादृतैर्गुणितारसैकस्वदशोवंशेसपिंडाःपितुः मातुर्जनाद्
दंपतीचमिथुनद्वंद्वंतयोःसागरास्तस्याःपंचमकक्षमंशमितिरित्येकान्वयःपुंसुते द्वंद्वाद्द्वंद्वयुगंततोब्धयइतोष्टौपं
चकक्षंशरक्षोण्यःसप्तगुणाःशराब्धिविधवोमातुस्सपिंडाःकुले कुलद्वयस्यकन्यकायुतामिथःसपिंडकाः हिमां
शुदृग्धराद्दृशोविवाहकर्मवर्जिताइति एतच्चसर्ववर्णसाधारणम् सर्वत्रसापिंड्यसद्भावादितिविज्ञानेश्वरोक्तेः पंच
मात्सप्तमादूर्ध्वंमातृतःपितृतःक्रमात् सपिंडतानिवर्तेतसर्ववर्णेष्वयंविधिरितिहरनाथधृतदेवलवचनाच्च. सं

बंधतत्वेसमंतुः पितृष्वस्रसुतांमातृष्वस्रसुतांमातुलसुतांमातृसगोत्रांसमानार्षेयींविवाह्य चांद्रायणंचरेत्परि
त्यज्यैनांमातृवद्बिभृयादितिदिक् अपरेदमार्षेप्रवरःगोत्रंप्रसिद्धम् समानेआर्षेगोत्रेयस्यतस्माज्ज्ञातायानभवतितां
अथसंक्षेपेणगोत्रप्रवरनिर्णयः तौचाभिन्नौनिषेधेनिमित्तम् सगोत्रायदुहितरंनप्रयच्छेदित्यापस्तंबोक्तेः
असमानप्रवरैर्विवाहइतिगौतमोक्तेश्च तत्रगोत्रलक्षणमाहप्रवरमंजर्याम् बौधायनः विश्वामित्रोजमदग्नि
र्भरद्वाजोथगौतमः अत्रिर्वसिष्ठःकश्यपइत्येतेसप्तर्षयः सप्तानामृषीणामगस्त्याष्टमानांयदपत्यंतद्गोत्रमिति
यद्यपिकेवलभार्गवेवार्ष्टिषेणादिषुकेवलांगिरसेषुचहरितादिषुनेतत् भृग्वंगिरसोरुक्तेष्वनंतर्गतेःतथाप्यंत्र
द्यापत्तिरेवेतिकेचित् अतएवस्मृत्यर्थसारेप्रवरैक्यादेवात्राविवाहउक्तः यद्यपिवसिष्ठादीनांनगोत्रत्वंयुक्तंतेषां
सप्तर्षित्वेनतदपत्यत्वाभावात्तथापितत्पूर्वभाविवसिष्ठाद्यपत्यत्वेनगोत्रत्वंयुक्तम् अतएवपूर्वेषांपरेषांचैतन्
द्गोत्रं अत्रविशेषोस्मत्कृतप्रवरदर्पणेज्ञेयः प्रवरास्तुप्रवरणानिप्रवराः कल्पकाराहिवासिष्ठेतिहोतावसिष्ठव-
दित्यध्वर्युरित्यादिनायेषांवरणमामनंतितेप्रवराः तत्रवरणंयद्यपिगोत्रभूतस्यापिक्वचिद्दृश्यते तथापिपूर्वव
द्यपिभेदोद्रष्टव्यः अन्यथातेषांत्र्यार्षेयएकार्षेयइत्यादिनिर्देशानुपपत्तेः अन्येतुतद्गोत्राणांत्र्यार्षेयइतिभेद
माहुरितिदिक् तत्तुगोत्रभूतस्यापितृपितामहप्रपितामहाएवप्रवराः पितेवाग्रेथपुत्रोथपौत्रइतिशतपथ
श्रुतेः परंपरंप्रथममित्याश्वलायनोक्तेश्च अत्रविशेषमाहबौधायनः एकएवऋषिर्यावत्प्रवरेष्वनुवर्तते
तावत्समानगोत्रत्वमन्यत्रभृग्वंगिरसांगणादिति स्मृत्यर्थसारे ध्रियमाणतयावापिसत्तयावानुवर्तनम्

एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते भृग्वंगिरोगणेषु तु माधवीये स्मृत्यंतरे पंचानां त्रिषु सामान्यादविवाहस्त्रिषु
द्वयोः भृग्वंगिरोगणे वंशे वेकोपि वारयेत् शेषगोत्रेषु एकोपि समानः प्रवरो विवाहं वारयेदित्यर्थः बौधायनो
पि भृग्वंगिरसावधिकृत्य त्र्यार्षेयसन्निपाते विवाहस्त्र्यार्षेयाणां त्र्यार्षेयसन्निपाते विवाहः पंचार्षेयाणामिति
भृग्वंगिरोगणे त्वपि जमदग्निगोतमभरद्वाजेष्वेकप्रवरसाम्ये सर्वेषामथ साम्ये वा सगोत्रत्वादेवाविवाह इति दिक्
अथ गोत्राणि प्रवराश्चोच्यंते तत्र बौधायनः गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ऊनपंचाशदे
वैषां प्रवरा ऋषिदर्शनात् तत्र सप्त भृगवः वत्सा विदा आर्ष्टिषेणा यस्का मित्रयुवा वैन्याः शुनका इति वत्सा
नां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति भार्गवौर्वजामदग्न्येति वा भार्गवच्यावनाप्नवानेति वा विदानां पंच
भार्गवच्यावनाप्नवानौर्ववैदेति भार्गवौर्वजामदग्न्येति वा एतौ द्वौ जामदग्न्यसंज्ञौ आर्ष्टिषेणानाम् भार्गव
च्यावनाप्नवानार्ष्टिषेणानूपेति भार्गवार्ष्टिषेणानूपेति वा एषां त्रयाणां परस्परमविवाहः वात्स्यानाम् भा
र्गवच्यावनाप्नवानेति वत्सपुरोधसयोः पंच भार्गवच्यावनाप्नवान वात्स्यपौरोधसेति बैजवानिमतिथयोः पं
च भार्गवच्यावनाप्नवान बैजवनेमथितेति एते त्रयः क्वचित् एषामपि पूर्वैरविवाहः अत्र तत्तद्गणस्थान
पयोन्यश्च विशेषो मत्कृते प्रवरदर्पणे ज्ञेयः यस्कानां भार्गववैतहव्यसावेतसेति मित्रयुवानाम् भार्गववाध्र्य
श्वदिवोदासेति भार्गवच्यावनदिवोदासेति वा वाध्र्यश्वेत्येकोवा वैन्यानां भार्गववैन्यपार्थेति एत एव श्येनाः
शुनकानां शौनकेति वा गार्त्समदेति वा भार्गवगार्त्समदेति द्वौ वा भार्गवशौनहोत्रगार्त्समदेति त्रयो वा वेद

विश्वज्योतिषां भार्गववैदवैश्वज्योतिषेति शाठरमाठराणाम् भार्गवशाठरमाठरेति एतेनोद्दोकश्चित् यस्कादीनांस्व
गणांस्तत्रासर्वैर्विवाहः तदुक्तंस्मृत्यर्थसारे यस्कामित्रयुवैन्याःशुनकाःप्रवरैक्यतः स्वंस्वंहित्वागणांसर्वैर्विवहेयुःप
रस्परमिति अथांगिरसः नेगौतमाः भरद्वाजाः केवलांगिरसश्चेतित्रिधा अत्रगौतमादश आयास्याःशरद्वंताः
कौमंडादीर्घतमसः औशनसाः करेणुपालयःराहूगणाः सौमराजकाःवामदेवाबृहदुक्थाश्चेति तत्रायास्यानांआं
गिरसायास्यगौतमेति शरद्वंतानांआंगिरसगौतमशारद्वंतेति कौमंडानांआंगिरसौतथ्यकाक्षीवतगौतमकौमंडेति
वा आंगिरसायास्यौशिजगौतमकाक्षीवतेतिवा आंगिरसौतथ्यगौतमौशिजकाक्षीवतेतिवा आंगिरसौशिजका-
क्षीवतेतित्रयोवा दीर्घतमसां आंगिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति आंगिरसौतथ्यदैर्घतमसेतित्रयोवा औ
शनसां आंगिरसगौतमौशनसेतित्रयः कारेणुपालानाम् आंगिरसगौतमकारेणुपालेतित्रयः राहूगणानाम् आं
गिरसराहूगणगौतमेति सौमराजकानाम् आंगिरससौमराजकगौतमेति वामदेवानाम् आंगिरसवामदेव्यगौत
मेति बृहदुक्थानाम् आंगिरसबार्हदुक्थगौतमेति आंगिरसवामदेवबार्हदुक्थेतिवा उतथ्यानामांगिरसौतथ्यगौत
मेति औशिजानामांगिरसौशिजकाक्षीवतेत्यापस्तंबः आंगिरसायास्यौशिजगौतमकाक्षीवतेतिकात्यायनः एतेनो
द्दोकश्चित् रघुनानाम् आंगिरसराघुवगौतमेतिकेचित् तन्मूलंचिंत्यम् एषांसर्वेषांगौतमानामविवाहः अथभरद्वा
जाः तेचत्वारः भरद्वाजागर्गाऋक्षाःकपयइति भरद्वाजानामांगिरसबार्हस्पत्यभारद्वाजेतित्रयः गर्गाणामांगिरसबार्ह
स्पत्यभारद्वाजसैन्यगार्ग्येतिपंच आंगिरससैन्यगार्ग्येतिवा अंत्ययोर्व्यत्ययोवा भारद्वाजगार्ग्यसैन्येतिवा गर्गभेदानां

मघामित्रोत्तरारोहिणीदेवेज्येसुचशुक्रसौम्यशशाङ्कवागीशवारांशके रिक्तांछिद्रतिथिंविहायवृषभेनक्रेकुलीरे
घटेमीनेकूपतडागकर्ममुनयःशंसंतिशुक्लेष्टमे हस्तोमघानुराधापुष्यधनिष्ठोत्तराणिरोहिण्यः शतभिषगित्यारंभे
कूपानांशस्यतेभगणः हेमाद्रौभविष्ये तस्मिन्सलिलसंपूर्णेकार्तिकेतुविशेषतः मुनयःकेचिदिच्छंतिव्यतीतेचो-
त्तरायणे नकालनियमस्तत्रसलिलंतत्रकारणम् दीपिकापि मार्तंडेंदुकुजाब्जसुरजिदशयनेमाघषट्कस्यशुक्ले
मूलाषाढोत्तराश्विश्रवणगुरुकरेपौष्णशक्राजचंद्रे मैत्रेब्राह्मेचपूर्णामदन१३रवितिथौ१२सद्वितीयात्तृतीयेकार्यातो
यमातिष्ठाज्ञगुरुसितदिनेकालशुद्धेस्वलग्ने वराहः आग्नेयेयदिकोणेग्रामस्यपुरस्यवाभवतिकूपः नित्यंसकरोति
भयंदाहंचसमानसंप्रायः नैर्ऋत्येबालभयंवनिताक्षयंचवायव्ये दिक्त्रयमेतत्त्यक्त्वाशेषास्तुशुभावहाःकूपाः
वास्तुशास्त्रे भूतिंपुष्टिंपुत्रहानिंपुरंध्रीनाशंमृत्युंसंपदंशत्रुबाधाम् किंचित्सौख्यंशंभुकोणादिकुर्यात्कूपोमध्ये-
गेहमर्थक्षयंच उत्सर्गविधिश्चोक्तोबह्वृचपरिशिष्टे अथातोवापीकूपतडागयज्ञंव्याख्यास्यामः पुण्येत्युदकसमी
पेग्निंसमाधायवारुणंचरुंश्रपयित्वाज्यभागांतेआज्याहुतीर्जुहुयात् समुद्रज्येष्ठेतिमत्यृचंततोहविषाध्वेत्वाया
मीतिपंचत्वन्नोअग्नेइतिद्वेइमंमेवरुणेतिच स्विष्टकृत्नवमम् मार्जनांतेधेनुंतारयेत् अवतीर्यमाणामनुमंत्रये
न इदंसलिलंपवित्रंकुरुष्वशुद्धाःपूताअमृताःसंतुनित्यम् मांतारयंतीकुरुतीर्थाभिषेकंलोकाल्लोकंतरतेतीर्यतेच
चेतिपुच्छमन्वारभ्योत्तीर्यापोअस्मान्मातरःशुंधयंत्वित्यथापराजितायांदिश्युत्थापयेत् सूयवसाद्भगवतीतिहिंकृ
तंचेद्धिंकृण्वतीत्यलंकृतांविप्रायदद्यादितरांवाशक्त्यादक्षिणांततउत्सृजेद्देवपितृमनुष्याःप्रीयंतामितिब्राह्मणा

भोजयित्वास्वस्त्ययनंवाचयीत विस्तरस्तु मात्स्योक्तोस्मत्कृतजलाशयोत्सर्गविधौज्ञेयः कूपादेरुत्सर्गाकरणेदोषउ
क्तोभविष्ये सदाजलंपवित्रंस्यादपवित्रमसंस्कृतम् कुशाग्रेणापियाजेंद्रनस्प्रष्टव्यमसंस्कृतम् तथा वापीकूपत
डागादौयज्जलंस्यादसंस्कृतम् अपेयंतद्भवेत्सर्वंपीत्वाचांद्रायणंचरेत् अथवृक्षारोपणम् चंडेश्वरः आदि
त्यवांद्रमित्रतिष्यविशाखपौष्णमूलोत्तरात्रयतुरंगमवारुणाश्च एतेषुतारकगणेषुहितंनराणांवृक्षादिरोपण
मिहोपदिशंतिधीराः अथमूर्तिप्रतिष्ठा वसिष्ठः हस्तत्रयेमित्रहरित्रयेचपौष्णादृत्यादित्यसुरेज्यभेषु नि
त्योत्तराधातृशशांकभेषुसर्वामरस्थापनमुत्तमंस्यात् मात्स्ये चैत्रेवाफाल्गुनेवापिज्येष्ठेवामाधवेतथा माघेवा
सर्वदेवानांप्रतिष्ठाशुभदाभवेत् नारदस्तुचैत्रंनिषेधति विनेचैत्रेचैवमासेषुमाघादिषुचपंचस्विति तेनात्र
विकल्पः अत्रमाघमासोविष्णुप्रतिष्ठाव्यतिरिक्तविषयः माघेकर्तुर्विनाशायफाल्गुनेशुभदाभवेदितिविष्णु
धर्मोक्तेरितिहेमाद्रिः मात्स्ये दृढाधनकरीस्फीतातथाप्रतिपदिस्मृता द्वितीयायांधनोपेतातृतीयायांधनप्र
दा चतुर्थ्यांनाशमाप्नोतियमस्यस्यात्सुखावहा विनायकस्यदेवस्यतथातत्राहितप्रदा पंचम्यांश्रीयुताकर्तुर्वर
दाचतथाभवेत् षष्ठ्यांलक्ष्मीयुतानित्यंसप्तम्यांरोगनाशिनी अष्टम्यांधान्यबहुलानवम्यांचविनश्यति भद्रका
र्याःकृतातत्रकर्तुर्भवतितुष्टये धर्मवृद्धिकरीज्ञेयादशम्यांतुतथातिथौ एकादश्यांतथायुक्ताद्वादश्यांसर्वकाम
दा त्रयोदश्यांतथाज्ञेयाचतुर्दश्यांविनश्यति कृष्णपक्षेपंचदश्यांकर्तुःक्षयकरीभवेत् पंचदश्यांतथाशुक्लेस
र्वकामकरीभवेत् आषाढेद्वेतथामूलमुत्तरात्रयमेवच ज्येष्ठाश्रवणरोहिण्यःपूर्वाभाद्रपदातथा हस्ताश्वि

णीरेवतीचपुष्योमृगशिरस्तथा अनूराधातथास्वातीप्रतिष्ठासुप्रशस्यते श्रीपतिः रोहिण्युत्तरपौष्णवैष्णवकरादि साश्विनीवासवानूराधैंद्रवजीवभेषुगदितंविष्णोःप्रतिष्ठापनम् पुष्यश्रुत्यभिजित्करेश्वरकयोर्वित्ताधिपस्कंदयो- र्मैत्रेतिग्मरुचेःकरेनिर्ऋतिभेदुर्गादिकानांशुभम् गणपरिवृढरक्षोयक्षभूतासुराणांप्रमथफणिसरस्वत्यादिका नांचपौष्णे श्रवसिसुगतनाम्नोवासवेलोकपानांनिगदितमखिलानांस्थापनंचस्थिरेषु तेजस्विनीक्षेमकृदग्नि दाहविधायिनीस्याद्धनदाहृदान्त आनंदकृत्कल्पविनाशिनीचसूर्यादिवारेषुभवेत्प्रतिष्ठा माधवीयेवैखानसः

मातृभैरववाराहनरसिंहत्रिविक्रमाः महिषासुरहंत्र्यश्चस्थाप्यावैदक्षिणायने वैशब्दोप्यर्थेलिंगप्रतिष्ठायां विशेषः हेमाद्रौलक्षणसमुच्चये उत्तरायणगतेभानौलिंगस्थापनमुत्तमं दक्षिणेत्वयनेपूज्यान्त्रिवर्षाद्भयावह म् स्वगृहेस्थापनंनेष्टंतस्माद्देदक्षिणायने स्थापनंतुप्रकर्तव्यंशिशिरादावृतुत्रये प्रावृषिस्थापितंलिंगंभवेद्ध रदयोगदम् हेमंतेज्ञानदंचैवलिंगस्यारोपणंमतम् रत्नावल्याम् माघफाल्गुनवैशाखज्येष्ठाषाढेषुपंचसु मासेषुशुक्लपक्षेषुलिंगस्थापनमुत्तमम् विष्णोरप्याहतत्रैववैखानसः मार्गशीर्षादिमासौद्वौनिंदितौब्रह्मणा पुरा मासेषुफाल्गुनःश्रेष्ठश्चैत्रोवैशाखएवच इषेवाप्याश्वयुङ्मासेश्रावणेमासिवाभवेत् बौधायनसूत्रेवि- ष्णुप्रतिष्ठामुपक्रम्यद्वादश्यांश्रोणायांवायानिचान्यानिपुण्यनक्षत्राणीति कृत्तिकादिविशाखांतेष्वित्यर्थः स र्वदेवेषुमासविशेषोहेमाद्रौविष्णुधर्मे माघेकर्तुर्विनाशायफाल्गुनेशुभदाभवेत् लोकानंदकरीचैत्रेवैशाखे वरसंयुता आज्ञायुतासदाज्येष्ठेआषाढेधर्मवृद्धिदा श्रावणेधनहीनास्यात्प्रोष्ठपादेविनश्यति आश्विनेनाश

माप्नोतिनरक्षिनाकीर्तिंकेतथा सौम्येसौभाग्यमतुलंपौषेपुष्टिरनुत्तमा दोषान्विताधिमासेस्यात्कर्तुरात्म नएवचेति
अत्रश्रावणाश्विनयोर्निषेधोमार्गशीर्षविधिश्चविष्णुव्यतिरिक्तविषयः पूर्वोक्तवचनादितिहेमाद्रिः माघश्राव
णभाद्रपदनिषेधःशिवव्यतिरिक्तविषयः तत्रतस्योक्तेः देवीस्थापनेतत्रैवविशेषोदेवीपुराणे देव्यामाघेश्विने-
मासेउत्तमासर्वकामदा तथा नतिथिर्नचनक्षत्रंनोपवासोत्रकारणम् सर्वकालंप्रकर्तव्यंकृष्णपक्षेविशेषतः अ-
न्यश्चात्रविचारोहेमाद्रौज्ञेयः नारदः हंत्यर्थहीनाकर्तारंमंत्रहीनात्तुऋत्विजम् स्त्रियंलक्षणहीनातुनप्रतिष्ठासमो
रिपुः अत्राधिकारिणउक्ताः कृत्यकल्पतरौदेवीपुराणे वर्णाश्रमविभेदेनदेवाःस्थाप्यास्तुनान्यथा ब्रह्मातुब्राह्म
णैःस्थाप्योगायत्रीसहितःप्रभुः चतुर्वर्णैस्तथाविष्णुःप्रतिष्ठाप्यःसुखार्थिभिः भैरवोपिचतुर्वर्णैरंत्यजानांतथाम-
तः मातरःसर्वलोकेस्तुस्थाप्याःपूज्याःसरोत्तमाः लिंगंगृहीयतिर्वापिसंस्थाप्यतुजयेत्सदा शिवसर्वस्वेभविष्ये
यस्तुपूजयतेलिंगंदेवादिंगांजगत्पतिम् ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवामत्परायणः तस्यप्रीतःप्रदास्यामि
कृत्स्नान्लोकाननुत्तमान् तिथितत्त्वेस्कांदे शूद्रःकर्माणियोनित्यंस्वीयानिकुरुतेप्रिये तस्याहमर्चांगृह्णामिचंद्रखं
डविभूषिते ब्रह्मचारीगृहस्थोवावानप्रस्थश्चसत्तमे एवंदिनेदिनेदेवंपूजयेद्विकापतिम् संन्यासीदेवदेवेशंप्र
णवेनैवपूजयेत् नमोंतेनशिवेनैवस्त्रीणांपूजाविधीयते एतच्चपुराणप्रसिद्धजीर्णलिंगपूजाविषयम् यानितु
त्रिस्थलीसेतौनारदीये यःशूद्रेणार्चितंलिंगंविष्णुंवाप्रणमेन्नरः नतस्यनिष्कृतिर्दृष्टाप्रायश्चित्तायुतैरपि नमे
द्यःशूद्रसंस्पृष्टंलिंगंवाहरिमेववा ससर्वयातनाभोगीयावदाचंद्रतारकम् पाखंडपूजितेलिंगेनत्वापाखंडतांव्र-

जेत् आभीरपूजितंलिंगंनत्वानरकमश्नुते योषिद्भिःपूजितंलिंगंविष्णुंवापिनमेत्तुयः सकोटिकुलसंयुक्तमाकल्पं रौरवंवसेदित्यादीनितानिनूतनस्थापितलिंगादिविषयाणि यदाप्रतिष्ठितंलिंगंमंत्रविद्भिर्यथाविधि तदाप्रभृ तिशूद्रश्चयोषिद्वापिनसंस्पृशेदितितत्रैवोक्तेः प्रतिष्ठायांतुशूद्रादीनांनाधिकारः स्त्रीणामनुपनीतानांशूद्राणां चनरेश्वर स्थापनेनाधिकारोस्तिविष्णोर्वाशंकरस्यवा यःशूद्रसंस्कृतंलिंगंविष्णुंवापिनमेन्नरः इहैवाप्यनंतदुः खानिपश्यत्यामुष्मिकेकिमु शूद्रोवानुपनीतोवास्त्रियोवापतितोपिवा केशवंवाशिवंवापिस्पृष्ट्वानरकमश्नुते इतिबृहन्नारदीये स्कांदोक्तेरितिनिबंधस्थलीसेतौपितामहचरणाः चतुर्वर्णैरितिपूर्वोक्तवचनाद्वृष्णवादिप्रतिष्ठायां शूद्रस्याविकल्पइतितुयुक्तंपश्यामः तत्रैवगौतमः शिवार्चनंसदाप्येवंशुचिःकुर्यादुदङ्मुखः वाचस्पतिमतम्

प्राङ्मुखश्चिभोदगास्यस्तुप्रातःसायंनिशासुचेति प्रयोगपारिजातेगृह्यपरिशिष्टे प्रतिमाःप्राङ्मुखीरुदङ्मुखो पूजेतान्यत्रप्राङ्मुखः एतच्चस्थिरप्रतिमाविषयम् अन्यत्रचलार्चासु अथप्रतिमाः मार्गवार्चनदीपिकायांभविष्ये सौवर्णीराजतीताम्रीमृन्मयीचतथाभवेत् पाषाणधातुयुक्तावारीतिकांस्यमयीतथा रीतिःपित्तलम् शुद्धदारुमयीवापिदेवतार्चाप्रशस्यते अंगुष्ठपर्वादारभ्यवितस्तिंयावदेवतु गृहेषुप्रतिमाकार्यानाधिकाशस्यतेबुधैः पंचरात्रेतु मृद्दारुलाक्षागोमेदमधूच्छिष्टमयींनतिलितिनिषेधउक्तः भागवते शैलीदारुमयीलौहीलेप्यालेख्याचसैकती मनोमयीमणिमयीप्रतिमाष्टविधास्मृता काष्ठंमधुकस्यैव तत्रकाष्ठेषुमधुकमानीयचवसुधरे कृत्वातत्प्रतिमांचैवप्रतिष्ठाविधिनार्चयेदितिवाराहोक्तेः देवीपुराणे सप्तांगुलंसमारभ्य

तिथितत्वे कालिकापुराणे प्रतिमायाः कं पो
यावच्चद्वादशांगुलम् गृहेष्वर्चासमाख्याता प्रासादे वाधिकाश्रमा
ॐ ह्रौं स्पृष्टा दक्षिणपाणिना प्राणप्रतिष्ठां कुर्वीत तस्य देवस्य वाहरेः अन्येषामपि देवानां प्रतिमासु च पार्थिव प्राण
प्रतिष्ठा कर्तव्या तस्यां देवत्वसिद्धये वासुदेवस्य वीजेन तद्विष्णोरित्यनेन च तथैव हृदये गुष्ठं दत्वा धारयेच्च मंत्रवित्
एभिर्मन्त्रैः प्रतिष्ठां तु हृदयेपि समाचरेत् अस्यै प्राणाः प्रतिष्ठंतु अस्यै प्राणाः क्षरंतु च अस्यै देवत्वमर्चायै मा म
हेति च कश्चन हयशीर्षपंचरात्रे अर्चकस्य तपोयोगादर्चनस्यातिशायनात् आभिरूप्याच्च बिंबानां देवः सांनि
ध्यमृच्छति प्रयोगपारिजाते व्यासः प्रतिमापटयंत्राणां नित्यस्नानं न कारयेत् कारयेत्पर्वदिवसे यदा वा मल
धारणम् लिंगविशेषास्तिथितत्वे भविष्ये मृन्मयं गोशकृत्पिष्टं ताम्रकांस्यमयं तथा कृत्वा लिंगं सकृत्पूज्य वसे
त्कल्पायुतं दिवि वार्क्षं वित्तप्रदं लिंगं स्फाटिकं सर्वकामदम् कृत्वा पूजयाविप्रेंद्र लभ्यस्य सेवांछितं फलम् तत्रैव
कालकौमुद्यां स्कांदे अक्षादल्पपरीमाणं नालिंगं कुत्रचिन्नरः कुर्वीतांगुष्ठतोऽस्लंन कदाचित्समाचरेत् अ-
क्षोऽशीतिर्गुंजा गुंजाः पंचाद्यमाषकः ते षोडशाक्षः कर्षोऽस्त्रीत्यमरकोशात् प्रयोगपारिजाते क्रियासारे तथा
द्दसमांगुलिकं लिंगं श्रेष्ठमिहोच्यते षट्पंचकं चतुर्मानं मध्यमं त्रिविधं स्मृतम् त्रिद्व्येकांगुलमानं यत्त्रिविधं तत्कनी-
यसम् एवं नवविधं प्रोक्तं चरलिंगं यथाक्रमम् अथ पंचसूत्रीनिर्णयः गौतमीतंत्रे लिंगमस्तकविस्तारो लिं
गोच्छ्रायसमो मतः परिधिस्तत्त्रिगुणितस्तद्वत्पीठं व्यवस्थितम् प्रणालिका तथैवास्यास्तं च सूत्रविनिर्णयः अत्रे
तल्लिंगमस्तकविस्तारं लिंगोच्चता समं कृत्वा तत्त्रिगुणसूत्रवेष्टनार्हलिंगस्थौल्यं कृत्वा तत्समं वृत्तं चतुरस्रं वा पीठ

विस्तारमधश्चोर्ध्वेनकुर्यात् पीठोच्चतातुलिंगोच्चतातोद्विगुणापीठमध्येलिंगाद्विगुणस्थूलंपीठोत्रनालतृतीयांशेन-
कंठंकृत्वातस्योर्ध्वेअधश्वसमवप्रद्वयंत्रयंवाकृत्वालिंगविस्तारषष्ठांशेनपीठेपरिबाह्यमेखलांकृत्वातदंतःसंलग्नं
तत्समखातंकृत्वा पीठाद्बहिर्लिंगसमदीर्घापीठार्धदीर्घावामूलेदैर्घ्यसमविस्तारांस्तृतीयांशेनमध्येखातांपीठव
त्समेखलांमनालिकांकुर्यादिति अत्रमूलंसिद्धान्तशेखरेशैवागमेचज्ञेयम् लिखितत्वेत्राह्ये सर्वत्रैवमशस्तोक्तः
शिवसूर्यार्चनेविना तत्रैववाराहपाद्मयोः गृहेलिंगद्वयंनार्च्यंशालग्रामद्वयंतथा द्वेचक्रेद्वारकायास्तुनार्च्ये-
सूर्यद्वयंतथा शक्तित्रयंतथानार्च्यंगणेशत्रयमेवच द्वौशंखौनार्चयेत्त्रैवभग्नांचप्रतिमांतथा नार्चयेच्चतथाम-
त्स्यकूर्मादिदशकंतथा गृहेग्निदग्धाभग्नाश्चनार्च्याःपूज्यावसुंधरे एतासांपूजनान्नित्यमुद्वेगंप्राप्नुयाद्गृही शा
लग्रामाःसमापूज्याःसमेषुद्वितयंनहि विषमानैवपूज्यास्तुविषमेष्वेकएवहि शालग्रामशिलाभग्नापूजनी-
यासचक्रका खंडितास्फुटितावापिशालग्रामशिलाशुभा वाराहे दद्यात्कायद्योदेविशालग्रामशिलांनरः
सुवर्णसहितांदिव्यांपृथ्वीदानफलंलभेत् तत्रैव यःपुनःपूजयेद्भक्त्याशालग्रामशिलाशतम् तत्फलंनैवशक्तोहं
वक्तुंवर्षशतैरपि विष्णुपुराणे ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चपृथिवीपते स्वधर्मतत्परोविष्णुमाराधयतिना
न्यथा अविभक्तानामपृथक्देवपूजामाहप्रयोगपारिजातेआश्वलायनः पृथगप्येकपाकानांब्रह्मयज्ञोद्विजा
तिनाम् अग्निहोत्रंसुरार्चांचसंध्यानित्यंभवेत्पृथक् तत्रैवविष्णुधर्मे शालग्रामशिलांवापिचक्रांकितशिलांत-
था ब्राह्मणःपूजयेन्नित्यंक्षत्रियादिर्नपूजयेत् इदंस्पर्शसहितपूजाविषयम् शूद्रोवाप्युपनीतोवास्त्रियो

गार्ग्य. गोपिका केशवंनाशिवंवापिस्पृष्ट्वानरकमश्नुते ब्राह्मण्यपिहरिंविष्णुंनस्पृशेच्छ्रेयइच्छती सनाथामृतनाथा
नातस्थानात्स्त्रीहानिकृतिः स्त्रीणामनुपनीतानांशूद्राणांचजनेश्वर स्पर्शनेनाधिकारोस्तिविष्णोर्वाशंकरस्यचेति
स्कांदात् स्पर्शरहितात्तुतयोर्भवत्येव शालग्रामंनस्पृशेत्तुहीनवर्णोवसुंधरे स्त्रीशूद्रकरसंस्पर्शोवज्रस्पर्शाधि
कोमतः गोहाधःसंस्पृशेच्छूद्रोयोपिह्यापिकदाचन सपतेन्नरकेघोरेयावदाभूतसंप्लवम् यदिभक्तिर्भवेत्तस्यस्त्री
णांवापिवसुंधरे दूरादेवास्पृशन्पूजांकारयेत्सुसमाहितइतिवाराहोक्तेः शालग्रामशिलामात्रेनिर्बंधोनप्रतिमा
दौ सर्ववर्णैस्तुसंपूज्याःप्रतिमाःसर्वदेवताः लिंगान्यपितुपूज्यानिमणिभिःकल्पितानिचेति तत्रैवोक्तेः चत्वा
रोब्राह्मणैःपूज्यास्त्रयोराजन्यजातिभिः वैश्येर्द्वावेवसंपूज्यौतथैकःशूद्रजातिभिरितिस्कांदात् अन्येतु दीक्षित
विषयत्वेनव्यवस्थामाहुः विष्णुधर्मे तयोरसंभवेर्चावैसाचेहनवधास्मृता रत्नजाहेमजाचैवराजतीताम्रजात
था रैतिस्यचीतथालोहीशैलजाद्रुमजातथा अधमाधमाचविज्ञेयामृन्मयाप्रतिमाचया एषांफलानितत्रैव
ज्ञेयानि नार्चागृहेश्मजामूर्तिश्चतुरंगुलतोधिका नवितस्त्यधिकाधातुसंभवाश्रेयइच्छता एवंलक्षणसंपन्नापारंपा
र्यकागता उत्तमासातुविज्ञेयागुरुदत्तापितत्समा तत्रैवपाद्मे शालग्रामंप्रवक्ष्यामितत्राप्यामलकीतुल्यापू
ज्यासूक्ष्मांचयाभवेत् यथायथाशिलासूक्ष्मातथास्यात्तुमहत्फलम् तथा यवमात्रंतुगर्तःस्याद्यवार्द्धलिंगसु
च्यते शिवनाभिरितिख्यातस्त्रिषुलोकेषुदुर्लभः तत्रैव शालग्राममयीमुद्रासंस्थितायत्रकुत्रचित् वाराण
स्यायवाधिकंस्थंसागतायोजनत्रयम् योमृतस्तत्समीपेतुमृतोवानीयतेंतिकम् सर्वोमोक्षमवाप्नोतिसत्यंसत्यं

नचान्यथा तत्रैव चक्रांकमिथुनंपूज्यंनैकंचक्रांकमर्चयेत् चक्रांकमिथुनात्सार्द्धंशालग्रामंप्रपूजयेत् तत्रैववा
राहे म्लेच्छदेशेशुचौवापिचक्रांकोयत्रतिष्ठति योजनानांतथात्रीणिममक्षेत्रंवसुंधरे तत्रैवशालग्रामंमक्रस्य
क्रयक्रीतापरिज्ञेयामध्यमायाचिताधमा प्रयोगपारिजातेवाराहे एवंलक्षणसंपन्नापारंपर्यक्रमागता उत्तमा
सातुविज्ञेयागुरुदत्तापिसत्तमा अथपार्थिवपूजा नंदीपुराणे आयुष्मान्बलवान्श्रीमान्पुत्रवान्धन
वान्सुखी वरमिष्टंलभेल्लिंगंपार्थिवंयःसमर्चयेत् तस्मात्तुपार्थिवंलिंगंज्ञेयंसर्वार्थसाधकम् तत्रैव गोमूत्रहिर
ण्यवस्त्रादिबलिपुष्पनिवेदने ज्ञेयोनमःशिवायेतिमंत्रःसर्वार्थसाधकः सर्वमंत्राधिकश्चायमोंकाराद्यःषडक्षरः
भविष्ये मूर्तयोष्टौशिवस्यैतापूर्वादिक्रमयोगतः आग्नेय्यंताःप्रपूज्यास्तुवेद्यांलिंगेशिवंयजेत् अत्रनप्राची
मग्रतः शंभोरितिरुद्रयामलोक्तनिषेधात्नांतरालंप्राचीकिंतुप्रसिद्धैव तिथितत्वेदेवीपुराणे मृदाहरणसंघट्ट
प्रतिष्ठाह्वानमेवच स्नपनंपूजनंचैवविसर्जनमतःपरम् हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक् शिवःप
शुपतिश्चैवमहादेवइतिक्रमः स्कांदे शुष्काण्यपिचपत्राणिश्रीवृक्षस्यनिवेदयेत् तत्रैवभविष्ये धत्तूरकैश्च
योलिंगंसकृत्पूजयतेनरः सगोलक्षफलंप्राप्यशिवलोकेमहीयते योगिनीतंत्रे शिवागारेमल्लकंचसूर्यागा
रेचशंखकम् दुर्गागारेवंशवाद्यंमधुरींनचवादयेत् श्राद्धेहेमाद्रौस्कांदे स्पृष्ट्वारुद्रस्यनिर्माल्यंसवासाआप्लुतः
शुचिः प्रयोगपारिजातेक्रियासारे मध्यमानामिकामध्येपुष्पंसंगृह्यपूजयेत् अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्य
मपनोदयेत् अपनीतंचनिर्माल्यंचंडेशायनिवेदयेत् अशून्यमस्तकंलिंगंसदाकुर्वीतपूजकः शूलपाणौलिंगे

वरंप्राणपरित्यागःशिरसोवापिकर्त्तनम् नत्वेवाप्यपूज्यभुंजीतशिवलिंगेमहेश्वरम् सूतकेमृतकेचैवनत्याज्यंशिव
पूजनम् तिथिनत्तेलैंगे विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः त
स्मान्मृदापिकर्त्तव्यंललाटेवैत्रिपुंड्रकम् रुद्राक्षधारणेविशेषः शिवरहस्ये एकवक्त्रःशिवःसाक्षात्ब्रह्महत्यांव्यपो
हति अवंध्यत्वंप्रतिस्रोतोवह्निस्तंभंकरोतिच द्विवक्त्रोहरगौरीस्याद्गोवधाद्यघनाशकृत् त्रिवक्त्रोह्यग्निजन्माथ
पापराशिंचप्रणाशयेत् चतुर्वक्त्रःस्वयंब्रह्मानरहत्यांव्यपोहति पंचवक्त्रस्तुकालाग्निरगम्याभक्ष्यपापनुत् ष
ड्वक्त्रस्तुगुहोज्ञेयोभ्रूणहत्यादिनाशयेत् सप्तवक्त्रस्त्वनंतःस्यात्स्वर्णस्तेयादिपापहृत् विनायकोष्टवक्त्रःस्यात्स
र्वानृतविनाशकृत् भैरवोनववक्त्रस्तुशिवसायुज्यकारकः दशवक्त्रःस्मृतोविष्णुर्भूतप्रेतभयापहः एकाद
शमुखोरुद्रोनानायज्ञफलप्रदः द्वादशास्यस्तथादित्यःसर्वरोगनिबर्हणः त्रयोदशमुखःकामःसर्वकामफल
प्रदः चतुर्दशास्यःश्रीकंठोवंशोद्धारकरःपरइति तथा विनामंत्रेणयोधत्तेरुद्राक्षंभुविमानवः सयातिनरका
न्घोरान्यावदिंद्राश्चतुर्दश पंचामृतंपंचगव्यंस्नानकालेप्रयोजयेत् रुद्राक्षस्यप्रतिष्ठायांमंत्रंपंचाक्षरंतथा त्रि
यंबकादिमंत्रंचतथातत्रप्रयोजयेत् यद्वा ओंअघोर ओंह्रेंअघोरतर ॐह्रींह्रांनमस्तेरुद्ररूपह्रेंस्वाहा·
अनेनाभिमंत्र्यधारयेत् तथा अष्टोत्तरशतंकार्याचतुःपंचाशदेववा सप्तविंशतिमानावाततोहीनाधमास्मृ
ता प्रजापतिः मोक्षार्थीपंचविंशत्याधनार्थीत्रिंशताजपेत् पुष्ट्यर्थीपंचविंशत्यापंचदश्याभिचारके सप्तविं·
शतिरुद्राक्षमालयादेहसंस्थया यत्करोतिनरःपुण्यंसर्वंकोटिगुणंभवेत् योददातिद्विजेभ्यश्चरुद्राक्षंभुविसम्मुखं

तस्यप्रीतोभवेरुद्रःस्वपदंचप्रयच्छतीति पदार्थादर्शे बोपदेवः रुद्राक्षान्कंठदेशेदशनपरिमितान्मस्तकेविंशतिं
द्वेषट्‌पट्कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव बाह्वोरिंदोःकलाभिर्नयनयुगकृतेएकमेकंशिखायांवक्षस्यष्टा
धिकंयःकलयतिशतकंसःस्वयंनीलकंठः तत्रैवहेमाद्रौशिवधर्मे स्नानंपलशतंज्ञेयमभ्यंगःपंचविंशतिः पला
नांद्विसहस्रेतुमहास्नानंप्रकीर्तितम् पंचविंशत्पलंलिंगेअभ्यंगंकारयेदथ शिवस्यसर्पिषास्नानंप्रोक्तंफलशते
न च तावतामधुनाचैवदध्नाचैवततःपुनः तावतैवचक्षीरेणगव्येनैवभवेत्ततः भूयःसार्द्धसहस्रेण पलानामि
क्षवेणच रसेनकारयेत्स्नानंभक्त्याचोष्णांबुनाततः विष्णवादौतुस्कांदे क्षीराद्दशगुणंदध्नाघृतेनैवदशोत्तर
म् घृताद्दशगुणंक्षौद्रंक्षौद्राच्चैक्षवजंतथा ब्राह्मे देवानांप्रतिमायत्रघृताभ्यंगस्समाभवेत् पलानितत्रदेयानि
श्रद्धयापंचविंशतिः इदंकौडीकृताभिप्रायेण तत्रैवसंग्रहे विष्वक्सेनायदातव्यंनैवेद्यस्यशतांशकम्
पादोदकंप्रसादंचलिंगेचंडेश्वरायतु पंचायतनसन्निवेशमाहबोपदेवः पदार्थादर्शेच शंभोर्मध्यगतेहरीन
हरभूदेव्योहरेशंकरेभास्येनागसुतारवौहरगणेशाजांबिकाःस्थापिताः देव्यांविष्णुहरेभवक्षरवयोलंबोदरे
जेश्वरेनांबाःशंकरभागतोतिसुखदाव्यस्तास्तुहानिप्रदाः शंकरभागतः ईशानकोणादारभ्यप्रदक्षिणमित्य
र्थः अत्रादित्यस्वरूपमुक्तंप्रयोगपारिजातेमंत्रशास्त्रे देवस्यमुखमारभ्यादिशंप्राचींप्रकल्पयेत् तदादिपरिवा
राणामंगाद्यावरणस्थितिः तत्रक्रमः पाद्मे रविर्विनायकश्चंडीईशोविष्णुस्तुपंचमः अनुक्रमेणपूज्यंतेव्यु
त्क्रमेतुमहद्भयम् तथा पूज्यपूजकयोर्मध्येप्राचीप्रोक्ताविचक्षणैः अथकेशवादिमूर्तयः बोपदेवः

केविगोवादायुकुपेंभ्रजाद्युक्रममात्रिना वाधोनृहसानिश्रीपशाद्यगोविगपेचपे अत्रकेविदित्याद्यैः केशवविष्णवा
दिचतुर्विंशतिमूर्तयोभिधीयंते शात् शंखात् चगेचक्रगदेज्ञेयेइत्यर्थः शिष्टेष्वजेपद्मंत्वर्थतः सिद्धं अत्रदक्षिणाधः
करक्रमेणज्ञेयम् दक्षिणोधःकरक्रमादितिहेमाद्रिवचनात् तेनहेमाद्रिणासंवादः विशब्देनविपरीतंगचेइ
त्यर्थः अत्रापिशादित्यनुवृत्तिः शंखाद्गदाचक्रेइत्यर्थः गपेइत्यत्रापिशादित्यनुवर्तते शंखाद्गदापद्मेइत्यर्थः
विपरीतेपद्मगदेइत्यत्रापिशंखाज्ज्ञेये चपेचक्रपद्मे शंखाच्चक्रपद्मेइत्यर्थः विइत्यत्रापि पद्मचक्रेइत्यर्थः ते
नचगेइत्यष्टौमूर्तयः गपेइत्यष्टौमूर्तयः चपेइत्यत्रच अत्रमूलंहेमाद्रौज्ञेयम् अथबौधायनसूत्रोक्तविक्रमोचा
नुस्मृत्यलिंगार्चाप्रतिष्ठोच्यते यजमानः पूर्वोक्तकालेपूर्वेद्युः दशद्वादशषोडशान्यतरहस्तंमंडपंकृत्वाग्नेयेहस्त
मात्रंचतुरस्रंकुंडंस्थंडिलंवापूर्वतोहस्तमात्रावेदीनैर्ऋतेवास्तुमंडलंमध्येवेदींतदुपरिसर्वतोभद्रंकृत्वाप्राणाना
यम्यास्यांमूर्तौदेवस्यसान्निध्यसिध्यर्थंदीर्घायुर्लक्ष्मीसर्वकामसमृध्यक्षय्यस्वर्गकामोमुकमूर्तिप्रतिष्ठांकरि
ष्यइतिसंकल्प्य गणेशपूजनपुण्याहवाचनमातृकापूजनांदीश्राद्धानिकृत्वाचार्यंचतुरोऋत्विजश्चवृत्वावस्त्रा
द्यैःपूजयेत् अथाचार्यः यदत्रसंस्थितमितिसर्षपान्विकीर्यापोहिष्ठेतिकुशोदकेनभूमिंप्रोक्ष्य देवा आयां
तु यातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वेति भूमौप्रादेशंकृत्वासमंत्रकंतनुलापद्धतिमार्गेणमंडपप्रतिष्ठां
कृत्वाऽकृत्वावापूर्वरात्रौहिरण्योपधानंदेवंपंचगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णैरापोहिष्ठेतितिसृभिर्हिर
ण्यवर्णाइतिचतसृभिःपवमानःसुवर्जनइत्यनुवाकेनाभिषिच्यव्याहृतिभिरिदंविष्णुरितिफलयवदूर्वाःसमर्प्य

रक्षोहणमितिहस्तेकंकणंबध्वावाससाछाद्यअचनेहेडउदुत्तममितिजलेधिवासयेत् इदंबौधायनोक्तम् ततश्च
ललिंगेर्चायांअत्राग्निंप्रतिष्ठाप्यगोक्षीरेनीवारचरुंकृत्वाविष्णुश्वेत्कसरमपिश्रपयित्वाज्यभागांतेपलाशोदुंबराश्व
त्थशम्यपामार्गसमिद्भिः आज्येनचरुणातिलैर्वाप्रत्येकमष्टाविंशतिमष्टौवाहुतीर्लोकपालमूर्तिमूर्तिपतिभ्योहु
त्वास्थाप्यदेवमंत्रेणपूर्वोक्तसमित्तिलनैवारचर्वाज्यैरष्टसहस्रमष्टशतमष्टाविंशतिंवाहुत्वाअग्निर्यजुर्भिरित्य
नुवाकेनदशाहुतीर्जुहुयात् प्रतिद्रव्यंहोमांतेदेवंपादनाभिशिरःसुस्पृशेत् आज्यहोमेचोत्तरतःसजलकुं
भेसंपातान्नयेत् तेषांमंत्राः इंद्रायेंदोइतींद्रस्य स्योनेतिपृथिवीमूर्तेः अघोरेभ्यइतितत्पतेःसर्वस्य अ
ग्नआयाहीत्यग्नेः अग्निंदूतमित्यग्निमूर्तेः नमःशर्वायचपशुपतयेचेतिपशुपतेः यमायसोमंयमस्य अ
सिहवीरितियजमानमूर्तेः स्फोहिष्ठतंतत्पतेःउग्रस्य असुन्वंतमितिनिर्ऋतेः आकृष्णेनसूर्यमूर्तेः योरुद्रोअ
ग्नौइतितत्पतेरुद्रस्य इमंमेवरुणस्य शंनोदेवीजलमूर्तेः नमोभवायेतिभवस्य आनोनियुद्भिरितिवायोः
वातआवातुवायुमूर्तेः तमीशानंतत्पतेरीशानस्य आप्यायस्वेतिकुबेरस्य वयंसोमेतिसोममूर्तेः तत्पुरु
षायमहादेवस्य अभित्वाईशानस्य आदित्प्रत्नस्येत्याकाशस्य नमउग्रायचेतितत्पतेर्भीमस्य ततोदेव
स्यपादौस्पृशेत् एवंद्वितीयेहुत्वानाभिंतृतीयेमध्यंचतुर्थेउरःपंचमेशिरःस्पृष्ट्वाप्रतिपर्यायंसंपातजलेन
देवंअभिषिंचेत् ततःस्विष्टकृदादिहोमशेषंसमाप्यार्चांशोधयेत् स्थिरलिंगार्चादौतुनेदानीमग्निस्थापन
होमादिकार्यम् ततोदेवंनत्वा स्वागतंदेवदेवेशविश्वरूपनमोस्तुते शुद्धेपित्वदधिष्ठानेशुद्धिंकुर्मःसह-

स्नतामिति संमार्ज्य उत्तिष्ठब्रह्मणस्पतेइति सकृत्लिंगमुत्थाप्य पूर्वमर्कतेश्मुत्तारणेअधुनावाकार्यम् अग्निःसप्ति
मितिसूक्तमग्निपदहीनंपठित्वातत्साहितंपुनःपठेत् एवमष्टसहस्रमष्टशतमष्टाविंशतिंवापठन्जलंपात
येत् ततोर्चांद्वादशवारंमृदाजलेनचप्रक्षाल्यमंत्रवर्तंपंचगव्यंकृत्वापयः पृथिव्यामावोराजानमितिचसंस्नाप्य

आप्यायस्वदधिक्राव्णस्तेजोसिमधुवाताआयंगौरितिपंचामृतैःसंस्नाप्यलिंगंचेत् नमस्तेरुद्रमन्यवइत्ये
काभिःसंस्नाप्यघृतेनाभ्यज्योद्वर्तनेनोद्वर्त्योष्णोदकेनप्रक्षाल्यगंधंदत्वासंपातोदकेनाभिषिच्यसपल्लवैःचतुर्भिः
कुंभैरापोहिष्ठेतितिसृभिराकलशेषुधितिचप्रत्येकंसमुद्रज्येष्ठाइतिचतुर्भिराकलशेषुधितिचमीलितैःसंस्नाप्योदुंब
रादिपादैर्चासुपदेष्वपरितोष्टदिक्षुसजलकुंभान्संस्थाप्यतेषुगंधपुष्पदूर्वाःक्षिप्त्वाद्येसप्तमृदः द्वितीयेप्लक्ष
पर्णशमीविकंकताश्मंतकत्वचःपल्लवांश्च तृतीयादिषुसप्तधान्यंपंचरत्नफलपुष्पाणिकुशदूर्वागोरोचनसं
पातोदकगंधफलसर्वौषधीः क्षिप्त्वा क्रमेणापोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचतुर्भिः पवमानानुवाकेन
भिषिच्येककुंभेशमीपलाशवटखदिरविल्वाश्वत्थविकंकतपनसाम्रशिरीषोदुंबराणांपल्लवान्कषायांश्च
क्षिप्त्वाअश्वत्थेवेतिअभिषिच्यपंचरत्नोदकेनहिरण्यवर्णाइतिसंस्नाप्यवाससीदत्वाउपवीतादिदीपांतंकृत्वा

हिरण्यगर्भः यआत्मदा यःप्राणतः यस्येमे येनद्यौः यंक्रंदसी आपोहयत् यश्चिदापो इत्यष्टोपिष्टदी
पान्दत्वासुवर्णशलाकयातैजसपात्रस्थंमधुघृतंचगृहीत्वाचित्रंदेवानांतेजोसीतिमंत्राभ्यां ॐनमोभगव
तेत्र्यंबकायशिवायहरयेनमः हिरण्यरेतसेविष्णोविश्वरूपायतेनमइतिचदक्षिणसव्येदेवनेत्रेमंत्राभ्यांलिखेत्

अंजनित्वेत्यंजनेनमधुनाघाज्यादेवस्यत्वेति मध्वाज्यशर्कराभिरज्ञातेनैवांजनेनपुनेरंजयेत् अत्रानज्मीतिशेषः
स्थिरलिंगेतुस्वर्णसूच्यागंधेन ॐनमोभगवतेरुद्रायहिरण्यरेतसेपरायपरमात्मनेविश्वरूपायोमाप्रियायनम
इत्यक्ष्यंजनादिनांजयेत् ततःआदर्शभक्ष्यादिदर्शयेत् ततःकर्ताआचार्यायगामृत्विग्भ्यश्चदक्षिणांदद्यात्
अथाचार्यःप्रसूनगादौप्रणवंवदन् पुरुषसूक्तेनस्कलावंशपात्रेपंचवर्णौदनेनदेवस्यनीराजनंकारयित्वारुद्रा
यचतुष्पथादौदद्यात् मंत्रस्तु ॐनमोरुद्रायसर्वभूताधिपतयेदीप्तशूलधरायोमादयितायविश्वाधिपत
येरुद्रायवैनमोनमः शिवमगर्हितंकर्मास्तुस्वाहेति अश्वत्थपर्णेभूतेभ्योनमइति केचिदेतद्रात्रौस्थिरप्र
तिष्ठायामिच्छंति अथाचार्यःसर्वतोभद्रेदेवानावाहयेत् मध्येब्रह्माणम् पूर्वादिदिक्षुइंद्रादिलोकपाला
न् ईशानेंद्राद्यंतरालेषुवसून्रुद्रान्आदित्यान्अश्विनौविश्वान्देवान्पितॄन्नागान् स्कंदवृषौ अग्नीशानाद्यं
तरालेषुदक्षविष्णुदुर्गास्वधाकारमृत्युरोगान्समुद्रान्सरितःमरुतः गणाधिपंचेतिमध्येएवपृथिवींमेरुंसं
स्थाप्यदेवंचावाह्य प्रागादिवज्रशक्तिदंडखड्गपाशअंकुशगदाशूलं लक्ष्यात्येगौतमंभरद्वाजंविश्वामित्रंकश्य
पंजमदग्निंवसिष्ठंअत्रिमरुंधतींच तद्बाह्येनवग्रहान् तद्बाह्येऐंद्रींकौमारींब्राह्मींवाराहींचामुंडांवैष्णवींमाहे
श्वरींवैनायकीमिति एतानामभिरावाह्यसंपूज्याचार्योदेवंतन्मंत्रेणावाह्य मंडलमध्येचौसमप्रतिष्ठोभवेति
निवेश्यसंपूज्यवह्नौमंडलदेवतानांनामभिस्तिलाज्येनदशदशाहुतीर्हुत्वाशय्यायांदेवमारोप्य पुरुषसू
क्तेनरनारायणाभ्यांस्तुत्वादेवेन्यासंकुर्यात् यथा पुरुषात्मनेनमः प्राणात्मनेनमः प्रकृतितत्त्वायनमः

बुद्धितत्त्वायनमः अहंकारतत्त्वायनमः मनस्तत्त्वायनमः इतिसर्वांगे प्रकृतित० बुद्धि० हृदि शब्दत० शिर
सि स्पर्शतत्त्वाय० त्वचि रूपतत्त्वाय० हृदि एवंरसगंधश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थपृथ्वी
अप्तेजोवाय्वाकाशसत्त्वरजस्तमोदेहतत्त्वानिविन्यसेत् ततःपुरुषसूक्तस्याद्यमृग्द्वयंकरयोः तदुत्तरंजान्वोः
तदुत्तरंकट्योः तंयज्ञमितित्रिस्त्रःनाभिहृत्कंठेषु तस्मादश्वेतिद्वयंबाह्वोः ब्राह्मणोस्येतिद्वयंनासयोः नाभ्येति
द्वयमक्ष्णोः अंत्यांशिरसि केचित्तत्त्वन्यासमन्यथामाहुः पुरुषप्रकृतिमहदहंकारतत्त्वानि शब्दस्पर्शरूपर
सगंधतन्मात्राणि आकाशवायुतेजोपृथिवीश्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादपायूपस्थमनस्तत्त्वानी
ति केचिदेतानिस्थिरलिंगादावेवेच्छंति ततःस्वशायीभवेति शय्यायांदेवंस्थापयित्वामंडलशय्ययोरंतराले
नगंतव्यमितिमैयंदत्त्वामंडलदेवताभ्योनामभिः पायसेनचरुणावाबलीन्दद्यात् नीवारचरुशेषेणादिग्बलिस्त
त्रेदंस्थिरप्रतिष्ठायाम् स्थिरलिंगार्चादौतुयोविशेषः अग्निस्थापनहोमवर्जंसर्वंपूर्ववत्कृत्वा इदानीं
मग्निस्थापनंकृत्वापूर्वोक्तहोमंकुर्यात् नात्रनैवारश्चरुः विष्णुश्चेत्पूर्वोक्तहोमंकृत्वापुरुषसूक्तेनप्रत्यृचमा
ज्यंहुत्वेदंविष्णुरितिपादौस्पृष्ट्वापुनस्ताएवहुत्वाविष्णोर्नुकमितिनाभिंस्पृष्ट्वापुनस्ताएवहुत्वातोदेवेतिशि
रःस्पृष्ट्वापुनस्ताएवहुत्वापुरुषसूक्तेनसर्वांगंस्पृशेत् स्थिरलिंगंचेदग्निस्थापनादिपूर्वोक्तसमिदाज्यतिलाहुतीर्हु
त्वामातइषुरित्यनुवाकांतंद्रापेसहस्राणीत्यनुवाकाभ्यांचप्रत्यृचमाज्यंहुत्वासर्वोवैरुद्रइतिमूलंस्पृशेत् पुनस्ता
एवहुत्वाकद्रुद्रायेतिमध्यं पुनस्ताएवहुत्वा नमोहिरण्यबाहवइत्यग्रम् पुनस्ताएवहुत्वासर्वरुद्रेणसर्वांगंस्पृशे

त् ततोधामंतइति पूर्णाहुतिंजुहुयान्नवा एवमधिवासनंकृत्वापरेद्युः सद्योवापीठिकांस्थापयित्वामहीमूर्धिस्था
नात्वारितिघोरितिस्कत्वाक्रीनमइति संपूज्यतेनैव पूर्णाहुतिंहुत्वोत्तिष्ठब्रह्मणस्पतइतिदेवमुत्थाप्यपुष्पांजलिंद
त्वापुरुषसूक्तेनस्कत्वोदुत्यमिस्कत्थाप्यकनिक्रदादितिसूक्तेनविष्णुंसद्योजातमितिपंचानुवाकैर्लिंगंगृहंप्रवे
श्यपीठिकायांइंद्रादिनामभिरष्टरत्नानिक्षिप्त्वासमथान्यरूप्यहेमनःशिलाःक्षिप्त्वापायसेनसंलिप्यप्र
णवेनांगन्यासंकृत्वास्वर्णशलाकामंतरितांकृत्वा ओंस्थलग्नेप्रतितिष्ठपरमेश्वरेत्युक्त्वातोदेवेतिविष्णुं
रुद्रेणचलिंगंस्थापयेत् ततःप्राणप्रतिष्ठा चलार्चादौत्वधिवासनांतेपरेद्युरुत्तिष्ठब्रह्मणस्पतइतिदेवमु
त्थाप्यपुरुषसूक्तोत्तरनारायणाभ्यांस्कत्वाघृतव्रीहिचरुंकृत्वातद्देवतामंत्रेणदशाहुतीर्हुत्वानामभिर्जुहु
यात् अग्नयेस्वाहा सोमाय० धन्वंतरये० कुह्वै० अनुमत्यै० प्रजापतये० परमेष्ठिने० ब्रह्मणे० अग्नये०
सोमाय० अग्नयेन्नादाय० अग्नयेन्नपतये० प्रजापतये० विश्वेभ्योदेवेभ्यः० सर्वेभ्योदेवेभ्यः० भूर्भुवः स्वः
अग्नयेस्विष्टकृतेइति ततःसमस्तेपुनस्त्वेत्याभ्यांपूर्णाहुतिः ततःआचार्योयाओषधीरितिसर्वौषधीःस
मर्प्यसंपातोदकंदेवमंत्रेणशतवारमभिमंत्र्यतेनैवाभिषिंचेत् ततःउत्तिष्ठेतिदेवमुत्थाप्यविश्वतश्चक्षुरि
त्युपस्थायदेवंध्यात्वाजपेत् ब्रह्मणेनमः एवंविष्णवे रुद्राय० इंद्रादिनष्टोवसुभ्योरुद्रेभ्यआदित्येभ्योऽ
श्विभ्यांमरुद्भ्यः कुबेरायगंगादिमहानदीभ्योग्नीषोमाभ्यामिंद्राग्निभ्यांद्यावापृथिवीभ्यांधन्वंतरयेसर्वेशायवि
श्वेभ्योदेवेभ्योब्रह्मणेनमइति ततःसंपातोदकेनयजमानमभिषिच्यदेवंध्यात्वाप्रतितिष्ठपरमेश्वरेतिपुष्पांज

र्त्तिंनिवेपसच्चिदानंदंग्रदैवभक्तानुग्रहायगृहीतविग्रहंकरच्चरणाद्यवयविनंशंखचक्राद्यायुधवंतंनिजवाहनायु
धैतंनिजहृत्कमलेवस्थितंसर्वलोकसाक्षिणमणीयांसंपरमेष्ठ्यासिपरमांश्रियंगमयेतिमंत्रेणपुष्पांजलावागतं
विभाव्यार्चायांविन्यस्यप्राणप्रतिष्ठांकुर्यात् यथा प्राणप्रतिष्ठामंत्रस्यब्रह्माविष्णुरुद्राऋषयः ऋग्यजुःसामानि
छंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजम् क्रोंशक्तिः प्राणप्रतिष्ठायांविनियोगः ततोऋष्यादीन्क्र
मेणशिरोमुखहृदयगुह्यपादेषुविन्यस्य ओंकंखंगंघंङंअं पृथिव्यप्तेजोवाय्वाकाशात्मने आंहृदयायनमः ओं
चंछंजंझंञंइं शब्दस्पर्शरूपरसगंधात्मने ईंशिरसेस्वाहा ओंटंठंडंढंणंउंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायै
वषट् ओंतंथंदंधंनंएंवाक्पाणिपादपायूपस्थात्मनेऐंकवचायहुम् ओंपंफंबंभंमंओंवचनादानविहरणोत्स-
र्गानंदात्मनेऔंनेत्रत्रयायवौषट् ओंयंरंलंवंशंषंसंहंळंक्षंअंमनोबुद्ध्यहंकारचित्तात्मनेअः अस्त्रायफट् एवं
आत्मनिदेवेनकृत्वादेवंस्पृष्ट्वाजपेत् ओंआंह्रींक्रोंयंरंलंवंशंषंसंहंसः देवस्यप्राणाइहप्राणाः ओंआं० हंसः देव
स्यजीवइहस्थितः ओंआं० हंसःदेवस्यसर्वेंद्रियाणि ओंआंहंसः देवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्य
सुखंचिरंतिष्ठंतुस्वाहेति ततोर्चाहृदयंगुष्ठंदत्वाजपेत् अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच
अस्यैदेवत्वमर्चायैमामहेतिचकश्चनेति ततःप्रणवेनसंरुध्यसजीवंध्यात्वाभ्रुवाद्यौरितिऋचंजप्त्वाकर्णेगायत्रीं
देवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायपादनाभिशिरःसुस्पृष्ट्वाइहैवैधात्रिर्जपेत् ततःकर्ता स्वागतंदेवदेवे-
शायमद्भाग्यात्त्वमिहागतः प्राकृतंत्वमदृष्ट्वामांबालवत्परिपालय धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशुभायनः

सान्निध्यंतुसदादेवस्वार्चायांपरिकल्पय यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः तावत्त्वयात्रदेवेशस्थेयंभ-
क्तानुकंपया भगवन्देवदेवेशत्वंपितासर्वदेहिनाम् येनरूपेणभगवंस्त्वयाव्याप्तंचराचरम् तेनरूपेणदेवेश
स्वार्चायांसन्निधोभवेतिनमेत् एतदंतंसर्वदेवानांसमानम् देवमंत्रश्चमूलमंत्रोवैदिकोवाग्राह्यः अथाचार्यः
कर्तावालिंगमर्चांवा ओंभूःपुरुषमावाहयामि ओंभुवःपु० ओंस्वःपु० ॐभूर्भुवःस्वःपुरुषमावाहयामी
त्यावाह्य प्रणवेनासनंदत्वानेनैवदूर्वाश्यामाकविष्णुक्रांतापद्ममिश्रंपाद्यम् इमाआपःशिवतमाःपूताःपू
ततमामेध्यामेध्यतमाअमृताअमृतरसाःपाद्यास्ताञ्जुषतांप्रतिगृह्यतांप्रतिगृह्णातुभगवान्महाविष्णुर्वि
ष्णवेनमइतिपाद्यम् भगवान्महादेवोरुद्रायनमइतिलिंगे इमाआपआचमनीयास्ताञ्जुषतामित्याचम-
नीयम् अर्घ्याइत्यर्घ्यम् ततोवेदमंत्रैःसंस्नाप्येदंविष्णुरितिविष्णोर्नमोअस्तुनीलग्रीवायेतिलिंगेप्रतिसरं
विसृज्य इमेगंधाःशुभादिव्याःसर्वगंधैरलंकृताः पूताब्रह्मपवित्रेणपूताःसूर्यस्यरश्मिभिः पूताइत्यादिपू
इतिगंधम् इमेमाल्याःशुभादिव्याःसर्वमाल्यैरलंकृताः पूताइत्यादिमाल्यं इमेपुष्पाःशुभाइत्या
दिपुष्पम् वनस्पतिरसोधूपोगंधाढ्योधूपउत्तमः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम् प्रतिगृह्णा
त्वित्यादिधूपम् ज्योतिःशुक्रंचतेजश्चदेवानांसततंप्रियः प्रभाकरःसर्वभूतानांदीपोयंप्रतिगृह्यतामि
तिदीपंदत्वा विष्णोसंकर्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्दनोपेंद्रह
रिकृष्णेतिद्वादशनामभिः केशवादिद्वादशनामभिर्वा पुष्पाणिसमर्प्यतैरेवतर्पणंकृत्वापायसगुडोदन

त्रोदनानिपवित्रंतेविनतभितिनिवेद्यकृसरंपूर्वोक्तनामभिर्हुत्वातेनैवशार्ङ्गिणेश्रियैसरस्वत्यैविष्णवेइतिहु
त्वाविष्णोर्नुकं॰ तदस्यप्रि॰ प्रतद्विष्णु॰ परोमात्र॰ विचक्रमे॰ त्रिर्देव॰ इतिद्वादशनामभिश्चाज्याहुतीःस्वाहेति
जुहुयात् लिंगेतुदीपांतंकृत्वा भवाय॰ देवाय॰ शर्वाय॰ ईशानाय॰ पशुपतये॰ रुद्राय॰ उग्राय॰ भीमाय॰
महतेदेवायनमइतिपुष्पाणिदत्वातैरेवतर्पणंकृत्वापवित्रंतेइतिपायसंगुडोदनंचनिवेद्यपूर्वोक्तनामभिः
कृसरंहुत्वाभवस्यदेवस्यपत्न्यैस्वाहेत्याद्यष्टभिःगुडोदनंहुत्वाभवस्यदेवस्यसुतायस्वाहेत्याद्यैर्हरिद्रोदनंहु
त्वात्र्यंबकं॰ मानोमहांत॰ मानस्तोके॰ आरात्तेगोघ्न॰ विकिरिदविलोहि॰ सहस्राणिसहस्रशइतिद्वादशपंचै
र्हुत्वाशिवायशंकराय सहमानाय शितिकंठाय कपर्दिने ताम्राय अरुणाय अपगुरमाणाय हिरण्यबा
हवे सस्पिंजराय बभ्लुशाय हिरण्यायेतिचजुहुयात् ततःस्विष्टकृदादिहोमशेषंसमाप्यपूर्वोक्तसर्वहवि
र्भिर्विष्णवेलिंगायवाबलिंदद्यात् मंत्रस्तु त्वामेकमाद्यंपुरुषंपुरातनंनारायणंविश्वसृजंयजामहे त्वमे
वयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृण्हीष्वहव्यमिति लिंगेतुनारायणपदेरुद्रशिवमितिवदेत् ततो
यस्यपर्णोभूर्भुवःस्वरोमितिहुतशेषंनिधायप्रदक्षिणीकृत्यविश्वभुजेआत्मनेपरमात्मनेनमइतिनत्वाचा
र्यायशतंतदर्धंतदर्धंद्वादशतिस्रएकांवागांदत्वान्यत्विग्भ्योपिदक्षिणांदत्वाशतंद्वादशवाब्राह्मणान्भोजये
दितिसंक्षेपः मासादमात्रेनूतनेतुमात्स्योक्तजलाशयप्रतिष्ठाविधिमेवकुर्यात् गोरुत्तारणपात्रीप्रक्षेपादितु
नभवतिद्वाराभावात् वारुणहोमस्थानेवास्तुहोमः अन्यत्तद्वदेव इतिभट्टकमलाकरकृतेलिंगार्चाप्रति

ष्ठाविधिः अथपुनःप्रतिष्ठा तामधिकृत्यहयशीर्षपंचरात्रे चांडालमद्यसंस्पर्शाद्दूषितावह्निनाथ
वा अपुण्यजनसंस्पृष्टाविप्रक्षालनजदूषिता संस्कार्येतिशेषः पदार्थादर्शेब्राह्मे खंडितेस्फुटितेदग्धेभ्र
ष्टेमानविवर्जिते यागहीनेपशुस्पृष्टेपतितेदुष्टभूमिषु अन्यमंत्रार्चितेचैवपतितस्पर्शदूषिते दशस्वेतेषुनोच
क्रुःसन्निधानंदिवौकसः . यागःपूजा पशुर्गर्दभादिः पंचरात्रे खंडितास्फुटितादग्धायस्मादर्चाभयावहा त
स्मात्समुद्धरेत्तांतुपूर्वोक्तविधिनानरः अर्चाभंगादाउपवासःकार्यः नराज्ञोविप्लवेस्त्रीयात्स्वरार्चाविप्लवेनथे
तिविष्णुधर्मोक्तेः सिद्धांतशेखरे चौरचंडालपतितश्वोदक्यास्पर्शनेसति शिवाद्युपहतोचैवप्रतिष्ठांपुनरा
चरेत् पंचरात्रे अंगादंगादिसंधानेप्रतिष्ठांपुनराचरेत् जलाधिवासविहितनेत्रोन्मीलनवर्जिताम् शूद्रवि
वेकेविष्णुः द्रव्यवत्कृतशौचानांदेवतार्चानांभूयः प्रतिष्ठापनेनशुद्धिरिति अर्चाःप्रतिमाः तद्द्रव्यस्यता
म्रादेरुक्तशौचंकृत्वापुनःप्रतिष्ठांकुर्यादित्यर्थः स्मृत्यर्थसारेप्येवम् तद्विधिर्बौधायनसूत्रे पूर्वप्रतिष्ठितस्य
बुद्धिपूर्वमेकरात्रंद्विरात्रमेकमासंद्विमासं वार्चनादिविच्छेदे शूद्ररजस्वलाद्युपस्पर्शनेपूर्वोक्तेकालेपुण्याहंवाचयि॰
त्वायुग्मान्ब्राह्मणान्भोजयित्वानिशायांजलाधिवासंकृत्वाश्वोभूतेकलशपूर्णेनपंचगव्येनतत्तन्मंत्रैःस्नापयित्वा
ऽन्यंकलशंशुद्धोदकेनापूर्यतस्मिन्नवरत्नानिप्रक्षिप्यतंकलशंतत्तद्गायत्र्याऽष्टसहस्रमष्टशतमष्टाविंशति
वारंवाभिमंत्र्यतेनोदकेनदेवंस्नापयेत्ततःशुद्धोदकेनस्नापयेदष्टसहस्रमष्टशतमष्टाविंशतिंवापुरुषसूक्तेन
मूलमंत्रेणच ततःपुष्पाणिदत्वा यथासंभवमर्चयित्वागुडोदनंनिवेदयेदिति बुद्धिपूर्वंतुविच्छेदे पूर्वोक्तांप्र-

निर्माणंपुनःकुर्यात् पूर्वोक्तविष्णुवचनात् इदंमलमासशुक्रास्तादावपिकार्यमितिमदनरत्नेहेमाद्रौच देवार्चा
प्रासादभेदनेतुशूलपाणौकाश्यपः वापीकूपारामसेतुसभातडागचप्रदेवतायतनभेदनेप्रायश्चित्तंचतत्रआ
हुतीर्जुहुयात् इदंविष्णुर्मानस्तोकेविष्णोःकर्माणिपादोस्येति यदिदेवतामुत्सादयतितस्यैदेवतायैब्राह्मणान्भो-
जयेदिति शंखलिखितौ प्रतिमारामकूपसंक्रमध्वजसेतुनिपातभंगेषुतत्समुत्थानंप्रतिसंस्कारोष्टशतंचनिपा
तितानामितिसमुत्थानंप्रतिक्रियाप्रतिसंस्कारः पुनःप्रतिष्ठा अष्टशतंपणादंडश्चेत्यर्थः अथजीर्णोद्धारः
सचलिंगादौदग्धेभग्नेचलितेवाकार्यः अयंचानादिसिद्धप्रतिष्ठितलिंगादौभंगादिदुष्टेपिनकार्यः तत्रतुमहाभि
षेकंकुर्यादितित्रिविक्रमः कर्ताऽमुकदेवस्यजीर्णोद्धारंकरिष्यइत्युक्त्वापुण्याहंवाचयित्वाचार्यं ऋत्विजश्चवृत्वा
लिंगे ओंव्यापकेश्वरहृदयायनमः ओंव्यापकेश्वरशिरसेस्वाहेत्येवंषडंगंकृत्वा घोरमंत्रेणआतंजस्याग्निंप्रतिष्ठा
प्याघोरेणघृतसर्षपैःसहस्रंहुत्वाइंद्रादिभ्योनाम्नाबलिंदत्वाजीर्णदेवंप्रणवेनसंपूज्यब्रह्मादिमंडलदेवतानांहो
मंपूर्वोक्तंकृत्वादेवंप्रार्थयेत् जीर्णभग्नमिदंचैवसर्वदोषावहंनृणाम् अस्योद्धारेकृतेशांतिःशास्त्रेस्मिन्कथिता
त्वया जीर्णोद्धारविधानंचनृपराष्ट्रहितावहम् तदधितिष्ठतांदेवप्रदत्तामितवाज्ञयेति ततःक्षीराज्यमधुदूर्वाः
समिद्भिश्चाष्टोत्तरसहस्रंशतंवादेवमंत्रेणहुत्वागानादशांशेनालिंगचालनार्थंसहस्रंशतंवापायसेनहुत्वालिंगं
प्रार्थयेत् लिंगरूपंसमागत्ययेनेदंसमधिष्ठितम् यायास्त्वंसंमितंस्थानंसंत्यज्यैव शिवाज्ञया अत्रस्थानेच-
यानियासर्वानिर्येश्वरैर्युता शिवेनसहसातिष्ठेतिमंत्रितजलेनाभिषिच्यविसर्जयेत् ततोस्त्रमंत्रितेनखनि

मूर्तिं क्षिपेत् दारुजं तु मधुनाप्यज्याघोरेण दहेत् हेम
त्रेण खात्वा लिंगमादाय नद्यादौ वामदेवेन लिंगं प्रणवेन मूर्तिं क्षिपेत् दारुजं तु मधुनाप्यज्याघोरेण दहेत् हेम
रत्नादिमयं तु दग्धं चलितं वा पुनस्तत्रैव स्थापयेत् ततः शांत्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत् भगवन्भूत
रत्नादिमयं तु दग्धं चलितं वा पुनस्तत्रैव स्थापयेत् ततः शांत्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत् भगवन्भूत
व्येश लोकनाथ जगत्पते जीर्णलिंगसमुद्धारः कृतस्तवाज्ञया मया अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले प्रा
यश्चित्ताय देवेश अघोरास्त्रेण तर्पितम् ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं यदि तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्म
हेश्वरेति ततो यजमानः प्रार्थयेत् गोविप्रशिल्पिभूतानामाचार्यस्य च यज्वनः शांतिर्भवतु देवेश अछिद्रं जा
यतामिदम् मूर्तौ तु विशेषः त्वत्प्रसादेन निर्विघ्नं देहं निर्माययत्यसौ यावत्कुरुकरश्रेष्ठ तावत्त्वं चाल्पके गृहे
वसन्क्लेशं सहित्वेह मूर्तिं वै तव पूर्ववत् यावत्कारयते भक्तः कुरु तस्य च वांछितमिति ततो नवां मूर्तिं लिंगं वा कृ
त्वोक्तविधिना स्थापयेत् मूलं त्वग्निपुराणे स्पष्टम् इति जीर्णोद्धारः अथ तुलसीग्रहणम् देवयाज्ञिककृ
ते स्मृतिसारे वैधृतौ च व्यतीपाते भौमभार्गवभानुषु पर्वद्वये च संक्रांतौ द्वादश्यां सूतकद्वये तुलसीं ये वि
न्वंति ते छिंदंति हरेः शिरः विष्णुधर्मोत्तरे रविवारं विना दूर्वां तुलसीं द्वादशीं विना जीवितस्याविनाशाय प्रवि
चिन्वीत धर्मवित् तथा संक्रांतावर्कपक्षांते द्वादश्यां निशि संध्ययोः ये छिन्नं तुलसीपत्रं ते छिन्नं हरिमस्त
कम् पाद्मे द्वादश्यां तुलसीपत्रं धात्रीपत्रं च कार्तिके लुनाति स नरो गच्छेन्निरयानतिगर्हितान् रुद्रयामले
द्वादश्यां च दिवास्वापस्तुलस्यवचयस्तथा विष्णोश्चैव दिवास्नानं वर्जनीयं सदा बुधैः विष्णुधर्मे न छिंद्यात्तुल
सीं विप्रो द्वादश्यां वैष्णवः क्वचित् देवार्थे तुलसीछेदो होमार्थे समिधां तथा इंदुक्षयेन दुष्येत गवार्थे तु तृणस्य च

ग्रहणमंत्रस्तूपाद्मे तुलस्यमृतजन्मासिसदात्वंकेशवप्रिये केशवार्थेविचिन्वामि वरदाभवशोभनेइति पारिजा
तेदक्षः समित्पुष्पकुशादीनांद्वितीयःप्रहरोमतः अथपुष्पादेःपर्युषितत्वम् भार्गवार्चनेभविष्ये प्रहरंतिष्ठतेजा
तीकरवीरमहर्निशम् तुलस्यांविल्वपत्रेषुसर्वेषुजलजेषुच नपर्युषितदोषोस्तिमालाकारगृहेपिचं इहन्ना
रदीये वर्ज्यंपर्युषितंपुष्पंवर्ज्यंपर्युषितंजलम् नवर्ज्यंतुलसीपत्रंनवर्ज्यंजान्हवीजलम् तत्रैवपाद्मे तुलसी
पर्युषितानैवविल्वंतुत्रिदिनावधि पद्मंपंचदिनात्त्याज्यंशेषंपर्युषितंविदुः स्कांदे पालाशंदिनमेकंतुपंकजं
चदिनत्रयम् पंचाहंविल्वपत्रंचदशाहंतुलसीदलम् पदार्थादर्शेवोपदेवस्त्वन्यथाह विल्वाभार्गजातीतुल
सिशमिशताकेतकीभृंगदूर्वामंदांभोजाहिदर्भामुनितिलतगरब्रह्मकल्हारमत्स्यैःचंपाश्वारातिकुंभीदमनम
रुवकाविल्वतोहानिशस्तात्रिंशत् ३० ध्येका १ र्य ६ रीशो ११ दधि ४ निधि ९ वस्र ८ भू ८ भू ८ यमा २ भ्रूयएवम्
अस्यार्थः शताशतावरी मंदःमंदारः अहिर्नागकेशरः मुनिरगस्त्यः अश्वारातिः करवीरः कुंभीपाटलेति
केदेवनिघंटुःअरयः षट् ईशाः एकादशउदधयश्चत्वारः निधयोनव वसवोष्टौ भूरेकः यमौद्वौ विल्वमारभ्या
हिपर्यंतंगणयित्वादर्भमारभ्यपुनस्त्रिंशदादिगणयेदित्यर्थः एतद्दिनोत्तरंपर्युषितानीत्यर्थः टोडरानंदेस्कांदे
दमनस्यपत्रस्य तस्यमालाभगवतःपरमप्रीतिकारिणी शुष्कापर्युषितावापिनदुष्टाभवतिक्वचित् तिथितत्वे
मात्स्ये विल्वपत्रंचमाध्यंचतमालामलकीदले कल्हारंतुलसीचैवपद्मंचमुनिपुष्पकम् एतत्पर्युषितंनस्यात
कुशाश्चकलिकास्तथा स्मृतिसारावल्याम् जलजानांचसर्वेषांपत्राणांग्रहतस्यच कुशपुष्पस्यरजतसुवर्णकृ

तयोरपि नपर्युषितदोषोस्तितीर्थतोयस्यनैवहि मुकुलैर्नार्चयेद्देवंचंपकैर्जलजैर्विना अथशिवनिर्माल्यनिर्णयः सिद्धांत
शेखरे धराहिरण्यगोरत्नताम्ररौप्यांशुकादिकान् विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत् अन्यदन्नादिपानीयंतांबू
लंगंधपुष्पकम् दद्याच्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशः आचार्यशिवचंडानामाज्ञाभंगेतुलक्षकम् धनस्यभक्षणो
नेषांपादोनंलक्षमीरितम् निर्माल्येभक्षितेलक्षपादतःशुद्धिरीरिता दानंचभक्षणसमंतदर्धंतदुपेक्षणे अकामा
द्भक्षणेयद्वानिर्माल्यस्यजपेत्सुधीः ब्रह्मपंचकसाहस्रंधर्मेणसहितंततः कामतोभक्षणेदीक्षाप्रायश्चित्तंनचान्यतः
निर्माल्यलंघनेघोरंप्रजपेदयुतंततः स्पर्शश्चलंघनसमोविक्रयोभक्षणेनच स्मृत्यर्थसारेपि शैवसौरनिर्माल्यनै
वेद्यभक्षणेचांद्रम् अभ्यासेद्विगुणमत्याभ्यासेपतनम् अन्यनिर्माल्येप्यनापदीवाभिनि इदंचज्योतिर्लिंगाद्यति
रिक्तविषयम् तथाचपुरुषार्थप्रबोधेभविष्ये ज्योतिर्लिंगंविनालिंगंयःपूजयतिसत्तमः तस्यनैवेद्यनिर्माल्य
भक्षणात्तप्तकृच्छ्रकम् शालग्रामोद्भवेलिंगेबाणलिंगेस्वयंभुवि रसलिंगेतथार्षेचकृतसिद्धप्रतिष्ठिते हृदयेचं
द्रकांतेचस्वर्णरौप्यादिनिर्मिते शिवदीक्षावताभक्तेनेदंभक्ष्यमितीर्यते तथा बाणलिंगेस्वयंभूतेचंद्रकांतेहृदि
स्थिते चांद्रायणसमंज्ञेयंशंभोर्नैवेद्यभक्षणम् लिंगेस्वयंभुवेबाणेरत्नजेरसनिर्मिते सिद्धप्रतिष्ठितेचैवनचं
डाधिकृतिर्भवेत् यत्रचंडाधिकारोस्तिनद्भोक्तव्यंनमानवैः चंडाधिकारोनोयत्रभोक्तव्यंतत्रभक्तितः त्रैविक्र
म्यां बाणलिंगेचलोहेचसिद्धलिंगेस्वयंभुवि प्रतिमासुचसर्वासुनचंडोधिकृतोभवेत् अत्र ब्रह्महापिशुचिर्भू
त्वानिर्माल्यंयस्तुधारयेत् तस्यपापंमहच्छीघ्रंनाशयिष्येमहाव्रतेइति स्कांदादशुचिनानयादेयंशिवनिर्माल्यं

किंतु स्यात्तेनिस्मार्तोः अनुपनीतेन न ग्राह्यमिति श्रीदत्तः शिवदीक्षाहीनैर्न ग्राह्यमिति शैवाः तिथितत्वे हेमाद्रौपरिशि
ष्टे अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् शालग्रामशिलासंगात्सर्वं याति पवित्रताम् पंचायतनपूजायां तंत्रेण च
निवेदितमपीत्यर्थः शिवपुराणे येवीरभद्रशापिताः शिवभक्तिपराङ्मुखाः शंभोरन्यत्र देवेषु ये भक्ता येन दीक्षि-
ताः तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम् काशीखंडे जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः एष जालंधरो
बंधः समस्तस्मरवल्लभः तथा स्नापयित्वा विधानेन यो लिंगस्नपनोदकम् त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति
लिंगस्नपनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनम् गंगास्नानफलं तस्य जायते वै विपाप्मनः इदं पूर्ववाक्यवशाद्विश्वेश्वर-
विषयमिति केचित् काशीस्थपुराणप्रसिद्धसर्वलिंगविषयम् काशीखंडे रत्नेश्वराख्यानेन तथैव दर्शनादित्यन्ये अं-
थ कृषिः राजमार्तंडः ऋक्षेषूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनीप्राजापत्यकराद्वितैवततगुरुष्वालेयपादेषु च नि-
र्दोषैर्वृषभैर्हलैश्च सुमनोमालाभिरभ्यर्चितैर्दत्त्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत् प्राजेशाश्वयुक्पौष्णोत्तरादितिः
मघा मार्तंड इति ख्याश्विनी पौष्णोत्तरा ख्यामरीचयः शतभिषक्स्वातीविशाखास्तथा जीवार्केंदुसितेंदुनंदनदिने लग्ने च सौ-
म्योदये सस्यानां वपने तथैव लवने शस्तास्तथारोपणे चंडेश्वरः हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये स्थिरल-
ग्नेगुरोवरि बीजं धार्यं ज्ञशुक्रयोः ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा लेखयित्वा इमं मंत्रं धान्यागारे नि-
धापयेत् सस्यवृद्धिं परां कुर्यात्पूजितं प्रतिपूजयेत् दक्षिणादिङ्मुखगमनं गमनमभिनवास्कनारीषु व्ययमपि सस्य
धनानां नवसु धान्यवासरे कुर्याः शनिवारे च नो कार्यो धनधान्यव्ययो बुधैः अथ वस्त्रं श्रीपतिः रोहिणीषु करपंचके

भेश्युत्तरासुचपुनर्वसुद्वये रेवतीपुष्यसुदेवतेचभेनव्यवस्त्रपरिधानमिष्यते जीर्णरवौसततमंबुभिरार्द्रमिंदौभौमेशुचे-
बुधदिनेतुभवेद्धनाय ज्ञानायमंत्रिणिभृगौप्रियसंगमायमंदेमलायचनवांबरधारणंस्यात् रोहिणीगुरुपुनर्वसूत्तरेभा-
विभर्तिनववस्त्रभूषणे सानयोषिदचलेवतेपतिंस्नानमाचरतिवारुणेप्रिया अथालंकारधृत्यादि दैवज्ञवल्लभः नौ
सत्यपूषवसुभिःकरपंचकेन मार्तंडभौमगुरुदानवमंत्रिवारे मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणिविधृतानिभ-
वंतिसिद्ध्ये ज्योतिर्निबंधे हस्ताद्युराधमृगपूषधनिष्ठयुक्तचित्रोत्तरासुचपुनर्वसुरोहिणीषु लग्नेस्थिरेरविसुतेंदुजजी-
ववारेहेमादिधारणविधिःकथितोनराणां तत्रैवश्रीपतिः पौष्णाश्विनीवसुकरादिषुपंचकेषु कौसुंभहेममणिविद्रुम
काचशंखाः नार्याधृताःसुतसुखार्थकराभवंतिब्राह्मोत्तरादितिगुरुष्वसुखायभर्तुः तत्रैव शंखादिवररत्नानिपु-
ष्यादित्युत्तरासुच रोहिण्यांनैवगृह्णीनभर्तृजीवितकांक्षिणी अथसूचीकर्म वासवादितिभलाष्ट्रमैत्रचंद्राश्विनी-
षुच सूचीकर्मतनुत्राणमेभिर्ऋक्षैःप्रशस्यते अथशय्या हस्तादितिब्रह्मगुरूत्तराणिपौष्णाश्विमूलेंदुभचित्रभा-
नि वारेषुजीवेंदुसितेंदुजानांशय्यासनारंभणमुत्तमंस्यात् अथशस्त्रधारणम् पुष्येचादितिचित्रभपवनयेशक्रो-
त्तरारेवती स्वातीवाजिविशाखमित्रसहितेभानौगुरौभार्गवे कुंभेकीटगृहेवृषेमृगपतौचेंदौशुभेवीक्षितेसन्नाहःश-
रखड्गकुंतछुरिकाधार्यानृपाणांहिता: अथस्वामिसेवा चंडेश्वरः रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि सेवेतस्वा-
मिनंभृत्यःशुभवारोदयेतथा ज्योतिर्निबंधे दासीदासादिभृत्यानांकुर्यात्संग्रहणंबुधः स्थिरलग्नेशुभेदृष्टे मंदवारे
विशेषतः अथगजाश्वदोलाःसएव पौष्णाश्वजेशादितिभद्वयानिहस्तादिषट्कंश्रवणोत्तराणि दोलादिमातंगतुरंगमा

पामारोहणेपीष्टफलप्रदानि अथनृत्यम् हस्तःपुष्योवासवंरोहिणीचज्येष्ठापौष्णंवारुणंचोत्तराश्च पूर्वाचार्यैःकीर्तित
श्चक्रवर्तीनृत्यारंभेशोभनोयंभवर्गः अथराजदर्शनम् श्रीपतिः मृगाश्विपुष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभपूषभानि
मैत्रेणयुक्तानिनरेश्वराणांविलोकनेभानिशुभप्रदानि अथक्रयविक्रयौ भाद्रद्वयत्रिदशमंत्रिदिवाकरेषुमूलानिलोत्तरयु
तंगमरेवतीषु सारंगपाणिरजनीकरमैत्रभेषुलाभःसदैवभवतिक्रयविक्रयाभ्याम् वस्त्वेतु चित्राशतभिषास्वातीरेवती
चाश्विनीशुभा श्रवणश्चतथाप्रोक्तावस्त्राणांक्रयणेशुभः अथसेतुः स्वातीयुक्तेमंदवारेद्वषलग्नेशुभेदिने सेतूनां
बंधनंकार्यंध्रुवभेचार्कजीवयोः अथपशुकृत्यम् श्रीपतिः चित्रोत्तरावैष्णवरोहिणीषु चतुर्दशीदर्शदिनाष्टमीषु
स्थानप्रवेशोगमनंविदध्यात्पशूनाम्पशूनांनकदाचिदेव चंडेश्वरः हस्तमूलविशाखावासवरेवत्यांश्रवणेतथा मैत्रेचवा
रुणेश्चैवंपशुक्रयणमुच्यते पूर्वात्रयामृतमयूखहुताशनेषुइंद्राग्निवाजिवसुवारुणशंकरेषु एतेषुगोमहिषदंति
गमादिनानाप्रकारपशुजातिगतिःप्रशस्ता अथगजदंतछेदः ज्योतिर्निबंधे त्वाष्ट्रेवैष्णवअश्विन्यामादित्येचसदैव
दंतिनांशुभदंकर्मपुष्येहस्तेचकीर्तितम् अथनिक्षेपः भरणीत्रीणिपूर्वाणिआर्द्राश्लेषामघातथा चित्राज्येष्ठाविशा
खाचमूलंमृगपुनर्वसू एभिर्दत्तंप्रयुक्तंचयद्यन्निक्षिप्यतेधनं एभ्यतोधावमानस्यनिधनोनोपपद्यते अथऋणमोक्षः
श्रीधरः चरोगेशमंददिवसांशकलग्नयुक्तेरिक्तासमंददिवसेकुलिकोदयेच मैत्राद्वितीयपदमैत्रमुहूर्तयुक्तेराश्यक्रमे
चऋणमोक्षमुशंतिसंतः अथराजमुद्रा मृदुध्रुवक्षिप्रचरेशुभेषुयोगेप्रशस्तेशनिचंद्रवर्जम् वारेतिथौपूर्णजया
ह्वयेचमुद्राप्रमानिर्गाशुभदाहिराज्ञाम् अथनौः चंडेश्वरः पौष्णाश्विनीतुरगवारुणमित्रचित्राशीतोष्णरश्मिवसवो-

नलवंत्यमूनि वारेच्चजीवभृगुनंदनकेप्रशस्तेनौकादिसंघटनवाहनमेषुकुर्याम् अथभोगः गुरुभरविभानुराधाविधानृपो-
ष्णाश्विरोहिणीषुस्यात् स्वात्कत्तरासकुर्याच्छयनासनभोगभोगादि अथश्मश्रुकर्म श्रीपतिः पुष्येपौष्णोत्राश्विनी-

शाक्रेहस्तादेत्रिकेभेष्यदिस्याः क्षौरंकार्यंवैष्णवादित्रयेचसुस्वाभौमादित्यपातंगिवारान् नस्नातभुक्तोत्कटभू-
षतानामभ्यक्तयात्रासमरोत्सुकानाम् क्षौरंविदध्यान्निशिसंध्ययोर्वाजिजीविषूणांनवमेनचान्हि त्रिस्थलीसेतौवृद्ध
गार्ग्यः रव्यारसौरवारेषुरात्रौपातेव्रताहनि श्राद्धाहःप्रतिपद्रिक्ताभद्राःक्षौरेषुवर्जयेत् गार्ग्यः षष्ठ्यमापूर्णिमापात-
चतुर्दश्यष्टमीतथा आसुसन्निहितंपापंभिवतेऽभगेक्षुरे राजमार्तंडः देवकार्येपितुःश्राद्धेरवेरंशपरिक्षये क्षौरक-
र्मनकुर्वीतजन्ममासेचजन्मभे बृहस्पतिः राजकार्येनियुक्तानांनराणांभूपजीविनाम् श्मश्रुलोमनखछेदेनास्तिकालवि-
शोधनम् तथा क्षौरंनैमित्तिकंकार्यंनिषेधेसत्यपिध्रुवम् पित्रादिमृतिदीक्षासुप्रायश्चित्तेचतीर्थके केचिन्नूत्तरार्धम-
न्यथापठंति मुंडनस्यनिषेधोपिकर्तनंतुविधीयतइति नारदः नृपविप्राज्ञयायज्ञेमरणेबंधमोक्षणे उद्वाहेऽखिलवार-
क्षैतिथिषुक्षौरमिष्टदम् भारते प्राङ्मुखःश्मश्रुकर्माणिकारयीतसमाहितः उदङ्मुखोवाथभूत्वातथायुर्विंदतेमह-
त् अपरार्के उदङ्मुखःप्राङ्मुखोवावपनंकारयेत्सुधीः केशश्मश्रुलोमनखान्युदक्संस्थानिवापयेत् दक्षिणंकर्णं

धर्मार्थंपापसंक्षये शिखाधनंवसंस्कारेशिखावर्जंशिरोवपेत् यतीनांतुविशेषोनिगमे कक्षोपस्थशिखावर्जं
ऋतुं धिवापयोदिति अन्येपिविधिप्रतिषेधाःप्रागुक्ताः अथेंधनसंग्रहः ब्रह्मानिलार्कमघमूलत्रिपूर्वरौद्रपौष्णा-
नुराधगुरुविष्णुविशाखयुक्ते वारेकुजार्कभृगुनंदनसोमजानांश्चेंधनस्यकरणंभवतिप्रशस्तम् अथनवान्ने श्रीप

ति: रेवत्यश्विनीपुनर्वसुहस्तत्र्याह्वनः पृथगपि द्विलयेन स्वनरेषु गदितं पृथुकानां प्राशनं नवनवान्नविधानम् अथ नव औ
जनपार्श्वे ज्योतिर्निबंधे भोज्यपात्रं स्वधासिंधौ घटयेद्वा समाहरेत् तत्रान्नप्राशनमोक्ते काले भोजनं भावयेत् अथ नव
पर्णफलादिभक्षणम् चंडेश्वरः मूलाश्विमैत्रकरतिष्यहरींद्रभेषु पौष्णोत्तरेंदवपुनर्वसुचास्वेषु वारेषु भूमितनया
कुजवारवर्ज्ये तांबूलनूतनफलाद्यशनं हिताय अथ होमे आहुतिपातः ज्योतिषे तरणिविधुरभास्करिचंद्रभः कुजसरे
ज्याविधुंतुदकेतवः रविभतोदिनभंगणयेत्क्रमात् सनुखगं त्रितयं त्रितयं न्यसेत् दिनकरार्कि नमः कुजकेतवो हुतभुजो
नवकभास्तिलरेशभाः हवनकर्मणि संप्रविलोक्यतां हवनकर्मणि सर्वसमृद्धये अत्र शांतिरुक्ता विष्णुधर्मे क्रूरग्र-
हयुते वेवसंजाते हवनेऋक्षे शांतिं विधाय गां दद्याद्ब्राह्मणाय कुटुंबिने आयसीं प्रतिमां कृत्वा निक्षिपेत्ताम घोस्नुखी
गोमूत्रमधुगंधाद्यैरर्चितां अग्निमंडले स्वस्थां निधाय संपूज्य तत्र होमो विधीयते अत्रापवादः क्रियासारे नित्ये नि
मित्तिके दुर्गाहोमादौ न विचारयेत् अथ ज्वरादो फलम् श्रीपतिः स्वात्याश्लेषारौद्रपूर्वांसु शाक्रे रोगोत्पत्तिर्जायते य
स्य पुंसः नदैवपर्ज्यं व्याप्नोति निःप्रयत्नः स्याद्दुष्वाव्येलेष्वजन्मा पिबेयुः आयुस्सत्तिर्यस्य पोष्णे समेते श्रवणभाणंजा
यते तस्य कष्टात् वैश्वे सौम्ये रोगमुक्तिः क्रमात्स्याद्विंशत्यास्या द्वासराणांमयास्रू पक्षाद्धस्ते वासवे सद्विदेवे मूलाश्वि-
न्यो रग्निधिष्ण्ये नवाहात् याम्ये त्वाष्ट्रे वैष्णवे वारुणे च नैरुज्यं स्यान्नन्नमैकादशाहात् आहिर्बुध्न्ये तिष्यसंज्ञे यमारव्ये
प्राजापत्यादित्ययोः सप्तरात्रात् ज्योतिषे रोगान्मुक्तिर्जायते मानवानां निःसंदिग्धं जल्पितं गर्गमुख्यैः ज्योतिषे
एकाह्नो निधनं दशाहमनिलाद्वाणाविपस्त्वंत्राः सप्तांगारिवरुणस्य मासयुगलं मासो मूनिः पक्षकः द्वौ मासौ च भवि

शतिर्दशनिशाः पक्षांतपक्षानरवामासोपक्षदशांतपक्षवकुभः पीडादिनान्यशिभात् देवज्ञः उरगवरुणरौद्रावासवेंद्र
त्रिपूर्वायमदहनविशाखापापवारेणयुक्ताः तिथिषुनवमिषष्ठीद्वादशीवाचतुर्थीभवतिमरणयोगोरोगिणांकालहेतुः
अनर्कुभेहेमीनक्षत्रदेवताप्रतिमांसंपूज्य द्वादशदलेषुसंकर्षणादिद्वादशमूर्तीर्द्वादशादित्यान्वासंपूज्यदूर्वासमितिल
क्षीराज्यैर्गायत्र्यातद्देवतायैअष्टोत्तरशतंहुत्वादध्योदनंबलिंदत्वाचार्यायगांप्रतिमांचदत्वाविप्रान्भोजयेदितिसंक्षे
पः विशेषस्तुव्रतहेमाद्रौपदार्थादर्शेचज्ञेयः अथभेषजम् चंडेश्वरः मूलानुराधमृगातिष्यपुनर्वसौचपौष्णाश्विनी
श्रवणाशक्रकरत्रयेच वारेषुवाक्पतिसितेंदुदिनेप्रशस्तंभेषज्यभक्षणमभीषुहितंनराणां अथारोग्यस्नानम् श्री
पतिः इंदोर्वारेभार्गवेचध्रुवेषुसार्पादित्यस्वातियुक्तेषुभेषु पित्र्येचांतेवापिकुर्यात्कदाचिन्नैवस्नानंरोगनिर्मुक्तजंतुः
चरेविलग्नेरविभौमवारेरिक्तेतिथौस्याद्बहुलेचपक्षे धिष्ण्येचरेरोगनिपीडितानांस्नानंनराणांनिरुजत्वकारि अथ
दंतधावनम् पृथ्वीचंद्रोदयेविष्णुः प्रतिपद्दर्शषष्ठीषुचतुर्दश्यष्टमीषुच नवम्यांभानुवारेचदंतकाष्ठंविवर्जयेत्
नारदः चतुर्दश्यष्टमीपौर्णमासीसंक्रमणेषुच नंदासुचनवम्यांचदंतकाष्ठंविवर्जयेत् श्राद्धेयज्ञेचनियमेतथाप्रो
षितभर्तृका व्यतीपातेचसंक्रांत्यांनंदाभूताष्टपर्वसु तैलंक्षौरंरतिंमांसंदंतकाष्ठंचवर्जयेत् वसिष्ठः शन्यर्कशुक्र
वारेषुकुजाहेव्रतवासरे जन्माहेश्राद्धदिवसेदंतकाष्ठंविवर्जयेत् हेमाद्रौस्कांदे अभ्यंगेजलधिस्नानेदंतधावने
मैथुने जातेचानिधनेचैवतत्कालव्यापिनीतिथिः संवर्तः रवौविवाहआशौचेवर्जयेद्दंतधावनम् व्यासः अला
भेदंतकाष्ठानांनिषिद्धायांतथातिथौ अपांद्वादशगंडूषैर्विदध्याद्दंतधावनम् अथामलकस्नानं व्यासः श्रीका

मः सर्वदास्नानंकुर्वीतामलकैर्नरः सप्तमींनवमींचैवपर्वकालंविवर्जयेत् चंद्रसूर्योपरागेचस्नानमामलकैस्त्यजेत् श्रे
तुः षष्ठींचसप्तमींचैवनवमींचत्रयोदशी संक्रांतौरविवारेचस्नानमामलकैस्त्यजेत् यत्तुनवमीदशमीचैवतृत
याचत्रयोदशी प्रतिपद्द्वादशीकृष्णास्नानंतास्तुविवर्जयेत् यच्च दर्शेस्नानंनकुर्वीतमातापित्रोः सजीवतोः
कुर्वन्निरात्वष्टे पित्रोरुन्नतिजीवितेइतिकण्वश्यमाद्येः स्नानमात्रंनिषिद्धम् तद्भोगार्थस्नानपरम् ननित्यनैमित्तिक
परमितिहेमाद्रिः अथतैलस्नाननिषेधः कात्यायनः पक्षादौचरवौषष्ठ्यांरिक्तायांचतथातिथौ तैलेनाभ्यज्य
मानस्तुचतुर्भिःपरिहीयते गर्गः पंचदश्यांचतुर्दश्यामष्टम्यांरविसंक्रमे द्वादश्यांसप्तमीषष्ठ्योस्तैलस्पर्शंविवर्ज
येत् नचकुर्यात्तृतीयायांत्रयोदश्यांतिथौतथा शाश्वतींगतिमन्विच्छन्दशम्यामपिपंडितः तत्रैवायुर्वेदे
षष्ठ्यांदिनक्षयेष्टम्यामेकादश्यांचपर्वसु द्वादश्यांचचतुर्दश्यांपंचम्यांप्रतिपत्तिथौ श्राद्धदिनेजन्मत्रितयेश्रवणा
र्द्रयोः ज्येष्ठोत्तराफाल्गुनीषुव्यतीपातेचवैधृतौ विष्टियोगेचसंक्रांतौमन्वादिषुयुगादिषु नाभ्यंगंतत्रबालानांहस्ता
नांतुनदोषकृदिति व्यवहारतत्त्वे संक्रांतिभद्राव्यतिपातवैधृतिषष्ठ्यष्टमीपर्वसुनार्कभूसुते स्नानोहतीयादशमीच
गर्हिताः षष्ठ्यादिमासारदधावनेधमाः अस्यापवादमाहतत्रैवमनुः सार्षपंगंधतैलंचयत्तैलंपुष्पवासितम् अन्यद्र
व्ययुतंतैलंनदुष्यतिकदाचन आयुर्वेदे निषिद्धतिथिवारर्क्षग्रहणेष्वपरात्रिषु किंचिद्गोघृतयुक्तंवाविप्रपादर
तम् भानोर्दूर्वान्वितंभौमेभूयुक्तंपुष्पयुग्गुरौ सर्वेषांसर्वदातैलमभ्यंगेषुनदुष्यति मंगलेष्वप्यदोषः मांगल्यंविध
तैस्नानंरविपूर्वेसवेषुच तैहमाषसमायुक्तंमध्यान्हात्प्राक्तदिष्यते इतिमदनपारिजातेकात्यायनोक्तेः हेमाद्रौत्वन्य

नुः तैलाभ्यंगोनार्कवारेनभौमेनोसंक्रांतौवैधृतौविष्टिभद्योः पर्वस्वष्टम्यांनचेष्टः सदृष्टः मोक्तान्मुक्ता वासरेसूर्यसूनोः
तिलस्नाननिषेधस्तुषट्त्रिंशन्मते तथासप्तम्यमावास्यासंक्रांतिग्रहजन्मसु धनपुत्रकलत्रार्थीतिलपिष्टंनसंस्पृशेत्
अथगृहारंभः ज्योतिर्निबंधेबादरायणः वैशाखेफाल्गुनेपौषेश्रावणेमार्गशीर्षके सूत्रारंभःशिलान्यासः स्तंभारंभः
प्रशस्यते नारदः सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः मासाःस्युर्गृहनिर्माणेपुत्रारोग्यधनप्रदाः अत्रवृषसिंहवृ
श्चिकाः वैशाखश्रावणकार्तिकाःसौराज्ञेयाइतिकालादर्शः तंत्रेचकारणतंत्रे स्थिरमासेस्थिरेराशौस्थिरेंशेनववेश्मनाम्
कुर्वीतस्थापनंशंभोःशंभुस्थापनमेववा कार्तिकनिषेधस्तुलापरः कुंभेमाघेपिसर्वेषांप्रदिशणामुपक्रमं महर्षयःप्र
शंसंतिधान्यागारंविहायच निषेधोधान्यगृहपरः पाकभोजनशालादौमार्गशीर्षश्चफाल्गुनः रथ्यागेहमठादौचसह
स्यःश्रावणस्तु पौषाषाढनिषेधस्तुप्रधानगृहपरःनप्रधानगृहारंभंकुर्यात्पौषेश्रावणेपीतितत्रैवोक्तेः ज्योतिस्तत्वे पूर्वा
परास्यंतुनभोंस्यपौषेयास्योत्तरास्यंसहसिद्धितीये कार्यंगृहंजीवबुधस्तगार्केनाचास्तगोजीवसितौचहित्वा रत्नमाला
याम् कर्कनक्रहरिकुंभगतेर्केपूर्वपश्चिममुखानिगृहाणि तौलिमेषवृषवृश्चिकयातेदक्षिणोत्तरमुखानिवदंति दैवज्ञ
वल्लभः शोकंधान्यंपंचतानिःपशुत्वंस्वास्तिनैःसंगरंभृत्यनाशम् स्वंश्रीप्राप्तिंवन्हिभीतिंचलक्ष्मींकुर्युश्चैत्राद्यागृहारं
भकाले गर्गः स्युत्तरामृगरोहिण्यांपुष्येमैत्रेकरत्रये धनिष्ठाद्वितयेपौष्णेगृहारंभःप्रशस्यते रोहिण्यांश्रवणत्रयेदिति
युगेहस्तत्रयेमूलकेरेवत्युत्तरफाल्गुनीषुरगभेमैत्रोत्तराषाढयोः शस्तंवास्तुकुजार्कवर्जितदिनेगोकुंभसिंहेषुरवेकन्यायां
मिथुनेनभःशुचिसहोराधोर्जकेफाल्गुने कालादर्शेसनत्कुमारः आदित्यभौमवर्जंतुसर्ववाराःशुभप्रदाः वास्तुशास्त्रे

मार्गशीर्षेतथापौषेवैशाखेश्रावणेतथा फाल्गुनेचकृतंवेश्मसर्वसंपत्प्रदंभवेत् कार्तिकेमाघमासेचचैत्रेज्येष्ठेतथाश्विने
मास्याषाढेभाद्रपदेनकुर्यात्सर्वथागृहम् द्वितीयाचतृतीयाचपंचमीसप्तमीतथा त्रयोदशीचदशमीपूर्णाचैकादशीतथा
वेश्मारंभेशुभायस्याद्विशेषाच्छुक्लपक्षगाः व्यवहारसारे शिलान्यासःप्रकर्तव्योगृहाणांश्रवणेमृगे पौष्णेहस्तेचरो
हिण्यांपुष्याश्विन्युत्तरात्रये वास्तुप्रदीपे अधोमुखैर्भैर्विदधीतखातंशिलास्तथैवोर्ध्वमुखैश्चपट्टम् तिर्यङ्मुखैर्द्वा
रकपाटयानंगृहप्रवेशोमृदुभिर्ध्रुवैश्च लल्लः स्नानंचयानंशयनंचभोज्यंगजालयंवाजिगृहंधनस्य देवस्यपूर्वा
दिदिशिक्रमेणमध्येसभाभूपनिवेशनाय शिल्पशास्त्रे कन्यासिंहेतुलायांभुजगपतिमुखंशंभुकोणेग्निखातं
वायव्येस्यात्तदास्यंखसिधनमकरेईशखातंवदंति कुंभेमीनेचमेषेनिर्ऋतिदिशिमुखंखातवायव्यकोणेचाग्नेःको
णेमुखंवैवृषमिथुनगतेकर्कटेरक्षखातं तत्वचिंतामणौ यंत्रेदैर्घ्येगृहादीनांहानिर्भागस्ततोधिकम् नतत्रचिं
तयेद्भांशान्गुणानायव्ययादिकान् राजमार्तंडः आयव्ययौमासशुद्धिंतृणागारेनचिंतयेत् शिलान्यासादिनो
कुर्यात्तथागारेपुरातने व्यवहारतत्त्वे निषिद्धेपिहिकालेषुस्वानुकूलेशुभेदिने तृणकाष्ठगृहारंभेमासदोषोन
विद्यते चंडेश्वरः पूर्णादिलष्टमीयावत्पूर्वास्यंवर्जयेद्गृहम् उत्तरास्यंनकुर्वीतनवम्यादिचतुर्दशीम् अमावा
स्याष्टमीयावत्पश्चिमास्यंविवर्जयेत् नवम्यादौतथायाम्यंयावत्कृष्णाचतुर्दशी भवंद्वाथवास्फुलाकर्तव्यंवा
स्तंभरोपणम् सायाह्नवर्जंदिवसेरात्रौत्यक्त्वामहानिशाम् वराहः दक्षिणपूर्वेकोणेकृत्वापूजांशिलान्यसेत्प्र
थमाम् शेषाःप्रदक्षिणेनस्तंभाश्चैवंसमुत्थाप्याः कालादर्शेवास्तुशास्त्रे खातेचैवशिलान्यासेवृषचक्रंप्रशस्य

ते तत्रोक्तंशांतिरत्ने चतुर्हस्तप्रमाणंतुखात्वागर्तंसमंततः कुंभोदकैःसेचयेयुःशांतिपाठपुरःसरम् ततईशानदि-
ग्भागेसाक्षतंरत्नपंचकम् साज्यंकुंभंस्थिरंभुक्त्वावास्तुपूजनपूर्वकम् कुंभोपरिशिलान्यासः कर्तव्यस्तदनंतरम्
अथगृहप्रवेशः बृहस्पतिः नंदायांदक्षिणंद्वारंभद्रायांपश्चिमेनतु जयायामुत्तरद्वारंपूर्णायांपूर्वतोविशेत् वसिष्ठः
कृत्वाग्रतःकृष्णसलोचामतोर्कंविप्रान्प्रपूज्यानग्रतःपूर्णकुंभं हर्म्यैरम्यंतोरणस्रग्वितानैः स्त्रीभिःस्रग्वीगीतवाद्यैर्विशे
च व्यवहाररत्ने सौम्यायनेश्रावणमार्गपौषेजन्मर्क्षलग्नोपचयोदयांशो वामंगतेर्केगृहवास्तुपूजांकृत्वाविशेद्दै
श्मभकूटशुद्ध्ये वास्तुशास्त्रे लग्नात्स्वागारादितोदिक्षु द्वौद्वौराशीनियोजयेत् एकमेकंन्यसेत्कोणे सूर्येधामंविचिंतये
त् वसिष्ठः चंद्रआर्येसितवासरेषुचस्थिरांस्ततमहार्थलाभदम् सूर्यसूनुदिवसेस्थिरप्रदंकिंतुचोरभयप्रदानिर्दि-
शेत् रत्नकोशे पुष्येधनिष्ठामृगवारुणेषुस्वात्यंबुवर्क्षेभिषुचोत्तरास्त्र असीणचंद्रेशुभदोनृपस्यतिथावरिक्तेचगृ-
हप्रवेशः नारदः प्रवेशोमध्यमोज्ञेयःसौम्यकार्तिकमासयोः माघफाल्गुनवैशाखज्येष्ठमासेषुशोभनः अकपाट-
मनाछन्नमदत्तबलिभोजनम् गृहंनप्रविशेद्धीमानापदांमाकरोहितत् ज्येष्ठःक्षुद्रग्रहंपरः वृद्धगार्ग्यः भानो
श्चसौमस्यविहायवारोशूलादियोगानशुभान्नवापि रिक्तातिथिश्चापिमृदुध्रुवर्क्षेसौम्यायनेचप्रविशेद्गृहाणि रत्न-
मालायाम् त्वाष्ट्रमित्रशशिपुष्यदेवतान्याममंतिपुनयोमृदूत्यथ मैत्रगेहरतिभूषणांबरोहीनमंगलविधानमेषुच
रोहिण्युत्तरात्रयंचध्रुवाणि प्रवेशश्चवास्तुपूजांकृत्वाकार्यः जीर्णोद्धारेतथोद्यानेतथागृहनिवेशने नवमासादभव
नेप्रासादपरिवर्तने द्वाराभिवर्तनेतद्वत्प्रासादेषुगृहेषुच वास्तूपशमनंकुर्यात्पूर्वमेवविचक्षणइतिमात्स्योक्तेः तत्रैव

कृत्वाग्रतो द्विजवरानथ पूर्णकुंभं दध्यक्षताग्रदलपुष्पफलोपशोभम् दत्वा हिरण्यवसनानि तथा द्विजेभ्यो मांगल्यशां-
तिनिलयं स्वगृहं विशेच्च गृह्योक्तहोमविधिना बलिकर्म कुर्यात्प्रासादवास्तुशमने च विधिर्य उक्तः संतर्पयेद्द्विजवरान
थ भक्ष्यभोज्यैः शुक्लांबरः स्वभवनं प्रविशेत्सुरूपम् अथ कलिवर्ज्यानि बृहन्नारदीये समुद्रयातुः स्वीकारः कमंडलु
विधारणम् द्विजानामसवर्णासु कन्यासूपयमस्तथा देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः मांसदानं तथा श्राद्धे वान
प्रस्थाश्रमस्तथा दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ महाप्रस्थानगमनं
गोमेधश्च तथा मखः इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः कमंडलुः सोदकं च कमंडलुमित्युक्तः मृन्मयो वा द
नाऊढा ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधस्तथा कलौ पंच न कुर्वीत भ्रातृजायां कमंडलुमिति हेमाद्रौ वचनात् ऊढा-
याः परपुरुषसंयोगान्मृते देयेति केचनेत्यादिभिर्विवाह्यत्वेनोक्ता हेमाद्रौ ब्राह्मे गोत्रान्मातुः सपिंडाच्च विवाहो गोवध
स्तथा नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः गोत्राद्गोत्रजायाः पितृष्वसुः मातृसपिंडात् मातुलात्तत्कन्याया विवाहः क
लौ न कार्यः तेन यानि तद्विधायकानि तानि युगांतरविषयाणि तथा व्यासः तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा
शुल्केन नोद्वहिष्यंति विप्राः पापविमोहिताः इति कलौ तन्निंदामाह मातृतस्तृतीयां मातुलकन्यामित्यर्थः उक्तं चैतत् प्रा-
क् मधं स्त्रीभ्यस्त्वसुरामाचामित्यादिना विहितमपि वर्ज्यम् हेमाद्रौ आदित्यपुराणे विधवायां प्रजोत्पत्तौ देवरस्य
नियोजनम् बालायाः क्षतयोन्यास्तु वरेणान्येन संस्कृतिः कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः आततायिद्वि-
जाग्र्याणां धर्मयुद्धेन हिंसनम् द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः सत्रदीक्षा च सर्वेषां कमंडलुविधारणम्

स

महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः अग्निहोत्रहवन्याश्च लेहो लीढापरिग्रहः
वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् संसर्गदोषः स्तेयान्यमहापातक-
निष्कृतिः संसर्गदोषस्तत्संसर्गिणि पंचम इत्युक्तः स्तेयं च तदन्यानि महापातकानि ब्रह्महत्यासुरापगुरुतल्पानि त्रीणि
तेषां कामकृतानां मरणान्तिकं प्रायश्चित्तं विप्राणां कलौ नेत्यर्थः मरणान्तिके द्विजातिवधनिमित्तं द्वादशाब्दं द्विगुणं ब्रह्म
वधनिमित्तं च द्विगुणं भवति तच्चतुर्थेनास्ति निष्कृतिरिति निषिद्धम् न चात्महत्याविधिनात्र बाधः तेन रथ्यात्महत्याभि
मित्तस्यैव वधेन जातिवधनिमित्तस्याभिन्नविषयत्वात् संसर्गिणस्तु कामतोपि व्रतस्यैवोक्तेर्न मरणान्तिकम् नापस्ते
ये तत्र शौचवधकर्तृत्वात् तेन तयोर्मरणान्तिकाभावात्तयोरेव निष्कृतिरन्येषां त्रयाणाम् युगान्तरे तु कलौ निषेधश्च
लादेवमहान्तः पलाढ्यमपत्यम् नक्षत्रियादेः तदुक्तं विप्राणां मरणान्तिकमिति विशेषोस्यस्कृते प्रायश्चित्तरलेशेषः वरा
तिथिपितृभ्यश्च पशूपाकरणक्रिया दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि अयो-
नौ संग्रहे वृत्तेः परित्यागो गुरुस्त्रियः परोद्देशात्मसंत्याग उच्छिष्टस्यापि वर्जनम् प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्म-
कः अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च शामित्रं चैव विप्राणां सोमविक्रयणं तथा षड्भक्तानशनेनान्नहरणं हीन-
कर्मणः माधवीये स्थौल्ये चन्द्रोदये च शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् भोज्यान्नता गृहस्थस्य तीर्थसेवातिदू-
रतः शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा प्रजार्थं तु द्विजाग्र्याणां प्रजारणि-
परिग्रहः ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः यतेश्च सर्ववर्णेषु भि-

धान्यमब्राह्मणाद्धोदित्युक्तमन्नचौर्यम् आपदिक्षात्रादिवृत्तिः सुरवैनैवधमेदग्निमित्युक्तंधमनं दशाहेनैवशाद्धातभूमिस्थंच
नवोदकमित्युक्तोदशाहः गुरवेतुवरंदत्वेत्युक्त्वादक्षिणाशूद्रेषुदासगोपालेति कंदूपक्वंस्नेहपक्वंयच्चदुग्धेनपाचितम् एतान्य
शूद्रान्नभुजोभोज्यानिमनुरब्रवीत् इत्यपरार्केउक्तंतूक्ताशूद्रस्यपाकक्रिया पितापुत्रविवादेतुसाक्षिणांत्रिपणोदमइत्युक्तः
सापंगृहलंघिधूमेसन्नमुसलेइत्युक्तम् पृथ्वीचंद्रेणतु अदंतिचकथांविप्राःपृथिवीदर्शनायच अनिकेताश्चनाहारायत्र
सापंगृहास्तुतेइतिविष्णुपुराणोक्तोनिषिद्धः तेनाज्ञानशीलपांथादेःश्राद्धादौविनियोगोनकार्यः कलावित्यर्थउक्तः एतानि-
वर्ज्यानीत्यर्थः निगमः अग्निहोत्रंगवालंबंसन्यासंपलपैतृकम् देवराच्चसुतोत्पत्तिःकलौपंचविवर्जयेत् अग्निहोत्रंतदर्थं-
माधानं एतच्चसर्वाधानपरम् अर्धाधानंस्मृतंश्रौतस्मार्ताग्न्योस्तुपृथक्कृतिः सर्वाधानंतयोरैक्यकृतिःपूर्वयुगाश्रयेति लौगाक्षि
वचनादितिस्मृतिचंद्रिकायाम् एतेनचत्वार्यब्दसहस्राणिचत्वार्यब्दशतानिच कलेर्यदागमिष्यंतितदात्रेतापरिग्रहः सन्या-
सश्चनकर्तव्योब्राह्मणेनविजानतेतिव्यासवचनंव्याख्यातम् सर्वाधानेपिविशेषमाहदेवलः यावद्वर्णविभागोस्तियावद्वेदःप्र-
वर्तते सन्यासंचाग्निहोत्रंचतावत्कुर्यात्कलौयुगेइतिअत्रपूर्वयुगाश्रितेतिलौगाक्षिवाक्येपूर्वयुगानिकृतादीनीत्येकोर्थः अन्ये
तुयुगस्यपूर्वंकलेःपूर्वोभागः सचत्वार्यब्दसहस्राणीतिपूर्वोक्तवाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नः तस्मिन्भागेसर्वा
धानंकार्यम् तदुत्तरंतुयावद्वर्णविभागोस्तीतिवाक्याद्वर्णविभागपर्यंतमर्धाधानमित्याहुः सन्यासस्त्रिदंडः इतिश्रीमन्नारा-
यणभट्टसूरिसूनुरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृतेनिर्णयसिंधौतृतीयपरिच्छेदेकालवर्ज्यानिस
मापानि ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥

इतिनिर्णयसिंधौतृतीयपरिच्छेदेप्रथमंप्रकरणंसमाप्तं

अथ निर्णयसिंधौ तृतीयपरिच्छेदे आशौचप्रकरणं प्रारभ्यते

श्रीगणेशायनमः अथाशौचप्रकरणंप्रारभ्यते नारायणात्मजःश्रीमद्रामकृष्णस्यसूनुना कमलाकरसंज्ञेनाशौचंनिर्णी
यतेधुना १ मरीचिः आचतुर्थाद्भवेत्स्रावःपातःपंचमषष्ठयोः अतऊर्ध्वंप्रसूतिःस्याद्दशाहंसूतकंभवेत् बृहस्पतिरा
रः गर्भस्रावेतुनेरुक्ताःरात्रयोमाससंमिताः स्रावंगर्भस्यविद्वांसोमासादर्वाक्चतुर्थकात् पातमूर्ध्वंवदंत्येकेतथाधिकंतु
सूतकम् स्रावेमातुस्त्रिरात्रंस्यात्सपिंडाशौचवर्जनम् पातेमातुर्यथामासंसपिंडानांदिनत्रयम् अत्रसर्वत्रमूलंमिता
क्षरायांज्ञेयम् अत्रमासत्रयेत्रिरात्रंस्यादित्यनुवादःरजस्वलात्वेनैवतत्सिद्धेः यद्यप्यनेनचतुर्थमासेपित्रिरात्रंप्राप्नोति
तथापि षण्मासाभ्यंतरंयावत्गर्भस्रावोभवेद्यदि तदामाससमैस्तासांदिवसैःशुद्धिरिष्यतेइत्यादिपुराणात् रात्रि
र्माससंतुल्याभिर्गर्भस्रावेविशुध्यतीतिमनूक्तेः गर्भस्रावेयथामासमचिरेतूत्तमेत्रयइतिमरीच्युक्तेश्चनूरात्रंज्ञेयम् आवि
रेर्विमासमध्ये उत्तमेब्राह्मणे अत्रसपिंडानांस्नानम् सद्यःशौचंसपिंडानांगर्भस्यपतनेसतीतितत्रैवोक्तेः एतदाचतुः
मासात्पातेत्रिदिनस्योक्तेः अकारणायाःशुद्धेरसंभवात् सद्यःपदंस्नानपरम् एवमग्रेपि गर्भस्रावेस्नानमात्रंपुरुषस्ये
तिहरिहरसिद्धोक्तेः पुरुषस्येतिसपिंडोपलक्षणम् पूर्वोक्तवचनात् आचतुर्थमासंसपिंडानांनस्नानंकिंतुपुंसएव पाते
त्रिदिनंनिर्गुणपरम् गुणवतस्तुअजातदंतेतनयेशिशौगर्भच्युतेतथा सपिंडानांतुसर्वेषामेकरात्रमशौचकमितिपरा
शरेणैकाहइतिमदनपारिजातः सप्तमासादिदशाहम् एतत्सर्ववर्णविषयम् तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेतिव्या
सोक्तेः पराशरः जातेविप्रोदशाहेनद्वादशाहेनभूमिपः वैश्यःपंचदशाहेनशूद्रोमासेनशुध्यति संवर्तः जातेपुत्रेपितुः
स्नानंसचैलंतुविधीयते माताशुध्येद्दशाहेनस्नानात्तुस्पर्शनंपितुः प्रचपदात्कन्योत्पत्तौनपितुःस्नानमितिहारलतायाम्

तन्न पुत्रपदस्यपौत्रीमातामहस्तेनेतिकन्यायामपिप्रयोगात् यच्चतत्रैवोक्तम् सूतकेतुमुखंदृष्ट्वाजातस्यजनकस्ततः कृत्वा
सचैलस्नानंतुशुद्धोभवतितत्क्षणात् इत्यादित्यपुराणान्मुखदर्शनोत्तरमेवपितुःस्नानमितितन्न विदेशेमुखदर्शनाद्यध्यस्य
श्यतापत्तेः मुखदर्शनोत्तरंपुनःस्नानार्थमिदमितिस्मार्तगौडाः तन्न मूलेक्वचनज्ञानमात्रपरत्वात् इदंसर्ववर्णसमं सूतिका
सर्ववर्णेषुदशरात्रेणशुध्यति ऋतौचनपृथक्शौचंसर्ववर्णेष्वयंविधिरिति हारलतायांप्रचेतसोक्तेः यत्तुब्राह्मे ब्राह्मणी
क्षत्रियावैश्याप्रसूतादशभिर्दिनैः गतैः शूद्राचसंस्पृश्यात्रयोदशभिरेवचेतिप्रयोगपारिजातेपारस्करः द्विजातेःसूति
कायाःस्यात्सादशाहेनशुध्यति त्रयोदशेन्हिसंप्राप्तेशूद्राशुध्यत्यसंशयइति तदस्पृश्यत्वपरम् अंगिराः सूतकेसू
तिकावर्जंसंस्पर्शोनानिषिध्यते संस्पर्शेसूतिकायास्तुस्नानमेवविधीयते नाशौचंसूतकेपुंसःसंसर्गंचेन्नगच्छति रजस्तत्रा
शुचिज्ञेयंतच्चपुंसिनविद्यते संसर्गोमैथुनम् स्पर्शइत्यन्ये मातुरेवसूतकंतांस्पृशतश्चेतिहारलतायांकर्मप्रदीपोक्तेरितिनन्न सं·
स्पर्शेसूतिकायास्तुस्नानमेवविधीयतइतिस्नानमात्रोक्तेःसौमंतवचनस्यस्नानपर्यंतमस्पृश्यत्वमात्रबोधकत्वात् एवका·
रोबालस्पृश्यत्वार्थः माधवस्तु यस्तैःसहसपिंडोपिप्रकुर्याच्छयनाशनम् बांधवोवापरोवापिसदशाहेनशुध्यतीतिबृह
स्पतिस्मृतेः शयनासनादिरूपंसंसर्गमाहपराशरः यदिपत्न्यांप्रसूतायांद्विजःसंपर्कमृच्छति सूतकंतुभवेत्तस्ययदिविप्रः
षडंगवित् पितृवत्सापत्नमातुःस्नात्वानास्पृश्यत्वम् सूतिकास्पर्शेतुयावदाशौचं अन्यास्तुमातरस्तद्गृहंनव्रजंतिचे
दितिब्राह्मोक्तेरितिशूलपाणिवाचस्पत्यादयः तन्न तद्गृहंगत्वासूतिकांयदिनस्पृशंतितदास्पृश्याः अन्यथानेतितस्यार्थः कर्मानधि
कारमाहपैठीनसिः सूतिकांपुत्रवतींविंशतिरात्रेणकर्माणिकारयेन्मासेन स्त्रीजननीं इदमाशौचोत्तरं अन्यथाशूद्राः

सपिंडानामाशौचेनतदभावःस्यात् विध्यनुवादविरोधश्च एतच्चसोमयागादिश्रौतभिन्नपरम् प्रजातायाश्चदशरात्रादूर्ध्वं
स्नानादितिकात्यायनोक्तेः व्यासः प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा त्रिष्वेतेषुनकुर्वीतसूतकंपुत्रजन्मनि पुत्रशब्दोपत्य
मात्रपरः ब्राह्मे देवाश्चपितरश्चैवपुत्रेजातेद्विजन्मनां आयांतितस्मात्तदहःपुण्यंषष्ठंचसर्वदा जननेविशेषःप्रागुक्तः
अत्रप्रयोगपारिजातःपुंप्रसवेदशाहःस्त्र्यपत्येतुत्र्यहः पुंजन्मनिसपिंडानांदशाहाच्छुद्धिरिष्यते त्र्यहादेकोदकानां
चएकाहंसूतकंक्वचित् स्त्रीजन्मनिसपिंडानांसोदकानांत्र्यहाच्छुचिः स्त्रीषुत्रिपुरुषंज्ञेयंसपिंडत्वंद्विजोत्तमाइत्य
स्मृतेरित्याह मेधातिथिरपि अप्रत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायते इतिवासिष्ठमुक्ताशौचेएवैतद्विधाहेतुविधिर्दर्शित
एवेत्याह अन्येतुत्रिपुरुषसापिंड्यस्यकानीनकन्यापरत्वमाहुः अप्रत्तानांतथास्त्रीणांसापिंड्यंसप्तपौरुषं प्रत्तानां
भर्तृसापिंड्यंप्राहदेवःप्रजापतिरितिकौर्मविरोधाच्च अत्रेदंतत्त्वं पंचमात्सप्तमाद्वीमानूयःकन्यासुद्वहेद्विजः गुरुतल्पी
सविज्ञेयइत्यादिविरोधात्त्रिपुरुषंप्रकरणान्मरणाशौचपरम् वासिष्ठेतदग्रेउदकदानोक्तेः तेनकन्याप्रसवेपिसप्तपौरु
षंदशरात्रमेव नचकन्यापुत्रकृतंप्रसवेबलाबलंक्वाप्युक्तं अग्निस्मृतिस्त्वनुकल्पोविगीताचेतिसर्वसिद्धांतः अन्य
त्रिपुरुषंसपिंडानांअष्टमादिसोदकानांचत्र्यहसाम्यायोगात् चतुर्थादिसमानानांचकिमपिनस्यात् तेनकन्याप्रसवे
दशाहएव किंच स्त्रीजन्मोद्देशेनत्रिपुरुषंसापिंड्यंतेषांचत्रिरात्रमित्यनेकार्थविधिःकथंस्यात् वाक्यभेदापत्तेः नच
चतुर्थादीनांसोदकत्वंक्वापिसिद्धम् तेनत्रिपुरुषंचतुर्थादीनांचस्त्रीजन्मनिसोदकत्वंविधायपुनस्तेषांत्रिरात्राशौचवि
धौविध्यनुवादविरोधोवाक्यभेदश्चेत्यसंवादार्थाग्निस्मृतिर्हेया अथमृताशौचंहारीतः जातमृतेमृतजातेवासपिं

डानां दशाहमिति स्याशौचपरम् जातमृतेनालच्छेदोर्ध्वं यावन्नछिद्यते नालं तावन्नाप्नोति सूतकम् छिन्नेनाले ततः पश्चा
त्सूतकं तु विधीयत इति जैमिन्युक्तेः नाड्यां छिन्नायामाशौचमिति हारीतोक्तेश्च नाडीछेदात्प्राक् मातुः स्पर्शेपि न दोष इति श
ङ्खलिखितोक्तेः परास्ता नाभिच्छेदात्प्राक् मृतेतु बृहन्मनुः जीवन्जातो यदि ततो मृतः सूतक एव तु सूतकं सकलं मातुः पि
त्रादीनां त्रिरात्रकं इदं च प्रसवाशौचमेव शावनिमित्तं स्नानमात्रम् प्राङ्नामकरणात्सद्यः शौचमिति शंखोक्तेः अ
नकश्चिदाह नामकरणमाशौचांतकालोपलक्षणम् आशौचव्यपगमे नामधेयमिति विष्णूक्तेः आशौचे तु व्यतिक्रां
ते नामकर्म विधीयत इति मनूक्तेश्च नाम्नो नियतकालत्वात् न च नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत् पुण्ये ति
थौ मुहूर्ते वा नक्षत्रे वा गुणान्वित इति मनूक्तेरनियतकालत्वम् दशम्यामतीतायां विप्रः द्वादश्यामतीतायां क्षत्रि. यः
वैश्यः षोडशे शूद्र एकत्रिंशे इत्यपि ज्ञेयम् पुण्य इत्याद्यनुकल्पः तेन नाम्नः कालोपलक्षणम् एवं दंतजननेपि दंतज
न्मसप्तमे मासीत्युपनिषदि नियतकालत्वात् चौले तु न कालोपलक्षणम् प्रथमेब्दे तृतीये वा कर्तव्यं श्रुतिचोदनादि
ति मनूक्तेः ततः संवत्सरे पूर्णे चूडाकर्म विधीयते द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनादिति यमोक्तेश्च तस्यानिय
तकालत्वादिति तन्मंदं चौलवन्नामदंतजननयोरपि स्वरूपेण निमित्तत्वोपपत्तेः तद्विशिष्टकालानुवादे वाक्यभेदा
त् सप्तममासादर्वाक् दंतजनने तदभावप्रसंगाच्च यत्तूपनिषद्दर्शनेन निर्णयं कुर्यात् स तूनं शतायुः पुरुष इति श्रु
तेरर्वाक्पितृमरणे तदैत्यकर्मापि त्यजेत् ननु कालानुपलक्षणे नाम्नोत्कर्षे तदभावे वा स्नानमात्राच्छुद्धिः स्यात् ततः
कम् अत्र भवतयोक्तं आदंतजन्मनः सद्य इति सा च विष्णुवचनाद्दाहाभावविषयेति वक्ष्यामः त्रिवर्षादागपि स्या·

दितिचेन्न तदाहदंतादिनिमित्तैर्विशेषाशौचैः पूर्वस्यबाधात् तदुक्तम् पूर्वाबाधेन नोत्पत्तिरुत्तरस्याहि सिध्यतीति जनना
शरात्रेष्वथ शतरात्रे संवत्सरे चेति पारिशिष्टे द्वादश्यामपरे रात्र्यां मासे पूर्णे तथापरे अष्टादशेहनि तथा वदंत्यन्ये मनी·
षिण इति भविष्ये च नाम्नः कालानियमाच्च नच प्राथम्याद्दशरात्रेतीते इति मुख्यः कालः अन्यस्त्वनुकल्प इति वाच्यं
चौलेपि तथापत्तेः नन्वदंतजननकालानुपलक्षणे सदंतजातमृतस्य दाहेकाहप्रसंगः दशाहेन बाधात् नामकरणोत्तर
मेवदाहप्रवृत्तेः दशाहाभ्यंतरे बाले मृते तस्य बांधवैः शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते इति बृहन्मनूक्ते
आशौचं दाहोपलक्षणम् सूतकवदिति पारस्करोक्तेः यत्तु विष्णुः अनप्ते दशाहे तु पंचत्वं यदि गच्छति सद्य एव विशु
द्धिः स्यान्न प्रेतेनोदकक्रियेति तदपि प्रेताशौचनिषेधार्थं न तु सद्यस्त्वपरम् वाक्यभेदात् किंच नामकालात्प्राक् मृतस्य स्न
नं तदुत्तरे त्वेकाहादि नामकाले त्वेकादशाहे मृतस्य न किमपि स्यात् अथ शंखवचने त्वग्निचूडोपपंचमीत्तदा प्रागिति नोपप·
धेन नाग्निवापि कृते सतीति मन्वादिविरोधात् कृतनाम्न इति माधवमिताक्षरादिविरोधाच्च न कालोपलक्षणं क्वापीति दि
क् नामोत्तरं दंतोत्पत्तेः प्राग्दाहे सत्यहः अदंतजाते तनये शिशौ गर्भच्युते तथा सपिंडानां तु सर्वेषामहोरात्रमशौचकमि
ति यमोक्तेः दाहाभावे तु स्नानमात्रम् अदंतजाते प्रेते सद्य एव नास्याग्निसंस्कार इति विष्णुना दाहाभावे तदुक्तेः आदंत
जन्मनः सद्य इति याज्ञवल्क्याच्च दाहविकल्पं चाह लौगाक्षिः तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च सर्वेषां कृतचू·
डानामन्यत्रापीच्छया द्वयम् अन्यत्राकृतचूडेऽभक्तचूडाकरणं तृतीयवर्षरूपकालोपलक्षणार्थमिति मेधातिथिहरदत्तौ
मनुरपि नत्रिवर्षस्य कर्तव्या बांधवैरुदकक्रिया जातदंतस्य वा कुर्युर्नाम्नि वापि कृते सतीति उदकं दाहोपलक्षणम् दंतोत्पत्त

नंतरंप्राक्त्रिवर्षात्तान्मृतेह्नः दंतजातेप्यकृतचूडेत्वहोरात्रेणशुद्धिरितिविष्णूक्तेः त्रिवर्षोर्ध्वंकृतचूडेऽकृतचूडेवाप्रागुपनयनात्त्र्यहः यच्च
यकृतचूडोवैजातदंतस्तुसंस्थितः तथापिदाहयित्वैनमाशौचंत्र्यहमाचरेदित्यांगिरसोक्तेः अकृतायामपिचूडायांत्रिवर्षोर्ध्वंदाहादिनियतं
नात्रिवर्षस्येतिवचनात् कृतायांवर्षत्रयात्प्रागपितन्नियतंतूष्णीमेव अत्रजातदंतत्वस्य हेतुविशेषणत्वादविवक्षितंदाहयित्वेत्यप्यनुवा
दः उभयविधौवाक्यभेदात् त्रिवर्षात्प्राक्चूडाभावेग्निदानेत्र्यहस्तदभावेविष्णूक्तेरेकाहइतिमाधवः यत्तुकश्चिदाह अत्रत्रिवर्षविषयादस्म
देवार्थात्त्रिवर्षोर्ध्वमपितत्सिद्धिः विज्ञानेश्वरोक्तंचत्रिवर्षोर्ध्वमकृतचूडाविषयत्वंचिंत्यम् अजातदंतपदवैयर्थ्यादितितत्तुच्छं दाहस्या-
विधेयत्वात् नृणामकृतचूडानामशुद्धिर्नैशिकीस्मृतेतिमनूक्तेस्त्रिवर्षोर्ध्वमेकाहापत्तेरर्थाच्च हासिद्धेः तयाप्यथैतथांगीकारात्सदवैय
र्थ्यस्यतास्माहाक्यार्थाज्ञानाच्चेत्यलम् मिताक्षरार्थानभिज्ञदूषणेन प्रथमवर्षादौकृतचूडस्यसद्यस्त्र्यहः निवृत्तचूडकानांतुत्रिरात्राच्छु-
द्धिरिष्यतइतिमनूक्तेः एतत्सर्वंमातृत्वसपिंडानां मातापित्रोस्तुदशाहोर्ध्वंमृतेसर्वत्रत्रिरात्रं बालानामजातदंतानांत्रिरात्रेणशुद्धिरितिक-
श्यपोक्तेः वैजिकादभिसंबंधादनुरुध्यादाघंत्र्यहमितिमनूक्तेश्च शुद्धितत्त्वादयोगौडास्तु अजातदंतमरणेपित्रोरेकाहमिच्छंति दंतजातेत्रि
रात्रंस्याद्यदिस्यातांतुनिर्गुणाविति कौर्मात्काश्यपंशूद्रपरं अनूढानांतुकन्यानांतथावैशूद्रजन्मनामितित्र्यहात्तुदत्तोशंखोक्तेः त्रिरात्रंतुभ-
वेच्छूद्रेषण्मासोपिशिशौमृतइतिमत्स्यसूक्ताच्च दंतजातेशूद्रेतुपंचाहः यथाहांगिराः शूद्रेत्रिवर्षान्न्यूनेतुमृतेशुद्धिस्तुपंचभिः अतऊर्ध्वंमृते
शूद्रेद्वादशाहोविधीयते षड्वर्षांतमतीतोयःशूद्रःसंम्रियतेयदि मासिकंतुभवेच्छौचमित्यांगिरसभाषितमिति यत्तुअनूढभार्यःशूद्रस्त्रि
निशंखोक्तंमासाशौचंतत्सगुणशूद्रपरं निर्गुणेत्वनूढभार्येशूद्रेत्रिवर्षोर्ध्वंद्वादशाहः षडब्दोर्ध्वंमासः षडब्दात्प्रागपिकृतोद्वाहेमासइत्याहुः ए
नतुल्यंवयसिसर्वेषामितिविरोधाच्छिष्टविगानाच्चादर्तव्यमितिविज्ञानेश्वरादयः दाक्षिणात्यानांतथैव अन्यदेशेप्रागुक्तमितिपोडाः एवं

कन्यास्वपि नास्त्यजातदंतासु पित्रोरेकरात्रमितिमाधवः यत्तु विज्ञानेश्वरेणोक्तम् ऊनद्विवर्षउभयोः सूतकं मातुरेव हीतियाज्ञ
वल्क्योक्तेः गर्भस्थे प्रेते मातुर्दशाहं जातउभयोः कृतेनाग्निसोदराणां चेतिपैठीनस्योक्तेश्च पित्रोः सोदराणां च दशाहमस्पृश्यत्वमिति
तन्नेदानीं प्रचरति अतएव स्मृत्यर्थसारे तन्नाद्दृतं कन्यासु चौलासाङ्-मृतौ स्नानम् अचूडायां तु कन्यायां सद्यः शौचं विधीयत-
इत्यापस्तंबोक्तेः इदं त्रिपुरुषमध्ये अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायत इति वसिष्ठोक्तेः इदं वाग्दानोत्तरमिति गौडाः अप्रत्तानां
तथा स्त्रीणां सापिंड्यं साप्तपौरुषमिति वचनात् चौलोत्तरं वाग्दानात्पूर्वं तासु एकाहः अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः त्रि
रात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयत इत्यंगिरसा त्रिरात्रविषये ह्नो विधानात् अतः शूद्रस्योपनयनस्थानीयविवाहात्पूर्वं त्रिरा
त्रं विवाहोत्कर्षे तु षोडशाब्दमध्ये त्रिरात्रमेवेत्यपरार्कोक्तेः शूद्रे तु निर्गुणे त्र्यब्दोर्ध्वं पंचाहः षडब्दोर्ध्वं विवाहाभावे द्वादशाह इति गौडाः स
गुणानां षोडशाब्दोर्ध्वं तु विवाहाभावेपि पूर्णाशौचं वक्ष्यते तदनंतरं प्राग्विवाहाद्भर्तृकुलेन सप्तपुरुषावधि त्रिरात्रं अवाप्य पूर्वं भर्त्तानुयाने
च प्रतिपादिता असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतमिति मरीच्युक्तेः रत्नाकरे तु द्विनत्वेन शंखः पितृवेश्मनि या नारी रज
पश्यत्यसंस्कृता तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति यावज्जीवमाशौचमिति वाचस्पतिमिश्राः अथानुपनीते किंचिदुच्यते
नाम्नः पूर्वं खननमेव तदूर्ध्वं वर्षत्रयात्पूर्वं चौलाभावे प्युदकदानविकल्पः नात्रिवर्षस्य कर्तव्या बांधवैरुदकक्रिया जातदंतस्य वा कुर्यु
र्नाम्नि वापि कृते सतीति मनूक्तेः उदकक्रियासाहचर्याद्दाहोपलक्षणं खनने तु नान्यदोर्ध्वदैहिकं ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः इति या ज्ञ-
वल्क्योक्तेः उदकमंत्रकर्मपरमित्यपरार्कः यमः ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि यमगाथां गायमानो यमसूक्तमनुस्मरन् गा
धनीयेन्नाह्लेपि स्त्रीणां तु पतितो गर्भः सद्योजातो मृतोथवा अजातदंतो मासे वा मृतः षड्भिर्निर्वाहिः वस्त्राद्यैर्भूषितं कृत्वा निक्षि-

पेतंतुकाश्ववत् खनित्वाशनकैर्भूमौसद्यःशौचंविधीयते अलंकरणमपिवक्ष्यते कृतचूडस्यतुत्रिवर्षोत्सागूर्ध्वंवान्युदकदानंनि
यतम् यत्तुयासिष्ठः ऊनद्विवर्षेप्रेतेगर्भपतनेवासपिंडानांत्रिरात्रमिति तत्प्रथमाब्दचूडापरम् वर्षत्रयादूर्ध्वमकृतचूडस्यापि
नियतं वर्षत्रयोर्ध्वंउपनयनात्पूर्वंचतूष्णीमभ्युदकदानं तूष्णीमेवोदकंकुर्यात्तूष्णींसंस्कारमेवचेतिपूर्वोक्तलौगाक्षिस्मृतेःपिं
डदानमपिकार्यम् असंस्कृतानांभूमौपिंडंदद्यात्संस्कृतानांकुशेष्विति प्रचेतसोक्तेः उदकदानंसपिंडैःकृतचूडस्येतिगौत
मोक्तेः उदकग्रहणमौर्ध्वदैहिकमितिहरदत्तः द्वादशाद्वत्सरादर्वाक्पौगंडमरणेसति सपिंडीकरणंनस्यादेकोद्दिष्टानिकार
येदितिहरदत्तधृतदेवलोक्तेश्च मरीचिरपि प्रेतपिंडंबहिर्दद्याद्दर्भमंत्रविवर्जितमिति एतदनुपनीतपरमितिविज्ञानेश्वरः
अत्रचूडेवपूर्वावधिः पूर्वावस्येतुनद्ग्रहणात् उदकग्रहणस्योपलक्षणत्वाद्द्वादशाद्वत्सरादि
त्यनुपनीतद्विजाद्रश्रूद्रविषयम् त्र्यहाशौचेपिंडदानविधिमाहपारस्करः प्रथमेदिवसेदेयास्त्रयःपिंडाःसमाहितैः
द्वितीयेचतुरोदद्यादस्थिसंचयनंतथा त्रींस्तुदद्यात्तृतीयेन्हिवस्त्रादिक्षालयेत्ततइति अत्रदेवयाज्ञिकनिबंधेविशेषः शिशु
रादंतजननाद्बालःस्याद्यावदाशिखः कथ्यतेसर्वशास्त्रेषुकुमारोमौंजिबंधनात् आपंचवर्षात्कौमारंपौगंडोनवहायनः तथा
गर्भेनप्रेतक्रियानास्तिदुग्धंदेयंशिशौमृते परंचपायसंक्षीरंदद्याद्बालविपत्तितः एकादशंद्वादशाहंवृषोत्सर्गविधिंविना तथा य
त्प्रमीयतेबालस्तत्प्रमाय:प्रदीयते किंचित्समानवयसांसंस्कृत्यान्नंयथाविधि भक्ष्यंभोज्यंचदातव्यंतथान्वस्कलभक्षिका
नहस्ताणिप्रदेयानिसोपानत्कानितत्समे कुमाराणांत्वबालानांभोजनंवस्त्रवेष्टनम् यच्चोपजीवतेबालस्तत्तद्वायदीयते त
था भूमिनिक्षेपणंबालेआवर्षद्वयमाशिखम् ततःपरंखगश्रेष्ठदेहदाहोयथाविधि अचूडेचूर्ध्वंखननानचत्सर्थमावर्षद्व

पगिति शागापकृतचूडस्यतन्निवृत्त्यर्थमाशिरनमिति तथा चूडाकर्मणिसंजातेविपत्तिस्तुयदाभवेत् सूतकांतेप्रकर्तव्यंस्प·
स्योत्सर्जनंतथा नग्नदाहःप्रकर्तव्यउदकंतत्रनिश्चितम् श्राद्धानिषोडशापिस्युःसपिंडीकरणंविना इदंपंचवर्षोनरंजन्मतःपंच·
वर्षाणिभुंक्तेदत्तमसंस्कृतम् पंचवर्षाधिकेबालेविपत्तिर्यदिजायते वृषोत्सर्गादिकंकर्मकर्तव्यमुदकंततः अहन्यहनिसंप्राप्तेकुर्यात्
श्राद्धानिषोडश पायसेनगुडेनैवपिंडंदद्याद्यथाक्रमम् उदकुंभप्रदानंचपदरानानियानिच दीपदानानियत्किंचित्पंचवर्षाधिकेस·
दा कर्तव्यंतुरवगर्भेषन्नतावांकृमेततृप्तये स्वाहाकारेणचकार्याण्येकोद्दिष्टानिषोडश ऋजुदर्भैस्तिलैःशुक्लैः प्राचीनावीतिनानयेति
तन्नैवोक्तेः अन्नमूलंविसृप्य वार्षिकादितुनभवत्येव सपिंडनाभावेपितृत्वायोगात् वचनाभावाच्च दिवोदासीये अन्नेनिध·
नंप्राप्तेविप्रादेशूद्रजातिवत् क्रियाःसर्वाःसमुद्दिष्टाःसपिंडीकरणंविना उदकंपिंडदानंचकृतचूडेविधीयतइतिस्त्रीणांतूद्वाहा
त्प्राक्उदकपिंडदानविकल्पः स्त्रीणांनैकेप्रत्तानामितिगौतमोक्तेः स्त्रीशूद्राश्चसधर्माणइतिवचनात्शूद्रेप्येवम् एतद्द्वयो·
र्निमित्ताशौचंसर्ववर्णसमं तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेतिव्याघ्रपादोक्तेः यानितु निर्वृत्तचूडकेविप्रेत्रिरात्राच्छुद्धि
रिष्यतेइतिनिवृत्तेक्षत्रियेषड्भिर्वैश्येनवभिरुच्यते शूद्रेत्रिवर्षन्यूनेतुमृतेशुद्धिस्तुपंचभिः अतऊर्ध्वंमृतेशूद्रेद्वाद·
शाहोविधीयते षड्वर्षांतमतीतेतुशूद्रेमासमशौचकमित्यांगिरसादीनितानिविशिष्टविगानान्नादर्तव्यानीतिविज्ञानेश्वर
मदनपारिजातादयः तेनैतद्वाच्छूद्राणांव्यवस्थाप्रागुक्ताहेयैव तुल्यंवयसिसर्वेषामितिदाक्षिणात्यपरम् अन्यदेशो·
क्तौमोक्ताव्यवस्थेतिशुद्धितत्त्वे अथजात्याशौचम् तच्चद्विजपुंसामुपनयनोर्ध्वंप्रवर्तते त्रिरात्रमाव्रतादेशाद्दशरात्रम
तःपरम् क्षत्रस्यद्वादशाहानिविशःपंचदशैवतु त्रिंशद्दिनानिशूद्रस्यतदर्धंन्यायवर्तिनइतियाज्ञवल्क्योक्तेः यत्तुस·

एव त्रिरात्रं दशरात्रं वा शावमाशौचमित्युक्तमित्याह तत्र दशाहे त्रिरात्रमस्पृश्यत्वं एकादिनोसन्ने आशौचद्वये दशाहमस्पृश्य
सम् मरणं यदि तुल्यं स्यान्मरणेन कथंचन अस्पृश्यं तु भवेत्तत्र सर्वमेव सपिण्डकमित्यङ्गिरसोक्तेः दशाहाशौचपरत्वे दशरात्र-
मतः परमित्यनेन पौनरुक्त्यापत्तेरिति शुद्धिविवेकादयः स्मृतिभेदात्त्रिरात्रं दशरात्रं वेति विकल्पायोगाच्च यत्तु पुत्राणां वेदा-
नध्याप्य वृत्तिं विदधाति तथाहाश्वलायनः द्वादशरात्रं महागुरुषु दानाध्ययने वर्जयेरन्निति अत्र यावदुक्त निषेधो वास्पृश्य-
त्वमात्रं वान्नतु कर्मानधिकारः एकादशाहान्ते वैश्वदेवोक्तेः एकादशाहं मुक्त्वा तत्र श्राद्धं तु विधीयत इति शङ्खतस्त्वेते त्रयः
पुरुषस्याति गुरवो भवंति माता पिताचार्यश्चेति विष्णूक्तेः पित्रादयो महागुरवः भर्ताप्युक्तो रामायणे पतिर्बंधुर्गतिर्भर्ता
दैवतं गुरुरेव च शातातपः पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः एकपदं मूढानां पितृमातृनिषेधार्थं सोदकानां
त्रिरात्रम् त्र्यहात्तूदकदायिन इति मनूक्तेः अग्निपुराणे सपिंडता तु पुरुषे सप्तमे विनिवर्तते समानोदकभावस्तु निव-
र्तेत चतुर्दशे जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते बृहस्पतिः दशाहेन सपिंडास्तु शुद्ध्यंति प्रेत सूतके त्रिरात्रेण सकु
ल्यास्तु स्नात्वा शुद्ध्यंति गोत्रजाः स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जातमाशौचं वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृत इत्युक्तेः दत्ता-
नां भर्तुरेव हि स्वजातस्य तु मशौचं स्यान्मृतके जातके तथेति माधवीये ब्राह्माच्च शूद्रस्य विवाहाभावेपि षोडशवर्षोर्ध्वं मासः अनू
ढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् मृत्युं समधिगच्छेच्चेन्मासात्तस्यापि बांधवाः शुद्धिं समधिगच्छंति नात्र कार्या विचारणे
त्यपरार्के शंखोक्तेः निर्णयामृतमदनपारिजातादौ त्वन्यथोक्तम् हारीतः आमौंजीबंधनाद्विप्रः क्षत्रियश्च धनुर्ग्रहात् आप्र
तोदग्रहाद्वैश्यः शूद्रो वस्त्र ग्रहात् धनुःप्रतोदावष्टमेब्दे द्वादशे वस्त्रग्रहमिति मेधातिथिस्तु त्रिरात्रमात्रतादेशादित्य-

न ननं मलोपनसणार्थम् मनकाउः सकीयः सर्वेषांचाष्टमवर्षरूपः तेनचतुर्णामपि वर्णानामुपनयनाभावेप्यस्मादूर्ध्वमपू
र्गभेनाशौचम् ननापिनागस्मान्छिशयः मोक्ताइतिस्मृत्यंतरादूर्ध्वंसंपूर्णमर्वाक्त्रिरात्रम् येप्याषोडशाद्वर्षे ह्यालइत्याहुः
तेनापत्यस्मादूर्ध्वंशूद्रेमासएव ऊर्ध्वमस्माद्वर्षेभ्यःशुद्धिःशूद्रस्यमासिकातिवचनादित्याह हारलताशुद्धितत्त्वादिगौड
ग्रंथेनयुक्तम् अनुपनीतोपिमइत्युक्त्वाम्रियतेयत्रतत्रस्यादाशौचंत्र्यहमेवहीनिद्विजन्मनामयंकालस्त्वयाणांतुषड्ढाद्धिके
इत्यादिपुराणोक्तेरुपनयनकालोपलक्षणम् षडब्दपरंमासत्रयाधिकपरम् गर्भाष्टमेष्टमेवाब्दइत्युक्तेः यत्तुजाबालः अत
नृणादिनानांनमतीनिपुयथाक्रमम् दशाहत्र्यहएकाहैःशुद्ध्यंत्यापहिनिर्गुणाइति द्विजादंताः इदंमतीत्युक्तेः पंचाब्दोप
नीतपरणमात्र तदेतन्नाद्रियंते वृद्धाःयानितु पराशारः एकाहाद्ब्राह्मणःशुद्ध्येद्योग्निवेदसमन्वितः त्र्यहात्केवलवेदस्तुद्वि
हीनोदशभिर्दिनैः केवलवेदः केवलश्रौताग्नेरप्युपलक्षणम् अपसंकोचोहोमाध्ययनपरएवनतुसंध्यादाविति हारलतायां
अंगिराः सर्वेषामेववर्णानांसूतकेमृतकेतथा दशाहाच्छुद्धिरेतेषामितिशातातपोब्रवीत् देवलः आशौच्यंदशरात्रंतुस
र्वेषामपरेविदुः निधनेप्रसवेचैवपश्यंतःकर्मणःक्षयम् अत्यंतोत्कृष्टस्यकर्महानोपीडावतोविप्रपरिस्वर्यापरम् शूद्रे
दशरात्रमिति हारलतायां दक्षः सद्यःशौचंतथैकाहस्त्र्यहश्चतुरहस्तथा षड्दशद्वादशाहश्चपक्षोमासस्तथैवच म
रणांतंतथाचान्यद्दशपक्षास्तुसूतके मिताक्षरायांस्मृत्यंतरे चतुर्थेदशरात्रंस्यात्षण्निशाःपुंसिपंचमे षष्ठेचतुरहा
च्छुद्धिःसप्तमेतुदहेयतु इत्यादीनितान्यापद्नापद्गुणवद्गुणवद्विषयाणिदेशांतरभेदाद्वानेयानि सद्यःशौचादिप
नद्यंताः पक्षायायावरादिपराः भत्रमरणांतंजननादिनामित्ताङ्गिन्नम् शिष्टविगानान्नादर्तव्यानीतिविज्ञानेश्वरः

अस्नात्वाचाप्यहुत्वाचअदत्वाभुंक्तथाद्विजः एवंविधस्यविप्रस्यसर्वदासूतकंभवेदितिदक्षोक्तः अन्यपूर्वायस्यगेहेभार्या
स्यात्तस्यनित्यशः आशौचंसर्वकार्येषुदेहेभवतिसर्वदेति ब्राह्मादिवशाद्व्यवस्थेत्यपरार्कमदनपारिजातादयः माधवस्तु
वृत्तस्वाध्यायसापेक्षमघसंकोचनंतथेतिकलिवर्ज्येषूक्तेः दशाहएवविप्रस्यसपिंडेमरणेसति कर्मांतराणिकुर्वाणः कलौ
भवतिकिल्बिषीतिहारीतोक्तेश्च न्यूनाशौचपक्षाःयुगांतरविषयाः मरणांतादिपक्षास्तु निंदार्थवादः अन्यथा नामधारक
विप्रस्य दशाहेसूतकीभवेदितिविरोधःस्यादित्याह यत्तुदेवलः दशाहादित्रिभागेनकृतेसंचयनेक्रमात् अंगस्पर्शन
मिच्छंतिवर्णानांतत्वदर्शिनइति पूर्णाशौचेस्पृश्यतामाह यच्चानुपनीतातिक्रांताशौचेत्रिरात्रादौतेनैवोक्तम् स्वाशौच
कालाद्विज्ञेयस्पर्शनंतुत्रिभागतइति तदपियुगांतरेषु अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेवचेतिमाधवीयेकलौतन्निषे
धात् यत्तुहारलतायाम् चतुर्थेहनिकर्तव्यः संस्पर्शोब्राह्मणस्यतुइतिभवेतसोक्तेस्त्र्यहेकाहाशौचेपिचतुर्थाहएवांगस्प
र्शइति तन्न देवलादिवचनास्यदशाहगोचरत्वात् येतुवर्णसंकरजामूर्धावसिक्ताद्यास्तेषामाशौचविशेषः कलौनोपयु
क्तइतिनोच्यते प्रतिलोमजानांनाशौचं मलापकर्षणार्थंतुस्नानमात्रमितिविज्ञानेश्वरः माधवस्तु शौचाशौचंप्रकुर्वीर
न्शूद्रवर्णस्यसंकराइति ब्राह्मोक्तेः शूद्रवदाह हारलताप्येवम् दत्तकौ... मादिपुत्रेषु अहीनवर्णासुस्त्रीषु
चसापिंडत्वेपिप्रसवेमरणेचपूर्वापरपित्रोर्भर्तुश्चत्रिरात्रमेवनदशाहादि अनौरसेषुपुत्रेषुजातेषुचमृतेषुच परपूर्वा
सुभार्यासुप्रसूतासुमृतासुचेतित्रिरात्रान्तुवचोविष्णूक्तेः सपिंडानांत्वेकाहः परपूर्वासुभार्यासुपुत्रेषुकृतकेषुच भर्तृ
पत्रोस्त्रिरात्रंस्यादेकाहस्तुसपिंडतइतिमाधवीयेहारीतोक्तेः सूतकेमृतकेचैवत्रिरात्रंपरपूर्वयोः एकाहस्तुसपिंडानां

परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते
त्रिरात्रं यत्र वै पितुरिति मरीच्युक्तेश्च शंखः अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च
परपूर्वपुनर्भूः इदं सवर्णासु हीनवर्णासु तु शंखलिखितौ परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च नानध्यायो भवेत्तस्य ना-
शौचं नोदकक्रिया यासेपि आशौचं तु त्रिरात्रं स्यात्समवर्णेपुनिश्चितम् यत्तु षडशीतौ अन्यपूर्वास्वरूढासु त्रिदिनाच्छुद्धि-
रिष्यते नास्वेवानन्यपूर्वासु पंचाहोभिर्विशुध्यतीति तत्र पंचाहे मूलं चिंत्यम् यत्तु याज्ञवल्क्यः अनौरसेषु पुत्रेषु भार्यास्व-
न्यगतासु च इत्येकाहमाह तदसन्निधौ ज्ञेयम् यदा पितुरेकाहस्तदा सपिंडानां स्नानं अन्याश्रितेषु दारेषु परपत्नीसुतेषु च
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव नः पितेति प्रजापत्युक्तेः पितेति वोढुरुपलक्षणम् तथोपक्रमात् यत्तु दत्तकेपालक-
प्रतियोगिकपुत्रत्वात्पूर्वपितुर्न त्रिरात्रं पूर्वसंबंधनिवृत्तेश्च न दशाहादीति कश्चित् तन्न जनकेपि बीजिकादभिसंबंधा-
दनुबंध्यादघं त्र्यहमिति वाचनिकाशौचस्यानिवार्यत्वात् पितृमरणेपि दत्तकादीनां त्रिरात्रं शंकितत्वेप्राप्ते दत्तकश्चस्व-
यं दत्तः कृत्रिमः क्रीत एव च इत्येकपक्षस्य सूतके मृतके चैव त्र्यहाशौचस्य भागिन इत्युक्तेः स्मृतिकौमुद्यां हारलतायामप्येवम्
दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिंडानामेकाहः बीजिनश्चेति गौतमेन साप्तपौरुषसापिंड्योक्तेः सपिंडानां चैक २
कत्वात् सपिंडे तु पुत्रीकृते सपिंड दत्तौरसयोर्भ्रात्रोस्तत्पुत्रयोर्दशाह एव तत्राकांक्षाभावात् सपिंडत्वेन दशाहप्राबल्या-
च्च पूर्वापरयोर्भर्तुः सुतयोः पुत्रयोस्त्र्यहमाधवीये मरीचिः मातुरेक्याद्धि पितृकौ भ्रातरावन्यगोत्रजौ एकाहं सूत-
के तत्र त्रिरात्रं मृतके तयोरिति दिक् ऊढकन्यानां तु विष्णुराह संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पि-
तृगृहे स्यातां तदैकरात्रं त्रिरात्रं चेति प्रसवे एकरात्रं मरणे त्रिरात्रमिति विज्ञानेश्वरापरार्कौ माधवस्तु प्रसवेपि त्रिरात्रं

पित्रोः एकरात्रं भ्रात्रादिबंधुवर्गस्य दत्तानारी पितुर्गेहे सूयेतापि म्रियेत वा तद्बंधुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिरिति ब्रा-
ह्मोक्तेरित्याह यत्तु कश्चिदाह पक्षपदेन भ्रातरो गृह्यंते वाक्यांतरेण भगिनीमृतौ त्रिरात्रोक्तेरिति तच्चिंत्यम् तदभावेन द्विरोधा
भ्रातुः प्रसवेऽप्याह मृतौ त्रिरात्रमिति केचित् युक्तास्तु पक्षिणी परस्परं मृतौ भ्रातृभगिन्योः पक्षिणी भवेदिति ब्राह्मात् भ्रा
तृभिन्नानामेकाहः वर्गोक्तेः इतरेषां तु यथाविधीति वक्ष्यमाणवचनाच्च यत्तु प्रधानगृहे मृतौ पित्रोः पूर्णं भ्रातुरन्यह इति कू
र्मोक्तेर्निर्मूलत्वान्नाशौचं पितृपक्षे इत्येतद्विरोधाच्च भ्रांतः स्त्वानारी पितुर्गेहे प्रधाने सूयते यदा म्रियते वा सदा तस्याः पिता शुध्येत्त्रि
दिनैरिति कल्पतरौ शंखलिखितलेन पतिगृहे प्रसवे तु पित्रादीनामाशौचं नास्ति मृतौ पित्रोस्त्रिरात्रमस्त्येव प्रत्ता प्रत्तासु योषि
त्सु संस्कृतासंस्कृतासु च मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि अजातदंतासु पित्रोरेकरात्रमिति माधवीये शंखकार्ष्णाजि
निस्मृतेः वैजिकादभिसंबंधादित्यनेनेत्थं स्मृत्यर्थसारेऽप्येवम् माधवस्तु इदं त्रिरात्रं जातदंतापरम् दंतोत्पत्तेः प्रागेकरात्रं पित्रोः स च
स्त्रीशूद्रकन्यायामोढायां वा सर्वास्ववि शुचिः प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेदिति पुलस्त्योक्तेरन्यत्र कन्यामृतौ पित्रोः पक्षि-
णीत्याह षडशीतावपि पितृगेहाद्दत्तोऽन्यत्र यदि पुत्री प्रमीयते पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चय इति आमांतरेऽप्यभि
तिस्मृत्यर्थसारे भ्रातुस्तु पक्षिणी श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले पित्रोः स्वसरि तद्वच्च पक्षिणी क्षपयोन्निशामिति वृद्धबृहस्प
तिस्मृतेः शंखलिखितौ आदंतात्सोदरे सद्य आचूडादेकरात्रकम् आप्रदानात्त्रिरात्रं स्याद्दशरात्रमतः परम् पित्रोर्मृतौ स्त्रीणां त्रिरात्रम्
पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यम इति माधवीये च यममनूक्तेः इदं दशाहांतः ऊ
र्ध्वं तु पक्षिणी भ्रातुर्भगिनीगृहे तस्या वा तद्गृहे मृतौ त्रिरात्रमन्यत्र तु पक्षिणीति षडशीतावुक्तम् ब्राह्मेऽपि परस्परं मृतौ भ्रातृभगि

न्योः पक्षिणी भवेत् मातुलाशौचवत्पुत्र्याः पितृव्याशौचमिष्यत इति शिष्यास्त्वस्यानिर्मूलत्वात्सितृव्ये स्नानमात्रमाहुः त्रिंश
च्छ्लोक्यां मेने चोत्तार्यमातामहदुहितृकृतश्रोत्रियर्त्विक्सयाज्यस्वस्त्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तु भवत्र प-
क्षिण्याशौचमृत्विक्दुहितृकृतसहाध्यायिबंधुत्रयान्तेवासिश्वश्रूस्तु भिन्नश्वशुरभागिनिकाभागिनेयप्रयाणे मातामत्यो
चपित्रोः सपिंडचविरतौ मातुले मातुलान्यां चाथोसज्योतिरेचस्वविषयनृपतौ ग्रामनाथे च नरे शिष्योपाध्यायबंधुत्रययुग्
कृतेनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरमृतौ मातुले चैकरात्रम् रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वसंसब
धयुक्ते स्नानं चासौ पुत्रस्यादिदमपि सकलं सर्ववर्णेषु तुल्यामिति अत्र मूलं मिताक्षरादौ स्पष्टं दौहित्रभागिनेययोरुपनीत-
योस्त्रिरात्रम् अनुपनीतयोः पक्षिणी संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थि
त इति वृद्धमनूक्तेः संस्कृते दाहेन तेन दाहे त्रिरात्रं नान्यथेति गौडाः तन्न विशेषवैयर्थ्यात् मातुलादौ सान्निध्यविदेशाभ्यां
पक्षिण्येकाहं यो व्यवस्था मनुः त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः
त्रिये स्वगृहे मृते त्रिरात्रम् श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेदिति स्मृत्यर्थ इति माधवः एकग्रामीणत्वेकाहः कल्पिस्त्व
कल्पकालश्रौतस्मार्तयाजनपरे त्रिरात्रैकरात्रे ज्ञेये यद्यपि कर्म कुर्वत एव चान्वकः शब्दो भवतीति शंबराचार्यैः कर्ममध्ये कृ
स्विक्त्वमुक्तम् तथापि कर्मण्याशौचनिषेधात्तदुत्तरमेवैतत् ज्ञेयम् गौडास्तु समानोदकानां त्र्यहो गोत्रजानामहः स्मृतम्
मातृबंधोर्गुरोर्मित्रे मंडलाधिपतौ तथेति जाबालोक्तेर्मातृबंधुष्वेकाहमाहुः शिष्ये स्वोपनीते त्र्यहः शिष्यसतीर्थसब्रह्मचा
रिपुत्र्येण त्रिरात्रमहोरात्रमेकाहश्चेति माधवीये बौधायनोक्तेः अन्यत्र तु मनुः मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बांधवेषु चे

त्रिबंधुत्रयं आत्मपितृष्वसृमातृष्वसृमातुलपुत्राः पितुःपितृष्वसृमातृष्वसृमातुलपुत्राः मातुःपितृष्वसृमातृष्वसृमातुलपु
त्राश्चेतिविज्ञानेश्वरः अत्रपक्षिणी पितृष्वस्रादिकन्यानामूढानांलेकाहः तदूर्ध्वंचगर्भस्त्वेकेनेतिपूर्वोक्तवाक्यात् यत्तुषडशी
त्यां एवंपित्रोर्भगिन्योर्ययेपितामह्योस्तथा येमातामह्योश्चैवभागिन्योलक्षजाश्चयाः मातुलाःस्वस्यपित्रोश्चपत्न्यश्चै
षांभ्रजाश्चयाः भ्रातरश्चेतिसर्वेषुपक्षिणीस्वगृहेत्र्यहं एवंश्वशुरजामातृदौहित्रविपदिस्मृतम् यत्त्वयमः जामात
रिमृतेशुद्धिस्त्रिरात्रेणोभयोःस्मृता पक्षिणीशालकानांस्यादितिशातातपोब्रवी दितिनिर्मूलत्वान्मिताक्षरादिविरो·
धाच्चोपेक्ष्यं मदनपारिजातेविष्णुः असपिंडेस्ववेश्मनिमृतेएकरात्रम् अत्रहरदत्तोक्तःशवेन्नेत्यापस्तंबसूत्रतः शवेग्रामे
धत्तः शतादर्वागन्नमभोज्यंदीपमुदकुंभंवोपनिधायतुभुंजीतयदिसमानवंशानगृहयेवंसूतिकापामित्याह प्रधानगृह·
मृतोत्र गृहेयस्यमृतःकश्चिदसपिंडःकथंचन तस्याप्यशौचंविज्ञेयंत्रिरात्रंनात्रसंशयइत्यंगिरसोक्तमितिमाधवः एतेन
त्रिरात्रमसपिंडेषुस्वगृहेसंस्थितेषुचेतिकौर्मंव्याख्यानम् शुद्धितत्वेब्रह्मपुराणः श्वशूद्रपतितांश्चांत्यामृतांश्चैद्विजमंदिरे
शौचंतत्रप्रवक्ष्यामिमनुनाभाषितंयथा दशरात्राच्छुनिमृतेमासाच्छूद्रेभवेच्छुचिः द्वाभ्यांतुपतितेगेहमंत्येमासचतुष्ट
यात् अत्यंतेवर्जयेद्गेहमित्येवंमनुरब्रवीत् अंत्योम्लेच्छः अत्यंतःश्वपाकइतिवाचस्पतिः तत्रैवयमः द्विजस्यमरणेवेश्म
विशुध्यतिदिनत्रयात् संवर्तः गृहशुद्धिंप्रवक्ष्यामिअंतस्थशवदूषिते प्रोत्सृज्यमृन्मयंभांडंसिद्धमन्नंतथैवच गोमयेनो
पलिप्याथछागेनाघ्रापयेद्बुधः ब्राह्मणैर्मंत्रपूतैश्चहिरण्यकुशवारिभिः सर्वमभ्युक्षयेद्वेश्मततःशुध्यत्यसंशयम् बृह·
द्विष्णुः ग्राममध्यगतोयावच्छवस्तिष्ठतिकस्यचित् ग्रामस्यतावदाशौचंनिर्गतेशुचितामियात् गृहेपश्चादौमृतेप्येवम् य

त्रुमाधवीयेप्रचेतसामातृष्वस्रादिषुत्रिरात्रमुक्तम् मातृष्वसामातुलयोः श्वश्र्वाः श्वशुरयोर्गुरोः मृतेचर्त्विजियाज्येचत्रिरा
णाविशुध्यतीति गुरुराचार्यः कालिकूलागतः तत्स्वगृहसृतोज्ञेयम् श्वशुरयोरन्यत्रमृतावपिसान्निध्येत्रिरात्रं असान्नि
धौपक्षिणी देशांतरेएकरात्रं वक्ष्यमाणविष्णूक्तेरिति माधवगौडादयः अन्यत्रतु मातृष्वस्रादिषु पित्रोः स्वसरिनद्वच प
क्षिणीं क्षपयेन्निशामिति रुद्रमनूक्तम् यत्तु रुद्रमनुः भगिन्यांसंस्कृतायांतु भ्रातर्यपिचसंस्कृते मित्रेजामातरिप्रेतेदौ
हित्रेभगिनीसुते शालकेतत्सुतेचैव सद्यःस्नानेनशुध्यतीति तत् भ्रातृदौहित्रादौ देशांतरे शालकसुतजामात्रोः स्वदे
ज्ञेयम् शालकेतुस्वदेशेएकाहः आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वश्रूश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमिति
माधवीयेविष्णूक्तेः हरदत्तोपिदशश्लोक्यामप्येवम् श्वशुर्यः शालकः देशांतरेस्नानम् श्वशुरयोर्देशांतरेएकाहः जा
बालः एकोदकानांतुत्र्यहोगोत्रजानामहःस्मृतम् सर्वत्रमूल्याभावेपिक्रियाकर्तुर्दशाहः गुरोःप्रेतस्यशिष्यस्तुपितृ
मेधंसमाचरेत् प्रेताहारैःसमंतत्रदशरात्रेणशुध्यतीतिमनूक्तेः शिष्यइत्युपलक्षणं निरन्वयेसपिंडेतुमृतेसान्निध्या
न्वितः तदशौचंपुराचीर्त्वाकुर्यात्तुपितृवत्क्रियामितिमाधवीयेब्राह्मोक्तेः दिवोदासीये सगोत्रोवासगोत्रोवायोग्निंदद्या
त्सखेनरः सोपिकुर्यान्नवश्राद्धंशौचंचदशमेहनि यत्त्वेकविषयेपक्षिण्येकाहादिपक्षद्वयमुक्तम् तत्रसान्निध्यविदेशभे-
त्यादिकृताव्यवस्थात्रिंशच्छ्लोक्याम् वानप्रस्थेयतौचोपरमतिकुलजेषंढकेचाप्यपुत्रःस्याद्योषिज्ञोविप्रगुर्स्येमृतवतितु-
दिनंशुद्धिरिष्टेचसद्यः अत्रमूलमाकरेस्पष्टम् युद्धमूर्धिमृतस्यस्नानं उपनेराहवैशाखैः क्षत्रधर्महतस्यच सद्यःसं-
स्थितेनयज्ञस्तथाशौचमितिस्थितिरितिमनूक्तेः यत्तोऽल्पकर्मसर्वंतदेवेत्यर्थः यस्तुभारतेराजधर्मेषु अशौच्योहिहतःशू

रः स्वर्गलोकेमहीयते नराचत्रसुदकंतस्यनस्नानंनाप्यशौचकमितिश्राद्धादिनिषेधः सपुत्राद्यभावपरः अतएवतत्रकर्णादीनां
श्राद्धमुक्तम् अन्येतुदशपिंडनिषेधमाहुर्यांतिवत् यत्तुपराशरः आहवेपिहतानांचएकरात्रमशौचकमिति तदयुद्धस्तेन
कालांतरस्मृतेर्ज्ञेयम् असन्निधौक्तानमितिमाधवः ऋद्धितस्त्वग्निपुराणे दंष्ट्रिभिःशृंगिभिर्वापिहतानांम्लेच्छैश्चतस्करैः ये
स्वाम्यर्थेहतायांतिराजन्स्वर्गेनसंशयः सर्वेषामेववर्णानांक्षत्रियस्यविशेषतः यत्तुबृहस्पतिः डिंबाहवेविद्युताचराज्ञां
गोविप्रपालने सद्यःशौचंमृतस्याहुरुत्पंचान्येमहर्षयः तच्चक्षतंविनापराङ्मुखहतेचत्रिरात्रम् राज्ञावध्येहतेसद्यःशौचमन्यत्रत्रि
रात्रं तथैवव्याघ्रः क्षतेनाभिपतेयस्तुतस्याशौचंभवेद्विधा आसप्ताहात्त्रिरात्रंस्याद्दशरात्रमतःपरम् शस्त्राघातेत्र्यहादूर्ध्वंयदि
कश्चित्प्रमीयते आशौचंसकलंतस्यसर्ववर्णेषुनिश्चयः शस्त्राघातेक्षतंविनाशवस्पर्शेतुहारीतः शवस्पृशोग्राममनप्रविशे
युरानक्षत्रदर्शनाद्रात्रौचेदादित्यस्य यत्तुमनुः अन्हान्वैकेनरात्र्याचत्रिरात्रैरेवचत्रिभिः शवस्पृशोविशुध्यंतित्र्यहा
दुदकदायिनइति अन्हारात्र्याचेत्यहोरात्रमित्युक्तम् त्रिभिस्त्रिरात्रैरितिनवरात्रमेवंदशरात्रमित्यर्थः तत्तदन्ना
शनेनगृहवासेनापिज्ञेयम् अंगिराः आशौचंयस्यसंसर्गादापतेद्गृहमेधिनः क्रियास्तस्यनलुप्यंते गृह्याणां-
चनतद्भवेत् अथनिर्हाराद्याशौचं स्नेहेनसवर्णनिर्हारे तदन्नाशनेनगृहवासेचदशाहः तदन्नानशनेनगृहवासे
त्र्यहः गृहावासेन्नाभक्षणेचैकाहः भृतिग्रहणेननिर्हारेदाहेचतज्जात्याशौचं यदिनिर्हरतिप्रेतंप्रलोभाक्रांतमा
नसः दशाहेनद्विजःशुध्येद्द्वादशाहेनभूमिपः मासार्द्धेनतुवैश्यस्तुशूद्रोमासेनशुध्यतीतिकौर्मोक्तेः विजा
तीयनिर्हारेतुशवजातीयमाशौचं अन्नभृतिग्रहे द्विगुणम् अवरश्चेद्वरंवर्णंवरोवाप्यवरंयदि वहेच्छवंतदाशौ

वंदियार्थेद्विगुणंभवेदितिव्याघ्रोक्तेः कौर्मेमितादितिगौडाः दाहेप्येवम् यत्तुब्राह्मे योऽसवर्णंतुमूल्येननीत्वाचैवद
हेन्नरः आशौचंतुभवेत्तस्यप्रेतजातिसमंनृपेतितदापादिज्ञेयम् सोदकानिर्हरेत्तुदशाहइति माधवः अलंकरणे
शंखः कृच्छ्रपादोसपिंडस्यप्रेतालंकरणेकृते अज्ञानादुपवासःस्यादशक्तौस्नानमिष्यते धर्मार्थं अनाथसवर्णद
हणेक्रियाकरणेन्वद्विजस्यानंतयज्ञफलम् स्नानंप्राणायामोग्निस्पर्शश्चेतिमाधवीये अग्निदेप्येवम् प्रेतसंस्पर्शसं
स्कारेब्राह्मणोनैवदुष्यति वोढाचैवाग्निदाताचसद्यःस्नात्वाविशुद्ध्यतीत्यपरार्केहृद्पराशरोक्तेः मातुलस्यादिसं
बंधेत्रिरात्रं असंबंधिद्विजान्वहित्वादाहत्वाचसद्यःशौचंसंबंधे त्रिरात्रमितिपैठीनसिस्मृतेः गौतमभिताक्षरा
पांवृज्ञात्रिः सूतकाद्विगुणंशावंशावाद्विगुणमार्तवम् आर्तवाद्विगुणासूतीततोपिशवदाहकः अत्रपूर्वेणोत्तरनि
हृतिरर्थः विष्णुः मृतंद्विजंनशूद्रेणहारयेन्नशूद्रंद्विजेन देवलः ब्रह्मचारीनकुर्वीतशवदाहादिकक्रियाम्
यदिकुर्याच्चरेत्कृच्छ्रंपुनःसंस्कारमेवच याज्ञवल्क्यः आचार्यपित्रुपाध्यायान्निर्हृत्यापिव्रतीव्रती अनुगमनेतु
सपिंडेनदोषः विहितांहिसपिंडानांप्रेतनिर्हरणादिकम् तेषांकरोतियःकश्चित्तस्याधिक्यंनाविद्यतइतिदेवलो
क्तेः दोषःस्यात्त्वसपिंडस्यतत्रनाथक्रियांविनेतिहारीतोक्तेश्च सर्मोत्कृष्टवर्णंतुमाधवीयेकण्वः अनुगम्यशवं
बुद्ध्यास्नात्वास्पृष्ट्वाहुताशनम् सर्पिःप्राश्यपुनःस्नात्वाप्राणायामैर्विशुद्ध्यतीति हीनवर्णंतुक्षत्रियेहः वैश्येपक्षि
णी शूद्रेत्रिरात्रम् क्षत्रियस्यवैश्येहः शूद्रेपक्षिणी वैश्यस्यशूद्रेहरितिविज्ञानेश्वरः माधवस्तु विप्रस्यवैश्ये
त्र्यहः क्षत्रस्यशूद्रेप्येवम् अन्यत्तुप्राग्वत् स्नानाग्निस्पर्शघृताशनानिसर्वत्रेत्याह हीनवर्णस्यदाहोर्ध्वदेहिकक

रणेतुब्राह्मे ब्राह्मणोहीनवर्णस्यनकुर्यादौर्ध्वदेहिकं कामाल्लोभात्तथामोहात्कृत्वातज्ज्ञातितांव्रजेत् मनुः ब्राह्मणाना-
याजनंकृत्वापरेषामंत्यकर्मच अभीचारमहीनंचत्रिभिःकृच्छ्रैर्व्यपोहति परेषांसर्ववर्णानांहीनेषुलघुगुणथत्रैगुणथ
चातुर्गुण्यासूत्रं अथरोदने समोत्तमवर्णयोःसंचयनात्पूर्वंसचेलस्नानमूर्ध्वमाचमनं हीनवर्णेषुतुसंचयात्प्राक्
सचेलमूर्ध्वंस्नानमात्रम् विप्रस्यक्षत्रवैश्यविषयेतुब्राह्मे अस्थिसंचयनेविप्रोरोतिचेत्क्षत्रवैश्ययोः तदास्नातःस
चैलस्तुद्वितीयेहनिशुध्यति कृतेतुसंचयेविप्रःस्नानेनैवशुचिर्भवेत् क्षत्रस्यवैश्येप्येवम् शूद्रेतुसंचयात्प्राक्वि
प्रस्यत्रिरात्रम् क्षत्रवैश्ययोर्द्विरात्रम् ऊर्ध्वंतुद्विजानामेकाहः शूद्रस्यशूद्रेस्पर्शोविनासंचयात्पूर्वमेकाहः ऊर्ध्वंस
ज्योतिरितिमाधवीयेज्ञेयम् शुद्धितत्त्वेपारस्करस्तु अस्थिसंचयनादूर्ध्वमासंयावद्विजातयः दिवसेनैवशुध्यंति
वाससांक्षालनेनच स्नानेर्दिवसेनैवत्र्यहात्क्षत्रियवैश्ययोस्तिस्रःसपिंडानांरोदननिर्हारादावदोषइत्युक्तंप्राक् विज्ञानेश्वरस्तु मृ
तस्यबांधवैःसार्धंकृत्वातुपरिदेवनम् वर्जयेत्तदहोरात्रंदानश्राद्धादिकर्मचेतिपारस्करोक्तेःसर्वत्रैकरात्रमाह अथाशौचान्नभ-
क्षणेविष्णुः ब्राह्मणादीनामाशौचे यःसकृदेवान्नमश्नातितस्यतावदाशौचम् यावत्तेषामाशौचव्यपगमेप्रायश्चित्तंमि
ति अज्ञानेत्वंगिराःअंतर्दशाहेभुक्त्वान्नंसूतकेमृतकेपिवा अस्याशौचंभवेत्तावद्यावदन्नंव्रजत्यधः प्रायश्चित्तंत्व
त्याविप्रस्यवर्णक्रमेणैकाहत्र्यहपंचाहसप्ताहोपवासाः दशविंशतिः षष्टिःशतंचप्राणायामाः पंचगव्याशनंच
अभ्यासेद्विगुणं आपदितुप्राणायामशतंपंचशतमष्टशतमष्टसहस्रंगायत्रीजपश्चसत्यापदितुसवर्णाशौचेत्रिर-
घमर्षणंगायत्र्यष्टसहस्रंच क्षत्रियाशौचेउपवासस्तच्चवैश्याशौचेत्रिरात्रोपवासश्च शूद्राशौचेकृच्छ्रः क्षत्रवैश्य-

यो: पंचशतमष्टशतं गायत्रीजपउक्तयेषु शूद्रस्य सर्वत्र स्नानम् मत्यानापदि विप्रस्य वर्णेषु सांतपनकृच्छ्रमहासांतप-
नचांद्राणि अभ्यासे तु मासिकद्वैमासिकत्रैमासिकषाण्मासिकानीत्यादि माधवीयादौ ज्ञेयम् अथ दासस्य स्वदा-
सुसन्नस्य सपिंडमृतौ स्नानमात्रेण स्वामिकार्ये स्पृश्यत्वम् भक्तदासस्य त्र्यहोर्ध्वं सद्यः स्पृश्यो गर्भदासो भक्तदा
सस्त्र्यहाच्छुचिरिति स्मृत्यंतरोक्तेः मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च स्नाने शरीरसंस्कारे गृहकर्मण्यदूषि
ताइति शातातपोक्तेश्च एतच्चानन्यसाध्यतत्कार्यमात्रे अन्यत्र मासाद्याशौचमस्त्येव एवं दास्यामपि सूतिकायास्त
स्या अस्पृश्यत्वमपि मासमात्रम् दासीदासश्च सर्वो वै यस्य वर्णस्य यो भवेत् तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सू
तकमित्यंगिरसोक्तेः वडवीनां चापि स्वामिशौचेन दासा याः स्पृश्या मासात्तु कर्मसु योग्याः स्युर्मासतो दासी सूती चेत्
स्पृश्यताभिधानात् दत्तदासादीनां स्वसपिंडमरणादौ स्वाम्याशौचसमसंख्यदिनोर्ध्वं सत्यपि मासाद्याशौचे स्वामिकार्ये
स्पृश्यनेति हरदत्तः दासांतेवासिभृतकाः शिष्याश्चैकत्रवासिनः स्वामितुल्येन शौचेन शुध्यंति मृतसूतक इति वृहस्प
तिस्मृतेः दासश्चान्नगृहजातस्तथा क्रीतो लब्धो दायादुपागतः अन्नकालभृतस्तद्वदाहितः स्वामिनाच यः मोक्षि-
तो महतश्चर्णात् युद्धप्राप्तः पणेजितः तवाहमित्युपगतः प्रव्रज्यावसितः कृतः भक्तदासश्च विज्ञेयस्तथैव च वडवा
हृतः विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृता इति नारदोक्तेषु गर्भभक्तदासौ विना ज्ञेयाः वडवा दासी तया हृ
तः तामुद्वास्य दासो जात इत्यर्थः अंतेवास्यपि तेनैवोक्तः स्वशिल्पमिच्छन्नाहर्तुं बांधवानामनुज्ञया आचार्यस्य
वसेद्दत्वा कालं स कृतनिश्चितम् आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनमिति शिष्यस्तत्तुल्यो विद्यार्थी दासादेः स्वा

मित्त्सापिंडमरणेतुविष्णुः पत्नीनांदासानामानुलोम्येनस्वामित्तुल्यमाशौचंमृतेस्वामिन्यात्मीयमिति प्रतिलोमदा-
सानामाशौचाभावः वर्णानामनुलोम्येनदास्यंनप्रतिलोमतइति याज्ञवल्क्योक्तेः अथरात्रौजननेमरणेवारात्रिंत्रिभा
गंकृत्वाद्यभागद्वयेचेत्पूर्वदिनं अंत्येतूत्तरमितिमिताक्षरायाम् यत्तुप्रागर्धरात्रात्प्राक्वासूर्योदयात्पूर्वदिनमित्युक्तं
तत्रदेशाचारतोव्यवस्था सर्वंचाशौचमाहिताग्नेर्दाहात्तद्भिन्नस्यमरणमारभ्यज्ञेयम् अनग्निमत्तउत्क्रांतेराशौचादि
द्विजातिषु दाहादग्निमतोविंद्याद्विदेशस्थेमृतेसतीतिपैठीनसिस्मृतेः साग्निराहिताग्निआहिताग्निश्चेत्प्रवसन्म्रीयेतपु
नःसंस्कारंकृत्वाशववदाशौचमितिवासिष्ठेविशेषोक्तेः दाहादेवतुकर्तव्यंयस्यवैतानिकोविधिरिति ब्राह्माच्च यत्तु धू-
र्तस्वामिनारामांडारेणचोक्तम् आहिताग्नेरपिमरणाद्येवदशरात्रंदशाहंशावमाशौचमितिमरणनिमित्तत्वात्तस्य
यत्तुदाहादेवतस्याशौचमुक्तम् तत्संस्कारनिमित्ताशौचंपृथगेव तेनगृह्याग्नेःसंस्कारांगंत्रिरात्रम् श्रौताग्नेस्तुदशरा
त्रम् मरणनिमित्तंतूभयोर्दशाहंदाहात् प्रागपीतितद्वचनाविरोधात्पूर्वस्यैवोत्कर्षान्मूलकस्यनालाघवाच्चचिंत्यम् अ
थातिक्रांताशौचं तत्राशौचमध्येजननादौज्ञातेतच्छेषेणशुद्धिः विगतंतुविदेशस्थंशृणुयाद्योह्यनिर्दशम् यच्छेषं
दशरात्रस्यतावदेवाशुचिर्भवेदितिमनूक्तेः अत्रकेचिदेतत्पुत्रातिरिक्तविषयम् तेषांत्वाशौचमध्येश्रवणेपितदाद्येवद-
शाहादि पितरौचेन्मृतौस्यातांदूरस्थोपिहिपुत्रकः श्रुत्वातद्दिनमारभ्यदशाहंसूतकीभवेदित्यस्यसर्वापवादत्वादित्या
हुः तन्न ज्ञानमरणस्यनिमित्तत्वात् अनग्निमत्तउत्क्रांतेरित्यादिविरोधाच्च स्मृत्यर्थसारेपि जननेमरणेवाप्रथम-
दिनादूर्ध्वंज्ञातेपुत्रादीनांशेषेणैवशुद्धिरिति षडशीतावपरार्केचैवम् दशाहादूर्ध्वंज्ञातेतुषड्वसिष्ठः मासत्रयेत्रि

रात्रंस्यात्षण्मासेपक्षिणीतथा अहस्तुनवमादर्वागूर्ध्वंस्नानेनशुध्यति जननेत्वतिक्रांताशौचंनास्त्येव नाशुद्धिःप्र
सवाशौचेव्यतीतेषुदिनेष्वपीतिदेवलोक्तेः पितुः स्नानंतत्रापिभवत्येव निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मच
वाससाजलमाप्लुत्यशुद्धोभवतिमानवइतिमनूक्तेः तच्चातिक्रांताशौचंदशाहादिजात्याशौचविषयंनत्वनुपनीतादि
निमित्तत्रिरात्रादौ अनुपनीतेतुविषमंतस्मिन्नेवातिकालजमितिव्याघ्रोक्तेः निर्दशंज्ञातिमरणंअतिक्रांतेदशाहेत्विति
मनूक्तेश्च माधवीयेदेवलस्तु आत्रिपक्षात्त्रिरात्रंस्यात्षण्मासात्पक्षिणीततः परमेकाहमावर्षादूर्ध्वंस्नातोविशु-
ध्यतीत्याह तत्रापदनापद्विषयत्वेनव्यवस्था इदंचैकदेशे देशांतरेतुस्नानमात्रम् देशांतरमृतंश्रुत्वा क्लीबवैखा-
नसेयतौ मृतेस्नानेनशुध्यतिगर्भस्रावेचगोत्रिणइति पराशरोक्तेरितिविज्ञानेश्वरः स्नानंवत्सरांते अर्वाक्त्रिप
क्षात्त्रिनिशंषण्मासाच्चदिवानिशं अहःसंवत्सरादर्वाग्देशांतरमृतेष्वपीति विष्णूक्तेरितिमाधवः इदंसपिंडानां दे
शांतरेस्नानंसोदकानामितियुक्तम् लक्षणंत्वाह बृहस्पतिः महानद्यंतरंयत्रगिरिर्वाव्यवधायकः वाचोयत्रविभि
द्यंतेतद्देशांतरमुच्यते देशांतरंवदंत्येकेषष्टियोजनमायतम् चत्वारिंशद्वदंत्यन्ये त्रिंशदन्येतथैवचेति एतत्सर्वमा
तापितृभिन्नविषयम् तयोस्तुपितरौचेदितिपूर्वोक्तवसिष्ठवाक्यात्सदापूर्णमेवदशाहादि स्मृत्यर्थसारेपि मातापि
तृमरणेदूरदेशेपि संवत्सरोर्ध्वमपिपुत्रोदशाहादिकंपूर्णमाशौचंकुर्यात् स्त्रीपुंसयोःपरस्परंसपत्नीपुत्रेष्वेवमिति
शुद्धितत्वादर्पणेप्युक्तं ऊर्ध्वंसंवत्सराद्यावद्बंधुश्चेच्छृणुयान्मृतः भवेदेकाहमेवात्र तच्चसन्यासिनांत्विति देवलो
क्तेः पित्रोरब्दमध्येत्रिरात्रमूर्ध्वमेकाहः बंधुमातापितृभिन्नानां पूर्वोक्तदशाहस्तु कलिंगादिदेशपरइत्याहुः तेच-

ध्रुपदस्य पुत्रादिपरत्वेमानाभावाद्दुपेक्ष्याः सापत्नमातुरुक्तदक्षः पितृपत्न्यामपेतायांमातृवर्जंद्विजोत्तमाः संवत्सरेव्यतीतेपि
त्रिरात्रमशुचिर्भवेत् हीनवर्णमातृषुसपत्नीषुनैवमितिस्मृत्यर्थसारे केचित्पितुःपत्न्यांप्रमीतायामौरसेतनयेतथेतिश्राद्ध
केसेरसेपीदमाहुः षडशीत्यामप्येवम् एतत्सर्ववर्णतुल्यम् तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेतिव्याघ्रोक्तेः अथाशौच
संपातेउच्यते तत्रशावेशावंसूतकेसूतकम् शावेसूतकंसूतकेशावंवातत्राप्युत्तरंकालतः पूर्वेणसमंन्यूनमधिकंचेतिद्वादश
भेदाः यदैकदिनेसमन्यूनमधिकंवाशौचद्वयंतत्रतंत्रेणान्यसिद्धिः द्वयोरेककालत्वात् यदातुद्वितीयादिदिनेषूत्तरंस-
जातीयंशावंजननंवासमकालंन्यूनकालंवापरंस्यात्तदाषड्रूपपक्षेषुपूर्व शेषेणशुद्धिः अंतराजन्ममरणेशेषाहोभिर्विशु
ध्यतीतियाज्ञवल्क्योक्तेः अंतराजातइत्यर्थः ज्ञातस्यैवजननादेर्निमित्तत्वात् पूर्वाशौचोत्तरंतन्मध्योत्पन्नेजातेनूत्तरमेवका
र्यम् शुद्धित्वेप्युक्तम् पूर्वाशौचांतरुत्पन्नंसमानंलघुवानिमित्तंनकालादुपरिस्थितंस्याशौचहेतुरेव अज्ञातंतुन आविज्ञा
तेनदोषःस्याच्छ्राद्धादिषु कथंचनेत्यस्याशौचसांकर्येपिप्रवृत्तेः तेनाज्ञानाद्धोत्सर्गादौकृतेपश्चात्ज्ञानेपिनादोषइति
माधवीये यमोपि जननेजननंचेत्स्यान्मरणेमरणंतथा पूर्वशेषेणशुद्धिःस्यादुत्तराशौचवर्जनम् अत्रकेचिद्दशाहस्या
तांचेत्पुनर्मरणजन्मनी तावत्स्यादशुचिर्विप्रोयावत्तत्स्यादनिर्दशमितिमनुपराशराद्यैर्दशाहग्रहणात्संपूर्णाशौचएवपूर्व
शेषेणशुद्धिः त्र्यहाद्यल्पाशौचसंपातेतूत्तरेणैवशुद्धिरित्याहुः हरदत्तोप्येवमाह गौडाअप्येवम् तन्न याज्ञवल्क्यादिवि
शेनदशाहस्यतुल्यकालाशौचोपलक्षणत्वात् समानाशौचसंपातेप्रथमेनसमापयेत् असमानेद्वितीयेनधर्मराजवचो
यथेतिमाधवीयेशंखोक्तेः अपरार्कमिताक्षरादिविरोधाच्च यदातुसूतकेशावंसमंन्यूनमधिकंवातदानपूर्वशेषाच्छु-

ऽद्धिः तदाहांगिराः सूतके मृतकंचेत्स्यान्मृतके त्वथ सूतकम् तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् षट्त्रिंशन्मते श
वाशौचे समुत्पन्ने सूतकंतु यदा भवेत् शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी चतुर्विंशतिमतेपि मृतेन शुध्यते जातं
न मृतं जातकेन तु अतो यदा दशाहजननमध्ये तदन्तर्वा त्र्यहादि शावं तदा पूर्वेण शुद्धावपि तन्निमित्तमस्पृश्यत्वं भवत्येव
मरणोत्पत्तियोगे तु गरीयो मरणं भवेदिति कौर्माच्च गौतमव्याख्यायां तूद्धात्रिरपि सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तं
वम् आर्तवाद्द्विगुणा सूतिस्ततोपि शवदाहकः अत्र पूर्वपूर्वेण नोत्तरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्यादित्यर्थः षडशीत
वपि स्वभाववहुसूतिस्तु न्यूनशावविशोधिनी तिराश्रिशेषादौनाधिताह्नि त्रिदिने रागन्तुकैः सूतेर्बहुत्वं न स्वभावेन अतस्त
न्न्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेत्युक्तम् श्रौतेपि नागन्तुकैरथाहोभिराशौचमपनुद्यते नत्वपातनि-
मित्तेन शावस्यान्यस्य शोधनमिति एवंच पक्षाः यदा तु त्र्यहाद्यल्पाशौचमध्ये सजातीयं विजातीयं वा दीर्घकालसूतकं
तदा पुनस्तत्पूर्णं कार्यम् न पूर्वेण शुद्धिः स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव
शुध्यतीत्युशनसोक्तेः तेन त्र्यहादिशावमध्ये दशाहादिसूतकेपि न पूर्वेण शुद्धिरित्यपरार्कः शावनिमित्तमस्पृश्यत्
भवत्येव शुद्धिविवेके तु शावेन शुध्यते सूतिरिति पाशुकेः तत्राप्युत्तराशौचनिवृत्तिरुक्ता तन्न उत्तरस्य कालाधि
न बलवत्वात् माधवीये यमोपि अघवृद्धिमदाशौचं पश्चिमेन समापयेत् यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि
शौचं पुनरागच्छेत्तत्समाप्य विशुध्यति हारीतोपि गुरुणा लघु शुध्येत्तु लघुना नैव तद्गुरु इति गुरुत्वं लघुत्वं च का
लमेव पूर्वानुरोधात् एतच्च हरदत्तेन स्पष्टमुक्तम् मिताक्षरायामेवम् यत्तु आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा

मरणोत्पत्तियोगेतुगरीयोमरणांभचेदिति हारीतकोर्भादितनास्पृश्यत्वाभिप्रायं शावस्यगुरुत्वंज्ञेयम् क्वचिदल्पकालेनापि-
दीर्घकालाशौचानिवृत्तिमाहदेवलः परतःपरतोशुद्धिरघवृद्धौविधीयते स्याच्चेत्पंचतमादन्हःपूर्वेणैवात्रशिष्यते अ
स्यार्थः अघवृद्धौदीर्घाशौचेपरतोशुद्धिःपरमाशौचम् यदिपूर्वाशौचमुत्तरस्यपंचमदिनात्परतोनुवर्ततेतदापू
र्वेणैवशुद्धिः पूर्वस्योत्तराशौचाद्धिकालव्यापित्वेपूर्वशेषाच्छुद्धिरित्यर्थः यथाषष्ठमासेगर्भपातनिमित्त
षडहाशौचमध्येदशाहपातेपूर्वेणोत्तरनिवृत्तिः यथाचात्र्यहमध्येस्रावपातनिमित्तचतुरहपंचाहयोरिति कश्चि
त् तन्न दशाहावधिपूर्वशेषशुध्यावेदकवाक्यविरोधात् षष्ठादिदिनेपूर्णाशौचमंत्यरात्रौतुद्व्यहइत्यनौचित्या
च्च अस्मद्गुरवस्तुपंचतमादन्हआनतोन्यूनंत्र्यहादिचेत्स्यादस्मिन्विषयेपूर्वेणैवाशुद्धिःशिष्यते दशाहादिरात्रि
शेषेत्र्यहादिपातेत्र्यहाद्यल्पाशौचानांपरस्परंरात्रिशेषेसंपातेत्वनव्यहादिवृद्धिरि त्यर्थमाहुः क्वचित्पूर्वशेषेण-
शुद्धेरपवादमाहगौतमः रात्रिशेषेसतिद्वाभ्यांप्रभातेतिसृभिरिति प्रभातेंत्ययामे रात्रिशेषेद्व्यहाच्छुद्धिर्यामशे
षेशुद्धिस्त्र्यहादितिशातातपोक्तेः इदंशावान्तेसूतकपातेसजातीयेवातुल्यंअन्यथेत्येके चित् रात्रिशब्दःअहोरात्रप
रः अहःशेषेद्वाभ्यांप्रभातेतिसृभिरितिशंखलिखितोक्तेः अथयदिदशरात्राःसन्निपतेयुराद्यंदशरात्रमाशौचमान
वमाद्दिवसादतऊर्ध्वंद्विरात्रेणव्युष्टायांत्रिरात्रेणेतिबोधायनोक्तेः पुनःपातेदशाहात्प्राक्पूर्वेणासहगच्छति दशमे
ऽह्निपतेयस्याहद्वयात्सविशुध्यतीति प्रभातेतुत्रिरात्रेणदशरात्रेष्वयंविधिरितिदेवलोक्तेश्च नवमदशमशब्दोचो-
पांत्यांत्यदिनपरो तेनक्षत्रियादावपितथेत्याहुः माधवीयेप्येवम् अन्येत्वाहुः अंतर्दशाहेस्यातांचेत्पुनर्मरणज-

जन्मनी नावस्यादशक्निर्विप्रोयावत्स्याद्निर्दशमिति मतुपराशराद्यैर्दशमदिनेनोत्तरस्यशङ्केरुक्तत्वात्विरोधः सा
स्एव विरोधेन्च यद्वैकिंचनमनुरवदत्तद्भेषजम् कलौपाराशरस्मृतिरित्यनेनपूर्ववचसांबाधः अतएवचान्वस्यातिनात्तेषा
मनाकरत्वमुक्तं साकरत्वेपिजातिमात्रविप्रादिविषयम् देशांतरविषयंवायुगांतरविषयंवास्तु तेनगौतमीयेरात्रिश
न्दोनाहोरात्रपरः रात्रिमात्रावशिष्टेइतिमिताक्षरोक्तेश्च नकुक्कविकृतेरिवान्यथाव्याख्याप्युक्ता माधवस्तु अनिर्गतदशाहमि
तिपूर्वस्त्वग्रंथविरोधादुपेक्ष्यइति अस्मत्पितृचरणास्तु बौधायनीये आनवमाद्दिवसादितिद्वितीयाशौचस्यनवमेदिनेप्रथमस्यदशः
ममेवाह व्यहादिवृद्धेः पूर्वशेषापवादत्वात्तस्यचन्यायतोद्वितीयदिनादेवप्रवृत्तेः अतऊर्ध्वमिति दशमरात्रिपरं धांरव
लिखितोक्तौ देवलोक्तौ चाह शेषेदशमेन्हि चातीते रात्रोपतेदित्यर्थः दशम्यांपितानामकुर्यादितिवत् तेनमन्वाद्यैर्वि
रोधोनापिमिताक्षराद्यैरित्याहुः अपरार्केनिर्णयामृतस्मरसोप्येवम् यत्तुतत्रैवब्राह्मे आद्यंभागद्वयंयावत्सूतकस्यतु
सूतके द्वितीयेपतितेत्वाद्यात्सूतकाच्छुद्धिरिष्यते अतऊर्ध्वंद्वितीयात्तुसूतकांताच्छुचिःस्मृतः एवमेवविचार्यस्यान्मृ
केमृतकांतरे मृतकस्यांतरेयत्रसूतकंप्रतिपद्यते सूतकस्यांतरेवाथमृतकंयत्रविद्यते मृतकांतेभवेत्तत्रशुद्धिर्वर्णे
धुसर्वशइति अस्यार्थस्तत्रैवोक्तः पूर्वाशौचचरमाहोरात्रस्यदिनरूपेआद्यभागद्वयेन्याशौचपातेपूर्वेणाशुद्धिः १
गद्वयोर्ध्वंरात्रौसूतकांतरेद्वितीयात्पूर्वभिन्नात्सूतकांताच्यहादिरूपाच्छुद्धिरिति अपरार्केत्वाशौचकालतंत्रेथाप्य
भज्यनिर्गुणविषयत्वेनेदमुक्तम् अस्यवचनस्यनिर्मूलत्वोक्ति रत्नोक्तिरेव अतः पूर्वाशौचांत्यरात्रामन्याशौ-
चेहोरात्रद्वयमधिकं रात्रेरंत्ययामेतुदिनत्रयमिति भट्टचरणोपदिष्टः पंथाः एतत्संपूर्णाशौचसंपातेएव रात्रिशेषे

त्रिरात्रादिसंपातेतुपूर्वशेषेणैवशुद्धिः द्विरात्रादिवृद्धेः पूर्ववाक्येर्दशाहविषयत्वादपवादाभावेशेषशब्देरेवसामान्यतः
प्रवृत्तेः षडशीतौतुदशाहांतेव्यहपातेपिद्वित्रिदिनवृद्धिरुक्ता रात्रिशेषेयदाशौचंपूर्वानाधिकमापतेत् ऊर्ध्वंदिनद्वयंपू-
र्वाधामशेषेदिनत्रयमिति अनधिकंसमंन्यूनंचातत्तुच्छंनिर्मूलत्वादंतेपक्षिण्यादिपातेपिद्विरात्रादिदृष्ट्यापत्तेश्च पू-
र्वाशौचांतर्वर्धितद्वित्रिदिनमध्येधिकाशौचांतरपातेतुवर्धितस्याल्पत्वादाधिकेनैवशुद्धिः नचवर्धितस्यपूर्वशेषत्वंशं
कनीयम् रात्रिशेषपूर्वशेषशब्दस्यपवादेनैमित्तिकारत्तिन्यायोज्जीवनात् अपवादाभावेउत्सर्गस्यप्राप्तेः अपवादां
तरमाहधारवः मातर्यग्रेप्रमीतायामशुद्धौम्रियतेपिता पितुःशेषेणशुद्धिःस्यान्मातुःकुर्यात्तुपक्षिणीम् पादत्रयंस्य
छम् तुर्यस्यत्वयमर्थः पित्राशौचमध्येमातृमृतौपित्राशौचांतेमातुःपक्षिणीमधिकांकुर्यादिति अत्राशुद्धावित्युक्तेरा-
सहादेःपितुराशौचाभावान्मातृमरणेनपक्षिणीकिंतुपूर्णमेवाशौचं इयंचपक्षिणीतृतीयादिदिनपरानाद्यदिनद्वये प्र
तिनिमित्तनैमित्तिकावृत्तिन्यायापवादपूर्वशेषापवादत्वादितिपितृचरणाः सपिंडाद्याशौचेनमातापित्रोराशौचापगमो
नास्त्येव एवंभर्तुरपि इयंचपक्षिणीदशमदिनात्पूर्वमातृमरणेज्ञेया दशम्यांरात्रौतत्प्रभातेवामातृमरणेव्यहव्यहसमुच्चि
तापक्षिणीतिकश्चित् तन्न संख्यांतरोपजननापत्त्याव्यहादिश्रुतिबाधापत्तेः अतएवैकादेयाषट्देयाइत्यादौश्रुतसंख्या
बाधापत्तेः समुच्चयोनिरस्तोद्वादशे गुरुणिलघोरंतर्गतेः गुरुणालघुशुद्धोदित्युक्तेश्च मातुरन्वारोहणेतुनपक्षिणी
यदानारीविशेदग्निंप्रियस्यप्रियवांछया तदाशौचंविधातव्यंभर्त्राशौचक्रमेणहीति पृथ्वीचंद्रोदयेलघुहारीतोक्तेः त
थैवषडशीतिमतेपि मृतंपतिमनुव्रज्यपत्नीचेदनलंगता नतत्रपक्षिणीकार्यापितृकादेवशुध्यति पुत्रोन्योवाग्निदस्तस्याः

तावदेवाशक्तिस्तयोः नचश्राद्धंचपिंडंचयुगपत्तुसमापयेत् गृहीताशौचानांपुत्राणांपितुःसंस्कारेमातुःसपिंडस्य वाम
रणेनाद्यंनिर्णयः अतिक्रांतकालाद्विद्यमाननिमित्तस्यबलवत्त्वात् द्वादशवर्षोत्तरंसंस्काराशौचमध्येसपिंडमरणेप्ये
वम् यत्तुअपरार्केधाह्ये ऋग्वेदवादात्साध्वीस्त्रीनभवेदात्मघातिनी त्र्यहाशौचेतुनिर्वृत्तेश्राद्धंप्राप्नोतिशास्त्रवदिति न
दर्तुराशौचोत्तरमन्वारोहणेत्रिरात्राशौचपरमिति पृथ्वीचंद्रः ब्राह्मणादेःक्षत्रियाद्यनुगमनेत्वाशौचपरमित्यपरार्कः
शङ्कितत्वाद्योगेडास्क भर्तुराशौचोत्तरमन्वारोहणेत्रिरात्रम् सहगमनेतुसंपूर्णम् युद्धहतस्यसद्यःशौचेन्वारोहणे
शासौचेस्त्रिरात्रत्वात् भर्तुरपित्र्यहेणपिंडदानम् एकचितौतुसद्यःशौचमित्याहुः अन्यस्याग्रक्तम् पूर्वशेषेणशुद्धिर
पयादांतरमुक्तंषडशीत्यां पूर्वाशौचेनयाशुद्धिःसूतकेमृतकेचसा सूतिकामग्निदाहित्वाप्रेतस्यकृतानपि निर्णयामृते
स्मृतिसंग्रहेपि इयांविशुद्धिरुदितासूतिकामग्निदंविना इदंमूल्येनदाहकरणे मातुलादिसंबंधेनदाहमात्रकरणेतुत्रिरा
त्रमेवेत्युक्तंमाक् स्वाग्निः सूतकाद्द्विगुणंशावंशावाद्द्विगुणमार्तवम् आर्तवाद्द्विगुणासूतिस्ततोपिशवदाहकः तथाशौ
चसंपातेपिनशावजनननिमित्तकार्यप्रतिबंधः आशौचेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् कर्तुस्तात्कालिकीशुद्धिःपूर्वा
शौचेनशुध्यतीतिप्रजापतिस्मृतेः आशौचेतुद्विविधेपिशातातपः अंतर्दशाहेजननात्पश्चात्स्यान्मरणंयदि प्रेतमुद्दिश्य
तेष्यांपिंडदानंयथाविधि प्रारब्धेप्रेतपिंडेतुमध्येचेज्जननंभवेत् तथैवाशौचपिंडांस्तुशेषान्दद्याद्यथाविधि मातुःपक्षिण
मध्येपितुरेकादशाहंकुर्यात् आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनीतिस्मृतेः केचित्त्विदंक्षत्रियादिपरम् विप्रादेस्त्वाशौ
चांतरेएकादशाहश्राद्धंनेत्याहुः अतएवविज्ञानेश्वरेण दशमंपिंडमुत्सृज्यरात्रिशेषेशुचिर्भवेदिति शुचित्वंमहैकोद्दि

श्रंगविप्रनिमंत्रणपरमितिवदतातत्रशब्दरंगत्वंदर्शितम् एवंचषोत्सर्गशय्यादावपिदेवयाज्ञिकेनत्वाशौचांतरेपिभवत्येवेत्युक्त
म् अथाशौचापवादः सचपंचधा कर्तृतः द्रव्यतः मृतदोषतः विधानाच्च आद्यो ब्रह्मचारियत्यादिषु नैष्ठिकानांवनस्थानांय-
तीनांब्रह्मचारिणाम् नाशौचंकीर्तितंसद्भिःपतितेचतथामृतइतिकौर्मोक्तेः तुर्यपादेशावेचापितथैवचेतिदेवलपाठः आशौच
मंत्यकर्मोपलक्षणम् ब्रह्मचारीनकुर्वीतशववाहादिकाःक्रियाः यदिकुर्याच्चरेत्कृच्छ्रंपुनःसंस्कारमेवचेतिदेवलोक्तेः एतस्मि
न्नापवादविषयम् आचार्यस्त्वप्युपाध्यायंमातरंपितरंगुरुम् निर्हृत्यब्रह्मचारीप्रेतंनव्रतेनवियुज्यतइतिमनूक्तेः हारीतः आचा
र्यस्त्वप्युपाध्यायंपितरंमातरंगुरुं निर्हृत्यतुव्रतीप्रेतंनव्रतेनवियुज्यते मातापित्रोस्तुयत्प्रोक्तंब्रह्मचारीतुपुत्रकः व्रतस्थोपिहिकु
र्वीतपिंडदानोदकक्रियाम् भवत्यशौचंनैवास्यनचाग्निस्तस्यलुप्यते स्वाध्यायंचनकुर्वीतपूर्वत्रद्विविधदर्शितम् संवर्तः अन्य
गोत्रोपसंबंधःप्रेतस्याग्निंददातियः पिंडंचोदकदानंचसदशाहंसमाचरेत् निर्हरणमंत्यकर्मपरम् एवंमातामहस्य यथा व्र
तस्थोपिसुतःपितुःकुर्यात्क्रियांनृप तथामातामहस्यापिदौहित्रः कर्तुमर्हतीत्यपरार्के भविष्योक्तेः मातापित्रोरुपाध्यायाचा
र्ययोरौर्ध्वदेहिकम् कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतादिति कालादर्शाच्च तत्रांत्यकर्मनिमित्तमस्पृश्यत्वम् दशाह
मस्त्येव सगोत्रोवासगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यान्नवश्राद्धं शुद्धोतुदशमेहनीतिदिवोदासोक्तवचनात् अतएवब्र
ह्मचारिणः शवकर्मणोव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोश्चेतिगौतमीयेव्रतनिवृत्तेरेवपर्युदासोनाशौचस्य संध्यादिकर्मलो
पस्तुनास्ति नत्यजेत्सूतकेकर्मब्रह्मचारीस्वकंक्वचिदितिछंदोगपरिशिष्टात् पित्रोर्गुरोर्विपत्तौतुब्रह्मचार्यपियःकृतः सत्र
तस्यापिकुर्वीतअग्निपिंडोदकक्रियाम् तेनाशौचंनकर्तव्यंसंध्याचैवनलुप्यते अग्निकार्यंचकर्तव्यंसायंप्रातश्चनित्यशइति

सत्त्रीअन्नसत्रवान् मुख्यसत्रस्यदीक्षितपदात्सिद्धेः व्रतीअनंतव्रतादिनियमवान् नव्रतिनांव्रतेइतिविष्णूक्तेः प्रचेताः कारवः
शिल्पिनोवैद्याःदासीदासास्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः कारवः सूपकाराद्याः शिल्पिनश्चेलनिर्णेज
काद्याः आतुरस्यव्याधिनाशार्थेदानादौतुलादानादेः प्रारंभोनांदीश्राद्धं संकल्पोवा यज्ञनेनडागोत्सर्गकोटिहोमादिः लघु
विष्णुः व्रतयज्ञविवाहेषुश्राद्धेहोमेर्चनेजपे आरब्धेसूतकंनस्यादनारब्धेतुसूतकं प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्र
योः नांदीश्राद्धंविवाहादौश्राद्धेपाकपरिक्रियेति पाकस्यपरिसमंतात्क्रियापाकप्रोक्षणमिति शुद्धिप्रदीपः तन्मंदंतीर्थे
तिआशौचेप्याकस्मिकतीर्थप्राप्तौविवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्मणि नतत्रसूतकंतद्वत्कर्मयज्ञादिकारयेदितिपैठीनसि
स्मृतेः अत्रविशेषःप्रागुक्तः जपःपुरश्चरणादिः स्तोत्रपाठः अविच्छेदेनसंकल्पितहरिवंशश्रवणादिश्च अतएवोक्तंब्रा
ह्मे गृहीतनियमस्यापिनस्यादन्यस्यकस्यचिदिति एवंदेवपूजादि मदनपारिजातेयमोपि शिवविष्ण्वर्चनंदीक्षायस्यचा
ग्निपरिग्रहः श्रौतकर्माणिकुर्वीतस्नातः शुद्धिमवाप्नुयात् गौडशुद्धितत्त्वेमंत्रमुक्तावल्याम् जपोदेवार्चनविधिः कार्यो
दीक्षान्वितैर्नरैः नास्तिपापंयतस्तेषांसूतकंवायतात्मनाम् राघवभट्टीयेनारदः अथसूतकिनःपूजांवक्ष्याम्यागमचो
दिताम् स्नात्वानित्यंचनिर्वर्त्यमानस्याक्रिययातुवै बाह्यपूजाक्रमेणैवध्यानयोगेनपूजयेत् यदिकामानचेत्कामानि
संपूर्वयदाचरेत् यत्तुनृसिंहकल्पे सदामंत्रजपंकुर्यात्सूतकादिष्वपिबुधः मनसाचहितस्तत्रस्मरेन्मंत्रंनतूच्चरेत् त-
न्मूत्राद्यशौचपरम् रामार्चनचंद्रिकायाम् अशक्तिर्वाशक्तिर्वापिगच्छंस्तिष्ठन्स्वपन्नपि मंत्रैकस्मरणोविद्वान्मनसै-
वसदाभ्यसेत् कालनियमाभावेतुहेयमेव उत्सवोरथयात्रादिः एषुनाशौचं अयंचाशौचाभावोनन्यगतित्वे आ-

चंद्रिकायांसंवर्तोक्तेश्च अत्रकर्मानधिकाररूपाशौचनिषेधएव अपरार्कमाधवादयस्तु एकाहमाशौचमाहुः आचार्यवाप्युपाध्यां
यंगुरुंवापितरंचवा मातरंवास्वयंदग्ध्वाव्रतस्थस्तन्नभोजनम् कृत्वापततिनोतस्मात्प्रेतान्नंतत्रभक्षयेत् अन्यत्रभोजनंकुर्यान्नच
तैःसहसंवसेत् एकाहमशुचिर्भूत्वाद्वितीयेहनिशुद्ध्यतीतिब्राह्मोक्तेः तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौचंच द्विशो
दासादयस्तुब्राह्मोक्तेः प्रथमेन्हिसंध्यालोपः ब्रह्मचारीयदाकुर्यात्पिंडनिर्वपणंपितुः तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुध्यती
तिप्रजापतिवचनात् द्वितीयाहादौपिंडदानकालेएवास्पृश्यत्वमात्रंनान्यदित्याहुः दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमे
तदितिमुक्तं अंत्यकर्माकरणेतुब्रह्मचारिणःपित्रादिमरणेप्याशौचाभावएवसोपिब्रह्मचर्यकालएव समावर्तनोत्तरंतुपूर्वमृतानां
त्र्यहाशौचंभवत्येव आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात् समाप्तेतूदकंदत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः तत्रापिविकल्पः
पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित् आशौचंकर्मणोंतेस्यात्त्र्यहंवाब्रह्मचारिणामितिछंदोगपरिशिष्टात् तथाकृतजीर्णकाष्ठे
नकिमप्याशौचंनकार्यमितिहेमाद्रिः शुद्धितत्वेकौर्मे सद्यःशौचंसमाख्यातंदुर्भिक्षेचाप्युपद्रवे डिंबाहवहतानांचविद्युतापा
र्थिवैर्द्विजैः उपद्रवेसंतमरके उपसर्गमृतेचैवसद्यःशौचंविधीयतइतिपराशरोक्तेः उपसर्गोत्यंतमरकइतिशूलपाणयनिरूढ भ
ट्टादयः याज्ञवल्क्योपि आपद्यपिचकष्टायांसद्यःशौचंविधीयतइतिमरणासमयेपिनाशौचम् तथाचशङ्खरत्नाकरेदक्षः स्व·
स्थकालेत्विदंसर्वंसूतकंपरिकीर्तितम् आपद्गतस्यसर्वस्यसूतकेपिनसूतकं अतःसतिवैराग्येसंन्यासोप्यातुरस्यभवतीतिकेचित्
अथकर्मतःविशुद्धिमाह तत्रकार्येषुसन्निवर्तिनृपनृपवदीक्षितर्त्विक् स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनाभयकारुशिल्पा
तुराणांसंभारव्येपुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थेनाशौचमितिशेषः

र्धस्यानोप स्पर्शवान्स्वयमिति हारीतोक्तेः दर्शंचपूर्णमासंचकर्मवैतानिकंचयत् सूतकेपित्यजेन्मोहात् आयश्चित्तीपतेद्विज
इतिमरीच्युक्तेः जन्महान्योर्वितानस्यकर्मत्यागोनविद्यते शालाग्नौकेवलोहोमः कार्यएवान्यगोत्रजैरितिजाबालोक्तेश्चे-
त्याहुः आशौचेप्येवम् याज्ञिकाअप्येवम् सूतकेतुसमुत्पन्नेस्मार्तंकर्मकथंभवेत् पिंडयज्ञंचरुंहोमंमसगोत्रेणकार-
येदितिजातूकर्ण्योक्तेश्च चरुः स्मार्तः स्थालीपाकः श्रवणाकर्मादिश्चेतिविज्ञानेश्वरः आरब्धंतुसपिंडेनापि कार्यम् नन्व
तत्कर्मकुर्वाणः सनाभ्योप्यशुचिर्भवेदितिमनूक्तेः छंदोगपरिशिष्टेपि होमःश्रौतेतुकर्तव्यः शुष्कान्नेनफलेनवा अकृ-
तंहावयेत्स्मार्तेतदभावे कृताकृतं अकृतव्रीह्यादि कृताकृतंतंडुलादि स्मार्तहोमादौतु विकल्पो ज्ञेयः शालाग्नौवैकइति
शातुक्तेः यदाकरणंतदान्यद्वारा अन्वेदंतत्वम् येषांबह्वृचादीनां द्वादशरात्रमहोमेपि नाग्निविच्छेदः तैर्नकार्यम् तैत्ति-
रीयादैः कार्यम् त्रिरात्रमहूयमानोग्निर्लौकिकः संपद्यते इति सुदर्शनभाष्यवचनात् समारूढेत्वग्नौ तेनापिनकार्यम् किं
पुनराधानमेव समारोपप्रत्यवरोहयोराशौचापवादाभावादनन्यकर्तृकत्वाच्च अन्यथापुनराधानमपिस्यात् यत्त्वाश्व
लायनः नौचापिसूतकेशावेपर्वणीष्टिंमहापदि पुष्यवत्यांचभार्यायांनकुर्यात्तांकदाचन स्मार्ताग्निः सूतकेशावेस्वयंन
जुहुयाद्द्विजः श्रौताग्निस्तुसकृज्जुह्वासमासेवास्वयंजुहोतीतितदपिसमारूढपरं तदाहसएव स्मार्ताग्निरासनोन्येषाम-
भावेसूतकादिषु समारोप्यतदंतेषुनिर्दह्यजुहुयात्स्वयमिति तथामनुः प्रसूतेनाग्निशुद्धिःयाइतिवैश्वदेवस्य त्वग्निसा-
ध्यत्वेपिवचनान्निवृत्तिः विप्रोदशाहमासीतवैश्वदेवविवर्जितइतिसंवर्तोक्तेः यद्यपि पंचयज्ञविधानंतुनकुर्यान्मृतजन्मे
नोरितितेनैवोक्तेः पूर्वनिषेधोप्यर्थस्तथाप्यापस्तंबादीनां वैश्वदेवस्यपंचयज्ञभिन्नत्वात्पृथङ्निषेधः हरदत्तस्त्वाशौ-

नैत्रि ज्ञेयः अत्रमूलमाकरेस्पष्टं अत्रदीक्षितस्यअवभृथात्पूर्वंगेहाशौचाभावः तदादित्वाशौचमस्त्येव तेनैववैतानो
पासनाः कार्याइतिवैतानस्येप्यवभृथादिनभवत्येव अतएवोक्तंमाधवीयेश्राद्धे तदहर्हीनदीक्षस्यत्रैविद्यस्यमहामा
खे स्नानंत्ववभृथेयावन्नावत्तस्यनसूतकमिति वैतानोपासनाः कार्याइत्यनेनैवसिद्धे ऋत्विजांदीक्षितानांचेतिपुनर्दीक्षि
तग्रहणंयजमानेस्वयंकर्तृत्वार्थं स्नानप्राप्त्यर्थंचेतिविज्ञानेश्वरः वस्तुतस्तुदीक्षणीयासंस्कृतस्यप्रागवभृथात्कर्म-
प्राप्त्यर्थंदीक्षितग्रहणंतेनततःपूर्वंनिषेधएव यजुर्भारंभोवरणंयज्ञेइतितद्वालिकृपरं तथाच छंदोगपरिशिष्टे न-
दीक्षिण्याःपरंयज्ञेनकृच्छ्रादितपश्चरन्निति शूद्धित्वेप्येवम् ऋत्विजांचमधुपर्कोत्तरमाशौचाभावः गृहीतमधुप
र्कस्ययजमानात्तुऋत्विजः पश्चादशौचेपतितेनभवेदितिनिश्चयइतिश्राद्धात् अतएवरामांडारः चतुर्णांवरणपक्षे-
न्येषामाशौचेन्यआगमयितव्यइत्याह एवंस्मार्तेपि तुलाकोटिहोमादौमधुपर्केसतिदोषाभावोज्ञेयः यजुर्भारंभोवर-
णंयज्ञइति तत्रापिमधुपर्कोत्तिंज्ञेयम् तेनाधानेपिपशुबंधादौतदभावादन्येभवंतीतिसिद्धम् अपवादांतरमाहयाज्ञ-
वल्क्यः वैतानोपासनाः कार्याःक्रियाश्चश्रुतिचोदनात् तत्रत्यागमात्रेस्नानोत्तरंस्वयंकर्तृत्वम् श्रौतेकर्मणितत्कालं
स्नातःशुद्धिमवाप्नुयादितिस्मृतेःत्यागातिरिक्तेतुश्रौतेस्मार्तेचान्यस्यैवकर्तृत्वम् सूतकेमृतकेचैवअशक्तोश्राद्धभोजने प्र
वासादिनिमित्तेषु हावयेन्नतुहापयेदितिछंदोगपरिशिष्टोक्तेः नित्यानिनिवर्तेरन्वैतानवर्जंशालाग्नौचैकेन्यएतानिकुर्युरितिपै
ठीनसिस्मृतेश्चेतिविज्ञानेश्वरः एकग्रहणंपूजार्थं तेनस्मार्तंकार्यमेवेतिहारलतायाम् दाक्षिणात्यास्तुविकल्पमाहुः
अपरार्कादिनिबंधास्तु श्रौतंसर्वंस्वयंकार्यंस्मार्ते त्यागातिरिक्तेन्यस्यैवकर्तृत्वम् त्यागमात्रंतुस्वस्य कर्मचैतानिकंका-

पंस्नानोप स्पर्शान्सयपिति हारीतोक्तेः दर्शंचपूर्णमासंचकर्मवैतानिकंत्यजेत् सूतकेपित्यजेन्मोहात्प्रायश्चित्तीभवेद्द्विज
इति मरीच्युक्तेः जन्महान्योर्वितानस्यकर्मत्यागोनविद्यते शालाग्नौकेवलोहोमः कार्यएवान्यगोत्रजैरिति जाबालोक्तेश्चे-
त्याहुः आशार्केप्येवम् याज्ञिकाअप्येवम् सूतकेतुसमुत्पन्नेस्मार्तकर्मकथंभवेत् पिंडयज्ञंचरुंहोमंअसगोत्रेणकार-
येदिति जातूकर्ण्योक्तेश्च चरुःस्मार्तःस्थालीपाकः श्रवणाकर्मादिश्चेति विज्ञानेश्वरः प्रारब्धंतुसपिंडेनापिकार्यम् नन्व
न्तःकर्मकुर्वाणः सनाभ्योप्यशुचिर्भवेदिति मनूक्तेः छंदोगपरिशिष्टेपि होमःश्रौतेतुकर्तव्यःशुष्कान्नेनफलेनवा अकृ-
तंहावयेत्स्मार्तेतदभावेकृताकृतं अकृतंव्रीह्यादि कृताकृतंतंडुलादि स्मार्तहोमादौतुविकल्पोज्ञेयः शालाग्नौवैकइति
भागुक्तेः पदाकरणंतदान्यद्वारा अत्रेदंतत्त्वम् येषांबह्वृचादीनां द्वादशरात्रमहोमेपिनाग्निविच्छेदः तेनैनकार्यम् तैत्ति-
रीयादेः कार्यम् त्रिरात्रमहूयमानोग्निर्लौकिकः संपद्यतेइति सुदर्शनभाष्येवचनात् समारूढत्वेनोतेनापिनकार्यम् किं
तु पुनराधानमेव समारोपप्रत्यवरोहयोराशौचापवादाभावादनन्यकर्तृकत्वाच्चअन्यथापुनराधानमपिस्यात् यत्त्वाश्व
लायनः तीर्थापिसूतकेशावेपर्वणीष्टिमहापदि पुष्पवत्यांचभार्यायांनकुर्यात्तांकदाचन स्मार्ताग्निःसूतकेशावेस्वयंन
जुहुयाद्द्विजः श्रौताग्निस्तुसकृत्तुलासमासेवास्वयंजुहोतीति तदपिसमारूढपरं नदाहसएव स्मार्ताग्निरात्मनोन्येषाम-
भावेसूतकादिषु समारोप्यनदंतेषुनिर्हत्यजुहुयात्स्वयमिति तथामनुः प्रसूहेनाग्निशुक्रियाइति वैश्वदेवस्यत्वग्निसा-
ध्यत्वेपिवचनान्निवृत्तिः विप्रोदशाहमासीनवैश्वदेवविवर्जितइति संवर्तोक्तेः यद्यपि पंचयज्ञविधानंतुनकुर्यान्मृतजन्म-
नीति तेनैवोक्तेः पूर्वनिषेधोव्यर्थस्तथाप्यापस्तंबादीनां वैश्वदेवस्यपंचयज्ञभिन्नत्वात्पृथङ्निषेधः हरदत्तस्त्वाशौ-

नेपि न ह्रू चैव वैश्वदेवः कार्यः तस्य ह्यनध्यायो यदा साशौचनिर्यद्दृश इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य निषेधात् संध्यादीनामप्य-
पवादमाहापरार्के पुलस्त्यः संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् न त्यजेत्सूतके वापि त्यजन्गच्छेदधो द्विजः सूतके मृ-
तके चैव संध्याकर्म समाचरेत् मनसोच्चारयेन्मंत्रान्प्राणायाममृते द्विजः यत्तु चन्द्रिकायां जाबालः संध्यां पंचमहायज्ञान्नैत्यकं
स्मृतिकर्म च तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रियेति यच्च संवर्तः सूतके कर्मणां त्यागः संध्यादीनां विधीयते यच्च वि-
ष्णुपुराणे सर्वकालमुपासीत संध्ययोः पार्थिवेष्यते अन्यत्र सूतकाशौचविभ्रमातुरभीतित इति तत्पूर्णसंध्यापरम् अ-
र्घान्ता मानसी संध्या कुशवारिविवर्जितेति शुद्धिदीपिकावचनोक्तेः पैठीनसिरप्यर्घ्यमंत्रोच्चारणमाह सूतके सावित्र्यांज-
लिं प्रक्षिप्य सूर्यं ध्यायन्नमस्कुर्यात् प्रयोगपारिजाते भरद्वाजोपि सूतके मृतके कुर्यात्प्राणायाममंत्रकम् तथा मार्ज-
नमंत्रांस्तु मनसोच्चार्य मार्जयेत् गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ग्र-
हणे श्राद्धादौ च प्राशौचापवादमाह व्याघ्रः स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके इति लैगोपि सूतके मृतके चैव न
दोषो राहुदर्शने तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते प्रयोगपारिजाते बृहस्पतिः कन्याविवाहे संक्रान्तौ सूतकं
न वृद्धशातातपः यदा भोजनकाले तु अशुचिर्भवति द्विजः भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति भक्ष-
यित्वा तु तं ग्रासमहोरात्रेण शुध्यति अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति इदमविशेषात्सूतकादिपरमपीति शङ्कितत्वे शू-
लपाणौ च अथ द्रव्यतः मरीचिः लवणे मधुमांसे च पुष्पमूलफलेषु च शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च तिलौ-
षधाजिने चैव पक्वापक्वे स्वयंग्रहः पुण्येषु चैव सर्वेषु नाशौचं मृतसूतके स्वयमेव स्वाम्यनुज्ञया ग्राह्यं न तु दत्तादित्यर्थः न-

येतुतद्दत्तादपिनदोषः पक्वंलड्डुकादि अपक्वंतंडुलादि एतदन्नसत्रपरम् अन्नसत्रेप्रवृत्तानांमाममन्नमगर्हितम् भुक्त्वा
पक्वान्नमेतेषांत्रिरात्रंतुव्रतीभवेदित्यंगिरसोक्तेः पक्वान्नमोदनादि नतुभक्ष्यंषट्त्रिंशन्मते उभाभ्यामपरिज्ञातेसूतकेनैव
दोषकृत् एकेनापिपरिज्ञातेभोक्तुर्दोषमुपावहेत् विवाहोत्सवयज्ञेषुत्वंतरामृतसूतके परैरन्नंप्रदातव्यंभोक्तव्यंचद्विजोत्त
मैः भुंजानेषुतुविप्रेषुत्वंतरामृतसूतके अन्यगेहोदकाचांताःसर्वेतेशुचयस्मृताः बृहस्पतिः विवाहोत्सवेयाधकृत्वा पू
र्वसंकल्पितान्नेषुनदोषःपरिकीर्तितः षडशीतौ संसर्गाद्यस्यचाशौचंयस्यातिक्रांतकालता तदीयस्यपदार्थस्यनाशौच
विद्यतेक्वचित् शंकितत्वे शास्त्रोदित्यतुष्टौविष्णुः प्रोक्षणेनप्रस्तकमिति अथमृतदोषे हेमाद्रौषट्त्रिंशन्मते कोमैच -
व्यापादयेद्यआत्मानंस्वयमग्न्युदकादिभिः विहितंतस्यनाशौचंनापिकार्योदकक्रिया शवदर्शनम् यावदाशौचमस्त्येव
हतानांनृपगोविप्रैरन्यैश्चात्मघातिनामितियाज्ञवल्क्योक्तेः शंकितत्वेकौर्मे सद्यःशौचंसमाख्यातंशापादिमरणेतथा आ
दिशब्दादभिचारहते भविष्ये स्वेच्छयामरणंविप्रा शृंगिदंष्ट्रिसरीसृपैः अंत्यांत्यजाविषोद्बंधैरात्मनाग्नेश्चनाडनैः पारवं
माश्रिताश्चैवमहापातकिनस्तथा स्त्रियश्चव्यभिचारिण्यआरूढपतितास्तथा नतेषांस्नानसंस्कारोनश्राद्धंनसपिंडनम्
गौतमः प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्रपतनैश्चेच्छतामिति नाशौचमितिशेषः अंगिराः चंडालादुदकात्सर्पा
त्ब्राह्मणाद्वैद्युतादपि दंष्ट्रिभ्यश्चपशुभ्यश्चमरणंपापकर्मणाम् उदकंपिंडदानंचप्रेतेभ्योयत्प्रदीयते नोपतिष्ठतितत्
तर्वमंतरिक्षेविनश्यति षट्त्रिंशन्मतेप्येवम् ब्राह्मेपि शृंगिदंष्ट्रिनखव्यालविषवह्निस्त्रियाजलैः व्यालोगजः स्वद्
रात्परिहर्तव्यःकुर्वन्क्रीडांमृतस्तथा नागानांविप्रियंकुर्वन्हतश्चाप्यथविद्युता निगृहीतःस्वयंराज्ञाचौर्यदोषेणकुत्र

चित् परदारान्हरंतश्च द्वेषात्तु पतिभिर्हताः असमानैश्च संकीर्णैश्चंडालाद्यैश्च विग्रहम् कृत्वा तैर्निहतास्तद्वच्चंडाला
दीन्समाश्रिताः शस्त्राग्निगरदाश्चैव पाखंडाः क्रूरबुद्धयः क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बंधनं जलम् गिरिवृक्षप्रपा-
तं च ये कुर्वंति नराधमाः कुशिल्पजीविनो ये च सूनालंकारधारिणः मुखेभगास्तु ये केचित्क्लीबप्राया नपुंसकाः ब्रह्म-
दंडहता ये च ये चापि ब्राह्मणैर्हताः महापातकिनो ये च पतितास्ते प्रकीर्तिताः पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसंच-
यः न चाश्रुपातः पिंडो वा कार्यं श्राद्धादिकं क्वचित् एतानि पतितानां तु यः करोति विमोहितः तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न
चान्यथा एतद्बुद्धिपूर्वं सर्वेषां करणे तु माधवीये च सिंधुः य आत्मत्यागिनां कुर्यात्स्नेहात्प्रेतक्रियां द्विजः स तप्तकृच्छ्रस-
हितं चरेच्चांद्रायणं व्रतम् अज्ञानेन तु कृत्वाग्निमुदकं दानं संस्पर्शं वहनं कथां रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यती
ति ज्ञेयम् प्रत्येकं बुद्धिपूर्वे एतदिति मदनपारिजातः प्रत्येकं तु स्पर्शादिष्विति मिताक्षरायां तच्छंकेवलं स्पृष्ट्वाश्रुपातं वा पतितं प
दि पूर्वोक्तानामकारी त्वेकरात्रमभोजनम् एकरात्रं तु नाश्नीयाच्चिरात्रं बुद्धिपूर्वकमिति माधवीये उत्तरार्धम् अन्ये तु तु सं-
वर्तः एषामन्यतमं प्रेतं यो वहेत दहेत वा कटोदकक्रियां कृत्वा कृच्छ्रं सांतपनं चरेत् अज्ञाने त्वर्धं एतदनाहिताग्नेः आहि-
ताग्नेः कृच्छ्र एवेति माधवः मिताक्षरायाम् आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया तेषामपि तथा गंगातोये सं
नं हितम् आहिताग्नेस्तु विशेषो हेमाद्रौ भविष्ये वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे पात्राणि तु दहेदग्नौ साग्निके पाप
कर्मणि छंदोगपरिशिष्टेपि महापातकसंयुक्तो दैवात्स्यादग्निमान्यदि पुत्रादिः पालयेदग्नीन्युक्त आदोषसंक्षयात् प्राय-
श्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम् पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपे

न् माधवीयेपराशरः आहिताग्निर्मृतोविप्रश्चंडाले नासघातकः दहेत्तब्राह्मणंविप्रोलोकाग्नौमंत्रवर्जितम् प्राजापत्यंच-
रेत्पश्चाद्विप्राणामनुशासनात् दग्ध्वास्थीनिपुनर्गृह्यक्षीरेणक्षालयेत्ततः स्वेनाग्निनास्वमंत्रेणपृथगेनंपुनर्दहेत् हेमाद्रौ
तु दाहयित्वाशवंतेषांशूद्रैर्विधिपूर्वकमित्युक्तम् एतद्गर्वादिनामरणेज्ञेयम् तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजना
इतिश्रुतावात्महननेएवदोषोक्तेः प्रमादमरणेत्वाशौचादिसर्वंभवत्येव तदाहांगिराः अथकश्चित्प्रमादेनम्रियेताग्न्युद-
कादिभिः तस्याशौचंविधातव्यंकर्तव्याचोदकक्रिया ब्राह्मेपि प्रमादादपिनिःशंकस्त्वकस्माद्विधिचोदितः शृंगिदंष्ट्रि
नखिव्यालविषवह्न्यशनिजलादिभिः चंडालैरथवाचौरैर्निहतोवापिकुत्रचित् तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसइति
प्रमादमरणेत्रिरात्रमाशौचमितिगौडाः शुद्धितत्वादयः दशाहादीतिदाक्षिणात्याः अस्यापवादोहेमाद्रौभविष्ये प्रमादा
दिच्छयावापिनकुर्यात्सर्पतोमृते नागपूजांविनानकुर्यादित्यर्थः बौधायनोपि बुद्धिपूर्वात्महंतॄणांक्रियालोपोविधीयते कि
यांत्यकर्म तत्रदुर्मरणनिमित्तंदानादिकार्यम् तच्चाविश्वप्रकाशादौशातातपीयेन व्याघ्रेणनिहतेविप्रेविप्रकन्यांविवाह-
येत् सर्पदष्टेनागबलिर्देयःसर्पश्चकांचनः चतुर्निष्कमितंहैमंगजंदद्याद्गजेहते राज्ञाविनिहतेदद्यात्पुरुषंतुहिरण्मयं
चौरेणनिहतेधेनुंवैरिणानिहतेवृषं वृषेणनिहतेदद्याद्धान्यंशक्त्यातुकांचनम् शय्यास्थूलेप्रदातव्याशय्यातूलीसमन्विता
निष्कमात्रसुवर्णस्यविष्णुनासमधिष्ठिता शौचहीनेमृतेचैवद्विनिष्कंस्वर्णजंहारम् संस्कारहीनेचमृतेकुमारमुपनायये
त् निष्कत्रयस्वर्णमितंदद्यादश्वंहयाहते शस्त्राहतेक्षेत्रपालंस्थापयेन्निजशक्तितः सूकरेणहतेदद्यान्माहिषंदासिधा-
न्वितम् कृमिभिश्चमृतेदद्याद्गोधूमान्पंचखारिकाः ऋक्षेहतेदद्यात्सौवर्णंवस्त्रसंयुतम् शृंगिणानिहतेदद्याद्वृषभंवस्त्र

तानामधिकारः सोपिजीर्णवानप्रस्थस्यैवेतिविज्ञानेश्वरदेवयाज्ञिकादयः अतएवमिताक्षरादौभृगुपातानशनादिकम्
वानप्रस्थस्यैवोक्तम् मनुरपि आसांमहर्षिचर्याणांत्यक्त्वान्यतमयातनुं वीतशोकभयोविप्रोब्रह्मभूयायकल्पतइतिते·
नान्यत्रापितद्विषयत्वेवामूलंस्यादितिकेचित् तन्न वानप्रस्थमरणेआशौचनिषेधात् तेनगृहस्थादिपरमेवेदंतेनयतेर्नो
धिकारः काम्येऽनधिकाराच्च नैमित्तिकत्वेत्वकरणेदोषोनित्यतावस्यात् प्रयागेत्वरोगिणांरोगिणांच यत्तुशूद्राश्चक्ष·
त्रियावैश्याश्चसज्जाश्चतथाधमाः एतेत्यजेयुः प्राणान्वैवर्जयित्वाद्विजंनृपपतित्वाब्राह्मणस्तत्रब्रह्महाचात्महाभवेदि
ति तन्निर्मूलमितिभट्टाः तत्त्वंतुहेमाद्रौव्रतकांडेउलिखनान्निर्मूलत्वंचिंत्यमेवप्रकमात्तुपतित्वेतिभृगुपातमात्रपरंयुक्तं
ब्राह्मणस्याप्यनुज्ञातमितिवक्ष्यमाणाविरोधाच्च यत्तुआदित्यपुराणे अब्राह्मणोवास्वर्गादिमहाफलजिगीषया प्रविशेज्ज्व·
लनंतोयंकुर्यात्सनशनंतथेति तत्प्रयागातिरिक्तपरमितिकेचित् हेमाद्रौत्वेतदग्रेप्रयागवटशाखाग्रादित्युक्तेर्ब्राह्मणस्य
प्रयागेपीतिप्रतीयते माधवीयेऽपरार्केचादित्यपुराणे दुश्चिकित्स्यैर्महारोगैःपीडितस्तुपुमानपि प्रविशेज्ज्वलनंदीप्तं·
कुर्यात्सनशनंतथा अगाधतोयराशिंचभृगोःपतनमेवच गच्छेन्महापथंवापितुषारगिरिमादरात् प्रयागवटशाखाग्रा·
द्देहत्यागंकरोतिच स्वयंदेहविनाशस्यकालेप्राप्तेमहामतिः उत्तमान्प्राप्नुयाल्लोकान्नात्मघातीभवेत्क्वचित् महापापक्षया
त्स्वर्गेदिव्यान्भोगान्समश्नुते एतेषामधिकारस्तुसर्वेषांसर्वजंतुषु नराणामथनारीणांसर्ववर्णेषुसर्वदा ईदृशंमरणंये·
षांजीवतांतुनचिद्भवेत् आशौचंस्यान्नयत्तेषांवह्न्यानलहतेतथा वाराणस्यांम्रियेद्यस्तुप्रत्याख्यातभिषक्क्रियः काष्ठ
पाषाणमध्यस्थोजाह्नवीजलमध्यगः अविमुक्तोन्मुखस्तस्यकर्णमूलगतोहरः प्रणवंतारकंब्रूतेनान्यथाकुत्रचित्क्व

नित् हेमाद्रौचैवम् अनवाप्तेकालेइत्युक्तेरप्राप्तमरणकालायाःस्त्रियाःअन्वारोहणेसंपूर्णमेवाशौचं पृथ्वीचंद्रस्त्वत्रापिच्यह
माह शूलपाणिस्तुत्रादिगौडग्रंथेष्वप्येवम् एतच्चवृद्धादिमरणंकलौनिषिद्धम् भृग्वग्निपतनैश्चैववृद्धादिमरणंतथेतिमाधवेन पृथ्वी
चंद्रेणचकलिवर्ज्येषूक्तेः नचात्रयावदुक्तनिषेधः विशिष्टोद्देशेवाक्यभेदात् नचकलौवानप्रस्थाश्रमनिषेधादेवसिद्धेर्मरणनि
षेधोव्यर्थइतिवाच्यं सर्ववर्णेष्वित्यादिभिस्तद्भिन्नस्यापिप्राप्तेःकाम्यंभवत्येव येवैतन्वंविसृजंतीतिश्रुतेः स्मृत्यासंकोचा
योगात् नचेयंस्वाभाविकमृत्युपराधीरपदोक्तेः मात्स्यभारतादिषुनलोकवचनात्तातनवेदवचनादपि मतिरुत्क्रमणी
येप्रयागमरणंप्रतीत्युक्तेः अतएवविष्णुधर्मेरोगादिमरणमुत्क्वोक्तम् यथायुगानुसारेणसंत्यजेदात्मनस्तनुमितिका
श्यामप्युक्तम् मात्स्ये अग्निप्रवेशंयेकुर्युरविमुक्तेविधानतः प्रविशंतिमुखंतेमेनिःसंदिग्धंवरानने हेमाद्रौविवस्वान्
सर्वेंद्रियविमुक्तस्यस्वव्यापाराक्षमस्यच प्रायश्चित्तमनुज्ञातमग्निपातोमहापथः धर्मार्जनासमर्थस्यकर्तुःपापांकित
स्यच ब्राह्मणस्याप्यनुज्ञातंतीर्थेप्राणविमोक्षणम् अपरार्केप्येवं सहगमनंकलौभवत्येव कलौनान्यागतिःस्त्रीणांसहा
नुगमनादृतइतिब्रह्मपैवर्तात् एतेनमरणांतिकप्रायश्चित्तंकाशीखंडादौ चातुर्वर्ण्यस्यतत्त्यागविषयश्चयुगांतरपरा
एवनपापेपिनिस्थलीसेतोस्कांदे यथाकथंचित्तीर्थेस्मिन्प्राणत्यागंकरोतियः तस्यात्मघातदोषोनप्राप्नुयादीप्सितान्यपि
पाद्मेविष्णुः देहत्यागंतथाधीराःकुर्वंतिममसन्निधौ मत्तनुंप्रविशंत्येवनपुनर्जन्मनेनराः कौर्मेव्याधितोयदिवादीनःक्रु
द्धोवापिभवेन्नरः गंगायमुनमासाद्ययस्तुप्राणान्परित्यजेत् ईप्सितान्लभतेकामान्वदंतिमुनिपुंगवाः तथा यागति
र्योगयुक्तस्यसत्त्वस्थस्यमनीषिणः सागतिस्त्यजतःप्राणान्गंगायमुनसंगमे वाराहे तत्रयोमुंचतिप्राणान्वटमूलेषु

कंदरि सर्वलोकानतिक्रम्य ममलोकं प्रपद्यते तथा अकामोवासकामोवावटमूलेषुकंदरि शीघ्रंप्राणान्प्रमुंचेत्तुयदीच्छे
त्परमांगतिम् तथा पंचयोजनविस्तीर्णेप्रयागस्यतुमंडले व्यतीतान्पुरुषान्सप्तभविष्यांश्चचतुर्दश नरस्तारयतेसर्वान्
यस्तुप्राणान्परित्यजेत् ब्राह्मे ध्यात्वाविष्णुपदांभोजेप्रयागेविष्णुतत्परः तनुंत्यजतिवैमायेतस्यमुक्तिर्नसंशयः दुष्कृतोपिदु
राचारोब्रह्महत्यादिपातकी हरिंध्यात्वात्यजेद्देहंप्रयशोमुक्तिमान्भवेत् भविष्योत्तरे समाःसहस्राणितुसप्तवैजलेदशैक
मन्नोपलनेचषोडश महाहवेषष्टिरशीतिगोग्रहेअनाशकेभारतचाक्षयागतिः इतिसामान्यतोपिफलम् एवमन्येविध-
योज्ञेयाः यत्तुगौडाः प्रयागादिमरणंब्राह्मणभिन्नविषयमित्याहुस्तद्दूषणंपितामहचरणैः प्रयागविधौकृतमितिनात्रो-
च्यते अत्रदशाहमाशौचम् त्रिरात्रस्यग्रासकालगोचरत्वादितिभट्टाः शुक्लंतुत्रिरात्रम् दिवोदासीयेप्येवम् शङ्खितले
पिकाश्यपः अनशनमृतानामशनिहतानामग्निजलप्रविष्टानां भृगुसंग्रामदेशांतरमृतानांजातदंतानांचत्रिरात्रमिति
एवंमरणांतप्रायश्चित्तेपि पूर्वोक्तश्वापत्यहादेर्दाही शौचादिनिषेधस्तदानीमेव वत्सरांतेतुसर्वमौर्ध्वदैहिकंकुर्यात् गोब्राह्मण-
हतानांचपतितानांतथैवच ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमेवौर्ध्वदैहिकमितिहेमाद्रौषट्त्रिंशन्मतात् एवंमूर्च्छाकृतानामपि-
गयाश्राद्धमपिकार्यम् ब्रह्मघ्नाश्चकृतघ्नश्चगोघातीपंचपातकी सर्वेतेनिष्कृतिंयांतिगयायांपिंडपातनादित्यग्निपुराणात्
एवंब्राह्मेपि क्रियतेपतितानांतुगतेसंवत्सरेक्वचित् देशधर्मप्रमाणत्वाद्गयाकूपेस्वबंधुभिः मार्तंडपादमूलेवाश्राद्धंहरिहरौ-
स्मरन् सूर्यपदइत्यर्थः तत्रवर्षमध्येकृत्यमुक्तमपरार्के वायुपुराणे शुक्लपक्षेतुद्वादश्यांकुर्यात्श्राद्धंतुवत्सरम् द्वादशाहानि
वाकुर्यात्कृच्छ्रंवैप्रथमेहनि छागलेयः नारायणबलिःकार्योलोकगर्हाभयान्नरैः तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमः

न्यासः नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते तस्य शुद्धिकरं कर्म तद्भवेन्नान्यथेति सचात्मघातादिप्रायश्चित्तं कृत्वा कार्यः न
दृक्तं हेमाद्रौ षट्त्रिंशन्मते कृत्वा चांद्रायणं पूर्वं क्रिया कार्या यथाविधि नारायणबलिः कार्यो लोकगर्हाभयान्नरैः पिंडोदकक्रि-
याः पश्चाद्वृषोत्सर्गादिकं च यत् एकोद्दिष्टानि कुर्वीत सापिंडीकरणं तथा दिवोदासीये वृद्धशातातपस्तु पतिते च मृते शौच्ये भा-
गापत्यांस्तु षोडश मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेदित्याह इदं प्रायश्चित्तार्हपित्रादिविषयम् इंद्रियैरपरित्यक्ता येच मू-
दाग्निपादिनः घातयंति स्वमात्मानं चांडालादिहताश्च ये तेषां पुत्राश्च पौत्राश्च दययासमभिप्लुताः यथाश्रद्धं मतन्वंति विष्णुना
भनातिप्तिनम् तथा तेसंभवस्यामि नमस्कृत्य स्वयंभुव इति हेमाद्रौ तेनैवोक्तेः तत्रैव बौधायनोपि नारायणबलिं व्याख्यायाभो
भिगात्तपतित कृतापासत्यागिनां ब्राह्मणहतानां च द्वादशवर्षाणि त्रीणि वा कुर्वीतेति गृह्यपरिशिष्टे तु चंडालादिना हत्वा द-
ग्धाशरीरं मेतस्य संस्थाप्यास्थीनि यत्नतः प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चांद्रायणत्रयमित्युक्तम् मदनरत्ने व्यासे प्रमादादपि निः
शंकस्त्वकस्माद्विधिचोदितः चांडालैर्ब्राह्मणैश्चौरैर्निहतो यत्र कुत्रचित् तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः चांद्रायणं
तप्तकृच्छ्रं तस्य विशुद्धये यद्वा कृच्छ्राणि दश कृत्वा तु विधिना दहेत् बुद्धिपूर्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेदित्युक्तं स्मृति
रत्नावल्यां तु द्विगुणं प्रायश्चित्तं कृत्वा वा गणश्चात्सर्वं कार्यमित्युक्तम् आत्मनो घातशाध्यर्थं चरेच्चांद्रायणद्वयम् तप्तकृ
च्छ्रं त्रिंशत्कृच्छ्राणि वा पुनः अर्वाक्संवत्सरात्कुर्याद्दहनादि यथोदितम् कृत्वा नारायणबलिमनित्यत्वात्तदा शुभ इति इदं चा-
न्यवधनिमित्तं ज्ञानवधप्रायश्चित्तेन समुच्चितं कार्यम् अत एव बौधायनेनोक्तम् द्वादशवर्षाणि त्रीणि वेति मदनपारिजाते
स्मृत्यर्थसारेन ब्रह्महादीनां तद्योग्यं प्रायश्चित्तं कृत्वा नारायणबलिः कार्य इत्युक्तम् एवं म्लेच्छीकृतानामपि यत्तु कश्चिदाह पु

त्वकृतेनप्रायश्चित्तेनपितुःपापनाशेमानाभावः आत्मघातेतुवचनादस्तु महापातकेतुकथंस्यादिति सःस्वयमेवात्मवधप्रायश्चित्तस्यज्ञातिवधनिमित्तेनसमुच्चयंवदन्हृदयशून्यएव नहिज्ञातिवधनिमित्तंपुत्रैःकार्यमितिवचनमस्ति पुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लुवापत्तेः प्रागुक्तबोधायनवचनाच्चेतिदिक् इदंप्रायश्चित्तार्हाणामेवप्रायश्चित्तानर्हाणांतुपतितोदकमात्रंकार्यमितिकेचित् मदनपारिजातादिस्वरसोप्येवम् वस्तुतस्तु तदर्हानर्हयोर्वचनेनुपादानादविशेषात्तत्रापिनारायणबलिः गयाश्राद्धंचेत्युक्तम् पतितोदकविधिस्तु पित्राद्यतिरिक्तविषयइत्यपरे सयथाहेमाद्रौब्राह्मे पतितस्यतुकारुण्याद्यस्तृप्तिंकर्तुमिच्छति सहिदासींसमाहूयसर्वगांदत्तवेतनाम् अशुद्धघटहस्तांतांयथादत्तंब्रवीसापि हेदासिगच्छमूल्येनतिलानानयसत्वरम् तोयपूर्णंघटंचेमंसतिलंदक्षिणामुखी उपविश्यतुवामेनचरणेनततःक्षिप कीर्तयःपातकीसंज्ञांत्वंपिबेतिमुहुर्वदेः निशम्यतस्यवाक्यंसालब्धमूल्याकरोतितत् एवंकृतेभवेत्तृप्तिःपतितानांननान्यथेति इदंचमृताहेकार्यम् पतितस्यदासीमृताह्निघटमपवर्जयेत्तावतायमुपचरितोभवतीतिमदनरत्नेविष्णूक्तेः इदंचात्मत्यागिविषयम् आत्मत्यागिनःपतितास्तेनाशौचोदकभाजः स्मरित्कृपत्रस्यविष्णुनाएतस्याभिधानादितिगौडाः यत्तुकश्चिदाह यःपतितोघटस्फोटेनबांधवैर्बहिष्कृतस्तद्विषयाणिक्रियानिषेधवाक्यानिजीवस्येवतस्मिन्नंत्यकर्मणः कृतत्वात्पुनःकरणाभावादिति सबंधुत्यागेनजातवैराग्यस्यकृतप्रायश्चित्तस्याप्यकरणापत्तेर्मिताक्षरादिविरोधमपश्यन्मूर्खएवइत्युपेक्षणीयः नचकृतघटस्फोटस्यसंग्रहविधिर्नेतिवाच्यम् मनुनाकृतघटस्फोटस्यत्यागमुक्त्वा प्रायश्चित्तेतुचरितेपूर्णकुंभमपांनवम् तेनैवसार्धंप्रास्येयुःस्नात्वापुण्येजलाशयइत्युक्तेः अन्यथाप्रायश्चित्तमात्रेएतत्प्रसंगात् अतोघटस्फोटेनबहिष्कृतस्यापिपित्रादेरब्दांतेनारायणबलिः निषेधास्तापतृत्यादिपराइतितत्त्वं केचित्तुनारायणबलौकृतेप्यंत्यकर्मसपिंडनवर्जंकार्यम् गोब्राह्मणहतानांचपतितानांतथै

नन्व श्वृक्रमाच्चप्रमीतानांनैवकार्यासपिंडतेतिवचनात् ब्राह्मणादिहतेनातेपतितेसंगवर्जितइतिश्राद्धप्रकारोनोक्तस्तेस्याहुः
तेहेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधान्निर्मूलत्वाच्छ्राद्धप्रकारस्यहद्दिश्राद्धविषयत्वादुपेक्ष्याः नाराय णबलिस्तुहेमाद्या-
द्यनुसारेणोच्यते तत्रादौक्रियानिबंधेगारुडेतर्पणमुक्तं कार्यंपुरुषसूक्तेनमंत्रैर्वावैष्णवैरपि दक्षिणाभिमुखोभूत्वाप्रेतंवि-
ष्णुमितिस्मरन् अनादिनिधनोदेवः शंखचक्रगदाधरः अक्षय्यःपुंडरीकाक्षः प्रेतमोक्षप्रदोभवेति शुक्लैकादश्यांदेशकालौ
संकीर्त्यामुकगोत्रस्यामुकस्यदुर्मरणात्प्रयातजदोषनाशार्थंऔर्ध्वदैहिकसंप्रदानत्वयोग्यतासिद्ध्यर्थंनारायणबलिंकरि-
ष्यइतिसंकल्प्य ब्रह्माणंविष्णुंशिवंयमंप्रेतंचपंचकुंभेषु विष्णुःस्वर्णमयःकार्योरुद्रस्ताम्रमयस्तथा ब्रह्मारौप्यमयस्तत्र
यमोलोहमयोभवेत् प्रेतोदर्भमयःकार्यइतिदेवप्रकल्पनेतिगारुडोक्तासुसर्वासुहेमीषुवाप्रतिमासुषोडशोपचारैःपु-
रुषसूक्तेनाभ्यर्च्याग्निंप्रतिष्ठाप्यचरुंपुरुषसूक्तेनप्रत्यृचंनारायणायेदमितिहुत्वादेवानामग्रेदक्षिणाग्रदर्भेषुविष्णुरूपं
प्रेतंस्मरन्नामगोत्राभ्यांमधुघृततिलयुतान्दशपिंडान् यज्ञोपवीत्येवामुकगोत्रामुकशर्मन्प्रेतविष्णुरूपायतेपिंडउपति-
ष्ठतामितिदत्त्वापुरुषसूक्तेनाभिमंत्र्यतेनैवशंखोदकेनाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रंविष्णुरूपंप्रेतंतर्पयामीतिपु-
रुषसूक्तेनप्रत्यृचंतर्पयित्वा एकमामान्नंब्रह्मादिपंचभ्योदद्यात् मंत्रस्तु ब्रह्माविष्णुमहादेवायमश्चैवसकिंकरः बलिंगृही-
त्वाकुर्वंतुप्रेतस्यास्यशुभांगतिमिति मिताक्षरायांतुहोमबल्यादिनोक्तम् ततःप्रतिदैवतंत्रिविधंफलंशर्करामधुगुडघृतानि
नैवेद्यपिंडानभ्यर्च्यनद्यांक्षिप्त्वारात्रौनवसप्तपंचवाविप्रान्निमंत्र्योपोषितोजागरंकृत्वाश्वोभूतेपुनर्विष्णुंयमंसंपूज्यैको-
द्दिष्टविधिनाश्राद्धपंचकंकरिष्यइत्युक्त्वाविष्णुयमप्रेतान्स्म.नविप्रानुपवेश्यप्रेतस्थानेचैकंविष्णुंस्मरन्पाद्यावाहनार्घ्यपु

नंतृप्तिमभ्भांतं कृत्वोल्लेखनादि कृत्वान्नशेषेण विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय चतुरः पिंडान्दत्वा प्रेतनामगोत्रे स्मृत्वा विष्णुनाम्ना पंचमं दत्वाभ्यर्च्याचांतेभ्यो दक्षिणां दत्वैकं प्रेतं स्मृत्वा विशेषतः संतोष्य विप्रैः प्रेताय देतिलोदकमुपतिष्ठतामिति सतिलमुदकं दापयित्वा भुंजीतेति अत्र विशेषांतरं भट्टकृतां त्येष्टिपद्धतौ ज्ञेयम् सर्पहते तु वर्षपर्यंतं पूर्वेन्ह्येकभक्तपूर्वं शुक्लपंचम्यामुपवासं नक्तं वा कृत्वा पिष्टमयं नागमनंतवासुकिशंखपद्मकंबलकर्कोटकाश्वतर धृतराष्ट्रशंखपाल कालियतक्षककपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान्संभोज्य वत्सरांते हेमं नागं गां च दत्वा नारायणबलिं कुर्यात् मूलं तु हेमाद्रौ ज्ञेयम् बौधायनसूत्रे सर्पमृतानां नमोस्तु सर्पेभ्य इति तिस्र आहुतीर्हुत्वोदकं मृतानां समुद्राय वरुणायेति हुत्वेति क्रियां कुर्यादिति शेषः व्यासः सौवर्णभारनिष्पन्नं नागं कृत्वा तथैव गां व्यासाय दत्वा विधिवत्पितुरानृण्यमाप्नुयात् हेमाद्रौ भविष्ये पंचम्यां पन्नगं हैमं स्वर्णनिष्केन कारयेत् क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत् प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुनेति अपरार्के स्मृत्यंतरे नदेवशास्त्रातिप्रेतो नारायणबलौ कृते पाददानिक्रियापिंडं तस्मै प्रेताय ये कृतः तस्यैवाशौचशुद्ध्यहमेव न संशयः विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यां दिनत्रयम् आशौचं पिंडदः कुर्यान्न तु तद्बंधुगोत्रजाः यस्यैव मृत्सकाले तु स्युर्द्विन्ना संततिर्भवेत् सवसेन्नरके नित्यं पंकमग्नः करीषवत्स्यकृपकस्य बलिं नारायणं कुर्यात्तस्योद्देशेन भक्तिमानिति गारुडोक्तेः पुत्रस्यापि पत्न्याद्यैः कार्य इत्युक्तं देवयाज्ञिकेन अथ विधानादाशौचाभावः यथा यतियुद्धमृतादिषु त्रयाणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः यतेः किंचिन्न कर्तव्यं न चान्येषां करोति स इति ब्राह्मात् उशनाः एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा अहन्येकादशे प्राप्ते पार्वणं तु विधीयते सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः त्रिदंड

ग्रहणादेवप्रेतत्वंनैवजायते तत्संस्कारंचक्ष्यामः दत्तात्रेयः एकोद्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियाम् नकुर्याद्वार्षिकादन्य
द्ब्रह्मभूतायभिक्षवे वार्षिकादितिपूर्वंमासिमासिकादिनिषेधोनतुदशादेः सन्यासिनोप्याब्दिकादिपुत्रःकुर्याद्यथाविधी
तिवाचस्पतीयोक्तेः पृथ्वीचंद्रोदयेप्रजापतिः अहन्येकादशेमासेपार्वणंतुविधीयते सपिंडीकरणंतस्यनकर्तव्यंसुतादिभिः
एवुसपिंडनादिनिषेधानुवादेनपार्वणोक्तेः तत्स्थानापन्नत्वंपार्वणस्यगम्यते नगिरागिरेतिब्रूयादेरंकृत्वोऽक्षयमितिव
त् इदंवार्षिकादिविधानंचत्रिदंडिनामेव एकदंडिपरमहंसादीनांतुनकिमपिकार्यम् पूर्वोक्तोधनोवाक्येत्रिदंडग्रहणा
दितिशूलपाणयादयोगौडाः त्रिदंडिशब्देनमनोदंडादिदंडत्रयोक्तेः यस्यैतेनियतादंडाःसत्रिदंडीतिचोच्यतइतिस्मृतेःबौ
धायनः नारायणबलिश्चास्यकर्तव्योद्वादशेहनि अस्यपार्वणेनसमुच्चयोज्ञेयः तंचसएवाह कृत्वाविष्णोर्महापूजांपाय
संविनिवेदयेत् अग्नौकृत्वातुतच्छेषंव्याहृतीभिःसमाहितः यतीन्गृहस्थान्साधून्वानिमंत्र्यद्वादशावरान् अभ्यर्च्य
गंधपुष्पाद्यैर्वैद्वादशनामभिः संभोज्यहव्येनान्येनदक्षिणांचनिवेदयेत् त्रयोदशांद्विजश्रेष्ठमात्मज्ञंसंयतेंद्रियम् वि
ष्णुंयथातथाभ्यर्च्यपाद्याद्यैश्चविधानतः दद्यात्पुरुषसूक्तेनगंधपुष्पादिकंक्रमात् वस्त्रालंकरणादीनियथाशक्तिप्र
दापयेत् उच्छिष्टसन्निधौतस्यदर्भानास्तीर्यभूतले भूर्भुवःस्वःस्वधायुक्तैस्तस्मैदद्याद्बलित्रयम् अश्वमेधसहस्रस्य
वाजपेयशतस्यच तत्फलंलभतेदेवयःकरोतियतिक्रियाम् शौनकस्तु शौनकोहंप्रवक्ष्यामिनारायणबलिंपरम् चं
डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि दंष्ट्रिभ्यश्चपशुभ्यश्चरज्जुशस्त्रविषाग्निभिः देशांतरमृतानांचमृतानांचान्य
साधने जीवच्छ्राद्धमृतानांचकृतिध्यानांतथैवच यतीनांयोगिनांपुंसामन्येषांमोक्षकांक्षिणाम् पुण्यापापाद्यक्षयार्थाय

द्वादशेऽहनि कारयेत् द्वादश्यां श्रवणे व्यतीते पंचम्यां पर्वणोऽस्य वेत्यस्य पूर्वोक्तं सर्वविधिमुक्त्वा तो देवेतिषड्भिः पुरुषसूक्तेन मस्यूनं
पायसं हुत्वा केशवादिद्वादशनामभिस्तद्रूपिणोऽपिते द्वादश विप्रान् संभोज्य तैरेव द्वादश पिंडान् दद्यादित्यधिकमाह युद्धमृतेत्तु
प्रागुक्तम् कृतजीवच्छ्राद्धे मृते सपिंडैराशौचादिकार्यं नवा . तदुक्तं हेमाद्रौ लैंगे मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयम्
कालंगते द्विजे भूमौ खने द्वापि दहेत्तवा पुत्रकृत्यमशेषं च कृत्वा दोषो न विद्यते जीवस्यापि विशेषस्तन्नैवोक्तः नित्यं नैमित्तिकं
यत्तु कुर्याद्वा संत्यजेत्तवा बांधवेऽपि मृते तस्य नैवाशौचं विधीयते सूतकं च न संदेहः स्नानमात्रेण शुध्यति एतद्योगिविषयम्
योगमार्गरतोऽपि चेति तस्या प्युक्तेः तथाहिताग्नेः प्रोषितमृते नत दस्थिदाहात्पूर्वं पित्रादीनामाशौचं संध्यादिकर्मलोपश्च नास्ति
अनग्निमत उत्क्रांतेराशौचादि द्विजातिषु दाहादग्निमतो विद्याद्विदेशस्थे मृते सतीति स्मृतेः आहिताग्नेर्दाहस्यागापदशा
हः संस्कारांगं च भिन्नो दशाह इति धूर्तस्वामी रामांडारश्च तच्चिंत्यम् मूलेक्याद्वचो विरोधाच्च एतत्प्रागुक्तम् अत्र देहस्यैव
संभवे दाहः आहिताग्नौ विदेशस्थे मृते सति कलेवरम् निधेयं नाग्निभिर्यावत्तदीयैरापदत्यतइति ब्राह्मोक्तेः तदभावे
छंदोगपरिशिष्टे विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा दाहयेद्वर्हिषाच्छाद्य पात्रन्यासादि पूर्ववत् अस्थ्नामलाभे
पर्णानि शकलान्युक्तया घृता दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् हेमाद्रौ षट्त्रिंशन्मते कुर्याद्दर्भमयं प्रेतं दर्भैः
स्त्रिंशातिषष्टिभिः पालाशिभिः समिद्भिर्वा संख्यान्येवं प्रकीर्तिता भविष्ये चत्वारिंशच्छिरस्थाने ग्रीवायां च दशैव तु
बाह्वोश्चैव शतं दद्याद्विंशतिं च तथोरसि उदरे विंशतिं दद्यात्त्रिंशतं कटिदेशयोः ऊर्वोश्चैव शतं दद्यात्त्रिंशतं जानुजंघयोः
पादांगुलीषु दश वै एषा न प्रेतकल्पना मदनरत्ने यत्तु पार्श्वः शिरस्यशीत्यर्धं दद्याद्ग्रीवायां तु दशैव तु बाह्वोश्चैकशतं द-

शादशनेवांगुलीषुच उरसित्रिंशतंदद्याद्विंशतिंजठरोदरे द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्नएवतु ऊर्वोश्चैकशतंदद्यात्त्रिं
तंजंघयोर्द्वयोः पादांगुलीषुद्वेदद्यादेतत्प्रेतस्यकल्पनम् मस्तकेनारिकेरंतुअलाबुंगलुकेतथा पंचरत्नंमुखेन्य-
स्यजिह्वायांकदलीफलं नक्षपोलकपर्दौद्वौनासिकायांतुकालकम् कर्णयोर्ब्रह्मपत्राणिकेशोवटप्ररोहकाः नालकेकमला-
नांतु अंत्रस्थानेविनिक्षिपेत् मृत्तिकांतुवसाधातुर्हरितालकगंधकौ शुक्रेतुपारदंदद्यात्पुरीषेपित्तलंतथा संधीषुतिलपि
ष्टंतुमांसंस्याद्यवपिष्टकम् मधुस्याल्लोहितस्थानेत्वचास्थानेमृगत्वचा स्तनयोर्जर्जकेदेयेनासायांशतपत्रकम् कमलंनाभि
देशेस्याद्वृंताकेवृषणाश्रिते लिंगेचरक्तमूलंतुपरिधानंदुकूलकम् गोमूत्रंगोमयंगंधंसर्वौषध्यादिसर्वत इति इदंनिरग्ने
रपित्रैव द्रष्टव्यम् तुः प्रोषितस्यत्तथाकालोगतश्चेद्द्वादशाब्दिकः प्राप्तेत्रयोदशेवर्षेप्रेतकार्याणिकारयेत् बृहस्पतिः य
स्यनश्रूयतेवार्तायावद्द्वादशवत्सरात् कुशपुत्रकदाहेनतस्यस्यादवधारणा भविष्ये पितरिप्रोषितेयस्यनवार्तानैवचा
गमः ऊर्ध्वंपंचदशाद्वर्षात्कृत्वातत्प्रतिरूपकम् कुर्यात्तस्यतुसंस्कारंयथोक्तविधिनाततः तदादीन्येवसर्वाणिप्रेतकर्माणि
कारयेत् द्वादशाब्दप्रतीक्षापितृभिन्नविषयेतिमदनरत्नेउक्तम् गृह्यकारिकायांतु तस्यपूर्ववयस्कस्यविंशत्यब्दोः
त्तःक्रिया ऊर्ध्वंपंचदशाब्दात्तुमध्यमेवयसि स्मृता द्वादशाद्वत्सरादूर्ध्वमुत्तरेवयसिस्मृता चांद्रायणत्रयंकृत्वात्रिंशा
त्कृच्छ्राणिवाकृतैः कुशैःप्रतिकृतिंदग्ध्वाकार्याःशौचादिकाःक्रिया इत्युक्तम् पराशरः देशांतरगतोनष्टस्तिथिर्नज्ञाय
तेयदि कृष्णाष्टमीत्यमावास्याकृष्णाचैकादशीतथा उदकंपिंडदानंचतत्रश्राद्धंचकारयेत् इदंमासज्ञाने तत्राहिता
ग्नेःपूर्णाशौचं अनाहिताग्नेस्तुत्रिरात्रं अनाहिताग्नेर्देहस्तु दाहस्यागृह्याग्निनास्वयम् तदभावेपलाशानांवृंतैःकार

पुमानपि वेष्टितव्यस्तथायत्नात्कृष्णसारस्यचर्मणा ऊर्णासूत्रेणबध्वातुपङ्केनच्योपयेत्तथा सपिष्टैर्जलसंमिश्रैर्दग्धव्य
श्चतथाग्निना असौस्वर्गायलोकायस्वाहेत्यृक्समबोधनैः एवंपर्णशरंदग्ध्वात्रिरात्रमशुचिर्भवेदितिब्राह्मोक्तेः इदंचै
रात्रंनदशाहमध्येदाहे तत्रप्रोषितेकालशेषःस्यादित्युक्तेः किंतुतदूर्ध्वं तत्रपत्नीपुत्रयोःपूर्वमगृहीताशौचयोर्दशाहाद्ये
व गृहीताशौचयोस्तुत्रिरात्रम् पत्नीमृतौभर्तुश्चैवम् सपत्न्योश्चैवमितिस्मृत्यर्थसारे अन्यसापिण्डानांतुसर्वत्रपर्णशरा
दाहेत्रिरात्रम् तदाहांगिराः देशांतरमृतंश्रुत्वानाशौचंचेत्कथंचन गृहीतमितिशेषः कालात्ययेपिकुर्वीतदाहका
लेदिनत्रयमिति स्मृत्यर्थसारेतु गृहीताशौचानांस्नानमात्रमुक्तम् बह्वृचपरिशिष्टेपि अथातीतसंस्कारः सचेदंतर्दशा
हंस्यात्तेनैवसर्वंसमापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचंकुर्यादन्येषुपत्नीपुत्रयोः पूर्वमगृहीताशौचयोःसर्वमाशौचं
गृहीताशौचयोःकर्मांगंत्रिरात्रमिति षडशीतावप्येवम् विश्वादर्शेतु प्रतिकृतिदहनेत्वग्निदस्यात्रिरात्रमित्युक्तम् द्वा
दशवर्षादिप्रतीक्षोत्तरंदाहेतुपुत्रादीनांसर्वेषांत्रिरात्रमितिकल्पतरुदिवोदासादयः अथप्रेतसंस्कारेकालः हेमाद्रौ-
गार्ग्यः प्रत्यक्षशवसंस्कारेदिननैवविशोधयेत् आशौचमध्येसंस्कारेदिनंशोध्यंतुसंभवे आशौचविनिवृत्तौचेत्पुनः
संस्क्रियतेमृतः संशोध्यैवदिनंग्राह्यमूर्ध्वंसंवत्सराद्यदि प्रेतकार्याणिकुर्वीतश्रेष्ठंतत्रोत्तरायणम् कृष्णपक्षश्चतत्
त्रापिवर्जयेत्तुदिनत्रयम् वाराहे चतुर्थीष्टमगोचंद्रेद्वादशेचविवर्जयेत् प्रेतकृत्यंव्यतीपातेवैधृतौपरिघेतथा क
रणेविष्टिसंज्ञेचशनैश्चरदिनेतथा त्रयोदश्यांविशेषेणजन्मताराम्रयेतथा जन्मदशमैकोनविंशानिजन्मताराः भा
रते नक्षत्रेतुनकुर्वीतयस्मिन्जातोभवेन्नरः नप्रोष्ठपदयोःकार्यंतथाग्नेयेचभारत दारुणेषुचसर्वेषुप्रत्यरेचवि

तानागतयोरपितत्त्वापत्तेः भर्तुर्विधदाहाभावेनतस्याःसहगमनाभावाच्च तस्मादाशौचवज्ज्ञातमरणस्यैवनिमित्त
त्वंनचात्रतदस्ति परंकास्यंमरणमस्तु अतआत्महननदोषोस्तीतिनातपादाः तथासर्पसंस्कारेकृतेत्रिरात्रमाशौचं
ताहुधिंचाहशौनकः अथवक्ष्यामिसर्पस्यसंस्कारविधिमुत्तमम् सीनीवाल्यांपौर्णमास्यांपंचम्यांवापिकारयेत् कृत
सर्पवधोविप्रःपूर्वजन्मनिवायदि वधप्रख्यापयेत्सापीचरेत्कृच्छ्रांश्चतुर्दश विभायलोहदंडंचतन्मूल्यंवापिदापयेत्
मूल्यमाह निष्कत्रयंद्विनिष्कंवानिष्कमेकंकनीयसं अनुमत्यादिकर्तृणांनिष्कमर्धंतदर्धकम् इदंस्वर्णरूप्ययोः शक्त्याज्ञे
यम् संस्कारमाह प्रियंगुव्रीहिगोधूमतिलपिष्टेनवापुनः कृत्वासर्पाकृतिंशूर्पेनिधायप्रार्थयेदहिम् एहिपूर्वमृतःसर्प
अस्मिन्पिष्टेसमाविश संस्कारार्थमहंभक्त्याप्रार्थयामिसमाससः वस्त्रोपवीतगंधाद्यैःसंपूज्यचहरेद्बहिः कुर्यात्सं
स्कारसंकल्पंप्राणायामपुरःसरम् यज्ञोपवीतिनाकार्यंसर्पसंस्कारकर्मतु लौकिकाग्निंप्रतिष्ठाप्यसमिदाधानमाचरे
त् ततोग्नेरग्निदिग्भागेभूमिंसंप्रोक्ष्यवारिभिः चितिंकृत्वाथसंस्तीर्यकुशैराग्नेयकाग्रकैः पर्युक्ष्याग्निंपरिस्तीर्यप
रिषिच्यसमर्चयेत् कृत्वेध्माधानमाघारौचक्षुषीचयथाविधि सर्पंगृहीत्वायत्नेनचितिमारोपयेत्सुधीः स्रुवेणजु
हुयादाज्यमग्नौव्याहृतिभिस्त्रिभिः सर्पास्येजुहुयादाज्यंव्याहृत्याचसमग्रया आज्यशेषंस्रुवेणैवसर्पदेहेनिषे
चयेत् चमसस्थैर्जलैःसर्पंव्याहृत्याभ्युक्ष्यपाणिना अग्नेरक्षाणाइत्यनयासर्पायाग्निंप्रदापयेत् उपतिष्ठेद्दह्य
मानंनमोस्तुसर्पमंत्रतः ज्ञानतोज्ञानतोवापिकृतःसर्पवधोमया पूर्वजन्मनिवासर्पत्वंसर्वंक्षंतुमर्हसि क्षीराज्येनतत
श्चाग्निंप्रोक्ष्यव्याहृतिभिर्जलैः नास्तिसंचयनंकुर्यात्स्नात्वाचम्यगृहंव्रजेत् ब्रह्मचर्यादिकंकार्यंत्रिरात्राशौचमिष्य

ते सचैलंतु चतुर्थेऽह्नि स्थालीविमान् समर्चयेत् सर्पोऽनंतस्तथाशेषः कपिलोनागएवच कालिकःशंखपालश्च भूधरश्चे
तिनामभिः गंधपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान् घृतपायसभक्ष्यैश्च ब्राह्मणानष्टौतुभोजयेत् एवंकृतेविधानेनस
र्पसंस्कारकर्मणि सर्पहिंसाकृतात्पापान्मुच्यतेनात्रसंशयइति इतिसर्पसंस्कारः कश्चित्तुजीवतोप्यंत्यकर्माशौचंच
कार्यम् यथा प्रायश्चित्तानिच्छोः पतितस्य घटस्फोटे पतितस्योदकंकार्यंसपिंडैर्बांधवैःसह निंदितेहनिसायाह्ने
ज्ञात्यृत्विग्गुरुसन्निधौ दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्तदा अहोरात्रमुपासीरन्नाशौचंबांधवैःसहेति मनूक्तेः निं
दितेरिक्तादौ अपरार्कः वसिष्ठोपि वेदविप्लावकशूद्रयाजकोत्तमवर्णवर्गपतितास्तेषांपात्रनिनयनमपात्रसंस्काराद
कृत्वापात्रमादाय दासोसवर्णपुत्रोवा बंधुरसदृशोवागुणहीनःसव्येनपादेनप्रवृत्ताग्रान् दर्भान् लोहितान्वोपस्तीर्यापः
पूर्णपात्रमस्मैनिनयेन्निनेतारंचास्यप्रकीर्णकेशाज्ञातयोन्वालभेरन्नपसव्यंकृत्वा गृहेषुस्वैरमापद्येरन्नतऊर्ध्वंतेनतं
मयेषुसर्वकर्माणिसंधर्मयंतइति उत्तमवर्णाब्राह्मणाद्यः तेषांवर्गःसमूहस्तस्मात्पतिताब्रह्महाद्यः अपात्रसंस्का
रः कुत्सितपात्रसमूहः प्रवृत्ताग्राःछिन्नाग्राःस्वैरंयथेच्छंधर्मादिकार्यंकुर्युः अस्माद्धननसामर्थ्यात्पात्रनिनयः
साकृपतितज्ञातीनांधर्मकार्येह्यधिकारोनास्तीत्यपरार्कः तस्यविद्यागुरुर्योनिसंबंधाश्चसन्निपात्यसर्वाण्युदका
प्रेतकार्याणिकुर्युः पात्रंचास्यविपर्यस्येयुर्दासः कर्मकरोवावकरादमेध्यंपात्रमानीयदासीघटात्पूरयित्वादक्षिणा
पुनःपदाविपर्यस्येदमुमनुदकंकरोमीतिनामग्राहंसर्वेन्वालभेरन् प्राचीनावीतिनोमुक्तशिखाअपउपस्पृश्यग्रामंप्र
विशेयुरिति गौतमोक्तेश्च उदकादीत्यत्रदाहनिवृत्तिः प्रेतकार्याण्येकादशाहश्राद्धांतानि दास्याहृतौतुघटोदासीघट

तेनोदकेनामेध्यपात्रं पूरयित्वा दासादिस्तं पुत्रजं वामपादेन कुर्यादिति हरदत्तः अत्र नामग्राहवचनमुदकादिप्रेतकार्ये तद्वर्जनत्वा
र्थं तेन तूष्णीं भवति एतच्च प्रायश्चित्तानिच्छोः तस्य गुरोर्बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनः पुन
राचारं लभस्वेति स यद्येवमप्यनवस्थितमतिः स्यात्ततोस्य पात्रं विपर्यस्येदिति शंखोक्तेः जीवंतमेवोद्दिश्य पिंडोदकश्राद्धानि
नाम्नादद्यादित्यपरार्कः कृतप्रायश्चित्तस्य घटस्फोटे कृतेपि संग्रहविधिमाह गौतमः यस्तु प्रायश्चित्तेन शुद्ध्येत्तस्मिन् शुद्धे शा
तकुंभमयं पात्रं पुण्यह्रदात्पूरयित्वा स्रवंतीभ्यो वा तत एनमुपस्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेच्छांता द्यौः
शांता पृथिवी शांतं शिवमंतरिक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समंदीभिः कूष्मांडैश्चाज्यं जु
हुयाद्धिरण्यं दद्याद्गां वाचार्याय यस्य तु प्राणांतिकं प्रायश्चित्तं स मृतः शुद्ध्येत् सर्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युरेत
देव शांत्युदकं सर्वेषूपपातकेष्विति घटस्फोटोत्तरं प्राणांतिकप्रायश्चित्ते कृते तु मृत एव शुद्ध्येन्न तत्र संग्रहविधिः अतस्तेन·
विनापि प्रेतकर्म कुर्यादित्यर्थः उपपातकेष्वपि घटस्फोटे कृते एवं कार्यमित्यर्थः याज्ञवल्क्यः चरितव्रत आयाते निनयेरन्न
वं घटम् जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः कृतघटस्फोटस्यैवायं परिग्रहविधिरिति मिताक्षरायामपरार्केच अन्यथा प्रा
यश्चित्तमात्रे एतत्प्रसंगात् मनुरपि घटस्फोटमुक्त्वा निवर्तेरंस्तस्मात्तु संभाषणसहासनेरित्युक्त्वा प्रायश्चित्ते तु च
रिते पूर्णकुंभमपां नवम् तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये इति तच्छूद्रं प्रयुक्त अपरार्के वसिष्ठोपि पतितानां
चरितव्रतानां प्रत्युद्धारो थाप्युदाहरंति अग्नेरभ्युद्धरतां गच्छेत् क्रीडन्निव हसन्निव पश्चात्पापयतां गच्छेच्छोचन्निव·
रुदन्निवेत्याचार्यमातृपितृहंतारस्तत्प्रसादादपगतपापा एषां नैषां प्रत्यापत्तिः पूर्णह्रदात् प्रवत्ता ह्यस्य काञ्चनं पात्रं मा

हेयंवाद्भिः पूरयित्वा पोहिष्ठीयाभिरेनमद्भिरभिषिंचेयुः सर्वएवाभिषिक्तस्यप्रत्युद्धारः पुत्रजन्मनाव्याख्यातइतिं प्रैस्कंहू
परिग्रहः न चोद्धरतांहसन्निधावग्रेसरः स्यात् पातयतां घटस्फोटंकुर्वतांशोचान्निवपंश्चाऽऽच्छेत् मातापित्रादिहंतॄणां
परिग्रहोनकार्यः तत्प्रसादेसतिचीर्णव्रतानांकार्यः प्रवृत्तंनिर्झरः पुत्रजन्मनेत्यभिषेकोत्तरम् जातकर्मादयः संस्काराः
पुत्रजन्मवत्कार्याइत्यपरार्केव्याचख्यौ अतएवविज्ञानेश्वरो घटेपवर्जितेज्ञातिमध्यस्थोयवसंगवांदद्यात् प्रथमंगोभिः
सत्कृतस्यहिसन्निधेयेत्यत्रगवांभक्षणाभावेपुनर्व्रतंचरेदित्येतत्प्रकृतेएवंचरितव्रतविधौविशेषोयमितिवदन् घटस्फो-
टोत्तरंपरिग्रहएवैतन्नसर्वत्रेत्याह तस्मात्कृतेपिघटस्फोटेप्रायश्चित्तंपरिग्रहविधिः पुनः संस्काराभवंतीतिसिद्धम् तथा
जीवच्छ्राद्धकृतहेमाद्रौबोधायनः तत्राशौचंदशाहंस्यादित्यलंप्रसंगेन एवंसापवादेआशौचेउक्तेप्रसंगादंत्यकर्म
कर्मणिसाधारणंकिंचिदुच्यते तत्राधिकारिणः प्रागुक्ताः सर्वाभावेधर्मपुत्रोवाकार्यः अपुत्रेणसुतः कार्योयादृक्तादृ
क्प्रयत्नतः पिंडोदकक्रियाहेतोर्नामसंकीर्तनायचेतिव्यासवचनात् गृह्यपरिशिष्टेप्रसगोत्रः सगोत्रोवायदिस्त्रीय
दिवापुमान् प्रथमेहनियः कुर्यात्सदशाहंसमापयेत् दद्यात्सिंडमितिशेषः भविष्ये यत्राद्योदीयतेपिंडस्तत्रसर्वंसमा-
पयेत् ब्राह्मेपि प्रथमेहनियोदद्यात्प्रेतायान्नंसमाहितः अन्नंनवसुचान्येषुसएवप्रददात्यपि विज्ञानेश्वरादयस्त
केचित्तु अग्निंदद्यादितिव्याचक्षते सगोत्रोवासगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यान्नवश्राद्धंशक्तोयुत्तदशमेहनी
तिदेवादासीयेवचनाच्च तत्रैव हस्तास्थानस्थमासन्नमर्धोन्मीलितलोचनम् भूमिस्थंपितरंपुत्रोयादानंप्रदापये
त् तद्विशिष्टंगयाश्राद्धादश्वमेधशतादपि तानियथा मोक्षंदेहिहृषीकेशमोक्षंदेहिजनार्दन मोक्षधेनुप्रदानेनमुकुंदः प्री

यतांममेति मोक्षधेनुमंत्रः ऐहिकामुष्मिकंयच्चसप्तजन्मार्जितंकृणाम् तत्सर्वंशाश्चमायातुगामेतांददतोममेति ऋ
णधेनोः आजन्मोपार्जितंपापंमनोवाक्कायकर्मभिः तत्सर्वंनाशमायातुगोप्रदानेनकेशवेति पापधेनोः भारते श्र
कूपक्षेदिशाभूभोगंगायांचोत्तरायणे धन्यास्तानमरिष्यंतिहृदयस्थेजनार्दने हेमाद्रौवाराहे व्यतीपातोथसंक्रां-
तिस्तथैवग्रहणंरवेः पुण्यकालास्तदासर्वेयदामृत्युरुपस्थितः व्यासः आसन्नमृत्युनादेयागौःसवत्सातुपूर्व
वत् तदभावेतुगौरेवनरकोत्तारणायवै तदायदिनशक्नोतिदातुंवैतरणींतुगाम् शक्तोन्योरुग्णदादत्वादद्यात्छ्रेयो
मृतस्यतु मदनरत्नेजातूकर्ण्यः उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु गोभूतिलहिरण्याज्यवासोधान्यगुडा
निच रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् एतानिदशदानानिनराणांमृत्युजन्मनोः कुर्यादभ्युदयार्थंतुप्रेते-
पिहिपरत्रवै श्राद्धे ताम्रपात्रंतिलैःपूर्णंप्रस्थमात्रंद्विजायतु सहिरण्यंचयोदद्यात्श्रद्धावित्तानुसारतः सर्वपापवि
शुद्धात्मालभतेगतिमुत्तमां उत्क्रांतवैतरण्योश्चदशदानानिचैवहि प्रेतोपिकुर्यात्प्रेतंशवधर्मेणदाहयेत् तत्रैवप
रिशिष्टे म्रियमाणस्यकर्णेतुपुण्यमंत्रान्जपेत्ततः क्रियानिबंधेगारुडेत्वष्टौदानान्युक्तानि तुलसीसन्निधौकृत्वा
शालग्रामशिलांतथा तिलालोहंहिरण्यंचकार्पासंलवणंतथा सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतमिति दश
दानवैतरणीधेनूत्क्रांतधेनुदानादिभट्टकृतांत्येष्टिपद्धतौज्ञेयम् कर्तोस्यकर्माधिकारार्थंत्रीन्कृच्छ्रान्कुर्यादितिनि
र्णयोक्तम् अत्रदेवयाज्ञिकेनमुमूर्षोर्मधुपर्कदानमुक्तम् तदुक्तंवाराहे दृष्ट्वासकविकलंस्वेनंयममार्गानुसारिणम्
प्रयाणकालेतुनरोमंत्रेणाविधिपूर्वकम् मधुपर्कंत्वरन्गृह्यइमंमंत्रमुदाहरेत् ॐमृगृहाणचेमंमधुपर्कमाद्यंसंसार

र्यंतस्योदकक्रिया दग्धस्यतुनचेकार्याशत्रौजातूदकक्रियेति तन्निर्मूलं रात्रिमृतस्यतुतत्रैवसंग्रहे रात्रौदग्ध्वातुपिंडां
तंकृत्वावपनवर्जितम् वपनंनेष्यतेरात्रौश्वस्तनीवपनक्रियेति वपनंतुप्रातः तच्चसर्वैःपुत्रैःकार्यम् गंगायांभास्करक्षे
त्रेमातापित्रोर्गुरोर्मृतौ आधानेसोमयागेचवपनंसप्तसुस्मृतमितिमिताक्षरायांस्मृतेः मरणस्यानंगित्वान्नैमित्तिक-
मिदम् तदेवसंग्रहवचनेनपरेकुर्वन्त्यनेनीर्थवत् तेनकस्यचिद्दाहांगत्वोक्तिश्चिंत्या मदनरत्नेगालवः प्रथमे
ह्निकर्तव्यंवपनंचानुभाविनाम् प्रेतस्यकेशश्मश्र्वादिवापयित्वाथदाहयेत् अशौचांतेतुपुनःकार्यंविधिबलात् म
दनपारिजातेप्येवम् तेनसर्वस्यास्यनिर्मूलत्वोक्तिरज्ञोक्तिरेव स्मृतिरत्नावल्याम् शवंवाप्युषितंचेचीन् कृच्छ्रान् कृत्वा-
दहेत्कृतः मदनरत्नेगिरा ऊर्ध्वोच्छिष्टाधरोच्छिष्टेत्यंतरिक्षमृतेपिवा कृच्छ्रत्रयप्रकुर्वीतआशौचमरणेपिच अ-
धमाग्नेर्विशेषः कारिकायाम् कृष्णपक्षेप्रमीयेतयद्यग्निःप्रातराहुतीः शेषास्तुजुहुयाद्दर्शपर्यंताःपक्षहोमवत् प्रति
पत्प्रातर्होमांता इत्यर्थः यथाहिताग्निरपरपक्षेम्रीयेताहुतिभिरेनंपूर्वपक्षेहरेयुरित्याश्वलायनोक्तेः तदानीमेवजु
हुयात्सायंकालाहुतीरपि सायंम्रियेतचेत्सायमाहुतीर्जुहुयादथ तदानीमेवजुहुयात्प्रातःकालाहुतीरपि सकृद्गृहीत
मंत्रेष्वभिन्नंतंत्रंचहोमयोः दार्शंचापिप्रकुर्वीतस्थालीपाकंतदैवतु छंदोगपरिशिष्टे हुतायांसायमाहुत्यांदुर्बलश्चेत्
गृहीभवेत् प्रातर्होमस्तदेवस्यात्जीवेच्चसपुनर्नवा इदंशक्तपक्षपरम् दुर्बलोमुमूर्षुः त्रिकांडमंडनः दर्शोष्टिंचत-
दाकुर्यादिष्टिर्यदिनसंभवेत् देवतानांप्रधानानामेकैकस्यकुनेत्पृथक् पुरोनुवाक्यायाज्याभ्यांचतुरातघृताहुतीः न
था अग्न्यावरण्योरारूढेप्रमीयेतपतिर्यदि प्रेतंस्पृष्ट्वामथिताग्निंजस्याचोपावरोहणम् स्तंचद्वादशोपात्तंतूष्णींहुत्वा

शवक्रिया विच्छिन्नश्रौताग्नेर्मृतौ तु प्रेताधानं तत्रैवोक्तम् प्रेतस्याग्न्याद्युपेक्षितस्यामथिताग्न्यानडेरणी सन्निधा
गीमंथेत्तयस्येतियजुषानत। यस्याग्नयोनुकृतो मासक्रमाः संकल्पयंते यजमानमांसं आयंतु ते हविषे सादिनाय स्वं
लोकमिमं प्रेतं नयंत्विति मंत्रः श्राणीयपावकं तूष्णीं द्वादशोपात्तसर्पिषा तूष्णीं हुत्वा ततः कुर्यात् प्रेतेमासा इति क्रियां न
ष्टे चाग्ने चयारण्योर्नाशे स्वामी म्रियेत चेत् आहरेदरणी इदं मनो ज्योतिर्वेचाततः यज्ञपार्श्वैः यजमानश्चितारूढेया
न्यासे कृते सति वर्णीचाभिहतेचन्होकथं कुर्वीत याज्ञिकाः तरर्थं दग्धकाष्ठेन मंथनं तत्र कारयेत् तच्छेषालाभतोन्येन
दग्धशेषेण यद्वा पुनः हुत्वाज्यं लौकिकेवन्हौ हुतशेषं दहेत्तु वा अत्राग्निषु सकपर्णशरैः शरीरोत्पत्तिः शरीरेचासति प्रेता
धानेनाग्न्युत्पत्तिः उभयाभावे तु प्रेताधाने नाधिकारात् हाहादिसंस्कारलोपः उदकदानादेव कार्यमिति केशवीकारः
पामगुरवः तन्न निषेकाद्याः श्मशानांतास्तेषां वै मंत्रतः क्रिया इति विरोधात् क्रियालोपगतायेचेति निषेधात्तदभावे पला
शानां वृत्तैः कार्यः पुमानपीत्यभावे विधानस्याग्न्यभावेपि साम्याच्च तेन प्रेताहुत्यभावेपि स्त्रिया कूष्मांतरोक्तेरहत्वार्थत्वा
त् प्रेताधानं दाहोपि भवत्येव प्रतिकृतेरग्नीनां च प्रेताधानप्रयोजकत्वात्तत्ते: पत्न्याश्चप्येवम् दाहयित्वाग्निहोत्रेण स्त्रि
यं वृत्तवतीं पतिरिति याज्ञवल्क्योक्तेः यत्तु द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः जीवंत्यां प्रथमायां तु सुरापानस
मं स्मृतमिति तदाधाने सहानधिकृताविषयमिति विज्ञानेश्वरः मदनरत्नेत्राह्मोपि आहिताग्न्योश्चदंपत्योर्यस्त्वादौ म्रियते
भुवि तस्य देहः सपिंडैश्च दग्धव्यस्त्रिभिरग्निभिः पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना अनाहिताग्निदेहस्तु
स्यागृह्याग्निनाद्विजैः त्रिकांडमंडनस्तु विकल्पमाह ज्येष्ठायां विद्यमानायां द्वितीयायै स्वयोषिते काम्यानस्याग्निहोत्रं

यानकथंचित्प्रयच्छति स्त्रीमात्रमविशेषेणदग्ध्वान्यैर्वैदिकादिभिः विधानाद्यथनेयज्ञाधानमेवास्तिनेदृधूरिति अन्येदंत-
त्वं साग्नेःपत्नीमृतौ द्वौपक्षौपुनर्विवाहे छायांपूर्वाग्निभिर्दहेदित्येकःपक्षः भार्यायैपूर्वमारिण्यैदत्वाग्नीनंत्यकर्मणि पुन
र्दारक्रियांकुर्यात्पुनराधानमेवचेतिमनूक्तेः दाहयित्वाग्निहोत्रेणस्त्रियंवृत्तवतींपतिरितियाज्ञवल्क्योक्तेश्च पुनर्विवा
हाशक्तौनिर्मंथ्येनतांदग्ध्वापूर्वाग्निष्वेवाग्निहोत्रेष्ट्यादिकार्यमित्यर्थः आहार्येणाहिताग्निंपत्नीचेत्याश्वलायनोक्तेः भरद्वा-
जोपि निर्मंथ्येनपत्नीमिति पूर्वाग्न्येकदेशेनदहेदितियज्ञपार्श्वदेवयाज्ञिकादयः यानिचतस्मादपत्नीकोप्यग्निहोत्रमाहरे
दितिश्रुतिःविष्णुः छंदोगपरिशिष्टंच मृतायामपिभार्यायांलौकिकाग्निंनहित्यजेत् उपाधिनापितत्कर्मयावज्जीवंसमाचरे
त् उपाधिर्हेमकुशापत्न्यादिः अन्येकुशमयींपत्नींकृत्वातुगृहमेधिनः अग्निहोत्रमुपासंतेयावज्जीवमतुव्रताइत्यपरार्केस्मृ
त्यंतरात् कात्यायनोपि रामोपिकृत्वासौवर्णींसीतांपत्नींयशस्विनीम् ईजेबहुविधैर्यज्ञैःसहभ्रातृभिरच्युत इत्यादीनिता
निपूर्वाग्निष्वेवाग्निहोत्रादिपराणिनत्वपत्नीकस्याधानार्थानि क्रतुविधीनामाधानाप्रयोजकत्वात् अपत्नीकस्याधानाप्रवृ-
त्तिरितिमानवपरिशिष्टाच्च सोमेनप्रयक्ष्येव अपत्नीकोप्यसोमपइतिश्रुतेः यत्तुभरद्वाजापस्तंबसूत्रम् दारकर्मणियद्यश
क्तआत्मार्थमग्न्याधेयमिति अस्यार्थः पुनर्विवाहाशक्तौयदग्न्याधेयंपूर्वकृतमस्तितदात्मार्थमेव नपत्न्यैदद्यादिति ब्राह्मण
भाष्यापरार्कौशार्करामांडारादित्तत्वमप्येवम् त्रिकांडमंडनस्तुपक्षद्वयमाह अन्येप्यपत्नीकस्याधानमाहुस्तदाशयंनविद्मः
वृद्धयाज्ञवल्क्यः आहिताग्निर्यथान्यायंदग्धव्यस्त्रिभिरग्निभिः अनाहिताग्निरेकेनलौकिकेनापरोजनः क्रतुः एवंवृत्तां-
सवर्णांस्त्रींद्विजातिःपूर्वमारिणीम् दाहयेदग्निहोत्रेणयज्ञपात्रैश्चधर्मवित् कारिकायाम् पत्नीमपिदहेदेवंभर्तुःपूर्वंमृता-

यदि अनग्निकं दहेदेवं कपालेन हविर्भुजा आशौचप्रकाशेकृतः विधुरं विधवां नैव कपालस्थाग्निना दहेत् ब्रह्मचारिणं यतिं
नैव दहेदुत्तपनाग्निना तुषाग्निनात्र दग्धव्यः कन्यका बाल एव च अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत् करीषादित-
तो वह्निर्जातो यः सकपालजः अनुपनीते पत्यपि जातारण्यग्निः केश्चिदुक्तस्तथापि तस्य कलौ निषिद्धत्वात्करयमेव ज्ञेयः स्मृ-
त्यंतरे गृहस्थो ब्रह्मचारी च विधुरो विधवाः स्त्रियः औपासनश्चोत्तपनस्तुषाग्निस्तु कपालजः उत्तपनस्तु दर्भाग्रेग्निं तु
प्रज्वाल्य पुनर्दर्भैस्तु संयुतः पुनर्दर्भैस्त्रितीयेग्निरेष उत्तपनः स्मृतः यमः यस्यानयति शूद्रोग्निं तृणकाष्ठहवींषि च प्रे-
तत्वं च सदा तस्य स चाधर्मेण लिप्यते देवलः चंडालाग्निरमेध्याग्निः सूतिकाग्निश्च कर्हिचित् पतिताग्निश्चिताग्निश्च न
शिष्टग्रहणोचितः मनुः दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः अत्र प्रातिलोम्ये-
न क्रमः पूर्वमुखस्तेनैनव्यो ब्राह्मणो बांधवैर्गृहात् उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा दक्षिणाभिमुखः शू-
द्रो निर्हर्तव्यः स्वबांधवैरित्यादिपुराणादिस्यपरार्कः तेनात्रिंशच्छ्लोक्युक्तोनुलोमक्रमो हेयः आश्वलायनः ज्येष्ठमेव प्रथमाः
कनिष्ठजघन्यां गच्छेयुः आधानोत्तरं द्वितीयविवाहे कृते यजमानमरणे श्रौतस्मार्ताग्न्योः संसर्गः बौधायनसूत्रे अथ यथा-
हिताग्निर्द्विभार्यो विंदेत प्राक् संयोगात्स्वीयेनौपासनं संपरिस्तीर्याज्यं विलाप्य चतुर्गृहीतं गृहीत्वा समिधं स्यग्नौ जुहोति सं-
मितं संकल्पयेथामिति मिंदाहुती व्याहृतीश्च हुत्वाथैतमग्निमयं ते योनिर्ऋत्विय इति समिधि समारोप्य गार्हपत्ये समिध-
मभ्यादधाति भवतं नः समनसावितिगार्हपत्य आज्यं विलाप्य चतुर्गृहीतं गार्हपत्ये जुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यपरं
चतुर्गृहीत्वा निति स्कागानसयहं जुहोत्यथ गार्हपत्ये स्रुवाहुतीर्जुहोति ब्राह्मणएकहोतेति दशभिरथ प्राचीनावीत्यन्वाहार्य

ग्नेर्जुहोतियेसमानायेसजातादितिद्वाभ्यामथतत्रैवस्रुवाहुतिंजुहोत्यग्नयेकव्यवाहनायस्विष्टकृतेस्वधानमःस्वाहेत्यथयज्ञो-
पवीतीद्वादशगृहीतेनस्रुचंपूरयित्वापुरुषसूक्तेनाहवनीयेजुहोत्यथसप्ताहुतीर्जुहोत्यग्नयेविविचयेस्वाहाग्नयेव्रतपतयेग्न-
येपवमानायाग्नयेपावकायाग्नयेशुचयेस्वाहाग्नयेपथिकृतेस्वाहाग्नयेतनुमतेग्नयेवैश्वानरायेत्यथचतुर्गृहीतंजुहोति-
मनोज्योतिरित्यनऊर्ध्वंपितृकंकर्मप्रतिपद्यतइति आहिताग्नेर्विदेशमृतेपथिकृतीष्टिर्मृताग्निहोत्रंतदाह पात्रयोजनंच क-
ल्पसूत्रादिभ्योस्माभिस्तावदूह्यतएतेभ्यज्ञेयमितिचहुक्तंब्येष्टपरस्यते स्मार्ताग्निसूत्रंमदनरत्ने छंदोगपरिशिष्टेच दुर्बं
लंस्नापयित्वातुशुद्धचेलाभिसंवृतम् दक्षिणाशिरसंभूमौबर्हिष्मत्यांनिवेशयेत् घृतेनाभ्यक्तमाप्लाव्यशुद्धवस्त्रोपवीति-
नम् चंदनोक्षितसर्वांगंसुमनोभिर्विभूषयेत् हिरण्यशकलान्यस्यक्षिप्त्वाछिद्रेषुसप्तसु मुखेष्वथापिधायैनंनिर्हरेयुः सुता-
दयः आमपात्रेग्निमादायप्रेतमग्निपुरःसरम् एकोनुगच्छेत्तस्यार्धमर्धपथ्युत्सृजेद्भुवि ऊर्ध्वमादहनंकार्यमासीनोदक्षिणा-
मुखः सव्यंजान्वाच्यशनकैःसतिलंपिंडदानवत् अथपुत्रादिराप्लुत्यकुर्याद्दारुचयंमहत् तत्रोत्तानंनिपात्यैनंदक्षिणाशिरसं-
मुखे आज्यपूर्णांस्रुचंदद्याद्दक्षिणाग्रांनासिकांच पादयोरधरांप्राचीमरणीमुरसीतराम् पार्श्वयोःशूर्पंचमसौसव्यदक्षिण-
योःक्रमात् मुसलेनसहस्थूलंजघनान्तरउरूखलम् चात्वालीवमन्त्रेवअग्नयेरप्ययंविधिः अपसव्येनकृत्वैतद्वाग्यत-
ःपितृदिङ्मुखः अथाग्निंसव्यमारुत्वोदद्याद्दक्षिणतःशनैः अस्मात्त्वमधिजातोसित्वदयंजायतांपुनः असौस्वर्गाय
लोकायस्वाहेतिपरिकीर्तयेत् तथा एवमेवाहिताग्नेश्चपात्रन्यासादिकंभवेत् कृष्णाजिनादिकंचात्रविशेषोध्वर्युचोदितः
त्रेतैव अनपेक्षाद्वेतानारीदग्धव्यापाव्यवस्थिता अग्निप्रदानमंत्रोस्यानप्रयोज्यइतिस्मृतिः इदंछंदोगानामेव पात्रन्यासो

केरुत्तानदेहस्तंशाग्निपरम् निरग्निस्तुपुमानधोमुखः स्त्रीतूत्तानादात्या सगोत्रजैर्गृहीत्वातु चितामारोप्यते शवः अ-
धोमुखोदक्षिणादिक्चरणस्तुपुमानिति उत्तानदेहानारीतुसपिंडैरपिबंधुभिरित्यादिपुराणादितिशक्तिस्व.
तादयः उत्तरशिरस्त्वंसामगेतरपरं यारा हेत्वाग्निदानेन्योमंत्रः कृत्वातुदुष्कृतंकर्मजानताचाप्यजानता मृत्युका-
लवशंप्राप्य नरंपंचत्वमागतम् धर्माधर्मसमायुक्तं लोभमोहसमावृतम् दहेयंसर्वगात्राणिदिव्यान्लोकान्सग-
च्छतु ज्वलमानंमहावन्हिंशिरस्थानेप्रदापयेत् चतुर्वर्णेषुसंस्थानमेवंभवतिपुत्रके अभक्रियानिबंधेगारुडे
षट्पिंडदानमुक्तम् मृतस्योत्क्रांतिसमयेषट्पिंडान्क्रमशोददेत् मृतस्थानेतथाद्वारिचत्वरेतार्क्ष्यकारणात् वि
श्रामेकाष्ठचयनेतथासंचयनेचषट् तथा आदौदेयास्तुषट्पिंडादशदेयादशाहिकाः स्थानेचार्धपथेतीतेचि
तायांशवहस्तके स्मशानवासिभूतेभ्यः षष्ठंसंचयनेतथा ततः लंभूतकृज्जगद्योनेत्वंलोकपरिपालकः उक्तः
संहारकस्तस्मादेनंस्वर्गंमृतंनयेत्यग्निंदत्वाऽस्मात्त्वामिति मंत्रेणार्धदग्धेआज्याहुतिरुक्ता आहिताग्नोपराशरः श-
म्यांशिश्नेविनिक्षिप्य अरणीमुष्कयोरपि जुहूंचदक्षिणेहस्तेवामेतूपभृतंन्यसेत् शिश्नेतूलूखलंदद्यात्पृष्ठेचमु-
सलंन्यसेत् उरसिक्षिप्यदृषदंतंडुलाज्यतिलान्मुखे श्रोत्रेचप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः कर्णेनेत्रेमुखे
घ्राणेहिरण्यशकलंन्यसेत् अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत् प्रचेताः स्नानंप्रेतस्यपुत्राद्यैर्वस्त्राद्यैःपूजनं
ततः नग्नदेहंदहन्नैवकिंचिद्देयंपरित्यजेत् यमः प्रेतंदहेच्छुभैर्गंधैःस्नपितंस्रग्विभूषितम् आश्वलायन
सूत्रे संस्थितेप्रेतालंकारान्कुर्वंति केशश्मश्रुलोमनखानि चापयंतिनलदेनानुलिंपंतिनलदमालांप्रतिमुंचंतीति

माधवीयेश्राद्धे दरिद्रोपिनदग्धव्योनग्नः कस्यांचिदापदि तथा निःशेषस्तु नदग्धव्यः शेषंकिंचित्यजेन्नरः दाहकालेग्नि नाशेतु मदनरत्ने यज्ञपार्श्वः यजमानेमृतेक्वापि चिताद्येचाप्रवेशिते वर्षाद्यभिहतेग्नौतु कथंप्रेतविकल्पना शेषंदग्ध्वा प्रदग्धेषुनिर्मथ्यैवतुकारयेत् अथपर्णशरादिदाहेनाग्निनाशेपश्चात्तद्देहलाभेमदनरत्ने श्राद्धे अथपर्णशरेदग्धेपा न्न्यासेकृतेसति गतेचाग्निसुतद्देहोयद्यूर्ध्वंलभ्यतेक्वचित् तदार्धदग्धकाष्ठानितानिनिर्मथ्यतंदहेत् यद्यर्धदग्धका ष्ठंतुतदीयंवैनलभ्यते तदानदस्थिखंडंतुनिक्षेप्तव्यंमहाजलइति दंपत्योरेकदामृतौविशेषमाहापस्तंबः तथैवपैले सहैवपितृमेधोद्विवचनलिंगान्मंत्रान्संधारयंति पितृमेधोदाहांतंकर्म दाहांतमेकतंत्रत्वमिति बोधायनोक्तेः आस्थि संचयनमप्येकंउदकपिंडदानादिपृथगेव सहगमनेप्येवम् तदाहमदनरत्ने भाष्यार्थसंग्रहकारः एककालमृ तौभार्याभर्तारौचयदिद्वयोः तंत्रेणदहनंकुर्यात्पिंडःश्राद्धंपृथक्पृथक् एककालेमृतौजायापतीयदितदा पितुः विभज्याग्निंक्रियांकुर्यादितियत्तदसांप्रतम् दाहांतमेकतंत्रत्वमितियाज्ञिकसंमतम् मृतंपतिमनुव्रज्ययानारीज्व लनंगता अस्थिसंचयनांतोस्याभर्तुःसंस्कारएवहि कीकसानांतुसंस्कारोन्यायसिद्धोपिनोभतः एककालेमृतेप्येवं कीकसानांविधिःस्मृतः नवश्राद्धंसपिंडांतंभिन्नकालमृतौयथा कपर्दिकारिकापि मृतेभर्तरितद्दाहात्प्राक्पत्नी म्रियतेयदि पत्न्यांवाप्राक्प्रमीयायांदाहादर्वाक्पतिर्मृतः तत्रतंत्रेणदाहःस्यात्मंत्रेषुद्विलमूह्यते कीकसानांतुसंस्का रः पृथगेवतयोर्भवेत् एकाहमृत्योर्युगपन्नवश्राद्धादिकंतयोः मृतंपतिमनुव्रज्यपत्नीचेदनलंगता तत्रापिदा हस्तंत्रेण पृथगस्थिक्रियाभवेत् अस्थिसंचयनपृथक्त्वेविकल्पः सहगमनेसर्वत्रपाकैक्यमाहप्रचेताः एकचि-

स्यां समारूढौ मीयेते दंपती यदि तंत्रेण श्रपणं कुर्यात् पृथक् पिंडं समाचरेत् अथोदकदानं वसिष्ठः शरीरमग्नौ संयोज्य
नवेक्षमाणा अपोऽभ्यवयंति सव्योत्तराभ्यां पाणिभ्यामुदकक्रियां कुर्वंत्ययुग्मम् आपस्तंबः मातुश्च योनिसंबंधेभ्यः
पितुश्चा सप्तमात्पुरुषाद्यावतां वा संबंधो ज्ञायते तेषां प्रेतेषूदकक्रियेति याज्ञवल्क्यः सप्तमाद्दशमाद्वापि ज्ञातयो-
ऽभ्युपयंत्यपः अपनः शोशुचदघमनेन पितृदिङ्मुखाः सकृत्प्रसिंचंत्युदकं नामगोत्रेण वाग्यताः सप्तमाद्दशमा
द्वा दिवसादा तद्दत्तमिति विज्ञानेश्वरः कानीयास्तु सप्तमाद्दशमाद्वा पुरुषादित्याहुः सप्तमाद्दशमाद्वा पुरुषात्समान
ग्रामवासे यावत्संबंधमनुस्मरेयुरिति पारस्करोक्तेः मंत्रस्नानांगमेवेति हेमाद्रिः प्रचेताः प्रेतस्य बांधवा यथावृद्धमुद
कमवतीर्य नोद्वर्तयेयुरुदकांते प्रसिंचेयुरपसव्ययज्ञोपवीतवाससो दक्षिणामुखा ब्राह्मणस्योदङ्मुखा प्राङ्मु
राजन्यवैश्ययोः स एव नदीकूलं ततो गत्वा त्युक्त्वा सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः पाषाणं तत आदाय विप्रे
दद्याद्दशांजलीन् द्वादश क्षत्रिये दद्यात् वैश्ये पंचदश स्मृताः त्रिंशच्छूद्राय दातव्यास्ततस्तु प्रविशेद्गृहम् ततः स्नानं पु
नः कार्यं गृहशौचं च कारयेत् प्रेतस्नाने विशेषः शाङ्खिलत्वे आदिपुराणे आदौ वस्त्रं च प्रक्षाल्य तेनैवाच्छादितस्त
तः कर्तव्यं तैः सचैलं तु स्नानं सर्वमलापहम् पूर्वपरिहितं वस्त्रं प्रक्षाल्य पुनः परिधाय स्नायादित्यर्थः अपनइति मंत्रे
ण वामहस्तानामिकया जलालोडनम् अवतरणे वृद्धपुरःसरत्वोक्तेर्यथाबालपुरस्कृत्येति बोधायनीयं जलादुत्थानपर
मिति हारलतायां आश्वलायनः सव्याहृतो ब्रजंत्यनीक्षमाणा यत्रोदकमवहद्भवति तत्प्राप्य सकृदुन्मृज्यैकांजलि
मुत्सृज्य तस्य गोत्रं नाम गृहीत्वेति प्रचेतसान्वहमंजलित्रयमप्युक्तं त्रिः प्रसेकं कुर्युः प्रेतस्तृप्यत्विति तथा दिने दिनेंज

लीन्पूर्णान्प्रदद्यात्प्रेतकारणात् तावद्दद्यादिश्च कर्मव्यायावत्पिंडःसमाप्यते एकाहाद्दिस्त्रिकहद्दिरेवेत्यर्थः मदनरत्ने भरद्वाजगृह्येतु द्विकमहिरष्ट
त्वा आशौचांतेप्रदद्यात्प्रेतंपुत्रस्तिलांजलीन् प्रथमेन्हिसकृद्दद्यात्पिंडयज्ञावृतादिवा त्रीन्प्रदद्याद्द्वितीयेन्हितृतीयेपंचएवच चतुर्थेसप्त
संख्यांस्तु पंचमेनवचोत्सृजेत् षष्ठेन्हिचैकादशकाः सप्तमेतुत्रयोदश अष्टमेपंचदशकान्नवमेदशसप्तच एकोनविंशतिंचापिदश
तांजलिमतंस्मृतम् केचिद्दशांजलीन्प्रोचुः केचिदाहुः शतांजलीन् पंचपंचाशतंचान्ये स्वशाखोक्तव्यवस्थया छंदोगपरिशिष्टे अथा
नवेक्षयेत्तापः सर्वेचैवशवस्पृशः गोत्रनामपदांतेतुतर्पयामीत्यनंतरम् दक्षिणाग्रान्कुशान्कृत्वासतिलंतुपृथक्पृथक् विष्णुपुराणे स
पिंडीकरणंयावदृजुदर्भैःपितृक्रिया सपिंडीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत् रामायणे इदंपुरुषशार्दूलाविमलंदिव्यमक्षयम् पि
तृलोकेषुपानीयंमद्दत्तमुपतिष्ठताम् दानवाक्येविकल्पः याज्ञवल्क्यः कामोदकंसखिप्रत्ताःस्वस्रीयश्वशुरर्त्विजाम् कामइच्छा
प्रेतत्स्त्रीच्छायांदेयमन्यथानेत्यर्थः शंखपारस्करौ आचार्येचैवम् मातामहयोश्चस्त्रीणांचाप्रत्तानांकुर्वीरंस्ताश्चतेषामितिद्वि
वचनात्मातामह्याअपि शंखलिखितौ उदकक्रियाक्रमंश्वशुरमातुलयोःशिष्येसहाध्यायिनिराजनिचेति इन्दुमतः स्त्रीधा
ध्यानोदकंकुर्युस्तेनाप्यासाविधर्मिणः गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितः याज्ञवल्क्यः नब्रह्मचारिणःकुर्युरुदकंपतितास्तथा
षडशीतौ स्वीयाचारादपिभ्रष्टाःपतितायेचदूषिताः नकुर्युरुदकंतेवैतेभ्योप्यन्येनचैवहि मदनरत्नेहारीतः पतितामपहृत्कानां
चरंतीनांचकामतः प्रत्तानांचैवकन्यानांनिवर्त्यःसलिलक्रिया अपरार्केशंखलिखितौ अपपात्रितस्यारिक्थापिंडोदकानिव्यावर्तं
ते अपपात्रितःकृतघटस्फोटः तस्यापिसंग्रहविधौकृतेआशौचोदकादिकुर्यादित्याशौचप्रकाशः अथाशौचेनियमाः याज्ञव
ल्क्यः इतिसंश्रुत्यगच्छेयुर्गृहंबालपुरःसराः विदश्यनिंबपत्राणिनियताद्वारिवेश्मनः आचम्याग्न्यादिसलिलंगोमयंगौरसर्षपान्

इतरेआदित्यपुराणे आशौचमध्येयत्नेनभोजयेच्चसगोत्रजान् अंत्यादिनेतुमदनरत्नेश्राद्धे यस्ययस्यतुवर्णस्ययद्यत्स्यात्पश्चिमंत्वहः सतत्रगृह
शुद्धिंचवस्त्रशुद्धिंकरोत्यपि अंत्यकर्मकालीनवस्त्रयोस्तत्रैवोक्तम् ग्रामाद्बहिस्ततोगत्वा प्रेतस्पृष्टेतुवाससी अंत्यानामाश्रितानांच त्य
क्त्वास्नानंकरोत्यथेतिशंखः दानंप्रतिग्रहोहोमःस्वाध्यायःपितृकर्मच प्रेतपिंडक्रियावर्ज्यमाशौचेविनिवर्तते काठकगृह्ये यत्रप्राणोत्क्र
मस्तत्रान्त्यहेमहाबलिंकुर्यादिति पारस्करः तदानीमेववस्त्रंतंडुलंदीपंकांस्यभाजनंप्रेतायदद्यात् आशौचप्रकाशेभरद्वाजः वासोन्नंच
जलंकुंभंप्रदीपंकांस्यभाजनं नग्नप्रच्छादनेश्राद्धेब्राह्मणायनिवेदयेत् भृगुः तिलोदकंतथापिंडंनग्नप्रच्छादनादिकम् रात्रौनकु
र्यात्संध्यायांयदिकुर्यान्निरर्थकं अथप्रेतपिंडः यद्यपिहेमाद्रौपारस्करेण ब्राह्मणेदशपिंडास्तुक्षत्रियेद्वादशस्मृताः वैश्येपंचदशप्रो
क्ताः शूद्रेत्रिंशत्प्रकीर्तिता इत्युक्तं तथापिप्रेतेभ्यःसर्ववर्णेभ्यःपिंडान्दद्याद्दशैवत्विति तत्रैवोक्तेःसर्वेषांदशैवज्ञेयाः मदनरत्नेप्ये
वम् तथाचहेमाद्रौब्राह्मपाद्मयोःजातकाशौचतुल्यांस्तुवर्णानांकेचिदेवहि देशधर्मानुपुरस्कृत्यप्रेतपिंडान्वपत्यपि त्यक्त्वाविप्रा
न्येषुदशमपिंडोत्कर्षउक्तः देयस्तुदशमःपिंडोराज्ञांवैद्वादशेहनि वैश्यानांचैवपंचदशेदेयस्तुदशमस्तथा शूद्रस्यदशमःपिंडोमा
सेपूर्णेन्हिदीयतेइतिपुष्पमृतादेःसद्यःशौचेत्र्यहादौचतत्रैवोक्तम् सद्यःशौचेप्रदातव्याःसर्वेपियुगपत्तथा त्र्यहाशौचेप्रदातव्यःप्रथ
मेन्ह्येकएवहि द्वितीयेहनिचत्वारस्तृतीयेपंचचैवहि त्र्यहेप्रकारांतरंप्रागुक्तम् शातातपः आशौचस्यतुह्रासेपिपिंडान्दद्याद्दशैवतु
तत्रैकपात्रेसकृत्पक्वाद्दशपिंडान्ददात् उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये पूर्वदत्तांजलीन्दद्यात्पूर्वपिंडास्तथैवचेतिगृह्यकारि
कायांपात्रविपर्ययेदोषोक्तेः शिलाविपर्ययेघटस्फोटादेर्नावृत्तिः अक्षाभ्यंजनादिपदकर्मणःएकहायनिनयनवदप्रयोजकत्वात् तद्वात्रा
लौकिकग्रहणम् केचित्तुनचान्यादायभांडानिआरूकंचरूकंतथेतिप्रचेतसोक्तेःपात्रानेकत्वमाहुः क्रियाकर्तुर्नाशेन्येनशेषःसमापनी

यः एवंक्रियाप्रवृत्तानांयदिकश्चिद्विपद्यते तद्रंधनाक्रियाकार्यास्तैर्वैर्यसहकारिभिरितिश्राद्धितत्वेबृहस्पतिस्मृतेः पत्न्याःकर्तुस्तैरजोदर्शनेन्त
नदंतेकुर्यात् शातातपागुणमार्त्तवमित्युक्तेः आशौचांते आर्त्तवेकर्तुरस्वास्थ्येवान्येनक्रियासर्वावर्त्तनीयाकर्तुर्विपर्ययात्कालातिक्रमयो
गाच्च पाराहे स्थंडिलेप्रेतभागंतुदद्यात्पूर्वाण्हएवतु कृत्वातुपिंडसंकल्पंनामगोत्रेणसंदरि मरीचिः प्रेतपिंडंबहिर्दद्याद्दर्भमंत्रविव
र्जितम् शाखुदीच्यांचरुंकृत्वास्नातःप्रयतमानसः दर्भवर्जनमनुपनीतपरं असंस्कृतानांभूमौपिंडंदद्यात्संस्कृतानांकुशेष्विति प्रचे
तसोक्तेः मिताक्षरायांस्मृत्यंतरे भूमौमाल्यंपिंडंपानीयमुपलेचादद्यः शकनःपुच्छः फलमूलैश्चपयसाशाकेनन्चगुडेनच तिलमिश्रं
तुदर्भेषुपिंडंदक्षिणतोहरेत् तूष्णींप्रसेकंपुष्पंचधूपंदीपंतथैवच शालिनासक्तुभिर्वापिशाकैर्वाप्यथनिर्वपेत् प्रथमेहनियद्द्रव्यंतदेव
स्याद्दशाहिकम् मदनरत्नेमात्स्ये तैजसंमृन्मयंवाथपात्रंसंशोध्ययत्नतः लौकिकाग्नावधिश्रित्यपचेदन्नंघृतप्लुतम् स्नात्वाथतिलसंमि
श्रंप्रदद्याद्दर्भसंस्तरे श्राद्धितत्वेदेवजानीयेन्च श्राद्धे प्रथमेहनियोदद्यात्प्रेतायान्नंसमाहितः अन्नंनवकचान्येषुसएवप्रदद्यात्सपि मृ
न्मयंभांडमादायनवंस्नातःकृसंयतः तंडुलप्रसृतिंनत्रनिःप्रक्षाल्यपचेत्स्वयम् सपवित्रैस्तिलैर्मिश्रंकामकेशविवर्जितम् द्वारोपां
तेततःक्षिप्ताशस्त्रंगोरमृत्तिकाम् भूपृष्ठेसंस्तरेदर्भान्याम्याग्रान्देशसंभवान् ततोवनेजनंदद्यात्संस्मरन्गोत्रनामनी तिलस
र्पिर्मधुक्षीरैःसंसिक्तंतसमेचहि दद्यात्प्रेतायपिंडंतुदक्षिणाभिमुखःस्थितः अर्घ्यैःपुष्पैस्तथाधूपैदीपैस्तोयैश्चशीतलैः. ऊर्णातंतुम
यैःशस्त्रैःवासोभिःपिंडमर्चयेत् दिवसेदिवसेदेयःपिंडएवंक्रमेणतु सद्यःशौचेप्रदातव्याःसर्वेपियुगपत्तथा त्र्यहशौचेपिदातव्याःत्रय
पिंडाःसमाहितैः द्वितीयेचतुरोदद्यात्अस्थिसंचयनंतथा त्रींस्तुदद्यात्तृतीयेन्हिवस्त्रादिक्षालयेत्ततः दशाहेपिचदातव्यःप्रथमेत्वेक
एवहि एकस्तोयांजलिस्त्वेवंपात्रमेकंचदीयते द्वितीयेद्वौतृतीयेत्रीनित्यायुक्त्याएवंस्यःपंचपंचाशत्तोयस्यांजलयःक्रमात् तोयपात्रा

पितावंतिसंयुक्तानितिलादिभिरिति पात्रंकुंभः अत्राहः पदमहोरात्रपरम् तेनरात्रावपिदेयइतिगौडाः दिवसपदाद्रात्रौनेतिमैथिलाः सप्त
वेत्युक्तेः सपिंडेनदशपिंडप्रक्रांतेपुत्रागमेपिसनदद्यात् असगोत्रःसगोत्रोवेतिमाधुक्तेः दाहकर्तैवदशाहंकुर्यादितिमिताक्षरायाम् शङ्कितत्वे
वायवीयेपि असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् यश्चाग्निदाताप्रेतस्यपिंडंदद्यात्सएवहीतितत्रैव पूरकेणतुपिंडेनदेहोनिष्पाद्य
तेयतः कृतस्यकारणायोगात्पुनर्नावर्ततेक्रिया षडूपकाशेवायवीयेपि निवर्तयतियोमोहात्क्रियामन्यनिवर्तिताम् विधिघ्नस्तेनभ
वतिपितृहाचोपजायते तस्मात्तेतत्क्रियायेनकेनापिनकृतायदि नतांनिवर्तयेत्प्राज्ञःसतांधर्ममनुस्मरन्निति आदिपुराणे पितृशब्दंस्व-
धांचैवनप्रयुंजीतकर्हिचित् अश्रुशब्दंतथाचैहप्रयत्नेनविवर्जयेत् उपतिष्ठतामयंपिंडः प्रेतायेतिसमुच्चरेत् क्रियानिबंधेव्यासः प्रे
तायपिंडंदत्त्वातुततोश्नीयाद्विनाख्यये भविष्ये ओदनामिषसक्तूनांशाकमूलफलादिषु प्रथमेहनियद्दद्यात्तद्दद्यादुत्तरेहनि गृहद्वारि
श्मशानेवातीर्थेदेवगृहेपिवा यत्राद्येदीयतेपिंडस्तत्रसर्वंसमापयेत् आद्ये शिरस्त्वाद्येनपिंडेनप्रेतस्यक्रियतेसदा द्वितीयेनतुकर्णौ क्षी
नासिकाश्चसमासतः गलांसभुजवक्षांसितृतीयेनयथाक्रमम् चतुर्थेनतुपिंडेननाभिलिंगगुदानिच जानुजंघेतथापादौपंचमेनतुस-
र्वदा सर्वमर्माणिषष्ठेनसप्तमेनतुनाडयः दंतलोमान्यष्टमेनवीर्यंतुनवमेनच दशमेनतुपूर्णत्वंतृप्तताक्षुद्विपर्ययइति याज्ञवल्क्येनतु
पिंडयज्ञावृतादेयंप्रेतायान्नंदिनत्रयमित्युक्तम् अत्रफलतारतम्यंज्ञेयमितिविज्ञानेश्वरः तेनत्र्यहाशौचपरत्वंदेवयाज्ञिकोक्तंचिंत्यं आशौ
चस्यह्रासेपिपिंडान्दद्याद्दशैवतुइतिवचनाच्च दिनत्रयावश्यकत्वार्थमितिहारलतादयः शातातपः जलमेकाहमाकाशेस्थाप्यम्
क्षीरंचमृन्मयेपारस्करः मृन्मयेतांरात्रींक्षीरोदकेविहायसिनिदध्युः प्रेतात्रस्नाहीत्युदकं पिबन्वेदमितिक्षीरम् इदंरात्रावेवेतिगौडाः
गारुडेतु अपक्वेमृन्मयेपात्रेदुग्धंदद्याद्दिनत्रयमित्युक्तम् हेमाद्रौपाद्येतुद शाहमुक्तम् तस्मान्निधेयमाकाशेदशरात्रंपयोजलम्

सर्वतापोपशांत्यर्थमध्वश्रमविनाशनम् देवजानीयेकार्तिकायाम् तत्रभेनोपकल्पयेद्दशरात्रमखंडितम् कुर्यात्प्रदीपंतैलेनवारिपात्रंचमार्ति
कम् भोज्यान्भोजनकालेतुभक्तमुष्टिंचनिर्वपेत् नामगोत्रेणसंबुध्याधरित्र्यांपितृयज्ञवत् शातातपः भूलोकात्प्रेतलोकंतुगंतुंश्राद्धं
समाचरेत् नसाधेयंहि भवतिमृतस्यमनुजस्यतु अथदशाहमध्येदर्शपातेनिर्णयः भविष्ये प्रवृत्ताशौचतंत्रस्तुयदिदर्शमुपपद्यते समा
प्यशेषंपिंडान्स्नानमात्रंसमाचरेत् ऋष्यशृंगः आशौचमंतरादर्शोयदिस्यात्सर्ववर्णिनां समाप्तिंप्रेततंत्रस्यकुर्यादित्याहगौतमः पै
ठीनसिः आद्येदावेवकर्तव्याप्रेतपिंडोदकक्रिया द्वितीयेदर्शेतुकुर्वाणःपुनःशापंसमश्नुते मातापित्रोस्तुश्लोकगौतमः अंतर्दशाहेदर्शे
नसर्वंसमापयेत् पित्रोस्तुयावदाशौचंदद्यात्पिंडान्जलांजलीन् इदमपित्र्यहमध्येदर्शपाते तदूर्ध्वंदर्शेतुपित्रोरपितंत्रंसमाप्यमेव पित्रोराशौचम
ध्येतुयदिदर्शःसमापतेत् तावदेवोत्तरंतंत्रंपर्यवस्येत्त्र्यहात्परमितिगालवोक्तेः अन्येषांतुत्र्यहमध्येपिसमाप्तिरितिपराशरमाधवीयेनिर्णयामृतेचो
क्तं कालादर्शेपि दर्शोदशाहमध्येस्यादूर्ध्वंतंत्रंसमापयेत् त्रिरात्रादुत्तरंपित्रोर्मृतानिर्विनिश्चयः मदनपारिजातेतुगालवीयमापदनौरसपुत्रादि
विषयम् त्र्यहोर्ध्वमपिपित्रोर्नतंत्रसमाप्तिरित्युक्तंमदनरत्नेप्येवं ममतुदेशाचाराव्यवस्थेतिप्रतिभाति अथास्थिसंचयः तत्राश्वलायनेनत्रूक्ष्याप
क्षेएकादशीत्रयोदशीदर्शेषुआषाढीफाल्गुनीप्रोष्ठपदाभिन्नर्क्षेउक्तं तदाशौचमध्येऽसंभवेतदूर्ध्वंचमागब्दात्करणेज्ञेयं आशौचमध्येतुमदन
रत्नेसंवर्तः प्रथमेह्नितृतीयेवासप्तमेनवमेतथा अस्थिसंचयनंकार्यंदिनेतज्ज्ञोत्रजैःसह छंदोगपरिशिष्टेतु अपरेद्युस्तृतीयेवाअस्थिसं
चयनंभवेदिति द्वितीयेप्युक्तम् विष्णुकात्यायनौसंचयनंचतुर्थ्यामिति माधवीयेयमः भौमार्कमंदवारेषुतिथियुग्मेविवर्जयेत् वर्जयेदेकपादर्क्षेद्वि
पादर्क्षेस्थिसंचयम् प्रयतृजन्मनक्षत्रेत्रिपादर्क्षेविशेषतः ब्राह्मे चतुर्थेब्राह्मणानांतुपंचमेहनिभूभृतां नवमेवैश्यजातीनांशूद्राणांदशमा-
त्परम् दशमेह्नीतिवापाठः शौनकः पालाशोप्यस्थिदाहेत्वसद्यःसंचयनंभवेत् काम्यमरणेतुतस्यात्रिरात्रमाशौचं द्वितीयेत्वस्थिसंचयइत्यु

कं अंगिरा: प्रेतीभूतंतथोद्दिश्यय:श्राद्धंनकरोतिचेत् देवतानांतुयजनंतंशपत्यथदेवता: तद्विधि:सत्यसूत्रेभट्टकृतोज्ञेय:   हेमाद्रौनागरखंडे
णीणिसंचयनस्यार्थेनानिवेश्शृणुसांप्रतं यत्रस्थानेभवेन्मृत्युस्तत्रश्राद्धंप्रकल्पयेत् एकोद्दिष्टंततोमार्गेविश्रामोयत्रकारित: तत:संचयनस्यार्थे
तृतीयंश्राद्धमिष्यतेअपराह्णेमदनरत्नेचब्राह्मे सद्य:शौचेतथैकाहेसद्य:संचयनंभवेत् त्र्यहाशौचेतृतीयेन्हिकर्तव्यस्त्वस्थिसंचय: तत्रै
व स्मशानदेवतापागंचतुर्थेदिवसेन्वरेत् मृन्मयेषुचभांडेषुकुंभेषुरुचकेषुवा रूपक्वैर्भक्ष्यभोज्यैश्चपायसै:पानकैस्तथा फलैर्मूलैर्वनो
द्भैश्चपूज्या: क्रव्याद्देवता: धूपदीपस्तथामाल्यमर्घ्यंदेयंत्वरान्वितै: तत्रपात्राणिपूर्णानिस्मशानाग्ने:समंतत: निवेदयद्विवक्तव्यंतै:स
र्वैरनहंकृतै: नम:क्रव्यादमुख्येभ्योदेवेभ्यइतिसर्वदा येत्रस्मशानेदेवा:स्युर्भगवंत:सनातना: तेस्मत्सकाशाद्गृह्णंतुबलिमष्टांगमक्षयं प्रेत
स्यास्यशुभान्लोकान्प्रयच्छंतुचशाश्वतान् अस्माकमायुरारोग्यंसुखंचददतान्चिरम् एवंकृत्वाबलीन्सर्वान्क्षीरेणाभ्युक्ष्यवाग्यत: एवंदत्वा
थलिंचैवदद्यात्पिंडत्रयंबुध: एवंस्मशानवासिभ्य:प्रेतायैवतुमध्यमम् तृतीयंतत्सखिभ्यश्चदक्षिणासंस्थमादरात् ततोयज्ञियवृक्षोत्थां शा
खामादायवाग्यत: प्रेतस्यास्थीनिगृण्हातिप्रधानांगोद्भवानिच शिरसो वक्षसो:पाण्यो:पार्श्वाभ्यांचैवपादत: पंचगव्येनसंस्नाप्यक्षौमवस्त्रेणवे
ष्टयच प्रक्षिप्यमृन्मयेभांडेनवेसाच्छादनेशुभे अरण्येवृक्षमूलेवाशुद्धेसंस्थापयत्यपि गृहीत्वास्थीनितद्भस्मनीत्वानोयेविनिक्षिपेत् तत:
संमार्जनंभूमे: कर्तव्यंगोमयांबुभि: पूजांचपुष्पधूपाद्यैर्बलिभि:पूर्ववत्क्रमादिति अथतीर्थेस्थिक्षेपविधि: तत्रैव तत्स्थानाच्छनकैर्नीत्वा
कदाचिज्जान्हवीजले कश्चित्क्षिपतिसद्भ्रातादौहित्रोवासहोदर: मातृकुलंपितृकुलंवर्जयित्वानराधम: अस्थीन्यन्यकुलस्थस्यनीत्वाचांद्रा
यणंचरेत् तत्रैवब्रह्मांडपुराणे अस्थीनिमातापितृपूर्वजानांनयंतिगंगामपियेकथंचित् सद्बांधवस्यापिदयाभिभूतास्तेषांतुतीर्थानिफलप्रदा
नि स्नात्वाततःपंचगव्येनसिक्त्वाहिरण्यमध्वाज्यतिलैश्चयोज्य ततस्तुमृत्पिंडपुटेनिधायपश्यन्दिशंप्रेतगणोपगूढाम् नमोस्तुधर्मायवदे:

निधायतलंसमेभीतर्ह्णनिक्षिपेच्च उत्थायभास्करंपश्येत्सूर्यंसदक्षिणांविप्रमुख्याय दद्यात् एवंकृतेप्रेतपुरस्थितस्यस्वर्गेगतिःस्यात्तुमहेंद्रतु-
ल्या यमः गंगातोयेषुयस्यास्थिक्षिप्यतेशुभकर्मणः नतस्यपुनरावृत्तिर्ब्रह्मलोकात्सनातनात् तथा अस्तंगतेगुरौशुक्रेतथामासेमलि-
म्लुचे गंगायामस्थिनिक्षेपंनकुर्यादितिगौतमः दशाहांतर्नदोषः दशाहस्यांतरेयस्यगंगातोयेस्थिमज्जति गंगायांमरणंयादृक्तादृक्
फलमवाप्नुयादिति मदनरत्नेब्रह्मोक्तेः शौनकः शौनकोहंप्रवक्ष्यामिअस्थिक्षेपविधिंक्रमात् आदौग्रामाद्बहिर्गत्वास्नानंकुर्यात्स-
चेलकम् शोधयेत्पंचगव्येनसुवर्णमंत्रैर्विचक्षणः गायत्र्याद्यैःपंचगव्यमंत्रैर्निखातास्थिभूमिंप्रोक्षेदित्यर्थः उपसर्पादिभिर्मंत्रैः प्रार्थ-
नंखननंतथा मृत्तिकोद्धरणंचास्थ्नांग्रहणंचयथाक्रमम् उपसर्पेतिचतुर्भिर्मंत्रैःक्रमेणप्रार्थनादिज्ञेयम् स्नात्वास्थिशुद्धिंकुर्वी-
त एतोन्विंद्रेतिसूक्ततः स्नात्वास्थ्नःततःस्नानंपंचगव्येनशुद्धाति दशस्नानानिकुर्वीततन्मंत्रैर्विचक्षणः गोमूत्रंगोमयंक्षीरंदधिस-
र्पिःकुशोदकम् भस्ममृन्मधुवारीणिमंत्रैस्तानिवेदशकुशैः संमार्जयेदस्थीन्यतोदेवेभिमंत्रतः एतोन्विंद्रंशुचीवेतितन्नतमंहइतीतिच
वामदेव्यसामगानेनरुद्रसूक्तंयथाक्रमम् एतैःकुशैर्मार्जनम् हेमश्राद्धंततःकुर्यात्पितृनुद्दिश्ययत्नतः पिंडदानंप्रकुर्वीततन्मंत्रैस्तिलतर्पणं
अस्थिक्षेपांगंवेदम् अजिनंकंबलादर्भागोकेशाःशाणमेवच भूर्जपत्रंताडपत्रंसप्तधावेष्टनंस्मृतम् हेमंचमौक्तिकंरौप्यंप्रवालंनीलकंत-
था निक्षिपेदस्थिमध्येतुशुद्धिर्भवतिनान्यथा ततोहोमंप्रकुर्वीततिलाज्येनविचक्षणः उदीरतेतिसूक्तेनहुनेदष्टोत्तरंशतम् ततोगत्वाक्षिपे-
त्तीर्थेस्पर्शदोषोनविद्यते मूत्रंपुरीषमाचमनंकुर्वन्नास्थीनिधारयेत् अत्रदशदानंवैतरणीऋणमोक्षपापधेनुदानमुक्तम् दिवोदासीयेक-
शीखंडे धनंजयोपिधर्मात्मामातृभक्तिपरायणः आदायास्थीन्ययौमातुर्गंगायांगस्थितोभवत् पंचगव्येनसंस्नाप्यतथापंचामृतेनवै,
यक्षकर्दमलेपेनाभिस्नाप्यपुष्पैःसंपूज्यच आवेष्ट्यनेत्रवस्त्रेणततःपट्टांबरेणच ततःस्वरसवस्त्रेण ततोमांजिष्ठवाससा नेपालकंबलेना-

धमृदाचाथविशङ्कया नाभसंपुटकेकृत्वामातुरंगान्प्रणोवहेत् व्यासः पट्टवस्त्रंचकौशेयंमांजिष्ठंश्वेतवस्त्रकम् कंबलंशाणपट्टंच
अजिनंचतथोत्तरम् एषांविकल्पः अन्यश्चात्रविशेषस्त्रिस्थलीसेतौदिवोदासीयेज्ञेयः संचयनोत्तरंश्राद्धमाहाश्वलायनः श्राद्धम
स्मैदद्यादितिस्मृत्यर्थसारे संचयनेकृतेमनुष्यलोकंगच्छन्तःपाथेयश्राद्धनामेनकार्यमिति अनुपनीतस्यनसंचयनम् अथनवश्राद्धं ग
ध्यान्तंद्रोदयेगिराः प्रथमेन्हितृतीयेचपंचमेसप्तमेतथा नवमैकादशेचैवतन्नवश्राद्धमुच्यते शिवस्वामी नवश्राद्धानिपंचाहुराश्वलायन
शाखिनः आपस्तंबाः षडित्याहुर्विभाषात्तिरेषुहि पंचएकादशाहिकंविना मरणाद्विषमेषुदिनेष्वेकैकंनवश्राद्धंकुर्यात् नवमाद्यदि नवमंवि
च्छिद्येतेकादशेतत्कुर्यादितिमदनरत्नेबौधायनोक्तेः भविष्ये नवसप्तविशांराज्ञांनवश्राद्धान्यनुक्रमात् आद्यंतयोर्वर्णयोक्तं षडित्याहुर्महर्षे
यः हेमाद्रौरुद्रवसिष्ठः अलब्ध्वातुनवश्राद्धंमेनत्वान्नैवमुच्यते अर्वाक्तुद्वादशाहस्यलब्ध्वातरतिदुष्कृतम् अतःषडेव पतान्येवविषम
श्राद्धानीत्युच्यंते नागरखंडेतु पंचमेसप्तमेतद्वदष्टमेनवमेतथा दशमैकादशेचैवनवश्राद्धानितानिवैस्मृतम् कात्यायनस्तु चतुर्थेपंचमेचै
वनवमैकादशेतथा यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते प्रथमेसप्तमेचैवेत्यापपादेव्यासपाठः बह्वृचानांतु नवश्राद्धदशाहानिनवमिश्रं
तुषड्तून्निरुक्तम् नारायणवृत्तौदीपिकायाम् अथतत्पादाद्येचतुर्थेदिनेश्राद्धंपंचमसप्तमाष्टनवदिग्रुद्रेष्वयुग्मह्निजेः प्रथमेन्हितृती
येन्हिपंचसप्तनवस्वपि द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकंतुविन्यसेत् एकोविषमश्राद्धेचयवपिंडश्चैकएवतिस्तद्वावित्यर्थः अत्रशाखाभेदाद्व्यवस्था
अपरार्केभविष्ये नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच नकरोतिसुतोयस्तुतस्याधःपितरोगताः वाराहे गतोसिदिव्यलोकंत्वं कृतांतविहित
पथः मनसावायुभूतेनविप्रेत्वाहंनियोजये पूजयिष्यामिभोगैस्त्वामेवंविप्रंनिमंत्रयेत् .आवाहनेपितत्रैव इहलो
कंपरित्यज्य गतोसिपरमांगतिम् मनसावायुभूतेनविप्रेत्वाहंनियोजयइति तत्रैवबह्वृचपरिशिष्टे अन्नोदकमधू

पंनगंधमाल्यादिवर्जितम् नवश्राद्धगमंत्रंचपिंडोदकविवर्जितम् उदकमर्घ्यःपिंडोदकंशुंधंतांपितरइत्यवनेजनादि एकोद्दि
ष्टेषुसर्वेषुनस्वधानाभिरम्यताम् अग्नौकरणमंत्रश्चएकं चार्थतिलोदकम् अनपत्येषुसर्वेषुनस्वधानाभिरम्यताम् स्वस्त
स्त्वनिसृजेदेवंसकृत्स्रणववर्जितम् एकोद्दिष्टस्यपिंडेतु अनुशब्दोनविद्यते पितृशब्दंनकुर्वीतपितृहाचोपजायते सपिंड
नात्प्रागितिहेमाद्रिः तेनस्वधांप्रयुंजीतप्रेतश्राद्धेदशाहिके इतिऋष्यशृंगोक्तेर्दशाहिकोत्तरेकादशाहेस्वधाप्रयोगएवे-
तिहारलतापरास्ता रत्नावल्याम् आशिषोद्विगुणाद्भांजयाशीःस्वस्तिवाचनम् पितृशब्दःस्वसंबद्धःशर्मशब्दस्तथैवच
पात्रालंभोवगाहश्चउल्मुकोल्लेखनादिकम् तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच प्रदक्षिणाविसर्गश्चसीमांतगमनंत-
था अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्जयेत् अत्रस्वधापितृनमःशब्दानांतिलोसीतिमंत्रेप्रेतशब्दोहेनतूष्णीं वातिलाव
पनम् तूष्णीमर्घ्यदानम् अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः नाम्नाएकःपिंडः निनयनमंत्रेऊहः अनुमंत्रणादित्व
मंत्रकम् अभिरम्यतामितिविसर्जनम् एवंनवश्राद्धवर्जैकोद्दिष्टेषु नवश्राद्धेत्वमंत्रकं सर्वमितिनारायणवृत्तिः क्रिया
निबंधे उत्तानंस्थापयेत्पात्रमेकोद्दिष्टेसदाबुधः न्युब्जंतुपार्वणंकुर्यात्तस्योपरिकुशान्न्यसेत् नवश्राद्धंगृहेकुर्याद्भार्या
यत्राग्नयोपिवा सपिंडीकरणांतानिप्रेतश्राद्धानियानिवै तानिस्युर्लौकिकेवन्हावित्याहत्वाश्वलायनः इदंसंभवेन्नेनका
र्यम् नवश्राद्धेषुयच्छिष्टंगृहपर्युषितंचयत् दंपत्योर्भुक्तशेषंचनतद्भुंजीतकर्हिचित् इतिगिरोवचनलिंगात् द्वाभ्यांतदा
तुकृच्छ्राभ्यांशुद्धिःस्यात्तुविवेकिनामितिश्राद्धेउक्तम् विप्रेतुनिर्णयामृतेकण्वः नवश्राद्धंमासिकंचयद्यदन्नादितंभवेत्
तत्तदुत्तरसातंत्र्यादनुष्ठेयंप्रचक्षते हेमाद्रौगालवः शावंतुसूतकंचेत्स्यात्निशायांचमृतौतथा नवश्राद्धानिदेयानि

यथाकालंयथाक्रमम् निशायामाशौचान्तेद्व्यहस्त्र्यहे अन्वारोहणेतु नवश्राद्धानिसर्वाणिसपिंडीकरणंपृथक् एकएववृषो
त्सर्गोगौरेकात्रप्रदीयते आशौचांत्यदिनेकार्यमुक्तम् श्राद्धे यस्ययस्यतुवर्णस्ययद्यत्स्यात्पश्चिमंत्वहः सतत्रवस्त्रशुद्धिंच
गृहशुद्धिंकरोत्यपि समाप्यदशमंपिंडंप्रेतस्पृष्टेतुवाससी अंत्यानामाश्रितानांचसत्कारस्नानंकरोतिच श्मश्रुलोमनखा
नांचयस्याज्यंतज्जहात्यपि गौरसर्षपकल्केनतिलकल्केनसंयुतम् शिरःस्नानंततःकृत्वातोयेनाचम्यवाग्यतः वृषभंगांसु
वर्णंचस्पृष्ट्वाशुद्धोभवेन्नरः क्रियानिबंधेगृह्यकारिकायाम् अत्रपिंडत्रयंदद्युस्तत्साखिभ्यस्तथादिमम् प्रेतायमध्यमंत
स्तृतीयंचयमायवै तथा कर्त्रात्रप्रार्थिताःसंतोज्ञातिसंबंधिबांधवाः दद्युराप्यंगतःपूर्वंत्रींस्त्रीन्पयोदकांजलीन्
पूर्ववन्नामगोत्राभ्यांनियमोनेहकश्चन मदनरत्नेविष्णुहारीतौ आशौचान्तेकृतश्मश्रुकर्माणस्तिलकल्कैःसर्षपक
ल्कैर्वास्नाताःशुक्लवाससोगृहंप्रविशेयुस्तत्रशांतिकंकृत्वाब्राह्मणपूजनंकुर्युरिति देवलः दशमेहनिसंप्राप्तेस्नानंग्रामा
द्बहिर्भवेत् तत्रत्याज्यानिवासांसिकेशश्मश्रुनखानिच अपरार्केबृहस्पतिः नवमेवाससांत्यागोनखरोम्णांतथांतिमे
तत्रैवव्यासः आशौचांत्यदिनेक्षौरंजनन्यांचगुरौमृते एतन्नैतात्यवयसामित्याहापस्तंबः अनुभाविनांचपरिवपन-
मिति अनुभाविनःकनिष्ठाइतिविज्ञानेश्वररत्नाकरादयः आशौचमनुभवतांपुंसांसर्वाशौचेषुमुंडनम् आज्ञयानरप
तेर्दीक्षायांनांदीकरकर्मसुतसूतकेषुच बंधमोक्षमखदीक्षणेष्वपिक्षौरमिष्टमखिलेषुचोडुषुइतिरत्नमालोक्तेर्जननाश
ौचेपीतिशुद्धितत्त्वादयः अत्रदेशाचारतोव्यवस्था परिशिरवावर्जं केशश्मश्रुनखलोमानिवापयीतशिखावर्ज
मितिगोभिलोक्तेः यत्त्वापस्तंबः नसमावृत्तावपेयुरन्यत्रविहारादित्येकेविहारोदर्शादियागः तेनतद्विनासमावृत्तागृह

स्नानवर्गेषु निःसर्पः यत्तु स्मृत्यां छिनत्ति यः केशान्नमाहुर्ब्रह्मघातिनमिति तत्केशश्मश्रुधारणनामैच्छाभावे वर्तिसेनातीरिति
दानधर्मोक्तं काम्यपरम् अनुभाविनः पुत्रा यस्य इत्येके पुत्रः पत्नी च वपनं कुर्याद्दत्तं यथाविधि पिंडदानोचितोन्योपिकु
र्यादित्थं समाहितइत्यपरार्केव्याख्यातः यत्तु मिताक्षरायाम् द्वितीयेहनि कर्तव्यं क्षुरकर्म प्रयत्नतः तृतीये पंचमे वापि दश
मेनाप्यसाननइति आप्रदानतर्द्दनिचतुर्थादीनि प्रथमदिने संभवे ज्ञेयम् अनुसंकेशोयः पूर्वसांत्रेकेशान्संवापयेत्
द्वितीयेह्नि तृतीये ह्नि पंचमे सप्तमेपिवा यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मनमिति माधवीये मदनरत्ने च बोधायनोक्तेः
मदनपारिजाते तु दशमे प्रथमे च समुच्चय उक्तः यत्तु दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेदिति तदेकादशाहश्राद्धांग
विप्रनिमंत्रणार्थं ज्ञेयम् अथैकादशाहः मनुः विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधैः वैश्यः प्रतोदं रश्मीन्वा
यष्टिं शूद्रः कृतक्रियः शङ्खलिखितदेवलः आद्याहः क्षत्रिरवृत्तेषु स्नाताः कृतमंगलाः आशौचाद्विप्रमुच्यंते ब्राह्मणाद्
वाच्यत याज्ञवल्क्यः आद्यमेकादशेहनि क्षत्रियाद्येराशौचेप्येकादशेह्नि श्राद्धं कार्यम् आद्यं श्राद्धमशुद्धोपि कुर्यादे
कादशेहनि कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सइति हेमाद्रौ शंखोक्तेः पैठीनसिः एकादशेह्नि यच्छ्राद्धं तत्सा
मान्यमुदाहृतम् चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् यत्तु मरीचिः आशौचांते ततः सम्यक्पिंडदानं समाप्य
ते ततः श्राद्धप्रदानं च सर्ववर्णेषु यं विधिरिति तत्सर्ववर्णानां दशाहाशौचपरम् यत्तु विष्णुः अथाशौचापगमद्दीत
यत्र गौडग्रंथे हारीतः श्वोभूते एकोद्दिष्टं कुर्यात् यच्च बैजवापः ऊर्ध्वं दशम्या अपरेद्युरिति तत्तद्वर्णविषयम् एतेनद
शमपिंडोत्कर्षपक्षे अवयव पिंडासमाप्तौ कथमेकादशाहे श्राद्धमिति मूर्खोक्तिः परास्तावचनादाशौचमध्ये तु यत्

त्राप्यविरोधात् भविष्ये एकादश्यांविप्रेभ्योदद्यादेकादशेऽहनि भोजनंतत्रचैकस्मैब्राह्मणायमहात्मने यंत्तुमात्स्ये एकादशेऽहनि
तथाविप्रानेकादशैवतु क्षत्रादिःसूतकांतेतुभोजयेदयुजोद्विजानिति तदुद्गणश्राद्धपरमितिमदनपारिजातः गौडास्तस्माद्वचनात्
क्षत्रियादीनामाशौचांतएवेत्याहुः रामायणेपि समतीतेदशाहेतुकृतशौचोयथाविधि चक्रेद्वादशिकंश्राद्धंत्रयोदशिकमेवच
द्वादशिकंद्वादशाहेनभिवर्यंत्रयोदशाहश्राद्धंत्रयोदशिकंचतुर्दशाहविधेयंसपिंडनपार्थेयादि क्षत्रियाणांद्वादशाहाशौचेत्रयो
दशेमहैकोद्दिष्टंचतुर्दशेसपिंडनम् द्विविधवाक्यादेकादशाहाशौचांतयोर्विकल्पइत्येके सद्यःशौचादौयुद्धहतादेरेकादशाहः
अन्येषांआशौचांतइतिवयंकौर्मे एकादशेऽह्निकुर्वीतप्रेतमुद्दिश्यभावतः द्वादशेवाह्निकर्तव्यमनिंद्येप्यथवाहनि निंद्यंप्रेतक्रिया
कालउक्तं एकादशेतुननिषेधइत्युक्तंप्राक् बृहस्पतिः वस्त्रालंकारशय्यादिपितुर्यद्वाहनादिकम् गंधमाल्यैःससम्पूज्यश्राद्धभो
क्त्रेतदर्पयेत् श्रोत्रियाभोजभोयास्तुनवसमत्रयोदश जातयोवांभवानिःस्वास्तथाचातिथयोपरे देवयाज्ञिकनिबंधे एकाद
शस्वविप्रेषुप्रेतमावाह्यभोजयेत् तत्राधायचशय्यादिदद्यादाद्यमितिस्मृतम् विष्णुः एकवन्मंत्रानूहेनैकोद्दिष्टेबहुवचनांतानेक
वचनांतान्वदेदित्यर्थः एतदृष्टार्थत्वे अस्याविप्रेगौणकालमाहहेमाद्रौबौधायनः एकोद्दिष्टंश्वएवस्यात्द्वादशेऽहनिवापुनः अत
ऊर्ध्वमयुग्मेषुकुर्वीताहस्वशक्तितः अर्धमासेथवामासिऋतौसंवत्सरेपिवेति तत्रैवस्युहारीतः एकोद्दिष्टंतुकुर्वीतपाकेनैवसदा
स्वयम् अभावेपाकपात्राणांतदहःससुपोषणं गोभिलः ब्राह्मणंभोजयेदाद्येहोतव्यमनलेथवा पुनश्चभोजयेदन्यं द्विरावृत्तिर्भ
वेदिति एतदाद्यमासिकाद्याब्दिकयोःसिद्धार्थमितिभट्टाः तेनमहैकोद्दिष्टंषोडशश्राद्धाद्भिन्नमेव अतएवाद्यंसर्वैकोद्दिष्टप्रकृतिम्
तमेकादशाहइतिविज्ञानेश्वरः अन्येत्वाद्यमासिकाब्दिकयोराद्यमेकादशेऽहनीतिनियमादसौदगाहुः द्वयोस्तंत्रत्वबाधार्थंगालची प

मितन्यं पुद्गलानां तु हेमाद्रौ पृथ्वीचंद्रोदये पैठीनसिः सद्यःशौचेपि दातव्यं प्रेतस्यैकादशेऽहनि स एव दिवसस्तस्य श्राद्धशय्यासनादिषु
ग्वमेकादशाहादौ अतो द्वितीयेऽह्न्येकादशाहेवत्तत् दोह्नः शूलपाणिः स्मार्तगौड श्च परास्ताः एतेनाद्यमेकादशेऽहनीत्याशौचानंतर
दिनपरमिति निर्व्यूक्तेः प्रागुक्तशंखादिवचनानां नानाकरत्वादिति वदंतः कल्पतरुवाचस्पतिप्रमुखाः सर्वमहानिबंधविरोध.
पेक्ष्याः उशनाः व्यहाशौचेपि कर्तव्यमाद्यमेकादशेऽहनि अतीतविषयेसद्यस्त्र्यहोर्ध्वं वा तदिष्यते याज्ञवल्क्यः एकोद्दिष्टं दैवहीनमे
कार्घ्यैकपवित्रकं आवाहनाग्नौकरणरहितं त्वपसव्यवत् उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने अभिरम्यतामिति वदेत्ते चोभिर
ताः स्मह इति अग्नौकरणनिषेधोऽन्यपरः वह्न्यानां सर्वैकोद्दिष्टेषु तद्ग्रसेवेसक्तेभाक् स्यादिति मिताक्षरायां कात्यायनः प्रथमे
पात्रे संस्रवान्समवनीयेनापिधानस्य चवाध्यान्नपात्रस्युक्तातेनि शूलपाणिः मचेलाः नात्र पात्रालंभो नाशिषः प्रार्थयेत् ३
विरोपो हेमाद्रौ वाराहे श्मश्रुकर्म तु कर्तव्यं न स्वप्नेदत्तथैव च स्नपनाभ्यंजनं स्याद्धि मार्गविधिपूर्वकं तथा उपवेश्यासने भद्रे
छत्रं तत्र प्रकल्पयेत् पश्चाद्युपानहौ दद्यात् सर्वाण्याभरणानि च विष्णुः दक्षिणालंबाग्रान्मुक्ताद्दत्त्वा सव्योदके प्रत्युच्चतुरंगुलपृथ्वी
स्तावदंतरालास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात् कर्षूणां समीपेऽग्निमाधाय परिस्तीर्य एकैकस्मिन्नाहुतित्रयं
जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय यमायांगिरसे ततः त्रिस्थानत्रये प्राग्वत् पिंडनिर्वपणं दधिमधुघृतमां
सैः कर्षूत्रयं पूरयित्वैतत्ते इति जपेत् शेषं नवश्राद्धवत् अत्र सार्धेस्यंतेनैव स्वदेवस्सक्तेभाक् इदं दशाहकर्त्रा पुत्रेणवाकार्यमित्यु
क्तं क्रियानिबंधे गृह्यकारिकायां नित्येरिभेनदेवसः प्रेतलोकान्हिनोंतकेमंत्रमुक्तातिलानेवं प्रक्षिपेदर्घ्यपात्रतः दक्षिणाभु
खः कुंभेन सान्नं दत्वा तथैव गां तं स्मरेद्याङ्गुष्ठशेषं तद्वाडान्यपि भाजनं विप्राभावे त्वग्नौ वैकोद्दिष्टं अग्नौ पापसंश्रपयित्वाज्यभा

गोनंतदश्रेयार्थं प्रयोगं कृत्वाथो येन माचात्प्रयाधाये संसृज्य पृथिवीं लेपात्रमित्यादिना नसिंकस्योदारतामवरदत्यस्थाप्रिश्चतुराहृत्याभिर्द्वाभिं
भ्रयाहुतीर्हुत्वा पिण्डदानादि श्राद्धं समापयेदिति याज्ञवल्क्यः एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रियामपि   अथ वृषोत्सर्गः   सर्वानि
सकामः न करोति वृषोत्सर्गं स कुलीर्थैनाजसांजलिम् नरस्तानि कृतो यस्तु पितुरुच्चारएव सः उच्चारः पुरीषं एष च्यावद्दच्य
श्राय धेनोपि गयां व्रजेत् यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेदिति मत्स्यकौर्मौक्तेः एकादशेऽह्नि प्रेतस्य यस्य नोत्सृज्यते
वृषः प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपीति षट्त्रिंशन्मते निंदाश्रुतेः एवं कृत्वा त्यवा भोति फलं वाजिमत्तोदितम् यस्तु
र्थोत्सृजेन्नीलं स सुभेत परां गतिम् वृषोत्सर्गः पुनात्येव दशातीतान्दशापरानिति देवीपुराणे भविष्यादीप फलमुक्तं तत्र अ
यं द्वादशाहेऽस्क्तो भविष्ये चैत्र्यां वापि तृतीयायां वैशाख्यां द्वादशेऽह्निवेति विष्णुधर्मे तु मृताहेऽशुक्तः विषुवद्द्वितयेऽन्वैयत्नृता
हे वा पक्षस्य चेति. अयं गृहे न कार्यः न गृहे मोक्षयेन्नीलं कामयन्सुफलं फलमिति कालिकापुराणात् कामधेनौ यत्सरा
भ्यंतरे पित्रोर्वृषस्योत्सर्गकर्मणि वृद्धिश्राद्धं न कुर्वीत नदन्यत्र समारम्भेत् तल्लक्षणं तु ब्राह्मे लोहितो यस्तु वर्णेन मुखे
पुच्छे च पांडुरः श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते श्वेतवर्णस्य सुखादीनि श्यामानि श्यामस्य वा श्वेतानि यस्य
सोऽपि नील उक्तो मात्स्यादौ देवीपुराणे चतस्रो वत्सिकाश्चाद्वृषं सार्धं समवलोपिवा यत्तु पर्वणि वृषोत्सर्गे न वेलायां शू-
षाभावः कथंचन शूद्रोऽपि द्वैश्च दर्भैर्वा वृषं कृत्वा विमोचयेत् न शक्यते वृषोत्सर्गो होमं वा तत्र कारयेदिति नान्निमु
लम् नाहिर्भिर्हेमाद्रौ भट्टकृतोऽत्र ज्ञेयः अत्र देवयाज्ञिकेन वृषोत्सर्गः सूत्रे पुरुषसूक्तेन विष्णुरूपियेतोद्देशेन विष्णु
तर्पणमुक्तम् तत्र मूलं चिंत्यम् पारस्करः सव्येन पाणिना पुच्छं समालभ्य वृषस्य तु दक्षिणेनाप आदाय सतिलाः स

दंतपत्रचितां रम्यां हेमपट्टैरलंकृताम् हंसतूलीप्रतिच्छन्नां शुभगंडोपधानिकाम् प्रच्छदनपटीयुक्तां गंधधूपादिवासिता
म् तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् अत्र हरिस्थाने प्रेतम् उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् तांबूलं कुंकु
मक्षोद कर्पूरागरुचंदनम् दीपिकोपानहौ छत्रचामरासनभाजनम् पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि
शयनस्थस्य भवति यदन्यदुपकारकम् भृंगारकरकाद्यं तु पंचवर्णवितानकम् मंत्रस्तु यथा न कृष्ण शयनं शून्यं सा
गरजालया शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि यस्मादशून्यं शयनं केशवस्य शिवस्य च अर्धेन देवं दत्त्वैवं त
स्य सकलं प्रणिपत्य विसर्जयेत् एकादशाहेऽपि तथा विधिरेष प्रकीर्तितः विशेषं चात्र राजेंद्र कथ्यमानं निशामय ते
नोपभुक्तं यत्किंचिद्वस्त्रवाहनभाजनम् यद्यदिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् तमेव पुरुषं हैमं तस्यां संस्थाप
येत्तदा पूजयित्वा प्रदातव्या मृतशय्या यथोदिता पाद्मे मृतकार्तो द्वितीयेऽह्नि शय्यां दद्यात्सलक्षणां काञ्चनं पुरुषं तद्व
त्फलवस्त्रसमन्वितम् संपूज्य द्विजदांपत्यं नानामणिविभूषितम् उपवेश्य तु शय्यायां मधुपर्कं ततो वदेत् रजतस्य
तु पात्रेण दधिदुग्धसमन्वितम् अस्थिलालाटिकं गृह्य सूक्ष्मं कृत्वा सपायसम् भोजयेद्द्विजदांपत्यं विधिरेषः सनात
नः एष एव विधिर्दृष्टः पार्वत्यां द्विजोत्तमैः एतत्प्रतिग्रहे तत्रैवोक्तम् गृहीतायां तु तस्यां वै पुनः संस्कारमर्हति श
य्यादानफलं भविष्ये स्वर्गे पुरंदरपुरे सूर्यपुत्रालये तथा सुखं वसत्यसौ जंतुः शय्यादानप्रभावतः आभूतसंप्लवं या
वत्तिष्ठत्यातंकवर्जितमिति अथोदकुंभः हेमाद्रौ स्मृतिसमुच्चये एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः दिने दि
ने प्रदातव्यो यावत्संवत्सरं सुतैः लौगाक्षिः यस्य संवत्सरादर्वाक् सपिंडीकरणं भवेत् मासिकं चोदकुंभं च देयं त-

स्थापितत्वात्तम् उत्तरार्धं तस्याप्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे इति याज्ञवल्क्यपादः सपिंडनापकर्षे स्यापकर्षमासे
नाथकाभिदमिति शूलपाणिः तन्न प्रकृतिविकाराभावेन तदन्यायविषयत्वात् मात्स्ये यावदब्दं तु यो दद्यादुदकुंभं
विमत्सरः प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् कश्चित्त्रयोदशाहमारभ्याहुस्तन्निर्मूलं देवयाज्ञिकः सपिंडनापक
र्षे संवत्सरं यावदुदकुंभं अर्वागेव दद्यात् नोर्ध्वं प्रेतलोकगतस्यान्नं सोदकुंभं प्रयच्छेदिति गोविंदराजधृतविष्णूक्तेः अन्नं चे
दस्य गत्यानुसंख्याकृत्वाद्धिकावधि दानव्यंग्रस्मरणेस्कंदपुराणे दानक्रमं तु वा अपि श्राद्धशतैर्दत्तैरुदकुंभं विना नराः द
रिद्रा दुःखिनस्तात भ्रमंति च भवार्णवे तेनापकृष्य दातव्यं नन्वस्याप्युदकुंभकाभिति गौतमभाष्ये स्कांदाच्च
मासेनन्तस्याविधानादूर्ध्वं निषेधादित्याह तन्न उदकुंभे पार्वणविधिनानुपपत्तेरेवं व्याख्यायां मानाभावाद्भिनाक्षरादि
विरोधाच्च वचनं त्वर्थादिसमूलं तदा तु तदावपकर्षं विधत्ते प्रेतश्राद्धानि सर्वाणि सपिंडीकरणं तथेति मार्कंडेयायनोक्ते
तस्याप्यन्नं सोदकुंभमिति याज्ञवल्क्याविरोधाच्च मदनरत्ने गौतमः अदैवं पार्वणं श्राद्धं सोदकुंभमधर्मकम् कुर्यात्प्रत्या
ब्दिकाच्छ्राद्धं संकल्पविधिनान्वहम् अधर्मकं ब्रह्मचर्यादिनियमहीनम् एतन्मासिकवदेकोद्दिष्टं पार्वणं कार्यम् अपरार्के
स्तु सपिंडीकरणे वृत्ते पृथक्त्वं नोपपद्यते पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिंडनेति लघुहारीतोक्तावपि तस्याप्यन्नं-
सोदकुंभं दद्यात्संवत्सरं द्विजे इति याज्ञवल्क्ये तस्येत्येकत्वोक्तेः सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह अत्र पिंडदानं कृताकृ
तम् अहरहरन्नमस्मै ब्राह्मणायोदकुंभं च दद्यात्पिंडमप्येके निपृणंतीति हेमाद्रौ पारस्करोक्तेः श्राद्धाशक्तौ पिंडमात्रमि
ति गौडाः तन्न अग्निशब्दबाधापत्तेः हारीतः मृते पितरि वै पुत्रः पिंडमब्दं समाचरेत् अन्नं कुंभं त्वित्याय प्रेतानिर्देश

स्ति ध्येरितिन्यूनपक्षेनाब्दिकपरमितिहेमाद्रिः अत्रदेशकुलशाखाभेदाद्व्यवस्थेतिसर्वनिबंधाःगालवः ऊनषाण्मासिकं
षष्ठेमासेवान्यूनमासिकम् त्रैपक्षिकंत्रिपक्षेस्यादूनाब्देद्वादशेतथा ऊनमासिकेतुगोभिलः मरणाद्द्वादशाहेस्यान्मासेन्यूने
चोनमासिकम् मदनरत्नेकालादर्शेचश्लोकगौतमः एक द्वित्रिदिनैरूनेत्रिभागेनोनएववा श्राद्धान्यूनाब्दिकादीनिकुर्या
दित्याहगौतमः क्रियानिबंधेऋतुस्तु सार्द्धएकादशेमासेसार्द्धेवैपंचमेतथा ऊनाब्दमूनषण्मासंभवेतांश्राद्धकर्मणीत्युक्तं
नत्रमूलंचिंत्यम् ऊनेषुवर्ज्यान्याहमरीचिः द्विपुष्करेचनंदासुकामिनीवाल्यांभृगोर्दिने चतुर्दश्यांचनोनानिकृत्तिकासुत्रिपु
ष्करम् ज्योतिषे त्रिपादर्क्षतिथिभद्राभौमेज्यरविभिःसह नराणांत्रिपुष्करोयोगोद्वयोर्योगेद्विपुष्करः गालवः त्रिभिर्वादि
वसैरूनेत्वेकेनाह्नतयेनवा आद्यादिषुचमासेषुकुर्यादूनाब्दिकादिकम् एकन्यूनपक्षेपंचम्यांमृतस्यतृतीयायांत्रिभि
र्न्यूनेप्रतिपदिद्व्यूनेद्वितीयायामितिकेचित् माधवस्तुषाण्मासिकाब्दिकेश्राद्धेस्यातांपूर्वेद्युरेवते मासिकानिस्वकीयेतु
दिवसेद्वादशेपिवेतिपैठीनसिवाक्येऊनषाण्मासिकंसप्तममासगतमृताहात्पूर्वेद्युः कार्यम् ऊनाब्दिकंतुद्वितीयाब्दस्य
ताहदिनात्पूर्वेद्युःकार्यमित्यर्थमाह मासिकानिस्वकीयेतुदिवसेइत्युक्तेः इदमेवयुक्तम् मदनरत्नेप्येवम् याज्ञवल्क्यः
मृतेहनितुकर्तव्यंप्रतिमासंतुवत्सरम् प्रतिसंवत्सरंचैवमाद्यमेकादशेहनि अत्राद्यमासिकमाब्दिकंचैकादशेन्हीतिवि
र्णयामृतादयः ब्राह्मणंभोजयेदाद्येहोतव्यमनलेथवा पुनश्चभोजयेद्विप्रांद्विरावृत्तिर्भवेदितीतिगोभिलीयंचतद्विषयमा
हुः अन्येतुमासपक्षतिथिस्पृष्टेइत्यादिविरोधादाब्दिकंवर्षांतमेव मासिकंतुमासादौ द्विरावृत्तिस्तुएकादशाहिकाद्य
मासिकपरा देवयाज्ञिकोप्येवमाह शौनकारिकापि मासादौमासिकंकार्यमाब्दिकंवत्सरेगते आद्यमेकादशेकार्यमि

केलधिकंभवेत् दीपिकायांतु आद्यंरुद्रमितेर्कसंमितदिनेवास्यादित्युक्तम् गौडास्तु मृततिथ्यवधिकेएकदिनाधिकेमास
संवत्सरपरंगौणंपूर्णेब्दे इति ईषदसमाप्तपरत्वमितिशूलपाणिः तेनद्वितीयमासादावाद्यमासिकादीनि तन्मोरर्थंकृतं
अशक्तौतुहारीतः मुख्यंश्राद्धंमासिमासिअपर्याप्तावृतुंप्रति द्वादशाहेनवाकुर्यादेकाहेद्वादशापिवा ऋतुंप्रतिद्वेद्वेइत्यर्थः
यदापितुर्मरणात्त्रयोविंशतितमेदिनेदर्शोवृद्धिर्वास्यात्तदाद्वादशदिनेषुद्वादशमासिकानिकार्याणीत्यर्थः त्रैपक्षिकंतुत्रिप-
क्षेनीतेमृताहेकार्यं त्रैपक्षिकंभवेद्वृत्तेत्रिपक्षेतदनंतरमितिभविष्योक्तेरिति मदनरत्नेउक्तम् पृथ्वीचंद्रकालादर्शनिर्णया
मृतादपसस्तु ऊनान्यूनेषुमासेषुविषमाहेसमेपिवा त्रैपक्षिकंत्रिपक्षेस्यान्मृताहेत्वितराणितुतिकार्ष्णाजिनिस्मृतेः पूर्वत्रवृ
त्तेमध्यतेइत्यर्थमाहुः तेनतदनंतरशब्दविरोधात्त्रैपक्षिकद्वितीयमासिकयोःसंकरापत्तेरेवंव्याख्यायांमानाभावाच्चोपेक्ष्याः
त्रिपक्षसपिंडनेत्वेवंशब्दाभावादधिकरणलभेपत्तेयंयत्तुक्रियानिबंधेगारुडे त्रैपक्षिकंत्रिपक्षेतुभवेत्तोविषमेदिने मा
सिकान्यपिचोनानिअष्टाविंशतिमेदिनेइति तन्निर्मूलम् स्मृतिरत्नावल्याम् द्वादशाहेयदाकुर्यात्पितुःपुनःसपिंडनम् ए
कादशोद्दिष्टकुर्वीतप्रेतश्राद्धानिषोडश पैठीनसिः सपिंडीकरणादर्वाक्कुर्वन्श्राद्धानिषोडश एकोद्दिष्टविधानेनकुर्यात्
सर्वाणितानितु सपिंडीकरणादूर्ध्वंयदाकुर्यात्तदापुनः प्रत्यब्दंयोयथाकुर्यात्तथाकुर्यात्तानिपि मदनरत्नेकात्याय-
नः श्राद्धमग्निमतःकार्यंदाहादेकादशेहनि ध्रुवाणितुप्रकुर्वीतप्रमीताहनिसर्वदा ध्रुवाणित्रैपक्षिकादूर्ध्वानि क्रियानिबं
धेगारुडे त्रिपक्षात्पूर्वतःसाग्नेर्भवेत्संस्कारवासरे ऊर्ध्वंमृतदिनेनग्नेःसर्वाण्येवमृताहतः एतानिचयदासपिंडनात्पूर्वं
युगपत्कुर्यात्तदादेशकालकर्त्रैक्यतंत्रत्वादेकःपाकइतिकेचित् पाकभेदइतिभट्टचरणाः अत्रकेचिदाहुः देशकालदैव-

तेन्येनंत्रसात् श्राद्धकालातिक्रमापन्ने द्वादशाहेथसर्वाणिसंक्षेपेणसमापयेत् तान्येवतुपुनःकुर्यात्तेतशब्दंनकारयेत्
तिकात्यायनोक्तेर्नैकश्राद्धद्वयंकुर्यात् समानेहनिकुत्रचिदित्यस्यदैवतैक्यपरत्वेप्यत्रतत्सत्वाच्छ्राद्धंकृत्वातुतस्यैवपुनःश्रा
द्धंनकारयेदितिजाबाल्युक्तेः षोडशसंख्यायाश्च वाजपेयेप्राजापत्ययागसप्तदशत्ववत्साान्नाय्ययागडित्ववच्च दर्शपातसं
कांतिश्राद्धवत्युगपदनुष्ठानेप्युपपन्नेराद्यमासिकाद्यूनाब्दिकांतेषुषोडशश्राद्धेषुविचक्षणःक्रियताभिस्येवंप्रयोगेणैकोवि
प्रःपिंडोर्घ्यश्चेतिनिरूढविधिविध्वंसेप्येवम् तन्मंदं द्वादशाहेनवाभोज्या एकाहेद्वादशापिवेतिहेमाद्रौहारीतवचोविरोधा
त् तेनविप्रभेदात्पिंडार्घ्याद्यपिभिन्नमितिसिद्धम् एतानिद्वादशाहादौसपिंडनात्पूर्वंकृतान्यपिवृद्धिंविनापकर्षेपुनःस्व
कालेकार्याणि यस्यसंवत्सरादर्वाक्सपिंडीकरणंकृतम् मासिकंचोदकुंभंचदेयंतस्यापिवत्सरमितिमदनरत्नेगिरसोक्ते
नचेदंमासिकानामपकर्षंविधत्तेकिंतुसपिंडनोर्ध्वंस्वकालेतुष्ठानमेवेतिवाच्यम् श्राद्धानिषोडशादत्वानतुकुर्यात्सपिंडनामि
तिविरोधात् यस्यसंवत्सरादर्वाग्विहितातुसपिंडता विधिवत्तानिकुर्वीतपुनःश्राद्धानिषोडशेतिमाधवीयेगोभिलोक्तेश्च अ
र्वाक्संवत्सराद्यस्यसपिंडीकरणंकृतम् षोडशानांद्विरावृत्तिंकुर्यादित्याहगौतमइतितत्रैवगालवोक्तेः षोडशत्वंचैकाद
शपिंडनपक्षे तत्राद्यमासिकस्यकालसत्वात् अन्यपक्षेपुयथासंभवंज्ञेयम् यत्तुदीपिकायाम् अनुमासिकानितुत्वरेतान्ये
वसापिंड्यतःपश्चात् द्वादशोत्युक्तेरुक्तानांनपुनःकृतिरित्युक्तम् तदेतद्विरोधाच्चिंत्यम् यत्तुगौडाः सपिंडीकरणांतातुज्ञे
याप्रेतक्रियाबुधैरितिशातातपोक्तेर्मासिकानांप्रेतत्वविमोक्षार्थत्वात्सपिंडनापकर्षेतदंतन्यायेनतेषामप्यपकर्षान्मासिका
नांनपुनःकृतिः यत्तुमासिकंचोदकुंभंचेतिलौगाक्ष्यादिवचनंतन्निर्मूलम् समूलत्वेपिदर्शपरंचेत्याहुः तेउक्तवक्ष्यमाण

वचोनिबंधविरोधान्मूलर्नाइत्यपेक्ष्याः यत्तुमिताक्षरायांसापिंडनोर्ध्वंस्वकालेएवकार्याणि अपकर्षस्त्वनुकल्पइत्युक्तम् तदपि
पूर्वविरोधाच्चिंत्यम् तेनवृद्धिंविनापकर्षेपुनःकृतिः अर्वाक्संवत्सराद्यस्यसापिंडीकरणंभवेत् प्रेतत्वादिह तस्यापिज्ञेयंसंव
त्सरंनृपेत्यग्निपुराणात् वृद्धिनिमित्तापकर्षेप्रत्यक्षवतान्निवृत्तिः अन्यथात्वद्वासंभवादितिशूलपाणिः कार्ष्णाजिनिः सापिंडी
करणादर्वागपकृष्यकृतान्यपि पुनरप्यपकृष्यंतेवृत्युत्तरानिषेधनात् निषेधंचाहकात्यायनः निर्वर्त्यवृद्धितंत्रंतुमासिकानि
नतंत्रयेत् अयातयामंमरणंनभवेत्पुनरस्यतिति ह्विरवुधानंचोत्तरेषामेवनपूर्वेषांस्वस्वकालकृतानाम् तदाहमाधवीयेका
र्ष्णाजिनिः अर्वागब्दाद्यत्रयत्रसापिंडीकरणंकृतम् तदूर्ध्वमासिकानांस्याद्यथाकालमनुष्ठितिः हेमाद्रौशाठ्यायनिः प्रेतश्रा
द्धानिशिष्टानिसापिंडीकरणंतथा अपकृष्यापिकुर्वीतकर्तुंनांदीमुखंद्विजः वृद्धिंविनापकर्षेदोषमाहोशना: वृद्धिश्राद्धवि
हीनस्तुप्रेतश्राद्धानियश्चरेत् सश्राद्धीनरकेघोरेपितृभिःसहमज्जतीति आधानेपकर्षमाहहेमाद्रावुशना: पितुःसापिंडीकर
णंवार्षिकेमृतिवासरे आधानाद्युपसंप्राप्तावेतत्प्रागपिवत्सरात् विशेषस्तूक्तोविवाहनिर्णये कृष्णः नवश्राद्धंमासिकंचय
द्यदंतरितंभवेत् तत्तदुत्तरसातंत्र्यादनुष्ठेयंप्रचक्षते गारुडेपि आपदाद्यकृतंयत्तुकुर्यादूर्ध्वमृताहनि अथसापिंडीकरणम्
माधवीयेहारीतः यस्तुपूर्वममावास्यामृताहाद्दशमीभवेत् सापिंडीकरणंतस्यांकुर्यादेवकृतोग्निमान् मृताहादूर्ध्वंदशमी-
एकादशीत्यर्थः सापिंडीकरणंकुर्यात्पूर्ववच्चाग्निमान्कृतः परतोदशरात्राच्चेत्कुर्यादब्देपरेतरइतिकार्ष्णाजिनिस्मृतेः आ-
हिताग्नेस्तेनविनाश्रौतपिंडपितृयज्ञासिद्धेः तदाहगालवः सापिंडीकरणाद्येतेपैतृकंपदमास्थिते आहिताग्नेःसिनीवा-
ल्यांपितृयज्ञःप्रवर्तते मदनरत्नेप्रजापतिः नासपिंड्याग्निमान्पुत्रःपितृयज्ञंसमाचरेत् अपरार्केकात्यायनः एकादशा

हांनिर्वर्त्यपूर्वंदर्शाद्यथाविधि प्रकुर्वीताग्निमान्विप्रोमातापित्रोःसपिंडताम् आशौचांतप्रथमदर्शयोर्मध्येकस्मिंश्चिदन्ही
त्यर्थः पित्रादीनांसपत्नीकानांदेवतात्वेनमातुरपितत्रानुप्रवेशात् मातुरपिप्रागदर्शात्सपिंडनंयुक्तमित्यपरार्कः एवंपितामहा
देरपिसपिंडनं प्राकूदर्शात्कार्यम् तेनविनापार्वणायोगात् द्वादशाहेवाकार्यम् साग्निकस्तुयदाकर्ताप्रेतश्चानग्निमान् भवेत्
द्वादशाहेभवेत्कार्यंसपिंडीकरणंसुतैरितिगोभिलोक्तेः साग्नेः प्रेतस्यतुत्रिपक्षे प्रेतश्चेदाहिताग्निःस्यात्कर्तानाग्निर्यदाभवेत्
सपिंडीकरणंतस्यकुर्यात्पक्षेतृतीयकइतिस्मृत्यंतरोक्तेः मदनरत्नेलघुहारीतोपि अनग्निस्तुयदावीरभवेत्कुर्यात्तदागृही प्रेत
श्चेदग्निमांस्तस्यात्रिपक्षेवैसपिंडनम् द्वयोःसाग्नित्वेद्वादशाहएव साग्निकस्तुयदाकर्ताप्रेतोवाप्यग्निमान्भवेत् द्वादशाहे-
तदाकार्यंसपिंडीकरणंपितुरितितेनैवोक्तेः द्वयोरनग्नित्वेतुभविष्ये सपिंडीकरणंकुर्याद्यजमानस्त्वनग्निमान् अनाहिताग्नेःप्रे
तस्यपूर्णेब्देभरतर्षभ द्वादशेहनिषण्मासेत्रिपक्षेवात्रिमासिवा एकादशेपिवामासिमंगलस्याप्युपस्थितौ कात्यायन-
गोभिलौ यदहर्वावृद्धिरापद्येतेति तच्चवृद्धिदिने एवेतिवाचस्पतिः तन्न प्रागुक्तवृद्धिनिमित्तकमितिनियमात्सपिंडनस्यचाप
राण्हकालीनत्वेनपूर्वत्वबाधापत्तेः वृद्धिदिनेतत्पूर्वदिनेचेतिश्रीदत्तः स्मार्तगौडास्तुवृद्धिपूर्वः वर्षांत्यश्चक्षणःसपिंडनस्यप्रेत
त्वनाशेसहकारी तेनपरेद्युर्वार्षिकाहस्याभावेपितत्कर्तव्यतानिश्चयसहितमेवकालांतरक्रियमाणवृद्धिपूर्वक्षणसहकृतंप्रेत-
त्वनाशकमित्याहु तन्न अकालेकृतस्यफलाजनकत्वात् एतेननिमित्तनिश्चयचतएवाधिकारात्वृद्ध्यभावेपिनक्षतिरिति
मिश्रोक्तिःपरास्ता वृद्धिपूर्वदिनस्यचवर्षांतस्यचकालस्यांगत्वेननिमित्तत्वाभावात् तेनपुनःकार्यमित्यन्ये मदनरत्नेपुल-
स्त्यः निरग्निकःसपिंडत्वंपितुर्मातुश्चधर्मतः पूर्णेसंवत्सरेकुर्याद्वृद्धिर्वायदहर्भवेत् चतुर्विंशतिमते सपिंडीकरणंचाब्दे

संपूर्णेऽप्युदयेऽपिवा द्वादशाहेतु केषांचिन्मतन्नैकादशेतथा पृथ्वीचंद्रोदये बौधायनः अथसपिंडीकरणंत्रिपक्षे वातृतीये वामासि
श्चैनेकादशेवाद्वादशेवाद्वादशाहेचैकादशाहेवेति एतत्सक्रमेविष्णुः मासिकार्थंद्वादशाहश्राद्धंकृत्वात्रयोदशेऽन्हिवाकुर्यान्मंत्रवर्जंहि शूद्र-
स्यापीत्यर्थः द्वादशोन्हि संवत्सराभ्यंतरेयद्यधिमासोभवेत्तदामासिकार्थंदिनमेकंवर्धयेदिति आशौचोत्तरं द्वादशस्त्वहः स्मृमासि
कानितेष्वेवा यथाद्वादशादिनेषूनमासिकादीनिकृत्वात्रयोदशोन्हि सपिंडनंकुर्यात् अधिमासेतु चतुर्दशेन्हि कुर्यात् शूद्रस्त्र
योदशेद्वादशेन्हीत्यस्य मासिकांत्यदिनपरत्वादिति पृथ्वीचंद्रः पैठीनसिः संवत्सरांते संसर्जनंनवमेमासीत्येके अत्रसाग्ने-
रनग्नेर्वोक्तकालाशक्तावित्रिपक्षादिसंवत्सरांताअनुकल्पाज्ञेयाः कल्पतरुस्तुवृद्धिनिश्चयएवसर्वेपकर्षप्रकाराइत्याह तन्न
यदहर्वैतिस्तात्यंत्स्युतेः यद्यपि वृद्धिनिमित्तोपकर्षोनिरग्नेरेवोक्तस्तथापिसाग्नावपिज्ञेयः उक्तकालासंभवे वर्षांतादिगौ
णकालवद्वृद्धेरपिप्राप्तेः वक्ष्यमाणगोभिलवचनात् अयातयामंमरणंनभवेत्पुनरस्यात्तिदोषस्तुसविशेषाच्च अपरार्कपृ-
थ्वीचंद्रादिस्वरसोऽप्येवम् अत्रवृद्धिपदंचूडोपनयनविवाहमात्रपरम् सीमंतादौतु वृद्धिश्राद्धलोपएवेत्याचार्यचूडामणिः पुं-
सवनाद्यन्नप्राशनांतेष्वावश्यकेष्वपकर्षइतिश्राद्धविवेकः श्रुतिसागरेपिबृहस्पतिः प्रसवाद्योभवेद्यस्मिन्कृतेवृद्धिकर्म-
णि तन्निमित्तंसमाकृष्यपित्रोःकुर्यात्सपिंडनम् गर्भाधानस्यत्वंतरेपिसंभवात् अन्यश्राद्धंपरान्नंचगंधमाल्यंचमैथुनमिति
देवलेनप्रथमाब्देमैथुननिषेधाच्चनतत्रापकर्षइतिश्राद्धकौमुद्यादयः तन्न ऋतुस्नातांतुयोभार्यामितिनिषेधाद्ब्रह्मचार्येवप
र्वण्याद्यास्वतस्त्रश्चवर्जयेदितिमैथुनेदोषाभावाच्च पितामहमरणेपौत्रस्यवृद्धौनापकर्षः तस्यमहागुरुत्वाभावात् तन्नत-
दूर्ध्वंभ्योवृद्धिश्राद्धमितिश्राद्धचंद्रिका तन्न भ्रातात्वेत्यादौनद्भाविन्यपकर्षोक्तिः तेननिर्देशोऽप्युपलक्षणम् व्याघ्रः आनंत्या

कुलधर्माणां पुंसां चैवायुषः क्षयात् आस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते एतदाशौचांतोपलक्षणम् सर्वेषामेव वर्णा
माशौचांते सपिंडनमिति निर्णयामृते कात्यायनोक्तेः सर्वेषामिति त्रैवर्णिकपरम् शूद्राणां त्वाशौचमध्ये मंत्रवर्जं हि शूद्राणां
द्वादशेहनि कीर्तितमिति विष्णूक्तेः एतद्दर्शश्राद्धकारि शूद्रविषयमित्यपरार्कः स्मृत्यंतरेच हरदत्तः द्वादशेहनि विप्राणामाशौचां
ते तु भूभुजाम् वैश्यानां तु त्रिपक्षाद्वाप्यथवा स्यात्सपिंडनं निर्णयामृते गोभिलः द्वादशाहादिकालेषु प्रमादादयनुष्ठितम् स
पिंडीकरणं कुर्यात् कालेषूत्तरभाविषु इदं साग्नेरुक्तकालासंभवे गौणकालविधानार्थमिति मदनपारिजातः मदनरत्नेप्ये
वम् ऋष्यशृंगः सपिंडीकरणं श्राद्धमुक्तकालेन चेत्कृतम् रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् कालादर्शेपि ए
कादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा षष्ठे चैकादशे वाब्दे संपूर्णे वा शुभागमे सपिंडीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः
साग्नेः कर्तुर्भार्या वा योऽभ्रते साग्नौ तृतीयकः अनग्नेस्तु द्वितीयाद्याः सप्त कालाः मुनीरिताः रोहिणी रौद्र हस्तेषु मैत्रभे वा
पि तच्चरेत् नारदसंहितायां तु सपिंडीकरणं कार्यं वत्सरे वार्धवत्सरे त्रिमासे वा त्रिपक्षे वा मासि वा द्वादशेऽह्नि वत्सु
वत्सरे तानेपि ज्ञेयम् ततः सपिंडीकरणं वत्सरात्परतः स्थितमिति भविष्योक्तेः पितुः सपिंडीकरणं वत्सरादूर्ध्वतः
स्थितमिति नागरखंडोक्तेः पितुः सपिंडीकरणं वार्षिके मृतवासरे इत्युशनसोक्तेश्च पूर्णे संवत्सरे पिंडः षोडशः परि
कीर्तितः तेनैव च सपिंडत्वं तेनैवाब्दिकमिष्यत इति हेमाद्रौ वचनाच्च अस्याकरत्वोक्तिर्मूर्खोक्तिरेव यत्तु पूर्णे संवत्स
रे कुर्यात् सपिंडीकरणं ततः एकोद्दिष्टं च तत्रैव मृताहनि समापयेदिति धवलनिबंधे जाबाल्युक्तेः पुत्रः सपिंडनं कृ
त्वा कुर्यात्स्नानं सचैलकं एकोद्दिष्टं ततः कुर्यात् कुतपं न विचारयेदिति स्वल्पमात्स्योक्तेश्चाब्दिकं तद्दिने पुनः कार्यमि

केचित् नेनिर्मूलत्वाद्धेमाद्रिविरोधाच्चोपेक्ष्याः षोडशत्वंचसपिंडनस्यषोडशश्राद्धांतर्भावपक्षे .स्मृत्यर्थसारेतुवर्षो
यद्दिनेसंवत्सरविमोक्षश्राद्धं सपिंडनंचकृत्वापरेद्युर्मृताहेवार्षिकंकार्यमित्युक्तम् गौडाअप्येवमाहुः तत्पूर्वविरो-
धाच्चिंत्यम् तच्चपुत्रेसतिनान्यःकुर्यात् श्राद्धानिषोडशादत्वानतुकुर्यात्सपिंडनाम् प्रोषितश्चवसितेपुत्रःकालादपि-
चिरादपीतिवायवीयोक्तेः षोडशश्राद्धानांवर्षादूर्ध्वंकालाभावेपिनान्यद्दत्वानकुर्यात् किंतुदत्त्वैव तानियदिकनिष्ठ-
भ्रात्रादिनाकृतानितदासपिंडनमेवकुर्यादित्यपरार्कः सपिंडनेतुकनिष्ठानांनैवाधिकारइत्यर्थः तत्रैव अज्ञानाद
थवामोहान्नकृतान्चेत्सपिंडता तत्रापिविधिवत्कार्याकालादपिचिरादपि तेषामपिज्येष्ठस्यैवाधिकारः ज्येष्ठेनजात
मात्रेणपुत्रीभवतिमानवइतिमनूक्तेः अपरार्केप्रचेताअपि एकादशाद्याःक्रमशोज्येष्ठस्यविधिवत्क्रियाःकुर्यु
•  .कृत्वाःश्राद्धमाब्दिकंतुपृथक्पृथक् मरीचिः सर्वेषांतुमतंकृत्वाज्येष्ठेनैवतुयत्कृतम् द्रव्येणवाविभक्तेनसर्वै
र्वकृतंभवेत् यत्तुवाचस्पतिशूलपाणिभ्यामुक्तंद्रव्यदानानुमत्यभावेकनिष्ठैः पृथक्कार्यमिति तन्न एवकारस्य
तदभावेपिपृथक्करणाभावार्थत्वात् अंधादेर्वर्ज्येष्ठस्याग्निकनिष्ठानामनधिकाराच्च अतस्तेषांमत्यवायमात्रं आ
हिताग्निःकनिष्ठस्तुकुर्यादेव अन्यथापितृयज्ञासिद्धेः एवमावश्यकत्वाद्वापिकनिष्ठोन्यःसपिंडोवाकुर्यात् भ्राताता
भ्रातृपुत्रोवासपिंडःशिष्यएवच सहपिंडक्रियांकृत्वाकुर्यादभ्युदयंततः तथैवकाम्यंयत्कर्मवत्सरात्प्रथमादृतेइतिम
दनरत्नेलघुहारीतवचनात् वृध्यनंतरंप्रथमाब्दमध्येपिकाम्यंकुर्यात् वृध्यभावेतुप्रथमाब्दादूर्ध्वमेवेत्यर्थः काम्ये
त्तरनावश्यकेष्टापूर्तादौनापकर्षः एतद्भ्रातृपुत्रादिसंस्कारेभार्याधिकारस्यनांदीश्राद्धाधिकारार्थंअभ्युदयपदंचनां

दीश्राद्धनिमित्तकर्ममात्रपरमितिहेमाद्रिः तेनज्येष्ठेदेशांतरस्थेकनिष्ठः सपिंडनंविनेववृद्धिंकृत्वापुत्रसंस्कारंकुर्यादितिश्रीदत्तोक्तिः
परास्ता भ्रातृशिष्याद्युक्तेर्नांदीश्राद्धेज्यदेवतामात्रपरोपकर्षइत्यपास्तं अस्यक्रममात्रपरत्वाद्वृद्धिकर्तैवसपिंडनंकुर्यादितिनभि
यमइतिगौडाः अतएवकन्यायामातृमरणेभ्रात्रासपिंडनेकृतेपितुर्नाधिकारः शूलपाणिस्तु महागुरोर्मेतभूतेवृद्धिकर्म
नयुज्यतइतिनिषेधात् मृतस्यभ्रात्रादिःसपिंडनंकृत्वानपुत्रकन्यादेरभ्युदयंकुर्यान्नतुस्वपुत्रसंस्कारेसंस्कार्यपितुःसपिंडनं
विना वृद्धौदेवतालाभावादित्याह तन्न विदेशस्थेनज्येष्ठेनपुनःकार्यम् यवीयसाकृतंकर्ममेतशब्दंविहायतु नज्यायसापि
कर्तव्यंसपिंडीकरणंपुनरितिस्मृतेः ज्येष्ठेनवाकनिष्ठेनसपिंडीकरणेकृते आद्यपादेमातापित्रोःकनिष्ठेनेतिवापाठः देशांत
रगतानांचपुत्राणांतुकथंभवेत् श्रुत्वातुवपनंकार्यंदशाहांतंतिलोदकम् ततःसपिंडीकरणंकुर्यादेकादशेहनि द्वादशाहे
नकर्तव्यमितिशातातपोब्रवीदितिवचनाच्चेतिभट्टाः सिंगाभट्टीयेप्येवम् पूर्ववचनेत्रचमूलंचिंत्यं स्मृत्यर्थसारेतुविभक्ता
ऋद्धिकामाश्चेत्पुत्राःपृथक्सपिंडीकरणंकुर्युरित्युक्तम् अत्रदत्तकस्यतत्पुत्रादीनांविशेषःप्रागुक्तः केचित्तुवृद्धिंविनापिक
निष्ठस्यसपिंडनमाहुः मातापित्रोर्मृतिकालेज्येष्ठेदेशांतरस्थिते कनिष्ठेनप्रकर्तव्यंसपिंडीकरणंतथेतिकार्ष्णाजिनिस्मृते
गतेचारोधितेज्येष्ठेपित्रावाप्रोषितेसति षण्मासान्नानिवर्तेततदाकार्यंकनीयसा संवर्तः पुनःसपिंडीकरणंश्राद्धंपार्वणव
च्चरेत् अर्घ्यसंयोजनंनैवपिंडसंयोजनंनचेतितद्वचसांनिर्मूलत्वात्प्रोषितावसितेपुत्रइत्यादिविरोधाच्चोपेक्ष्याः स्वक्रमम्
तौतुहेमाद्रौब्राह्मे मृतेपितरियस्याथविद्यंतेचपितामहाः तेनदेयास्त्रयःपिंडाःप्रपितामहपूर्वकाः तेभ्यश्चपैतृकःपिंडोनियो
क्तव्यस्तुपूर्ववत् मातर्यथमृतायांचविद्यंतेचपितामही प्रपितामहीपूर्वं तुकार्यस्तत्राप्ययंविधिः एवंप्रपितामह

औचनेतत्सित्रादिभिर्ज्ञेयम् तदाहसुमंतुः त्रयाणामपिपिंडानामेकेनापिसपिंडने पितृत्वमश्नुतेप्रेतइतिधर्मोव्यवस्थितः
यत्तुसंक्रमात्तु प्रमीतानांनैवकार्यासपिंडतेतितन्मातापितृभर्तृभिन्नविषयम् व्युत्क्रमेणमृतानांनसपिंडीकृतिरिष्य-
ते यदिमातायदिपिताभर्तानिषविधिः स्मृतइतिमाधवीयेस्कांदोक्तेः मदनरत्नादौचैवम् अत्रप्रपितामहादिभिःपितुः
सपिंडनेकृतेपितामहेमृतेनत्सापिंडनेसतिपुनस्तेनसह पितुःसापिंडनंकार्यमितिहेमाद्रिर्मतमाह अन्येनैवतन्मन्यंते
तत्संतुपितुःसपिंडनाभावेपितामहेनसहपुनःकार्यंनतत्सत्वे त्रयाणामपिपिंडानामेकेनापिसपिंडने पितृत्वमश्नुतेप्रेत
इतिधर्मोव्यवस्थितइतिविष्णुधर्मोक्तेः पितामहेप्रपितामहेवापुत्रांतरैरसंस्कृतेप्यसंस्कृताभ्यामेवपितुःसपिंडनंकुर्यात् अ
...तौनसंस्कार्यौपूर्वौपौत्रप्रपौत्रको पितरंतत्रसंस्कुर्यादितिकात्यायनोब्रवीदितिछंदोगपरिशिष्टात् असंस्कृतोदाहादे
रितिकेचित् असपिंडीकृताविति त्रुत्तत्वम् अतएवोक्तंतत्रैव पापित्वमपिशब्देनशब्दपापकृतापिवा पितामहेनपितरंसं
कुर्यादितिनिश्चयः पापित्वमकृतसापिंडनंनतुपतितादि अभिशस्तपतितभ्रूणघ्नस्त्रियश्चातिचारिणीर्नसंसृजेदितिवै
जवापोक्तेः पापकर्मणोनसंसृजेरन्नितिगौतमोक्तेश्चेत्युक्तंनिर्णयामृते पूर्वयोःपुत्राभावेतुपौत्रःकुर्यादेव पितामहःपितुः
पश्चात्संवत्सरंयदिगच्छति पौत्रेणैकादशाहादिकर्तव्यंश्राद्धषोडशं नैतत्पौत्रेणकर्तव्यंपुत्रवांश्चेत्पितामहः पितुःसपिंडतां
कृत्वाकुर्यान्मासानुमासिकमितिकात्यायनोक्तेः अपरार्केशूलपाणौचैवम् तेनसपिंडनस्यानित्यत्वादकृतसपिंडनयोरेवपा
र्वणात्तुप्रवेशइतिसूर्योक्तिःपरास्ता कृतेसपिंडीकरणेप्रेतःपार्वणभाग्भवेदितिहारीतविरोधाच्च केचित्तुपुत्रांतराभावेपिता
महवार्षिकमप्याहुः तन्न श्राद्धषोडशमितिनियमात् इच्छयाभवत्येव पितामहस्यचेद्वर्षादर्वाक्इदंनपार्वणमितिवाच्यं

नित्यानेश्वनोपानामहेनमातुःसापिंड्येपितृश्राद्धवन्मातृश्राद्धंनित्यमित्याह यच्च वृद्धिश्राद्धे छंदोगपरिशिष्टं बह्वृचाः पितृभ्य
लदत्तुश्राद्धदानमुपक्रमेदितितदेतद्विषयमेव मातुः पृथक्श्राद्धाभावात् अतएवहेमाद्रौभविष्ये मातुःसपिंडनंमन्त्रकस्यउ
दितेतुदिनेनैनहोमभेदोयथाभवेत् तथाकुलक्रमायातमाचारंचन्वरेद्बुध इत्युक्तम् अस्यक्वचिदपवादमाह तत्रैवव्याघ
पात् कुर्यान्मातामहश्राद्धंसर्वदामातृपूर्वकं विधिज्ञोविधिमास्थाय स्त्रीणामातामहादितत् केचिदेतत्पुत्रिकापुत्रपरमाहुः
पत्युःसापिंड्यमाहलौगाक्षिः सर्वाभावेस्वयंपत्न्यः स्वभर्तृणाममंत्रकम् सापिंडीकरणंकुर्युस्ततःपार्वणमेवचेति यत्तुच
वनं अपुत्रस्यपरेतस्यनैवकुर्यात्सपिंडतामिति यच्चापस्तंबः अपुत्रायेमृताःकेचित्पुरुषावास्त्रियोपिवा तेषांसपिंडन
भावादेकोद्दिष्टंनपार्वणमिति तत्पुत्रोत्पादनविधिप्रशंसार्थमितिमाधवः सपिंडीकरणादूर्ध्वंयेकोद्दिष्टंविधीयते अ
पुत्राणांचसर्वेषामपत्नीनांतथैवचेति हेमाद्रौभविष्योक्तेश्च अन्येतुद्विविधवाक्यदर्शनाद्विकल्पमाहुः स्मृत्यर्थसारे
पि ब्रह्मचारिणामनपत्यानांच सापिंडनंनास्तितेषांसदैकोद्दिष्टमेव शुक्रमभृतानांसापिंड्यंकार्यंनवाकेचित्सर्वत्र
सापिंडनमाहुरिति अपुत्रेत्वत्क्रमसृतेविशेषोरेणुकारिकायाम् भ्राताबाभ्रातृपुत्रोवासपिंडःशिष्यएववा सापिंडीक
रणंकुर्यात्पुत्रहीनेमृतेसति सर्वबंधुविहीनस्यपत्नीकुर्यात्सापिंड. सां ऋत्विजंकारयेद्वापिपुरोहितमथापिवा वसु
रुद्रादितिसुतैःकार्यातेषांसपिंडता व्युत्क्रमाच्चप्रमीतानांयथैतद्विनायेतनाक्रमम् पुनःसपिंडनंतेषांकुर्याद्येनेपितामहइ
ति अत्रमूलंमृग्यम् यतीनांसापिंडनंनास्ति किंत्वेकादशेन्हिपार्वणंकार्यम् तदपिचिदंडिनः एकदंड्यादीनांनतदपीनेत्यु
क्तंभाक् दंडग्रहणात्सर्वेमृतेतुदाहादिसापिंडनांतंसर्वंकार्यमितिभट्टचरणाः सापिंडनविधिमाहबैजवापः समासेसं

वत्सरेन्वतार्थं दत्त्वा त्रीणि प्रयुनक्त्येकं प्रेताय त्रीणि पितृभ्यः प्रेतपात्रं पितृपात्रेषु आसिंचति ये समाना इति द्वाभ्यामेवं पिंडो था
भिमृशत्येष वोनुगतः प्रेतः पितरस्तं ददामि वः शिवं भवतु शेषाणां जायतां चिरजीविनः समानी वः संगच्छध्वं संव
दध्वमिति यद्यपि तत्रापि देवरहितमेकार्घ्यैकपवित्रकं नैवाग्नौकरणं तत्र तच्चावाहनवर्जितमिति मार्कंडेयेनोक्तं त
थापि सपिंडीकरणश्राद्धं दैवपूर्वं नियोजयेदित्यादिविरोधाद्विकल्पः प्रेतांशे वाज्ञेयम् अत्र कामकालो वैश्वदेवाद
र्वाक्स्यक्तंप्राक् मैत्रायणीयपरिशिष्टे पित्र्ये विप्रकरे होमः साग्नेरपि भवेदिह यत्तु गोभिलः अनुक्तकालेषु पितु-
र्व्युत्क्रमेण मृतावपि आमेन वापि सापिंड्यं हेम्ना वापि प्रकल्पयेदिति तदापदि माता पितृभिन्नपरम् आपन्नो पि न
कुर्वीत श्राद्धमामेन कर्हिचिदिति तेनैवोक्तेः शद्धितत्त्वे क्वमथ पैनोल्व युहारीतः सपिंडीकरणं यावत् प्रेतश्राद्धं तु षो
डशं पक्वान्नेनैव कर्तव्यं सामिषेण द्विजातिभिः विश्वप्रकाशे प्रेतः सपिंडनादूर्ध्वं पितृलोकं तु गच्छति कुर्यात्त
स्य तु पाथेयं द्वितीयेन्हि सपिंडनात् स्मृत्यर्थसारेप्येवम् ततो वृद्धिश्राद्धं कुर्यात् एतन्मलमासेपि कार्यम् अधिमा
सेन कर्तव्यं श्राद्धमाभ्युदयं तथा तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृत इति हेमाद्रौ हारीतोक्तेः इति भट्टकमला
करकृते निर्णयसिंधौ सपिंडीकरणम् अथ प्रथमाब्दे निषिद्धानि हेमाद्रौ स्नानं चैव महादानं स्वाध्यायं चाग्नितर्प-
णम् प्रथमेब्देन कुर्वीत महागुरुनिपातने अग्नितर्पणं लक्षहोमादि न त्वाधानम् तत्तु प्रथमाब्दे भवत्येव तदाह हेमा
द्रावुशनाः पितुः सपिंडीकरणं वार्षिके मृतवासरे आधानाद्युपसंप्राप्ते चेत्सागोपि वत्सरात् अन्यतर्पणमिति शद्धि
तत्त्वे पाठः आदिपदं वृद्धिनिमित्तनित्यकर्मपरम् दिवोदासीये महातीर्थस्य गमनमुपवासव्रतानि च संवत्सरं न कुर्वी-

नमहागुरुनिपातने इदंश्राद्धकोमुद्यांदेवीपुराणस्थमुक्तम् गौडनिबंधेमात्स्ये सपिंडीकरणादूर्ध्वंप्रेतःपार्वणभुग्भ
वेत् वृद्धीष्टापूर्तयोग्यश्चगृहस्थश्चसदाभवेत् वर्षांतसपिंडनाभावेनाधिकारीत्यर्थः गृहस्थःसपिंडोपीत्यर्थः अत
एवप्रेतकर्माण्यनिर्वर्त्यचरेन्नाभ्युदयक्रियाम् आचतुर्थंततःपुंसिपंचमेशुभदंभवेदितिज्योतिषेउक्तम् माधवीयेदे
वलः प्रमीतोपितरौयस्यदेहस्तस्याशुचिर्भवेत् नदेवंनापिवापित्र्यंयावत्पूर्णोनवत्सरः इदंवर्षांतसपिंडनपरं तथैव
काम्यंयत्कर्मवत्सरात्प्रथमादृतइतिलघुहारीताद्येकवाक्यत्वात् वृद्धिनिमित्तापकर्षेतुकाम्यादिभवत्येवेतिगौडाः
पित्र्यंसपिंडनम् अतएवलौगाक्षिः अन्येषांप्रेतकार्याणिमहागुरुनिपातने कुर्यात्संवत्सरादर्वाक्श्राद्धमेकंतुवर्जये
त् दाहाद्येकादशाहांतंकार्यम् नत्वाशौचांतरस्याप्रतिबंधकत्वात् आद्यंश्राद्धमशुद्धोपिकुर्यादेकादशेहनीत्युक्तेश्च
एकंसपिंडनम् पत्न्यादौत्वपवादमाह माधवीयेऋष्यशृंगः पत्न्याःपुत्रस्यतत्पुत्रभ्रातुस्तत्तनयेपुच स्नुषायाश्वशुरयोश्च
पित्रोश्चसंयातमरणंयदि अर्वागब्दान्मातृपितृपूर्वंसापिंड्यमाचरेत् लौगाक्षिः पत्नीपुत्रस्तथापौत्रोभ्रातातत्पु
त्रकाअपि पितरौचयदेकस्मिन्म्रियेरन्वासरेतदा आद्यमेकादशेकुर्यात्त्रिपक्षेतुसपिंडनम् धवलनिबंधे म
हागुरुनिपातेतुप्रेतकार्यंयथाविधि कुर्यात्संवत्सरादर्वागेकोद्दिष्टंनपार्वणं भृगुः मातापितृतथाभ्राताभार्यापुत्र
स्तथास्नुषा एषांमृतौचरेच्छ्राद्धमन्यस्यनपुनःपितुः एतदपिसपिंडनपरम् पितुर्मृतावन्यस्यश्राद्धंनचरेदित्य
र्थः शंखलिखितदेवलः अन्यश्राद्धंपरान्नंचगंधमाल्यंचमैथुनम् वर्जयेद्गुरुपातेतुयावत्पूर्णोनवत्सरः पारस्करभा
ष्येबृहस्पतिः पितर्युपरतेपुत्रोमातुःश्राद्धान्निवर्तते मातर्यपिचवृत्तायांपितृश्राद्धादृतेसमम् प्रमीतपितरंविनान्यश्रा

इत्येतदर्थः श्राद्धितत्वेदेवलः महागुरुनिपातेतुकाम्यंकिंचिन्नचाचरेत् आर्त्विज्यंब्रह्मचर्यंचश्राद्धंदेवक्रियांतथा एतत्सपिंडना-
र्वागितिकेचित् तदुत्तरमपीत्यन्ये श्राद्धकौमुद्यांकालिकापुराणेपूर्वार्धे विशेषतःशिवापूजांप्रमीतपितृकोनरः यावद्वत्सर
पर्यंतंमनसापिनचाचरेत् केचित्तु पित्रोरब्दमशौचंस्यात्षण्मासंमातुरेवच त्रैमासिकंतुभार्यायास्तदर्धंभ्रातृपुत्रयोरितिस्मृ
तेः सपत्नमातुरब्दार्धमाहुः श्राद्धकौमुदीकारस्तु द्वयोरेवमहागुर्वोरब्दमेकमशौचकम् नान्येषामधिकाशौचंस्वजाति
विहितात्क्वचिदितिसमूलजातूकर्ण्यविरोधान्निर्मूलमाह हेमाद्रौभविष्ये गयाश्राद्धंमृतानांतुपूर्णेत्वब्देप्रशस्यते त्रिस्थली
सेतौगारुडे तीर्थश्राद्धंगयाश्राद्धंश्राद्धमन्यच्चपैतृकम् अब्दमध्येनकुर्वीतमहागुरुविपत्तिषु इदंत्वब्दमध्यर्थसपिंडनाभावे
वृद्धौसपिंडनापकर्षेब्दमध्येपिदर्शादिकार्यमेव पितुःसपिंडनंकृत्वाकुर्यान्मासानुमासिकमितिच्छंदोगपरिशिष्टात् सपिंडी
करणादूर्ध्वंप्रेतःपार्वणभुग्भवेदितिमात्स्यात् ततःप्रभृतिवैप्रेतःपितृसामान्यमश्नुते विंदतेपितृलोकंचततःश्राद्धंप्रव
र्तनइतिहारीताच्चेतिशूलपाणिः मत्तुकातीयं सपिंडीकरणादूर्ध्वंनदद्यात्प्रतिमासिकं एकोद्दिष्टविधानेनदद्यादित्याहशौन
कइति तत्रैकोद्दिष्टविधिनानदद्यादित्यन्वयः तुर्यपादेनपार्वणोविकल्पउक्तः ब्रह्मवैवर्ते उद्वाहश्चोपनयनंप्रथमेब्देमही
पते कृतेसापिंडनेप्यूर्ध्वमस्थांचोद्धरणंत्यजेत् तथापिकर्तुमिच्छंतित्रीणिचैतानिवेक्तताः मासिकान्यवशिष्टानिचाप
कृष्यचरेत्पुनः अत्रेदंतत्वं वृद्धिंविनार्वागपिसपिंडनापकर्षेपितृत्वप्राप्तिर्वर्षेणैव कृतेसपिंडीकरणेनरःसंवत्सरात्परम्
प्रेतदेहंपरित्यज्यभोगदेहंप्रपद्यतइतिविष्णुधर्मोक्तेः अर्वाक्संवत्सराद्यस्यसपिंडीकरणंभवेत् प्रेतत्वमपितस्यापिविज्ञेयं
वत्सरंनृपेत्यग्निपुराणाच्च तेनतत्त्वेपिवृद्धिंदेवपित्र्येष्वनधिकारः वृद्धिनिमित्तेत्वनंतरमेव अर्वाक्संवत्सराद्वृद्धौपूर्णेसं

पत्संरोपिवा पेसपिंडीकृताःयेनानतेषांतु एथक्क्रियानिशातातपोक्तेः तथैवकाम्पामितिहेमाद्रिधृतहारीतादिवशाच्चेवमिति
तथा अस्थिक्षेपंगयायांश्राद्धंश्राद्धंचापरपाक्षिकम् प्रथमेब्देपिकुर्वीतयदिस्याद्वृद्धिमान्सुतः भक्त्याख्यंश्राद्धंतद्धानितिम
दनपारिजातादयः अन्येयथाश्रुतमाहुः तत्त्वंतुयदीदंसमूलंतदाश्राद्धं विनापकर्षपूर्वश्राद्धार्थंतुपरमितियोज्यम् पतिता-
नांगयायांविशेषोब्राह्मे क्रियतेपतितानांचगतेसंवत्सरेक्वचित् देशधर्मप्रमाणत्वाद्गयाश्राद्धंस्वबंधुभिः अथविधाना
नि नवपंचकमूलेमदनरत्नेगारुडे आदौकृत्वाधनिष्ठार्धमेतन्नक्षत्रपंचकम् रेवत्यंतंसदादूष्यमशुभंदाहकर्मणि श
वस्यतुसमीपेतुक्षेप्तव्याःपुत्तलास्तदा दर्भमयास्तुचत्वारऋक्षमंत्राभिमंत्रिताः ततोदाहःप्रकर्तव्यस्तैश्चपुत्तलकैः स
ह सूतकांतेततःपुत्रैः कार्यंशांतिकपौष्टिकम् पंचकेषुमृतोयोवैनगतिंलभतेनरः तिलांश्चैवहिरण्यंचतमुद्दिश्यघृ
तंददेत् क्रियानिबंधे भाजनोपानहौछत्रंहेममुद्रांचवाससी दक्षिणादीयतेविप्रेसर्वपातकमोचनी मदनरत्नेगा
र्ग्यः यदिभद्रातिथीनांस्याद्वारंतुभौमशनैश्चरैः त्रिपादर्क्षैश्चसंयोगोह्ययोयोगेद्विपुष्करः द्वित्रिपुष्करयोगेतुमृतिर्भू
तांतरायहा दहनेमरणेचैवत्रिगुणंस्यात्त्रिपुष्करे खननेप्येवमेवस्यादेतद्दोषोपशांतये तिलपिष्टैर्यथैवापिशरीरंका
रयेत्ततः शूर्पेनिधायालंकृत्यदाहयेत्सेतुकोपरि तद्दाहेमंत्रमाह बौधायनः अस्मात्त्वमितिमंत्रेणातिलपिष्टंप्रदाहयेत्
द्वित्रिपुष्करयोर्दोषस्त्रिभिःकृच्छ्रैर्व्यपोहति नासवेमरणंचेत्स्यात्गृहेचापिपुनर्मृतिः सुवर्णंदक्षिणांदद्यात्कृष्णांवत्सम
थापिवा मासवंधनिष्ठा ब्राह्मे कुंभमीनास्थितेचंद्रेमरणंयस्यजायते नतस्योर्ध्वगतिर्दृष्टासंततौनशुभंभवेत् नतस्य
दाहःकर्तव्योनिनाशास्त्येषुजंतुषु अपवातदिनेकार्योदाहस्तुविधिपूर्वकम् धनिष्ठापंचकेजीवोमृतोयदिकथंचन त्रि

क्षेरेयाम्यं प्रेतकुलजान्मारयेद्ध्रुवं तत्रानिष्टविनाशार्थं विधानं समुदीर्यते दर्भाणां प्रतिमाः कार्याः पंचोर्णासूत्रवेष्टिताः यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः प्रेतहर्ता पंचमः स्युर्नामान्येतानि च क्रमात् अत्र प्रतिमा गंधपुष्पैः पूजयित्वा प्रथमां शिरसि द्वितीयां नेत्रयोः तृतीयां वामकुक्षौ चतुर्थीं नाभौ पंचमीं पादयोर्न्यस्य तदुपरि नामभिर्घृतं हुत्वा यमाय सोमं त्र्यंबकमिति मंत्राभ्यां प्रत्येकं तास्वाज्यं हुनेदिति भट्टाः सूतकांते ततः पुत्रः कुर्याच्छांतिकपौष्टिकम् कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजन्मने ब्रह्मविष्णुमहेशेंद्रवरुणप्रीतये ततः माषमुद्गयवव्रीहिप्रियंगवादयश्चापि स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनं गोभूदानं षडंशेन कुर्याद्दोषोपशांतये अपरार्के धनिष्ठापंचकमृते पंचरत्नानि तन्मुखे आस्याहुतिं तु यं तत्र हुनेद्वहवपामिति ततो निर्हरणं कुर्यादेष साग्नेर्विधिः स्मृतः इतरं निखनेदेवं जले वा प्रतिपादयेत् त्रिपादर्क्षमृते तद्वद्धिरण्यशकलं मुखे तस्यापि पिष्टमयं कुर्यात्पुरुषत्रितयं ततः होमः प्रतिमुखं कुर्यात्तथा वहवपामिति कार्ष्णायसं च कार्पासं कुंभं प्रतिपादयेत् निर्गत्य साग्निं संस्कुर्यात्कुड्यग्नौ वान्यमुत्सृजेत् तत्रैव कनकं हारकं नीलं पद्मरागं च मौक्तिकम् पंचरत्नमिदं प्रोक्तमृषिभिः पूर्वदर्शिभिः रत्नानां चाप्यभावे तु स्वर्णकर्षार्धमेव च सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः मदनरत्नेप्येवम् तथा एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् नवषट्त्रिपलं चापि दद्याद्विप्राय शक्तितः तथान्यत्र स्वगृह्योक्तविधानेन कृत्वाग्नेः स्थापनं ततः अन्वाधानं निर्वपणं देवतानां तथाहुतिः यमाय धर्मराजाय मृत्यवे चांतकाय च वैवस्वताय कालाय सर्वभूतक्षयाय च औदुंबराय दध्नाय नीलाय परमेष्ठिने वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् विधिना श्रपणं कृत्वा एकैकामाहुतिं हुनेत् कृष्णां गां कृष्णवस्त्रां च हेमनिष्कसमन्विताम् दद्याद्विप्राय शांताय प्रीतो

मवत्तुमेयमः त्रिपादर्क्षेप्येतदेव    अपरार्के पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी पूर्वाभाद्राविशाखाचनक्षत्रमेतत्रिपादभंमघूर
निर्त्रेगर्गः मृतःस्मशानंयोनीतउपजीवतिमानवः गृहेयस्यप्रविष्टोसौतिष्ठेद्यकदाचन अचिरान्मृत्युमायातिह
तदारपरिग्रहः तत्रशांतिंप्रवक्ष्यामिधर्मराजमतंयथा सक्षीराणांघृताक्तानामग्नेर्हुत्वासुरवेबुधः औदुंबरीणांविधिवत्
ततःशांतिःकृताभवेत् सावित्र्याःसहस्रेणक्षीरशांतिंचकारयेत् कपिलांतिलकांस्यंचहुतांतेभूरिदक्षिणेति अथब्र
ह्मचारिमृतौशौनकः ब्रह्मचारिमृतौरीतिंकथयामिसमासतः तत्रावकीर्णदोषस्यप्रायश्चित्तंप्रशांतये द्वादशाब्दंषडब्दं
वाप्यब्दंशक्त्याथवाचरेत् स्नातकोब्रह्मचारीचनिधनंप्राप्नुयाद्यदि संयोज्यचार्कविधिनासंयोज्यौतौततःपरम् देशका
लौस्मृत्वा अमुकगोत्रामुकनाम्नोमृतस्यब्रह्मचारिणोव्रतविसर्गंकरिष्यइत्युक्त्वाहेम्नानांदीश्राद्धंकृत्वाग्निंप्रतिष्ठाप्याघा
रांतेचनमृभिर्व्याहृतिभिरग्नयेव्रतपतयेव्रतानुष्ठानसंपादनायविश्वेभ्योदेवेभ्यश्चाज्यंहुत्वास्विष्टकृदादिसमाप्यपुनर्देशका
लौस्मृत्वार्कविवाहंकरिष्यइत्युक्त्वाहेम्नानांदीश्राद्धंकृत्वार्कशाखांशवंचहरिद्रयालिप्तापीतसूत्रेणवस्त्रयुग्मेनचावेष्ट्याग्निं
प्रतिष्ठाप्याघारांतेऽग्नयेबृहस्पतयेविवाहविधियोजकायचयस्मैत्वंकामंकामायेनिकामायव्याहृतिभिश्चाज्यंहुत्वास्विष्टकृ
दादिसमाप्यार्कशाखांशवंचदहेत् विधानमालायाम् येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि तत्कुलंक्षयमाप्नोतिसोपि
दुर्गतिमाप्नुयात् मृतस्यम्रियमाणस्यषडब्दंव्रतमादिशेत् त्रिंशद्वाब्रह्मचारिभ्योदद्यात्कौपीनकान्नवान् हस्तमात्राःक
र्णमात्रादद्यात्कृष्णाजिनानिच पादुकाछत्रमाल्यानिगोपीचंदनमेवच मणिप्रवालमालाश्चभूषणादिसमर्पयेत्
एवंकृतेविधानेनविघ्नः कोपिनजायते अत्रमूलंमृग्यम् कुक्षिमृतौतुयमः मृतस्यकुक्षिणोदेहंनिरवनेद्गोष्ठभू

मिथु चासरत्रितयंपश्चादुद्धृत्यान्यत्रतंदहेत् नगंगाप्लवनंकार्यंनिक्षेपेविधिरुच्यते षडब्दघृतपूर्णेनोविधिनांत्यंक्रतुंचरेत्
ततोस्थिसंचयंतस्यगंगायांप्रक्षिपेत्सुधीः मासिमासिततःकुर्यान्मासिश्राद्धानिपार्वणात् इत्येनकुष्ठिमरणेकथितंश्रा
स्वकोविदैः शक्तितत्वेभविष्ये शृणुकुष्ठगणांविप्रउत्तरोत्तरतोगुरुम् विचर्चिकातुदुश्चर्माचर्चरीयस्मृतीयकः शिकर्नूर्ध्रण
तान्पौनकृष्णाश्वेतेनथाश्वकमित्यक्ताम्रतेतुप्रापयेत्तीर्थमथवानरुमूलकम् नपिंडनोदकंकार्यंनचदानक्रियांचरेत् षण्मा
सीयत्रिमासीयमृतःकुष्ठीकदाचन यदिस्नेहाचरेद्दाहंयतिश्चान्द्रायणंचरेत् अकृतप्रायश्चित्तकुष्ठ्यादिदाहेदप्रायश्चि-
त्तम् अतएवकुनख्यादिवत्कुष्ठिनोपिद्वादशरात्रंशूलपाणिनोक्तम् अतएवान्यदीयंकुष्ठिनोमरणांतमाशौचमुक्तंकौर्मे
क्रियाहीनस्यमूर्खस्यमहारोगिणएवंच यथेष्टाचरणस्याहुर्मरणांतमशौचकम् महारोगास्तु वातव्याध्यश्मरीकुष्ठमे-
होदरभगंदराः अर्शांसिग्रहणीत्यष्टौमहारोगाःप्रकीर्तिताइति रजस्वलायास्तुवृद्धशातातपः रजस्वलायाःप्रेतायाः
संस्कारादीनिनाचरेत् ऊर्ध्वंत्रिरात्रात्स्नातांतांशावधर्मेणदाहयेत् अतःप्रक्षाल्यकाष्ठघट्टंभ्याच्यहोर्ध्वंदहेत् संकटे
तुमदनरत्नेस्मृत्यंतरे उदक्यासूतिकावापिमृतास्याद्यदितोतदा आशौचेत्वनतिक्रांतेदाहयेद्दलशयदि उद्धृतेनतु
तोयेनस्नापयित्वातुमंत्रतः आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाश्चतसृभिः पवमानानुवाकेनयदंतीतिचसप्तभिः न
तोयत्तपवित्रेणगोमूत्रेणाथतेद्विजाः स्नापयित्वान्यवसनेनाच्छाद्यशावधर्मतः दाहादिकंततःकुर्यात्प्रजापतिवचो
यथा पवपवित्रमापोअस्मानिति मिताक्षरायाम् पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलाम् वस्त्रांतरावृतां
कृत्वादाहयेद्विधिपूर्वकम् गृह्यकारिकायाम् अंतरिक्षमृतायेचवन्हावपक्वमासतः उदक्यासूतिकानारीचरेच्चांद्राय-

त्त्रयम् ततोयवपिष्टेनानुलिप्या ष्टोत्तरशतंशूर्पोदिकैः संस्नाप्यभस्मगोमयमृत्कुशोदकपंचगव्यशुद्धोदकै रापोहिष्ठापव
मानीभिः संस्नाप्यान्यवस्त्रेण धृत्वेदहेदितिभट्टाः अत्रप्रायश्चित्तमाह बोधायनः उदक्यासूतिकामृत्यौ त्वरेच्चांद्राय
णत्रयमिति सूतिकायास्तु मिताक्षरायाम् सूतिकायांमृतायांतु कथंकुर्वंतियाज्ञिकाः कुंभेसलिलमादाय पंचगव्यं
क्षिपेत्ततः पुण्यर्ग्भिरभिमंत्र्या पोवाचाशुद्धिंलभेत्ततः तेनैवस्नापयित्वातु दाहंकुर्याद्यथाविधि अब्लिंगाभिर्मंत्रि
ताभिर्यमिदेव्याभिरेवच अन्यैश्चवारुणैर्मंत्रैः संस्नाप्यविधिनादहेत् गृह्यकारिकायाम् सूतिकामरणेप्राप्ते सर्वौ
षध्यनुलेपनम् अमृतकीलसंस्पृष्टाः शूर्पाणांतु शतंक्षिपेत् प्रायश्चित्तेविशेषस्तत्रैव सूतिकातुयदासाध्वीविस्न
तामरणंगता त्रिपंपूर्णपर्यंतशुद्धोत्कृच्छ्रेणसर्वदा इदंचाद्यत्र्यहे सूतिकातुयदानारीरजसातुपरिप्लुता म्रियेत
चेत्तुसानारीद्विपर्णकृच्छ्रमाचरेत् इदंद्वितीयत्र्यहे सूतिकातुयदासाध्वीविस्नातामरणंगता आब्दकृच्छ्रेणशुद्धो
त्व्यासस्यवचनंयथा इदंतृतीयत्र्यहे अत्राशक्तोपक्षांतरमुक्तंतत्रैव सूतिकातुयदानारीविस्नातामरणंगता त्रि
पणवदिनादर्वागेकाब्देनविशुद्ध्यति ऊर्ध्वंतु सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् मासमेकावधिर्यावत्त्रि
भिःकृच्छ्रैर्विशुद्ध्यति गर्भिणीमृतौतुमदनरत्नेशौनकः गर्भिण्युदक्यासंस्कारंशिशुसंस्कारमेवच प्रवक्ष्यामिस
मासेन शौनकोहंद्विजन्मनाम् गर्भिणीमरणेप्राप्ते गोमूत्रेणजलैःसह आपोहिष्ठादिभिर्मंत्रैः प्रोक्ष्यभर्तासमाहि
तः प्रेतंस्मशानेनीत्वा पोलिखव्यसव्योदरंततः पुत्रमादायजीवंश्चेत्तत्तनंदत्वाकृतायतु यत्नेस्तनःशाशयद्दत्वा
मायेनिधायच उदरंचाव्रणंकुर्यात्सघदाज्येनपूर्यच मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः स्नाप्यचान्त्या-

घवासोभिः शवधर्मेणदाहयेत् तत्रैवपडशीतिमतेगर्भयानि गर्भिण्यांमृतायांदक्षिणाशिरसंनिधापयतस्यानाभिरंभ्रात्तम्यमु
दरंचतुरंगुलंहिरण्यगर्भःसमवर्ततेतिछित्वागर्भश्चेदप्राणस्तंश्मशाल्यनिखनेत्सयदिजीवन्जीवत्वंममपुत्रकेत्यक्त्वाक्षेत्रिये
लेतिपंचभिःस्नापयित्वाहिरण्यमंतर्धायभूमौनिधायव्याहृतिभिराभिमंत्र्ययतेस्तनःशशयइतिस्तनंपाययित्वाशिवांभा
मंभ्रापयेत्गर्भच्छेदस्थलेशलायुधायेतिपंचाहुतीर्हुत्वाप्राणायस्वाहापूष्णेस्वाहेत्यनुवाकाभ्यांभ्यास्तस्यावाज्यंहुत्वाभिन्न
दरंसूत्रेणसंग्रथ्यघृतेनानुलिप्यब्राह्मणायतिलान्गांभूमिंस्कवर्णंदद्यादथयथोक्तेनकल्पनेनदहेत् बौधायनेनतुश
नायुधायेतिपंचहोमानंतरंप्रयासायस्वाहायासायवियासायसंयासायोद्यासायावयासायशुचेशोकायतप्यतेतपतेब्रह्महत्या–
यैसर्वस्मैइतिस्वाहांतैराहुतयोप्यधिकाउक्ताः गृह्यकारिकायाम् यदागर्भवतीनारीसशल्यासंस्थिताभवेत् कुक्षिंभि
त्वाततःशल्यंनिर्हरेद्यदिजीवति प्रमीतंनिखनेत्तत्तुप्रायश्चित्तमतःपरम् सात्रयस्त्रिंशताकृच्छ्रैःशुध्यतेशल्यदोषतः
सगर्भदहनेतस्याबर्णजंवधपातकं प्रायश्चित्तंचरित्वातुशुद्ध्यंतिपापकारिणः दग्ध्वातुगर्भसंयुक्तांभिरब्दंकृच्छ्रमाचरे
त् अथान्वारोहणंस्त्रीणामात्मनोभर्तुरेवच सर्वपापक्षयकरंनिरयोत्तारणायच अनेकस्वर्गफलदंमुक्तिदंचतथैवच
जन्मांतरेचसौभाग्यधनपुत्रादिवर्द्धिदं देशकालौस्मृत्वारुंधतीसमानत्वस्वर्गलोकमहीयमानत्वमनुष्यलोमसमसंख्याब्दा
वच्छिन्नस्वर्गवासभर्तृसहितचतुर्दशेंद्रावच्छिन्नकालिकक्रीडमानत्वमातृपितृश्वशुरकुलत्रयपूतत्वब्रह्मघ्नमित्रघ्न
कृतघ्नपतिपूतत्वपत्यवियोगकामाभर्तृज्वलच्चितारोहणंकरिष्ये अनुगमनेतुफलसृष्टिरस्यान्वारोहणंकरिष्यइत्युक्त्वाह
रिद्राकुंकुमांजनादिसुतशूर्पाणिसुवासिनीभ्योदद्यात् मंत्रस्तु लक्ष्मीनारायणोदेवोचलसत्वगुणाश्रयः गाढंसत्वंचमेदेया

ह्मणकैः परितोषितः सोपस्कराणि शूर्पाणि बाणकैः संयुतानि च लक्ष्मीनारायणप्रीतये सतकामाददाम्यहम् अग्ने समीपमागत्य पंचरत्नानि
वस्त्रे नीलांजनं तथा वध्वा मुखे मुक्ताफलं न्यसेत् ततोग्निप्रार्थनं कृत्वा मंत्रेणानेन मिश्रितम् स्वाहा संश्लेषनिर्विण्णा सर्वगोत्रहु
ताशन सत्यमार्गप्रदानेन नय मां भर्तुरंतिकम् ततोग्नावाज्येनाग्नये तेजोधिपतये विष्णवे सत्वाधिपतये कालाय धर्माधिपतये
पृथिव्यै लोकाधिपतये अद्भ्यो रसाधिपतिभ्यो वायवे बलाधिपतये आकाशाय सर्वाधिपतये कालाय धर्माधिपतये दिग्भ्यः सर्वसा
क्षिणीभ्यः ब्रह्मणे वेदाधिपतये रुद्राय श्मशानाधिपतये च हुत्वाग्निं प्रदक्षिणीकृत्य षट्पदमुपलांश्च संपूज्य पुष्पांजलिं गृहीत्वाग्निं
प्रार्थयेत् त्वमग्ने सर्वभूतानामंतश्चरसि साक्षिवत् त्वमेव देव जानीषे न विदुर्यानि मानुषाः अनुगच्छामि भर्तारं वैधव्यभयपी
डिता सत्यमार्गप्रदानेन नय मां भर्तुरंतिकम् मंत्रमुच्चार्य शनकैः प्रविशेच्च हुताशनम् गौडास्तु इमा नारीरविधवा इति ॐ इमाः
पतिव्रताः पुण्याः स्त्रियो या याः सुशोभनाः सह भर्तुः शरीरेण संविशंतु विभावसुं इति च विप्रः पठेदित्याहुः कातरां तु अंतोत्त
रे कर्मां देवरः शिष्यो वा उदीर्ष्वेति द्वाभ्यामुत्थापयेत् एतन्माहिमा मिताक्षरादौ ज्ञेयः पृथ्वीचंद्रोदये स्कांदे अनुव्रजति भर्तारं
गृहात्पितृवनं मुदा पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यनुत्तमम् यत्त्वंगिराः या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् सा स्व
र्गमात्मघातेन नात्मानं न पतिं नयेदिति यच्च व्याघ्रपात् न म्रियेत समं भर्त्रा ब्राह्मणी शोककर्शिता न ब्रह्मगतिमाप्नोति
मरणादात्मघातिनीति पृथक्चितिपरम् पृथक्चितिं समारुह्य न विप्रा गंतुमर्हति अन्यासां चैव नारीणां स्त्रीधर्मोयं परः स्मृ
त इत्युशनसोक्तेः पृथक्चितिस्तु क्षत्रियादिपरा तद्विधिर्ब्राह्मे देशांतरे मृते पत्यौ साध्वी तत्पादुकाद्वयम् निधायोरसि सं
शुद्धा प्रविशेज्जातवेदसम् ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शास्त्रवत्

इमानारीरविधवा इतिऋग्वेदवादः अघहाशौचमन्वारोहणपरमितिस्मार्तः निषेधवाक्यानिप्रायश्चित्तार्थमृतेनपतितेनचास-
हमरणनिषेधपराणीत्यप्याहुः अस्थिदाहेपत्रशदाहेवानपृथक्चितिदोषः अंगत्वेनस्थानापत्त्यावाशरीरतुल्यत्वात् यत्तु
ब्रह्मघ्नोवाकृतघ्नोवामित्रघ्नोवाभवेत्पतिः पुनात्यविधवानारीतमादायमृतातुयेतिहारीतोयत्तत्पतितदाहादिनिषेधेनसह-
गमनस्यदूरतोपास्तत्वादर्थवादमात्रमितिपृथ्वीचंद्रः जन्मांतरीयपापवतासहमरणेनोद्धारइतिस्मार्तगौडाः शङ्खितत्वेव्यासः
दिनैकगम्यदेशस्थासाध्वीचेत्कृतनिश्चया नदहेत्स्वामिनंतस्यायावदागमनंभवेत् तत्रैवभविष्ये तृतीयेऽह्निउदक्याया
मृतेभर्तरिवैद्विजाः तस्यानुमरणार्थायस्थापयेदेकरात्रकम् एकांचितांसमासाद्यभर्तारंयानुगच्छति तद्भर्तुर्यःक्रियाकर्ता-
सतस्याश्चक्रियांचरेत् एतद्व्याहांतरम् यस्याग्निदातापेतस्यपिंडंदद्यात्सएवहीतिवायवीयोक्तेः आपस्तंबः चितिभ्रष्टातुया
नारीमोहाद्विचलिताभवेत् प्राजापत्येनशुद्ध्येत्तुतस्माद्वैपापकर्मणः तथा अन्वारोहेतुनारीणांपत्न्यश्चैकोदकक्रियाम् पिंड
दानक्रियातद्वच्छ्राद्धंप्रत्याब्दिकंतथा अन्वारोहेकृतेपत्न्याःपृथक्पिंडास्तिलांजलीन् पृथक्शिलेनकुर्वीतदद्यादेकशिलेन
वा अन्यच्चाग्रुत्वम् इदंगर्भिणीबालापत्यासूतिकारजस्वलाव्यभिचारिणीभिर्नकार्यं सैरिणीनांगर्भिणीनांपतितानांचयोषिताम् नास्ति
पत्याग्निसंवेशःपतितोहितथाउभावितिमदनरत्नेस्मृतिसंग्रहोक्तेः मदनरत्नेबृहस्पतिः बालसंवर्धनंमुक्त्वाबालापत्यानगच्छ
ति व्रतोपवासनियतारक्षेद्गर्भंचगर्भिणी तृतीयपादेरजस्वलासूतिकावेतिपृथ्वीचंद्रोदयेगौडीयशङ्खितत्वेचपाठः तत्रैवबृह-
न्नारदीयेपि बालापत्याचगर्भिण्योह्यदृष्टऋतवस्तथा रजस्वलाराजसुतेनारोहंतिचितांशुभाइति अत्रपतिव्रतासासंदीप्तंप्रवि
शेद्याहुताशनमितिभारताद्वग्वेदपाठात्साध्वीस्त्रीणिप्राह्मान्त्व पतिव्रतानामेवाधिकारोनदुर्वृत्तानां यत्तु अवमत्यच –

पाः पूर्वेपतिंदुष्टेनचेतसा वर्ततेयाश्चसततंभर्तृणांप्रतिकूलतः तत्रानुमरणंकालेयाः कुर्वंतितथाविधाः कामात्क्रोधाद्भया २
न्मोहात्सर्वाः पूताभवंत्युतेतिभारतेतत्कैमुतिकन्यायेनस्नावकमिति पृथ्वीचंद्रः ब्राह्मण्याएकचितिरेवनपृथक्चितिः
क्षत्रियादीनांपृथगेकावेतिकल्पतरुरत्नाकरमदनपारिजातादयः शुद्धिचिंतामणौचैवं तत्रान्वारोहणेभर्तुःशौचंमृ
तदूर्ध्वंनाकृतेत्रिरात्रमध्येएवदशपिंडाः सहगमनेतुभर्तृशौचतुल्यमाशौचंपिंडदानंच अन्वितायाःप्रदातव्योदश
पिंडास्सहेणतु स्वाम्याशौचेव्यतीतेतुतस्याः श्राद्धंप्रदीयते इतिशुद्धितत्त्वेशूलपाणौचपैठीनसिस्मृतेः संस्थितंप
तिमालिंग्यप्रविशेद्याहुताशनं तस्याः पिंडादिकंदेयंक्रमशः पतिपिंडवदितिजिनकशूलपाणिशुद्धितत्त्वे तत्व्यासौ
क्तेः अन्यत्सर्वंतुक्तम् यदातुरजस्वलापिपत्नीमृतेपत्यौदेशकालवशात्तदैवानुगच्छति नशक्नुमतीस्तते तत्रार्वि .
देयाज्ञिकनिबंधे यदास्त्रियासुदक्यायांपतिःप्राणांत्समुत्सृजेत् द्रोणमेकंतंडुलानामवहन्याद्विशकूपेमुसलैः
सदस्तृक्त्ततत्रेपौनिमंडलात् विरजस्कामन्यमानांस्त्वेचिंतेतदस्त्वकल्पम् दृष्ट्वाशौचंप्रकुर्वीत पंचमृत्तिकयापृथक्
त्रिशाहिंशातिर्दशावगवांदलात्सह क्रमात् विप्राणांवचनाच्छुद्धासमारोहेद्धुताशनम् नारीणांसरजस्कानामिपंशक्ता
रुदाहृता अनयान्त्राद्दोनिर्णयः पूर्वमुक्तः इतिश्रीभट्टकमलाकरकृतेनिर्णयसिंधावेतत्कर्मनिर्णयः अग्निप्रवे
शाशक्तौतुविष्णुः मृतेभर्तरिब्रह्मचर्यंतदन्वारोहणंचेति ब्रह्मवैवर्ते सहानुगमनंशस्तंवैधव्यस्याथपालनम् पत्नुव
त्रैव कलौनान्यागतिस्त्रीणांसहानुगमनादृतइतिब्रह्मचर्याशक्यत्वपरं तथाचमनुः ब्रह्मचर्येनरेहापिप्रविशेद्धाद्धु
ताशनं काशीखंडेपि पत्यौमृतेपियायोषिद्वैधव्यंपालयेत्क्वचित् सापुनःप्राप्यभर्तारंस्वर्गभोगान्समश्नुते अनुयातिन ८

भर्तारं यदि देवि कथंचन तथापि शीलं संरक्षेच्छीलभंगात्पतत्यधः तद्वैगुण्यादपि स्वर्गात्पतिः पततिनान्यथा तस्याः पि
तान्मातान्भ्रातृवर्गस्तथैवच अथविधवाधर्माः मदनरत्ने स्कांदे विधवाकबरीबंधोभर्तृबंधायजायते शिरसोवपनं
तस्मात्कार्यंविधवयासदा एकाहारः सदाकार्योनद्वितीयः कदाचन मासोपवासंवाकुर्याच्चांद्रायणमथापिवा पर्यंकशायि
नीनारीविधवापातयेत्पतिं नैवांगोद्वर्तनंकार्यंस्त्रियाविधवयाक्वचित् गंधद्रव्यस्यसंभोगोनैवकार्यस्तयापुनः तर्पणंप्रत्य
हंकार्यंभर्तुस्तिलकुशोदकैः तत्पितुस्तत्पितुश्चापिनामगोत्रादिपूर्वकम् इदमपुत्रापरमितिमदनपारिजातः नाधिरोहे
दनड्वाहंप्राणैः कंठगतैरपि कंचुकंनपरीदध्याद्वासोनविकृतंवसेत् वैशाखेकार्तिकेमाघेविशेषनियमंचरेत् मन्वेताः तां
बूलाभ्यंजनंचैवकांस्यपात्रेचभोजनं यतिश्चब्रह्मचारीचविधवाचविवर्जयेत् श्राद्धादौतुविशेषःप्रागुक्तः यत्तुबोधा
यनः संवत्सरंप्रेतपत्नीमधुमांसंविवर्जयेत् अधःशयीतषण्मासानितिमोह्यल्पभाषितमितितदसवर्णापरमित्यपरार्कः
अथसंन्यासः याज्ञवल्क्यः वनाद्गृहाद्वाकृत्वेष्टिंसार्ववेदसदक्षिणां प्राजापत्यांतदंतेतानग्नीनारोप्यचात्मनि अधीतवे
दोजपकृत्पुत्रवानन्नदोग्निमान् शक्त्याचयज्ञकृन्मोक्षेमनःकुर्यात्तुनान्यथा एतदाश्रमसमुच्चयपक्षे जाबालश्रुतौत्व
न्योपिपक्षउक्तः यदिवेतरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वनाद्वा अथपुनरव्रतीवास्नातकोवाऽस्नातकोवोत्सन्नाग्निको
वायदहरेवविरजेत्तदहरेवप्रव्रजेदिति अंगिराः प्रव्रजेद्ब्रह्मचर्याद्वाप्रव्रजेच्चगृहादपि वनाद्वाप्रव्रजेद्विद्वानातुरो
वाथदुःखितः आतुरोमुमूर्षुः दुःखितश्चोरव्याघ्रादिभीतिः भारते आतुराणांचसंन्यासेनविधिर्नैवचक्रिया प्रैष
मात्रंसमुच्चार्यसंन्यासंतत्रपूरयेत् जाबालश्रुतावपि यद्यातुरस्यान्मनसावाचावासंन्यसेदिति अत्रविप्रस्यैवाधिका-

रःब्राह्मणाःप्रव्रजंतीतिजाबालश्रुतेः आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेत्गृहादितिमनूक्तेश्चेतिविज्ञानेश्वरादयः
न्तत्रात्रैवब्राह्मणस्योक्ता आश्रमाःश्रुतिनोदिताः क्षत्रियस्यत्रयःप्रोक्ताद्वावेकोवैश्यशूद्रयोरिति ब्राह्मणःक्षत्रियो-
वाथवैश्योवाप्रव्रजेद्गृहादितिकौर्मोक्तेर्वर्णत्रयस्याप्यधिकारः पूर्ववाक्यंतुकाषायदंडादिनिषेधार्थंसुखजानाम
यंधर्मोयद्विष्णोर्लिंगधारणं राजन्यवैश्ययोर्नेतिदत्तात्रेयमुनेर्वचइतिबौधायनोक्तेरितिपक्षांतरमाह तत्वंतुकुटी
चकादिपरमेतदिति योपिसन्यासंपलपैतृकमितिकलौनिषेधः सोपित्रिदंडादिपरइत्यक्तंप्राक् सचसन्यासश्चतुर्धे
त्याहहारीतः कुटीचकोबहूदकोहंसश्चैवतृतीयकः चतुर्थःपरमोहंसोयोयःपश्चात्सउत्तमः आद्यःपुत्रादिनाकुटीं
कारयित्वातत्रगृहेवावसन् काषायवासाःशिखोपवीतत्रिदंडवान्वंधुषुस्वगृहेवाभुंजानआत्मज्ञोभवेत् एत
द्वसंतोशक्तपरम् द्वितीयस्तुवंधून्हित्वासप्तागाराणिभैक्ष्यंचरन् पूर्वोक्तवेषःस्यात् हंसस्तुपूर्वोक्तवेषोप्येकदंडः
एकंतुवैणवंदंडंधारयेन्नित्यमादरादितिस्कांदात् विष्णुरपियज्ञोपवीतंदंडञ्चवस्त्रंजंतुनिवारणम् तावान्परिग्रहः
प्रोक्तोनान्योहंसपरिग्रहः चतुर्थोपिस्कांदे परहंसस्त्रिदंडंचरज्जुंगोवालनिर्मिताम् शिखांयज्ञोपवीतंचानित्यंकर्मप
रित्यजेत् अयमप्येकदंडएव येतुशिखोपवीतादित्यागनिषेधास्तेकुटीचकादिपराः यत्तुमेधातिथिः यावन्नस्युः-
स्थयोर्दंडास्तावदेकेनवर्तयेदिति नद्यपिनत्परमेवयच्चात्रिः चतुर्धाभिक्षवःप्रोक्ताःसर्वेचैवत्रिदंडिनइति तद्वाग्दं-
डादिपरंनयष्टिपरं वाग्दंडोथमनोदंडःकर्मदंडस्तथैवच यस्यैतेनियतादंडाःसत्रिदंडीतिचोच्यते इतिमनूक्तेः त
स्यापरमहंसस्यैकदंडएव सोप्यविदुषःविदुषस्तुसोपिनास्ति नदंडंनशिखांनाच्छादनंचरतिपरमहंसइतिमहोप

निषधुक्तेः ज्ञानमेवास्यदंडइतिवाक्यशेषात्त्व यस्तुयमः काष्ठदंडोधृतोयेनसर्वाशीज्ञानवर्जितः सयातिनरकान्घो-
रान्महारौरवसंज्ञितानिति तद्वैराग्यंविनाजीवनार्थसंन्यासपरं एकदंडंसमाश्रित्यजीवंतिबहवोनराः नरकेरौरवे
घोरेकर्मत्यागात्पतंतितइतिस्मृतेः यत्त्वाश्वमेधिके एकदंडीत्रिदंडीवाशिखीवामुंडितएववा काषायमात्रसारोपियतिः
पूज्योयुधिष्ठिरेति तस्यापिपूर्वोक्तव्यवस्थाज्ञेया अथतद्विधिः बौधायनः कृत्वाश्राद्धानिसर्वाणिपित्रादिभ्योपृथक्पृ
थक् वापयित्वाचकेशादीन्मार्जयेन्मातृकाइमाः सर्वाणीतिस्वस्यचपश्चाद्द्वोडशश्राद्धादिकृत्वेत्यर्थः स्मृत्यर्थसा
रेपि एकोद्दिष्टविधानेनकुर्याच्छ्राद्धानिषोडश अग्निमान्पार्वणेनैवविधिनानिर्वपेत्स्वयमिति कात्यायनः कृच्छ्रांस्त्रीन
थुरः कृत्वापावनार्थमनाश्रमी आश्रमीचेत्सकृच्छ्रंतेनासौयोग्यतांव्रजेत् बौधायनः सदैवमार्षकंदिव्यंपित्र्यंमातृ
कमानुषे भौतिकंचात्मनश्चांतेअष्टौश्राद्धानिनिर्वपेत् अत्रक्रममाहहेमाद्रौशौनकः देवश्राद्धेब्रह्मविष्णुमहेश्वरादे
वताः आर्षेदेवर्षिब्रह्मर्षिक्षत्रर्षयः देवर्षिक्षत्रर्षिमनुष्यर्षयोवामरीच्यादिऋषयइतिसन्यासपद्धतौतच्चिंत्यं दिव्येव
सुरुद्रादित्याः मानुषेसनकसनंदनसनातनाः भूतश्राद्धेपृथिव्यादिभूतानिचक्षुरादिकरणानिचतुर्विधोभूतग्राम
श्चेतितिस्रः पित्र्येपित्रादित्रयोमातामहाश्च मातृकेमात्रादयस्तिस्रः आत्मश्राद्धेआत्मपितृपितामहादेवताः आ
त्मश्राद्धंपरमात्मदेवत्यमितिसन्यासपद्धतौतच्चिंत्यम् सर्वत्रनांदीमुखत्वंविशेषणंज्ञेयं सर्वत्रापिंडदानं युग्माविप्राः
दक्षक्रतूसत्यवसूवाविश्वेदेवा अन्यन्नांदीश्राद्धवदितिहेमाद्रिः स्मृत्यर्थसारे केशश्मश्रुलोमनखंवापयित्वोपकल्प
येत् दंडंजलपवित्रंचशिक्यंपात्रंकमंडलुं आसनंकौपीनमाच्छादनंकंथांपादुकेइतिदशापत्ववो एतच्चपूर्वेद्युर्नांदीमु-

रवंकृत्वापरेद्युः पुण्याहवाचनंकृत्वाकार्यमितिशौनकः बौधायनः त्रीन्दंडानंगुलीस्थूलान्वैणवान्मूर्धसंमितान् एकाद
शानवर्हिश्चिन्तुःसमान्यपर्वकान् वेष्टितान्कृष्णगोवालरज्जातुचतुरंगुलान् एकोवानादृशोदंडोगोवालसदृशोभवेत्
अनग्निरग्निमुत्पाद्यनित्येनविधिनाततः एषोदिविविधानेनेत्यर्थः स्वाग्नावेवाग्निमान्कुर्यादपवर्गोक्तमादितः आज्यंपर्योद
धीत्येतच्चिद्दाजलमेववा ॐभूरित्यादिनाप्राश्यरात्रिंचोपवसेत्ततः अथादित्यस्तमयात्पूर्वमग्नीन्विहृत्यसः आज्यम
ग्नौगार्हपत्येसंस्कृत्यतेनचस्रुचा पूर्णयाहवनीयेतुजुहुयात्प्रणवेनतत् ब्रह्मान्वाधानमेतत्स्यादग्निहोत्रेहुतेततः संस्ती-
र्यगार्हपत्यस्यदर्भानुत्तरतोन्यतु पात्राण्यासाद्यदर्भेषुब्रह्मायतनएवतु जागृयाद्रात्रिमेतांतुयावद्ब्राह्मोमुहूर्तकः अन
ग्निहोत्रंस्वकालेतुहुत्वाप्रातस्ततनंततः इष्टिंवैश्वानरींकुर्यात्प्राजापत्यामथापिवा जाबालश्रुतौतदेकेप्राजापत्यामेवेष्टिं
कुर्वंतितदुतथानकुर्यादाग्नेयीमेवकुर्यात्स्थाग्नेयानवीयामेवकुर्यादित्युक्तं तेनात्रविकल्पः अत्राहुः त्रेताग्नेःप्राजाप
त्यानह्यस्यशेषेग्नीनितिवहुत्वश्रुतेः एकाग्नेस्त्वाग्नेयीति अनाहिताग्नेरिष्टिस्थानेवैश्वानरआग्नेयोवाचरुरितिमाधवः
कात्यायनः आत्मन्यग्नीन्समारोप्यवेदिमध्यस्थितोहरिं ध्यात्वाहृदिलतुज्ञातोगुरुणाप्रैषमीरयेत् कपिलःशिखावसे
षमुत्कृाथनिकृपाशतन्त्रिरुच्चकैः अभयंसर्वभूतेभ्योमत्तःस्वाहेत्यथोत्कवि निनीयदंडशिक्यादिगृहीत्वाथवहिर्व्रजेत्
बौधायनः सखेमेत्यादिनादंडंयेनदेवाःपवित्रकम् यदस्यपारेशिक्यंतुपात्रंव्याहृतिभिस्तथा सुवासवासाःकौपीनं
गृहीत्वाबांधवांस्त्यजेत् अथक्रमः तत्रसंन्यासेधिकारसिद्ध्यर्थंस्वस्यनवश्राद्धषोडशश्राद्धसपिंडनानिसाग्निःपार्वणा
न्यनग्निस्त्वेकोद्दिष्टविधिनाकृत्वानाश्रमीचेत्कृच्छ्रचतुष्टयमन्यस्तत्तमसकृच्छ्रंकृत्वोदगनयनेएकादश्यांद्वादश्यांवासाग्निर

मावास्यायांपौर्णमास्यांचतुर्दश्यांवायथापर्वणिप्राजापत्यास्यात् तत्रदेशकालौस्मृत्वापरमहंसादिसन्यासंयत्[illegible]ति
संकल्प्यगणेशंसंपूज्यपुण्याहंवाचयित्वामातृकापूजांषड्श्राद्धंचकृत्वास्तमयात्सामोपासनंसमिध्याहिताग्निस्तुगार्हपत्ये
विधुरोग्निहोत्रीतुत्रिकांडमंडनोक्तदिशाकुशपत्न्यासहपवमानेष्ट्यंतंपूर्णाहुत्यंतंवाधानंकुर्यात् ब्रह्मचारीचेल्लौकिकेविधुर
श्चैष्ठाद्यनिभिः प्रणवेनाग्निमादायान्वग्निरुषसामित्यानीयघृष्टोदिवीतिनिधायतेनैवसमिध्यतत्सवितुस्तांसवितुर्विश्वा
निनइतितिसृभिःसमिधोभ्यादध्यात् एवमग्नौसिद्धेकृतोपस्थवर्ज्यंनेपनंकृत्वापयोदधियुतमाज्यमपोवा ॐभूःसावित्रींप्रविशा
मि तत्सवितुर्वरेण्यमितिप्राश्याचम्यपुनरादाय ॐभुवःसावित्रींप्रविशामिभर्गोदेवस्यधीमहीतिद्वितीयं ॐस्वःसावित्रींप्रविशामि
धियोयोनःप्रचोदयादितितृतीयं समस्तयाचतुर्थं ॐभूर्भुवःस्वःसावित्रींप्रविशामि॰तत्सवितु॰यात्इति सन्यासपद्धतौतुत्रिवृ
दसीतिप्रथमंप्रवृद्दसीतिद्वितीयंविवृद्दसीति तृतीयंप्राश्यापःपुनंतितिजलंप्राश्यसावित्रीप्रवेशउक्तः ततआहवनीयंवित्तस्यब्र
ह्माणमुपवेश्याज्यंसंस्कृत्यचतुर्द्वादशवागृहीत्वासमिद्ध्योमोंस्वाहापरमासनइदमितिहुत्वोपवसेत् ततःसायंहोमंवैश्वदेवंच
कृत्वाअग्नेरुदक्कुशानास्तीर्यदंडादीनिदशपंचवासाद्यब्रह्मासनेकृष्णाजिनोपविष्टोरात्रौजागरंकृत्वाप्रातर्होमानंतरंप्राजाप
त्यांवैश्वानरींवाकृत्वाऋत्विग्भ्यःसर्वस्वंब्रह्मणेचमधुपूर्णंतैजसपात्रंदत्वादारुपात्राण्याहवनीयेश्ममृन्मयानित्वजलेक्षिपेत्
कृष्णाजिनंत्वाददीत अनाहिताग्निस्तुवैश्वानरमाग्नेयंवाचरुंहुत्वापात्राण्यग्नौक्षिप्त्वाभूर्भुवःस्वरित्यपःस्पृष्ट्वानरस्तसंदीनि
जस्वान्विप्रान्संभोज्यपुण्याहंवाचयित्वाप्रवापनंकृत्वाहेमरूप्यकुशजलैःस्नात्वापुरुषायचरुंकृत्वाप्राणायस्वाहेतिपंचा
हुतीर्हुत्वापुरुषसूक्तेनप्रत्यृचमाज्यंचरुंचजुहुयात् अत्रविरजाहोमंकेचिदाहुः यथोक्तंशिवगीतासु जुहुयाद्विरजामंत्रैः

प्राणापानादिभिस्ततः अनुवाकांतमेकाग्रः समिदाज्यचरून्पृथक् आसन्यग्नीन्समारोप्य यातेअग्नेतिमंत्रतः भस्मादाया
ग्निरित्याद्यैर्विमृज्यांगानिसंस्पृशेत् पापैर्विमुच्यतेसत्यंमुच्यतेनात्रसंशयः यथा प्राणापानव्यानोदानसमानामेशुध्यंतां
ज्योतिरहंविरजाविपाप्माभूयासंस्वाहा सर्वत्रलिंगोक्तदेवताभ्यइदमितित्यागः वाङ्मनश्चक्षुःश्रोत्रजिव्हाघ्राणरेतोबुध्या
कूतिः संकल्पामेशुध्यंतांज्योति० त्वक्चर्ममांसरुधिरमेदोमज्जास्नायवोस्थीनिमेशुध्यंतांज्योति० शिरःपाणिपादपार्श्व-
पृष्ठोरूदरजंघशिश्नोपस्थपायवोमेशुध्यंतांज्योतिरहं० उत्तिष्ठपुरुषहरितपिंगललोहिताक्षिदेहिदेहिदापयितामेशुध्यं०
पृथिव्यापस्तेजोवायुराकाशामेशुध्यंतांज्योतिरहं० शब्दस्पर्शरूपरसगंधामेशुध्यंतांज्योति० मनोवाक्कायकर्माणिमेशु०
आत्मामेशुध्यंतां० अंतरात्मामेशुध्यंतां० परमात्मामेशुध्यंतां० क्षुधेस्वाहा क्षुत्पिपासायस्वाहा विविट्यैस्वाहा ऋग्विधा
नायस्वाहा कषोत्कायस्वाहा क्षुत्पिपासामलंज्येष्ठामलक्ष्मीर्नाशयाम्यहं अभूतिमसमृद्धिंचसर्वान्निर्णुदमे पाप्मा नंस्वा
हा अन्नमयप्राणमयमनोमयविज्ञानमयमानंदमयमात्मामेशुध्यंतांज्योति० ततःस्विष्टकृदादिहुत्वा ब्रह्मणेहिरण्यमा
न्यपात्रंधेनुंचदत्वासमासिंचत्वितिरूपतिष्ठेत अत्रकेचिदग्नेः सावित्रीप्रवेशंपूर्णाहुतिंचाहुः ततोयातेअग्नेयज्ञियातनू
रितिनिरस्मिरेकेकंजिघ्रन्नात्मन्यग्नीन्समारोप्यगुरवेसर्वस्वंदत्वा योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्वप्रहिणोतितस्मैतंहदे
वमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्य इत्युपस्थायदक्षिणंजान्वाच्यपादावुपसंगृह्याधीहिभगवोब्रह्मेतिवदेत् त-
तोगुरुरात्मानंब्रह्मरूपंध्यात्वाशंखंद्वादशप्रणवैरभिमंत्र्यतेनशिष्यमा श
दत्वापुरुषसूक्तंजप्त्वाममव्रतेत्हृदयंतेदधामीतिचजप्त्वोदङ्मुखः प्रणवा

स्वंचीकरणाद्यवबोध्य अथवा ब्रह्म तत्त्वमसि प्रज्ञानं ब्रह्मेत्याद्युपदिशेत् नदर्थंच
नोपदिष्टो हरिस्मरन्नूर्ध्वबाहुस्तिष्ठन्देवान्साक्षिणः कृत्वा ॐ भूर्भुवः स्वः सन्यस्तं मयेति त्रिरुपांशु स्व.
पंगलास्नात्वा अभयं सर्वभूतेभ्यो मत्तः स्वाहेति त्रिरंजलिं क्षिप्त्वा युवा सुवासा इति काषायं कौपीनं वासश्चपरि
धायेति सुखं नैणवं पालाशं बैल्वमौदुंबरं वा दंडं गृह्णीयात् अत्र पुत्रकामो गृहस्थः शंखेन पुरुषसूक्तेन दंडमभिमन्त्र्य दद्या
दाचारः ततः शिखामुत्पाट्य ॐ भूः स्वाहेत्यग्नौ जले वा हुत्वा तथैवोपवीतं हुत्वा येन देवाः पवित्रेणेति जलपवित्रं यदस्य पारे र
जस इति शिक्यं सावित्र्या कमंडलुं सव्याहृतिभिः भोजनपात्रमिदं विष्णुरित्यासनं बृसीं वा गृहीत्वा ॐ भूस्तर्पयामीति
भिर्महर्नम इति तर्पयित्वा भूः स्वधा भुवः स्वधा स्वः स्वधा भूर्भुवः स्वर्महर्नमः स्वधेति पितॄंस्तर्पयित्वोदुत्यं चित्रं तच्चक्षुः हंसः
शुचिषन्नमो मित्रस्येति स्नात्वा सुरभिमतीभिरापो हिष्ठेति हिरण्यवर्णाभिः पवमानीभिर्व्याहृतिभिश्च मार्जयित्वा .
ततो ऽघमर्षणं प्राणायामांश्च कृत्वा ॐ भूर्भुवः स्वरिति च पठित्वा नमः सवित्र इति सूर्यं चोपस्थाय पुनः स्नात्वा ज
लपित्वा ॐ मिति ब्रह्म ओमितीदं सर्वम् ओमिति ब्रह्म वा एष ज्योतिर्य एष वेदो य एष तपति वे द्यमेवैतद्य एष वेदो यद्वनमस्ती
जपित्वाष्टसहस्रं गायत्रीं जपेदिति अथ यति धर्माः प्रातरुत्थाय ब्रह्मणस्पते इति जपित्वा दंडादीनि मृदं च निधाय मूत्र
पुरीषयोर्गृहस्थचतुर्गुणं शौचं कृत्वाचम्य पर्व द्वादशी वर्ज्यं प्रणवेन दंतधावनं कृत्वा तेनैव मृदा बहिः कटिं प्रक्षाल्य जल
र्षणवर्ज्यं स्नात्वा पुनर्जंघे प्रक्षाल्य वस्त्रादीनि गृहीत्वा मार्जनांतं कृत्वा केशवादिनमोंतनामभिस्तर्पयित्वा ॐ भूस्तर्प
यामीत्यादि व्यस्तसमस्तव्याहृतिभिर्महर्जनस्तर्पयामीति तर्पयेत् ॐ भूः स्वाहेति स्वाहाशब्दांतैः स्वधाशब्दां

वः स्वश्वेत्यस्त्राशंखेनभेदयेत् गर्तंपुरुषसूक्तेनलवणेनप्रपूरयेत् सृगालश्वादिरक्षार्थंसम्यग्गर्तंप्रपूरयेदिति कुटीचक
स्यतुदाहः कार्यः यथा सर्वप्राग्वत्कृत्वाग्निंप्रज्वाल्यसाग्नेर्दक्षिणकरेउपावरोहेत्यवरोप्यानिर्मथ्यवाग्नेर्चितिंकृत्वाग्नि
नाग्निः समिध्यतइत्यग्निंदत्वासावित्र्याप्रणवेनवादहेत् ततोष्टशतंप्रणवंनारायणः परंब्रह्मेतिजप्त्वासाशिरः प्रणवव्याहृः
त्यागायत्र्यातत्भस्मास्थीनितीर्थेक्षिप्त्वास्नानान्तंकृर्निः नास्यान्यदौर्ध्वदैहिकम् त्रिदंडग्रहणादेवप्रेतत्वंनैवजायतइ
त्युशनः स्मृतेः एकादशेन्हिपार्वणंतदपित्रिदंडिनः हंसपरमहंसादीनांपार्वणादिकिमपिनकार्यमितिशूलपाणिः श्रा
द्धचिंतामणौदत्तात्रेयः एकोद्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियाम् नकुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे प्रेतक्रिय
येकोद्दिष्टनिषेधेसिद्धेपुनस्तद्ग्रहणमाब्दिकपरम् तेनतसार्वणमेव त्रिदंडिनांद्वादशेनारायणबलिः तद्विधिरन्यश्च
विशेषः प्रागुक्तइत्यलंबहुना एवंनिरूपितमिदंगहनंतुधर्मतत्वंविचार्यवचनैश्चनयैश्चसम्यक् तद्दोषदृष्टिमपहाय-
निवेचनीयंनद्भिरित्याविरतंप्रणतोस्मितेषु मयासद्यासहायादिहगदितंमंदमतिनाकिमेतच्छक्यंचाध्यवसितुमपिस्व
स्वभावेना नदेवंयत्किंचिद्यदितमिहविख्यातमहिमाभतापोयंसर्वोविकसतितुपित्रोश्चरणयोः २ योभाट्टतंत्रगगननार्ण-
वकर्णधारः शास्त्रांतरेषुनिखिलेष्वपिमर्मभेत्ता योनभ्रमः किलकृतः कमलाकरेणप्रीतोस्तुनास्तुसकृतीचुधरामकृष्णः ३
श्रीभट्टरामेश्वरसूरिसूनुश्रीभट्टनारायणसूरिसूनोः श्रीरामकृष्णस्यसुतःकृतीमंव्यधान्निबंधंकमलाकराख्यः ४ नाना
निर्णयवल्ल्यान्निर्णयसिंधुःप्रोच्यतांविबुधाःनिर्णयसरोजवल्ल्यान्निर्णयकमलाकरोप्यस्तु ५ वसुऋतुऋतुभूमितेगतेब्दे
नरपतिविक्रमतोथयातिरौद्रे तपसिशिवतिथौसमापितोयंरघुपतिपादसरोरुहेर्पितश्च ६ जगतिसकलविद्यासिंधुमु-

ष्टिंधयानांपरभणितिपरीक्षास्तुज्यतेसज्जनानां तदिहममनिबंधेदूषणंभूषणंवायदिभवतिविदग्धैस्तदावश्यंविमृश्यम् ७
इतिश्रीमत्सदवाक्यप्रमाणपारावारपारीणश्रीमद्रामेश्वरभट्टसूरिसूनुनारायणभट्टसूनुविद्वन्मुकुटहीरांकुरश्रीरामकृष्णभ
ट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृतेनिर्णयसिंधौतृतीयःपरिच्छेदःसमाप्तः निर्णयसिंधुग्रंथःस्वीयशिलायंत्रकेंऽकि
तःसुधिया विद्वज्जनतुष्ट्यर्थंविठ्ठलनाम्नाग्निहोत्रिणाकृतिना १ अंकाद्रिमुनिभूशाकेपिंगलेब्देगुरोर्दिने माघेमासेशुक्लपक्षेस
प्तम्यांचसमापितः २ शोधितोयंपरिच्छेदस्तृतीयस्तुयथामति भालचंद्रेण साहाय्याद्दुंढिराजप्रयत्नतः १ तत्राप्यशुद्धं
कुत्रापिदृष्टंचेद्दृष्टिलोपतः ज्ञात्वाक्षंतव्यमित्येवंप्रार्थयेविदुषोन्वहम् २ श्रीगजाननार्पणमस्तु ॥ ॥